# संक्षेपशारीरकम्

श्रीमत्सर्वज्ञमुनिविरचितम्

श्रीमन्नृसिंहाश्रमविरचितया तत्त्वबोधिन्याख्यया
टीकया सहितम्

---

वाराणसेयराजकीयसंस्कृतमहाविद्यालयन्यायशास्त्राध्यापकेन
न्यायव्याकरणाचार्य मीमांसाशिरोमण्युपाधिकेन
श्रीसूर्यनारायणशर्मशुक्लेन संशोधितम्

---

( तृतीयो भागः )

---

THE

# SAMKSEPA SĀRĪRAKA

OF SARVAJÑĀTMA MUNI

WITH

# TATTVABODHINĪ

OF NṚSIMHA ĀSRAMA

---

EDITED BY

SŪRYA NĀRĀYAṆA SUKLA,

NYĀYA VYĀKARAṆĀCHĀRYA,

Professor, Govt. Sanskrit College, Benares

---

1938

॥ ॐ श्रीगणेशाय नमः ॥

# सटीकसंक्षेपशारीरकस्य

## द्वितीयोऽध्यायः ।

—:○*○:—

प्रत्यक्षादिपराक्प्रमाणमखिलं प्राचीनवाचां वचः
प्रत्यङ्मात्रमितिप्रसूतिकरणं प्रक्षीणदोषं परम् ॥
बाधित्वापरिमुग्धभेदनिचये यस्मिन्नयौ मानतां
तं वन्दे परिवर्जितावधिसुखं लक्ष्मीनृसिंहं हरिम् ॥

एवं सर्वेषां वेदान्तानां सच्चिदानन्देऽखण्डैकरसे ब्रह्मणि समन्वय उपदर्शितः । इदानीमुपदर्शितमेव समन्वयं प्रत्यक्षादिविरोधपरिहारेण स्थूणानिखनन्यायेन दृढीकर्त्तुमाक्षिपति—

**एवं समन्वयनिरूपणयावबोधो**
**जातोऽप्यखण्डविषयो ननु वाक्यजन्यः।**
**मानान्तरेण परिपीडित एव जातो**
**भेदप्रकाशनकृताऽक्षनिबन्धनेन ॥ १ ॥**

एवं समन्वयेति । एवं प्रथमाध्यायोक्तप्रकारेण निरूपणा विचारः अखण्डविषयोऽखण्डात्मविषयः नन्विति चोद्ये मानान्तरेण प्रमाणान्तरेण परिपीडितः बाधितः मानान्तरस्याद्वैतज्ञानबाधकत्वे हेतुमाह— भेदेति । भेदप्रकाशनकृता भेदप्रकाशकेन भेदविषयेणेति वा अक्षनिबन्ध-

नेन चक्षुरादिजन्येन समन्वयाध्याये हि सर्वेषां वेदान्तानामद्वितीये ब्रह्मणि समन्वय उपपादितः स चानुपपन्नः भेदग्राहिप्रत्यक्षादिविरोधादित्यर्थः ॥ १ ॥

ननु तत्पराद्वेदान्तात्प्रत्यक्षादेरेव किमिति बाधो न भवेत्तत्राह—

**मज्जत्यलाबु सहसाऽप्सु शिलाः प्लवन्त**
**इत्यादिकादभिहितादिव वाक्यजातात् ।**
**जाताऽपि बुद्धिरपबाधितगोचरैव-**
**मद्वैतबुद्धिरपि भेदधियाऽऽत्मनि स्यात् ॥२॥**

मज्जतीति । निमज्जति सहसा झटिति अभिहितात् उक्तात् अपबाधितगोचरा बाधितविषया एवमलाबु मज्जतीत्यादिवाक्यीयज्ञानवत् भेदधिया प्रत्यक्षादिजन्यभेदज्ञानेनापबाधितगोचरेत्यनुषज्यते । आत्मनि आत्मविषये इदं चाद्वैतबुद्धिरित्यत्र सम्बध्यते । अद्वितीयात्मबुद्धिरित्यर्थः । यथा हि लोके शिलाः प्लवन्त इत्यादिवाक्यं प्रत्यक्षादिबाधितविषयं सदतत्परमेव एवमात्मनः सजातीयादिभेदशून्यताप्रतिपादकैकमेवाद्वितीयमित्यादिवाक्यमपि प्रत्यक्षादिविरोधे तत्परमेव न भवति अतस्तेन प्रत्यक्षादिबाधो न भवतीत्यर्थः ॥ २ ॥

एवं तत्पदार्थसमन्वितवाक्यानां प्रत्यक्षादिबाधकमुक्त्वा त्वंपदार्थसमन्वितवाक्यानामपि तमाह—

**अध्यक्षगोचरमनर्थमवैमि वाक्यं**
**निर्मुक्तमाह मम रूपमनर्थहेतोः ।**

एवं च वेदशिरसोऽक्षनिबन्धनेन
ज्ञानेन बाधनमतीव हि दुर्निवारम् ॥ ३ ॥

अध्यक्षेति । ननु'अत्राह सद्वयमिदं मम रूपमीक्ष' [अ. १ श्लो. ६५] इत्यादिनायं गतार्थ इति चेन्न अर्थभेदसत्त्वात् । तत्र हि प्रत्यक्षादेर्मिथ्याविषयत्वमङ्गीकृत्य लक्षणया वाक्यार्थविरोधः परिहृतः । अत्र तु प्रत्यक्षादेर्मिथ्याविषयत्वमुपपादयितुमेव पदार्थसमन्वयविरोधः शङ्क्यत इति । अध्यक्षगोचरं प्रत्यक्षविषयं मम रूपमित्यत्रापि सम्बध्यते । अनर्थमनर्थयुक्तमवैमि जानामि । वाक्यं योऽयं विज्ञानमय इत्यादिनिर्मुक्तं मुक्तमिदं चानर्थहेतोरित्यत्र सम्बध्यते अनर्थहेतुश्च कर्तृत्वादिः । एवं च एवं सति प्रत्यक्षविरुद्धार्थबोधकत्वे सतीत्यर्थः । अक्षनिबन्धनेन प्रत्यक्षजन्येन ज्ञानेन प्रमया बाधनं बाधः अतीवात्यन्तं हीति प्रसिद्धिः । अहं कर्ता दुःखीत्यादिप्रत्यक्षेण ममरूपमनर्थव्रातोपेतं पश्यामि । श्रुतिस्तु निर्मुक्तनिखिलबन्धनमावेदयति । तथा च कथं ज्ञानयोर्विरोधः । कथं वा प्रत्यक्षादिना वाक्यजन्यप्रमितेर्न बाध इत्यर्थः ॥ ३ ॥

न केवलमद्वैतात्मनि वाक्यसमन्वयस्य प्रत्यक्षादिबाधः किन्तु कर्मकाण्डबाधोपि तद्धि तत्तत्फलोद्देशेन कर्म विदधत् आत्मनः कर्तृत्वं नियोज्यत्वमधिकारित्वं नियोज्यनियोगादेर्भेदं च विषयीकरोति । अयं तद्विपरीतमिति प्रामाण्यमेव दुर्लभमित्यभिप्रेत्याह—

कर्तृत्वमाह मम कर्मविधिर्नियोग-
सम्बन्धपूर्वकमपास्तसमस्तभेदम् ।
मामाह वेदशिरसो वचनं तथा च
सत्यस्य दुःस्थितमिवाऽऽपतति प्रमात्वम् ॥ ४ ॥

कर्तृत्वमिति । ननु कर्मविधिर्नियोगमेव प्रतिपादयति न कर्तृत्वं

सत्यं तदापि साक्षात्तदप्रतिपादकत्वेपि परम्परया तदपि प्रतिपादयति । अन्यथा प्रतीयमानस्य नियोगकृतिसाध्यत्वस्यानुपपत्तेरित्यभिप्रेत्याह—नियोगेति । नियोगनियोज्यविषयाणां सम्बन्धबोधनपूर्वकं नियोगस्य कृतिसाध्यतानिर्वाहाय तद्विषययागस्य कृतिसाध्यत्वाय नियोज्यस्य कर्तृत्वमपि बोधयतीत्यर्थः । फलितमाह — तथाचेति । तथा च सतीति छेदः । अस्य वेदशिरसः दुस्थितमित्रापतति । अनुपपन्नमेव भवतीत्यर्थः । प्रमात्वं प्रामाण्यम् ॥ ४ ॥

ननु काण्डद्वयस्यापि 'तुल्यं हि साम्प्रदायिकम्'[जै. अ १ पा. २ सू. ८] इति प्रामाण्यस्य तुल्यत्वात् न कर्मकाण्डस्य वेदान्तबाधकत्वं नापि प्रत्यक्षादेर्वेदान्तबाधकत्वं स्वार्थप्रकाशकत्वस्योभयोरपि समत्वात् । न च ग्रावप्लवनादिवाक्यवत्प्रत्यक्षादिविरोधस्य दुर्बलतातत्परत्वग्राहकस्योपक्रमादेरत्र सत्त्वात् । तथा च कथं प्रत्यक्षादिभिर्वेदान्तबाधः कथं वा तस्याप्रामाण्यमित्याशङ्क्य यद्यपि प्रत्यक्षादेः प्रत्येकं समत्वात् वेदान्तबाधकत्वमनुपपन्नं तथापि परस्परसाहित्येन तद्बाधकत्वमुपपद्यते । दृश्यते हि समयोरपि राज्ञोरन्यसाहाय्यतदभावाभ्यां जयाजयव्यवस्थेत्यभिप्रेत्याह—

प्रत्यक्षकर्मवचसोरुभयोः समूहः
सामर्थ्यवानुपनिषद्विषयापहारे ।
एकैकमेव तु न पारयतेऽपहर्तुं
स्वार्थप्रकाशनविधावुभयोः समत्वात् ॥ ५ ॥

प्रत्यक्षेति । प्रत्यक्षं चक्षुरादि कर्मवचः कर्मकाण्डवाक्यं तयोः समूहो मेलनं प्रत्यक्षादिमिलितान्यतरदित्यर्थः । सामर्थ्यवान् समर्थः । उपनिषद्विषयापहारे उपनिषत्प्रमेयाद्वैतबाधने एकैकं प्रत्यक्षादि प्रत्येकं

न पारयते न समर्थम् । अपहर्त्तुमुपनिषद्विषयमिति शेषः । तत्र हेतुः—स्वार्थेति । स्वार्थप्रकाशनमुभयोः प्रत्यक्षाद्यन्यतमवेदान्तयोः ॥ ५ ॥

ननु प्रमाणानां प्रामाण्यबलेन बाधकत्वं वक्तव्यं तत्र यदि कर्मकाण्डस्यापौरुषेयवेदत्वेन प्रमाण्यं तद्वेदान्तानामपि तुल्यं यदि प्रत्यक्षादिसाहित्येन तर्हि परतः प्रामाण्यप्रसङ्गः तथा च कथं परस्परसाहित्येनाप्युभयोर्वेदान्तबाधकत्वं मित्याशङ्क्य पक्षान्तरमाह—

ज्यैष्ठ्यात्समर्थमथ वाऽक्षजमेकमेव
तस्यैव कर्म विधिरस्तु सहायभूतः ।
प्रत्यक्षमेव विधिवाक्यसहायमेवं
ब्रह्मात्मवस्त्वपहरिष्यति को विरोधः ॥ ६ ॥

ज्यैष्ठ्यादिति । उपजीव्यतया प्रथमप्रवृत्तत्वात् समर्थमुपनिषद्विषयापहारे इत्यनुषङ्गः । अक्षजं प्रत्यक्षजन्यप्रपञ्चभेदग्राहिप्रमा । आगमस्य व्युत्पत्तौ सिद्धौ चोपजीव्यतया तस्य प्रबलत्वात्प्रत्यक्षमेकमेव वेदान्तागमं बाधत इत्यर्थः । ननु ज्येष्ठत्वेप्युपजीव्यसजातीयत्वेपि यथा शुक्तिरजतप्रत्यक्षस्य नेदं रजतमित्यागमबाध्यत्वं तद्वदत्रापि किं न स्यादिति चेन्न । बलवद्धि वस्तु दुर्बलं बाधते ज्ञानस्य च बलवत्वमनन्यथासिद्धत्वम् । न च शुक्तिरजतज्ञानमन्यथासिद्धं तस्य भ्रान्तत्वात् । न चेदं प्रपञ्चभेदग्राहिप्रत्यक्षं तथा बाधकाभावात् । न च कालान्तरे बाधशङ्का भविष्यतीति वाच्यम् । तस्या अपि भेदग्राहिकर्मश्रुतिसम्वादेन निरस्तत्वात् । तथा च प्रत्यक्षस्य वेदान्तबाधने कर्मविधिः साहाय्यमाचरति इत्याह—तस्यैव इति । तस्य प्रत्यक्षस्य फलितमुपसंहरति—प्रत्यक्षमेवेति । न विधिवाक्यमित्यर्थः । विधिवाक्यसहायमिति बहुव्रीहिः । एवं सति प्रत्यक्षस्यैकस्यैव वेदान्तबाधकत्वं विधिवाक्यं तु

प्रत्यक्षसाहाय्यमेव भजते न तु प्रत्यक्षसाहाय्येन वेदान्तं बाधतं इत्यङ्गीकारे को विरोधः । कर्मवाक्यस्य प्रत्यक्षसाहाय्येन वेदान्तबाधकत्वपक्षोक्तपरतः प्रमाण्यप्रसङ्गलक्षणसिद्धान्तविरोधः कः न कोपीत्यर्थ.। अथवा यथा प्रत्यक्षमुपजीव्यतया बलवत्। एवं कर्मकाण्डमपितदुपजीव्यतया बलवदेव उपजीवति हि वेदान्तः कर्मकाण्डमपि स्वापेक्षिताधिकारिसिद्धये न हि कर्मकाण्डाधीनविशुद्धाशयमन्तरेण साधनसम्पत्तिरवतरति। न च साधनचतुष्टयसम्पत्तिं विना वेदान्तः प्रवर्तितुमर्हति। तथा च कर्मकाण्डमपि भेदविषयमुपजीव्य बलवद्बाधकमेव तत्र च प्रत्यक्षं विधिबोधितव्रीहिपुरोडाशाद्यंशे बाधशङ्कानिरासद्वारा सहायभावं भजते। न च विरोधः। विधिवाक्यस्यैकस्यैवोपजीव्यतया वाधकत्वाङ्गीकारात्। प्रत्यक्षादिसाहित्येन प्रामाण्यातिशयेन वाधकत्वानङ्गीकारादित्यभिप्रेत्याह—प्रत्यक्षमेवेति। अथवेत्यनुषञ्जनीयम्। अस्मिन्पक्षे विधिवाक्यसहाय इति पाठः। षष्ठीतत्पुरुषश्च द्रष्टव्यः। प्रत्यक्षस्य विधिवाक्यसहायतामात्रमेव वाधकत्वं तु विधिवाक्यस्यैवेत्यर्थः। तस्मादुपजीव्यप्रत्यक्षादिविसंवादाद्वर्णितः समन्वयोऽनुपपन्न इति भावः॥ ६॥

अत्रायं विद्वदपसद प्रष्टव्यः कथं वेदान्तानां प्रत्यक्षादिविसंवाद इति। किं प्रत्यक्षाद्यनवगतवस्तुविषयत्वात्। किं वा प्रत्यक्षादिसिद्धार्थाभावविषयत्वात्। नाद्यः। तथात्वे कर्मकाण्डस्यापि प्रत्यक्षादिविसंवादेन तत्प्रतिपादिताग्निहोत्रादेरप्ययथार्थत्वप्रसङ्गात् न हि तत्प्रमेयो धर्मः प्रत्यक्षविषयः। ननु धर्मस्य कार्यतया मानान्तराविषयत्वं भूषणमेव। ब्रह्मणस्तु न तथा सिद्धवस्तुनो मानान्तरयोग्यत्वनियमात्। तथा च तद्गोचरत्वादेव तद्विसंवाद इतिचेत्किं कार्यमात्रस्य मानान्तरायोग्यत्वं भूषणमित्युच्यते किं वा कार्यविशेषस्य चेत्तर्हि प्रकृतेपि सिद्धवस्तुविशेषस्य ब्रह्मणो मानान्तरायोग्यत्वं भूषणमेव। तथा च कथं तद्विसंवादः। न द्वितीयः। तदभावात्। तथा हि किं प्रत्यक्षेण

घटादिसत्तामात्रं प्रतीयते। किं वा तस्य वास्तवत्वमपि। आद्ये न तस्य घटादिपारमार्थिकत्वनिषेधकवाक्यविरोधः। न हि घटस्य प्रलयकाले अभावसाधकमनुमानमिदानीं तत्सत्ताग्राहकप्रत्यक्षेण विरुध्यते तत्कस्य हेतोः तयोर्भिन्नविषयत्वादिति चेन्न घटस्यैकत्वात् ननु घटस्यैकत्वेपि कालावच्छेदभेदेन तद्विषयज्ञानयोर्विषयभेद इति चेत्तर्हि प्रकृतेपि घटसत्तामात्रावगाहिप्रत्यक्षेण घटपारमार्थिकत्वनिषेधकश्रुतिमस्तकवाक्यस्य भिन्नविषयतया न विरोधः। द्वितीये किमिदं वास्तवत्वमबाधितज्ञानविषयत्वमिति चेत् किमागमव्यतिरिक्तप्रमाणबाधितज्ञानविषयत्वं किं वा सर्वप्रमाणबाधितज्ञानविषयत्वम्। नाद्यः। नरशिरः कपालशुचित्वादेरपि तादृशज्ञानविषयत्वेन यथार्थत्वप्रसङ्गात्। न द्वितीयः। घटादेरपि नेह नानेतिश्रुत्या बाधितत्वात्। नन्वागमस्यैतद्बाध्यस्यैतद्बाधकत्वमनुपपन्नमिति चेन्न-प्रत्यक्षस्य यथार्थविषयत्वसिद्धेः प्राक्तद्बाधकत्वानुपपत्तेः। त्रैकालिकबाधाभावघटितसत्त्वस्य वर्त्तमानमात्रग्राहिप्रत्यक्षेण ग्रहीतुमशक्यत्वाच्च। ननु सदिति प्रतीयमानत्वं तदिति चेन्न—शुक्तिरजतसंसर्गस्यापि यथार्थत्वप्रसङ्गात्। ननु सदिति प्रमीयमाणत्वं तदिति चेन्न—प्रमाया विषयसद्भावघटितत्वेनान्योन्याश्रयप्रसङ्गात्। ननु सत्ताश्रयत्वं तदिति चेन्न—सत्तादेरयथार्थत्वप्रसङ्गात्। नन्वर्थक्रियाकारित्वं तदिति चेन्न—अर्थक्रियाविरहदशायामसत्वप्रसङ्गात्। ननु यत्किञ्चिदर्थक्रियाकारित्वं सर्वदा सर्वेषामस्तीति चेन्न—एवमप्यर्थक्रियायामर्थक्रियासंभवेनासत्वे तद्घटितवस्तुसत्ताया अप्यसत्वप्रसङ्गादर्थक्रियाया अर्थक्रियाङ्गीकारेऽनवस्थानाद् घटादेर्वस्तुभूतत्वे विनाशानुपपत्तेश्च। परमार्थसतश्च विनाश इति व्याहतं वचनं तस्मात्प्रत्यक्षादेर्घटादिमात्रविषयत्वेन तत्त्वावेदकत्वाभावात्। एवमेव कर्मकाण्डस्यापि कार्यमात्रपरत्वेन न स्वातन्त्र्येण नियोज्यादिभेदपरत्वाभावात्। तत्परत्वे च वाक्यभेदप्रसङ्गात्। वास्तवभेदं विनानुपपत्यभावाच्च। न प्रपञ्च-

पारमार्थिकत्वनिषेधकनेतीत्यादिवाक्यस्य ताभ्यां विरोध इत्येतद्बुद्धि निधाय परिहारमाह—

अत्रोच्यते न खलु वेदशिरांसि मुक्त्वा
किञ्चित्प्रमाणमिह तत्त्वनिवेदनाय ।
शक्नोति येन भवतीहि विरोधशङ्का
वेदान्तवाक्यमुखतोऽवगते प्रतीचि ॥ ७ ॥

अत्रोच्यतइति । अत्रास्मिँश्चोद्ये उच्यते परिहार इति शेषः । तत्त्वं वास्तवस्वरूपं तन्निवेदनं तत्प्रकाशनं येनेत्यस्यायमर्थः । यदि प्रत्यक्षादेः प्रपञ्चपारमार्थिकत्वबोधकत्वं स्यात्तदा वेदान्तस्य तद्विरोधो भवेत् तस्य प्रपञ्चाभावबोधकत्वात् वेदान्तावगतेऽद्वितीये ब्रह्मणि च मानान्तरबाधः स्यात्तद्विरुद्धत्वान्न त्वेदस्ति प्रत्यक्षादेर्वस्तुमात्रबोधकत्वादित्यर्थः । इहेत्यस्य प्रतीचि देहादिसाक्षिण्यद्वितीये प्रत्यगात्मनि ॥ ७ ॥

ननु प्रत्यक्षादिप्रामाण्यं सर्ववादिसंमतं तत्त्वमितिजनकत्वं च प्रामाण्यं शुक्तिरजतज्ञानस्य प्रामाण्याप्रसिद्धेः । ततः कथं प्रत्यक्षादेस्तत्त्वनिवेदकत्वाभावः । कथं वाऽद्वैतागमस्य प्रत्यक्षादिविरोधपरिहार इत्याशङ्क्याह—

अज्ञातमर्थमवबोधयदेव मानं
तच्च प्रकाशकरणत्वमभित्यभिज्ञाः ।
न प्रत्यगात्मविषयादपरस्य तच्च
मानस्य संभवति कस्यचिदत्र युक्त्या ॥८॥

अज्ञातमर्थमिति। तत्त्वप्रकाशकरणक्षमं तत्त्वप्रकाशजननसमर्थमभिज्ञाः भट्टाचार्यादय आहुरिति शेषः। प्रत्यगात्मविषयादिति बहुव्रीहिः मानादितिशेषः। तदज्ञातार्थबोधकत्वम्। अत्र परीक्षाभूमौ भट्टाचार्यादयो ह्यनधिगतार्थगन्तृ प्रमाणमिति प्रमाणलक्षणं वदन्ति। अनधिगतत्वं चाज्ञातत्वं तादृशार्थबोधकत्वं चात्मविषयप्रमाणस्यैव संभवति। आत्मन एवाज्ञातत्वात्। घटादेश्च स्वत एव जडतयाऽज्ञानावृतत्वलक्षणाज्ञातत्वाभावात्। ननु घटादेः स्वतोऽज्ञातत्वाभावेप्यज्ञातचैतन्यावच्छेदकत्वं नाज्ञातत्वमपि वक्तव्यम्, अन्यथा—स्वतो जडस्यापि घटादेः स्वप्रकाशात्मसम्बन्धेन नित्यवत् प्रकाशप्रसङ्गादिति चेन्न—घटाद्यप्रकाशस्य तदधिष्ठानावरणेन वा आगन्तुकप्रमाणवैकल्येन वोपपत्तेः। तथा च घटादिगोचरप्रत्यक्षादेः प्रमितिजनकत्वेन प्रामाण्येप्यज्ञातार्थविषयप्रमितिजनकत्वासंभवात् न तत्त्वावबोधनलक्षणप्रामाण्यमित्यर्थः। एतदेवाभिप्रेत्य युक्त्येत्युक्तम् ॥ ८ ॥

किं च घटादिवस्तुतत्त्वस्यानवच्छिन्नात्ममात्रत्वान्न तद्विषयत्वं चक्षुरादेरुपपद्यते। तस्य पराङ्मात्रविषयत्वात् 'पराञ्चि खानी'ति श्रुतेः अतोपि न तेषां तत्त्वावेदनलक्षणं प्रामाण्यमित्यभिप्रेत्याह—

सर्वं पराग्विषयमेव हि मानजातं
वेदावसानवचनानि तु वर्जयित्वा।
यद्भौतिकं किमपि भौतिकगोचरं त-
द्रूपप्रदीपकनिदर्शनतः प्रसिद्धम् ॥ ९ ॥

सर्वं पराग्विषयमिति। परागविद्याकल्पितनामरूपात्मकः प्रपञ्चो विषयो यस्य मानजातस्य तत्तथोक्तं हि शब्दो यस्मादर्थे यस्मात्पराग्विषयं तस्मादज्ञातप्रत्यगात्मविषयं न भवतीत्यर्थः। मानजातं प्रमाणसमूहः जातग्रहणेन वेदान्तग्रहणं व्यावर्त्तयति—वेदावसानेति। अवसानमन्तः

वेदान्तव्यतिरिक्तप्रमाणस्य पराग्विषयत्वेऽनुमानं प्रमाणं विवक्षन् तन्मूलां व्याप्तिं सदृष्टान्तामाह—यद्भौतिकमिति। भौतिकं भूतजन्यद्रव्यमित्यर्थः। प्रकाशकमित्यपि द्रष्टव्यम्। भौतिकगोचरं भूतजन्यद्रव्यतद्धर्ममात्रविषयं प्रदीपकः प्रदीपः रूपप्रकाशकप्रदीपदृष्टान्तादित्यर्थः। अत्रेदमनुमानं विवक्षितम्। चक्षुरादि भौतिकमात्रप्रकाशकं प्रकाशक भौतिकत्वात् प्रदीपवदिति। तथाच घटादिवस्तुतत्त्वानवच्छिन्नात्ममात्रत्वेनाभौतिकत्वात् न चक्षुरादीनां तद्विषयत्वमित्यर्थः॥ ९॥

इदानीं प्रकारान्तरेणापि चक्षुरादेर्घटादितत्त्वाविषयत्वं साधयति—

**यद् व्यञ्जकं किमपि लौकिकमीक्षितं त-**
**द्व्यङ्ग्येन तुल्यमवलोकितमत्र जात्या।**
**दीपः प्रकाशकतया विदितो हि लोके**
**रूपेण तैजसतया सदृशः प्रसिद्धः॥ १०॥**

यद्व्यञ्जकमिति। व्यञ्जकं प्रकाशकारणं तद्व्यञ्जकं व्यङ्ग्येन प्रकाश्येन तुल्यं समानम्। अत्र जगति केनाकारेण साम्यमित्याकाङ्क्षायामाह—जात्येति। भौतिकत्वादिधर्मेणेत्यर्थः। दृष्टान्तस्य साधनवैकल्यं परिहरति—प्रकाशकतया विदित इति। तमोनिवृत्तिरूपप्रकाशकतया विदित इत्यर्थः। साध्यवैकल्यं परिहरति—रूपेणेति। केनाकारेण साम्यमित्याशङ्क्याह—तैजसेति। तेजोजन्यत्वादिनेत्यर्थः। अथवा—बाह्येन्द्रियाणां स्वसमानगुणव्यञ्जकत्वाद्गुणेनापि साम्यं विवक्षन्नाह—रूपेणेति। गन्धसमवायादेरप्युपलक्षणम्। अत्रेदमनुमानं चक्षुरादिस्वसमानधर्मवत एव व्यञ्जकं व्यञ्जकत्वात् बहिरिन्द्रियत्वाद्वा रूपादिव्यञ्जकदीपादिवत्। व्यञ्जकपदमत्र प्रकाशकरणपरम्। अतो न बुद्धौ व्यभिचारः।

नचैवं सत्यात्मनोपि कल्पितधर्माश्रयत्वेन द्रव्यत्वादिना चक्षुरादि-समानधर्मकत्वात्तद्विषयत्वापत्तिरिति वाच्यम्। धर्मिसमानसत्ताक-धर्मेणैव समानधर्मत्वस्य विवक्षितत्वात्। न च वेदान्ते व्यभिचारः। तस्याभिव्यक्तिरूपे आत्मन्यभिव्यक्तयजनकत्वात्तथा च घटादितत्वस्या-त्मनश्चक्षुरादिसमानधर्मकत्वाभावात् न चक्षुरादेस्तद्विषयत्वं किन्तु केवलघटादिविषयत्वमतःप्रत्यक्षादेस्तत्वावेदनलक्षणप्रामाण्यासंभवात् न तेन वेदान्तविरोध इति भावः ॥ १० ॥

एवं बहिरिन्द्रियस्य घटादितत्वाविषयत्वं साधयित्वा अन्त-रिन्द्रियस्यापि तत्साधयति—

**बुद्धिः समस्तविषयावगमे प्रवृत्ता**
**साऽपि प्रकाश्यविषयेण समानजातिः।**
**बुद्धिश्च भौतिकतया श्रुतिषु प्रसिद्धा**
**तेनास्तु साऽपि खलु भौतिकगोचरैव ॥११॥**

बुद्धिरिति। वेदान्तासहकृतान्तःकरणं बुद्धिपदेन विवक्षितम्। अन्यथा—तत्सहकृद्बुद्धेरात्मगोचरत्वेन भौतिकमात्रगोचरत्वसाधने चांशतो बाधप्रसङ्गात्। समस्तविषयावगमे प्रवृत्ता बाह्यसर्वपदार्थ-ज्ञाने प्रवृत्ता आत्मव्यतिरिक्तसकलपदार्थप्रकाशिकेत्यर्थः। सा तादृशी बुद्धिः प्रकाश्यविषयेण प्रकाश्यपदार्थेन समानजातिरिति-बहुव्रीहिः। समानधर्मिकेत्यर्थः। समानधर्मत्वं च भौतिकत्वादिना विवक्षितम्। अत्रेदमनुमानं वेदान्तासहकृतबुद्धिः स्वसमानधर्मवत एवापरोक्षतया प्रकाशिका वेदान्तासहकृतत्वे सति प्रकाशकद्रव्यत्वा-द्दीपवदिति ॥ ११ ॥

एवं प्रत्यक्षस्य घटादितत्त्वात्मविषयत्वं निराकृत्य तदुपजीव्या-

नुमानादेरपि तद्विषयत्वं नास्तीत्याह—

एवं प्रमाणमखिलं बहिरर्थनिष्ठं
वेदान्तवाक्यमपहाय यथोक्तहेतोः।
न प्रत्यगात्मविषयं श्रुतिरप्युवाच
स्पष्टं पराञ्चि वचसाऽर्थमिमं यथोक्तम् ॥१२॥

एवमिति। प्रत्यक्षवत्प्रमाणमनुमानादिबहिरर्थनिष्ठं घटादिमात्रविषयं न तु तत्त्वात्मविषयम्। अखिलग्रहणेन वेदान्तग्रहणं वारयति-वेदान्तवाक्यमपहायेति। मयोक्तहेतोर्भौतिकत्वे सति व्यञ्जकत्वादित्याद्युक्तहेतोः प्रत्यगात्मशब्देन घटादितत्त्वात्मोच्यते। अत्रेदमनुमानं विमतान्यनुमानादीनि भूतभौतिकमात्रविषयाणि भौतिकत्वे सति परोक्षतया व्यञ्जकत्वात् तादृशबुद्धिवत्। यद्वा—'अत्रोच्यते न खलु' 'अज्ञातमर्थम्' इति [अ. २ श्लो ७-८] श्लोकद्वयेन घटादिविषयप्रत्यक्षादेस्तत्त्वावेदनप्रमाण्याभावात् न तेन तत्पदार्थब्रह्मणोऽद्वितीयताबोधकवेदान्तानां विरोध इत्युक्तम्। 'सर्वं पराग्विषयम्'इत्यादिना [अ. २ श्लो. ९] तु कर्तृत्वादिगोचरप्रत्यक्षादीनामात्मविषयत्वाभावान्न तद्बलेन त्वंपदार्थप्रत्यगात्मनः कर्तृत्वादिसिद्धिरिति न तस्य नित्यमुक्तताद्यावेदकश्रुतिविरोध इत्युच्यत इति द्रष्टव्यम्। अत्र प्रत्यगात्मशब्दो जीवस्वरूपविषयः अन्यत्तु पूर्ववत्। प्रत्यक्षादीनामनात्ममात्रविषयत्वेन प्रत्यगात्माविषयत्वे श्रुतिरपि प्रमाणमित्याह-श्रुतेरिति। केन वाक्येनाहेत्यत्राह-पराञ्चि वचसेति। पराञ्चीत्यादिवाक्येन यथोक्तमुक्तमनतिक्रम्य यथा मया प्रत्यक्षादेर्बहिरर्थमात्रनिष्ठत्वेन प्रत्यगात्माविषयत्वं युक्त्योक्तं तथैव श्रुतिरप्याहेति तात्पर्यार्थः ॥ १२ ॥

तामेव श्रुतिमाह—

पराञ्चि खानि व्यतृणत्स्वयम्भू-
स्तस्मात्पराङ् पश्यति नान्तरात्मन् ।
कश्चिद्धीरः प्रत्यगात्मानमैक्ष-
दावृत्तचक्षुरमृतत्वमिच्छन् ॥ १३ ॥

पराञ्चि खानीति । पराञ्चि वहिरर्थविषयाणि खानि इन्द्रियाणि इदं च वेदान्तव्यतिरिक्तसर्वप्रमाणानामुपलक्षणम् न तु वेदान्तस्यात्मनो वेदान्तविषयत्वस्य तत्त्वौपनिषदमिति श्रुत्या प्रतिज्ञानात् व्यतृणद्धिंसितवान् । हिंसा च तेषां निखिलानर्थनिदानपराग्विषयत्वमेव । तस्मादविवेकी जनः पराक् अनात्मवस्त्वेवेन्द्रियादिभिः पश्यति । नान्तरात्मन्नान्तरात्मानं पश्यति । धीरः विवेकवैराग्यसंपन्नः । अत एवावृत्तचक्षुर्नियमितेन्द्रियः शान्त्यादिसम्पन्न इत्यर्थः । अत एवामृतत्वमिच्छन्मुमुक्षुः प्रत्यगात्मानं वेदान्तश्रवणादिना—ऐक्षत—ईक्षत इत्यर्थः ॥ १३ ॥

नन्वनुमानादेः परोक्षज्ञानैकजनकस्वभावत्वादात्मनि च व्याप्त्याद्यसंभवान्नित्यापरोक्षात्मविषयत्वाभावेपि चक्षुरादेर्वेदान्तानामिवापरोक्षज्ञानजनकत्वात्तादृशात्मविषयत्वं किं न स्यान्न भौतिकत्वादिना चक्षुरादेस्तदविषयत्वप्रयोजकत्वादित्याशङ्क्याह—

यत् कर्मभावमनपास्य निजप्रमेये
संवित्तिसाधनतया जगति प्रसिद्धम् ।
मानं जडार्थविषयं तदिहाभ्युपेयं
न प्रत्यगात्मविषयं कथितोपपत्तेः ॥ १४ ॥

यत्कर्मभावमिति । यन्मानमिति सम्बन्धः । कर्मभावं कर्मत्वमनिवा-

र्यानपोह्य स्वविषये प्रमेये संवित्तिसाधनतया प्रमितिसाधनतया इह जगति तन्मानं पुरोक्तहेतोः पूर्वोक्तानुमानात् । यद्धि मानं कर्मतयैव स्वविषयं बोधयति । तज्जडविषयमेव जडस्यैव ज्ञानक्रियाफलाश्रयत्वेन कर्मत्वान्नानवच्छिन्नप्रत्यगात्मविषयं तस्य स्वतः फलरूपत्वेन कर्मत्वासंभवाद् घटादिविषयं कर्त्रात्मविषयं च प्रत्यक्षं कर्मतयैव स्वविषयं बोधयति । घटादिसमवेताभिव्यक्तिरूपफलजनकत्वादत एवोक्तहेतोरपि नाप्रयोजकत्वम् । अतो न चक्षुरादिघटादितत्त्वं प्रत्यगात्मानं च विषयीकर्त्तुमलमित्यर्थः ॥ १४ ॥

तर्हि वेदान्तानामपि प्रमाणत्वाविशेषाच्चक्षुरादिवदात्मविषयत्वन्न स्यादित्याशङ्क्याह—

यत्तु प्रमाणमवधीर्य निजप्रमेये
कर्मत्वमर्थमवबोधयितुं प्रवृत्तम् ।
तत्प्रत्यगात्मविषयं भवितुं क्षमेत
तत्त्वमादिवचनं न ततोऽन्यदस्ति ॥ १५ ॥

यत्त्विति । अवधीर्य त्यक्त्वा कर्मत्वमन्तरेणेत्यर्थः । अर्थं निजप्रमेयं तत्तादृशं प्रमाणम् । नन्वकर्मतया स्वप्रमेयबोधकत्वमनुमानादीनामप्यस्ति तान्यपि किं प्रत्यगात्मविषयाणि नेत्याह—तत्त्वमादिवचनमिति । तत्प्रत्यगात्मविषयं प्रमाणमन्यदनुमानादि । यद्यप्यनुमानादिकमप्यकर्मतयैव स्वविषयं बोधयति । तथापि तस्य व्याप्त्यादिबलेनैव स्वप्रमेयावबोधकत्वात् अनवच्छिन्नानन्दे प्रत्यगात्मनि च कस्यापि व्याप्त्यादेरभावात् न तद्विषयत्वमनुमानादेः वेदान्तास्तु कथं चिल्लक्षणायाऽपरोक्षां वृत्तिमुत्पादयन्त्येव । ननु वेदान्तानामप्यपरोक्षवृत्तिजनकत्वेन च चक्षुरादिवत्कर्मतयैव स्वप्रमेयबोधकत्वं वक्तव्यम्, प्रत्यक्षविषयस्य कर्मत्वनियमात् । तथा च कथमात्मविषयत्वमिति

चेन्न—प्रत्यक्षविषयत्वस्याप्रयोजकत्वात् क्रियाजन्यफलभागित्वं हि कर्मत्वं तच्च चक्षुरादिप्रमेये जडे घटादौ संभवति । प्रमाणजन्यस्फुरणलक्षणफलभागित्वाद्वेदान्तप्रमेयस्य तु ब्रह्मणः सर्वप्रमाणफलभूततया फलितत्वाभावान्न कर्मत्वम् । तदुक्तं सुरेश्वराचार्यैः 'परागर्थप्रमेयेषु या फलत्वेन संमता । संवित्सैवेह मेयोऽर्थो वेदान्तोक्तिप्रमाणत' इति तथा च वेदान्तानां प्रमाणत्वाविशेषेऽप्यकर्मतयाऽपरोक्षबोधजनकत्वविशेषेण प्रत्यगात्मविषयत्वं संभवतीत्यर्थः । तथा च प्रत्यगात्मनः प्रत्यक्षाद्यविषयत्वान्न तेन घटादिकर्तृत्वाद्यवगाहिनात्मनो नित्यमुक्तत्वाद्वितीयत्वावेदकश्रुतिविरोध इति भावः ॥ १५ ॥

यदुक्तं घटादेरज्ञाततत्वासंभवान्न तस्याज्ञातार्थग्राहकतत्वावेदनप्रमाणविषयतेति तदेवेदानीं घटादिविषयाज्ञाततायां मानाभावेन प्रपञ्चयति—

> **नाज्ञाततावगतिरस्ति जडेषु पूर्वं**
> **मेयेषु तत्स्फुरणकारणवर्जितत्वात् ।**
> **मानोदयान्न हि पुरा किमपीह मानं**
> **नापि प्रमेयबलतो जडता हि तस्य ॥१६॥**

नाज्ञाततेति । पूर्वं मानप्रवृत्तेः पूर्वं मानप्रवृत्तिदशायामज्ञातताया एवासंभवात् । तदवगमस्तत्पूर्वमेव स्यादित्यभिप्रेत्य पूर्वमित्युक्तम् । अज्ञातत्तावगत्यभावे हेतुमाह—तत्स्फुरणकारणवर्जितत्वादिति । तस्याऽज्ञाततायाः यत्स्फुरणकारणमवगतिकारणं तस्याभावादित्यर्थः । ननु किमिति स्फुरणकारणाभाव इति चेत्तत्र वक्तव्यम् किं घटादिविषयप्रमाणेन तद्विषयाज्ञाततायाः स्फुरणमुतात्माज्ञाततावद्विषयबलेनैव नाद्य इत्याह—मानोदयादिति । प्रवर्त्तमानप्रमाणोदयात्किमपि प्रत्यक्षाद्यन्यतम-

दिहाज्ञाततायां मानं घटादिविषयं मानम्। अज्ञानं हि घटादिविशिष्टमेवानुभूयमानं तद्विषयप्रमाणेनैवानुभूयत इति वक्तव्यम्। तद्विषयप्रमाणप्रवृत्तिदशायाञ्चाज्ञानस्यैवाभावात्। तत्पूर्वं च प्रमाणप्रवृत्तेरेवाभावान्न कथमपि प्रमाणेनाज्ञाततासिद्धिरित्यर्थः। न द्वितीय इत्याह—नापीति। प्रमेयबलतः घटादिविषयबलात्तत्र हेतुः—जडतेति। हि यतस्तस्य घटादिप्रमेयस्य घटादेर्जडत्वान्न तेनाप्यज्ञाततासिद्धिरित्यर्थः॥ १६॥

नन्वज्ञाततायश्चक्षुरादिप्रत्यक्षप्रमाणगम्यत्वाभावेपि विमतं पूर्वमज्ञातमिदानीं ज्ञायमानत्वादित्यनुमानेन पूर्वकालीनाज्ञानस्यापि वेद्यत्वसंभवात् न तत्र प्रमाणाभाव इत्याशङ्कायां द्वितीयपक्षोक्तदूषणं विशदयन् निराकरोति—

**नाज्ञाततावगतये स्वयमेव याथं**
**मेयं समर्थमवबोधविलक्षणत्वात्।**
**नापि प्रमाणमवबोधकमस्ति किञ्चि-**
**न्मानोदयात्पुर इति स्फुटमभ्युपेयम्॥१७॥**

नाज्ञाततावगतय इति। स्वयमेव समर्थं नेति सम्बन्धः। तत्र हेतुः—अवबोधविलक्षणत्वादिति। ज्ञानविलक्षत्वाज्जडत्वादिति यावत्। किञ्चिदनुमानमपि मानोदयात् प्रवर्त्तमानप्रमाणोदयात् पुरः पूर्वम्। न चोक्तानुमानं तत्साधकं-धारावाहिकविज्ञानगम्ये व्यभिचारात्। न च तत्रापि यदा कदाचित्पूर्वमज्ञातत्वमस्तीति वाच्यम्। तथापि शुक्तिरूप्यादौ व्यभिचारादिदानीमेवेति विशेषणे चान्योन्याश्रयादज्ञानासिद्धो हेतुः। मानान्तरं च तद्विषयं न पश्यामीत्यर्थः॥ १७॥

ननु माभून्मानप्रवृत्तेः पूर्वमज्ञाततावगमः अनवगम्यमानायामेव

तस्यां वस्तुनोऽज्ञातेषु घटादिषु मानप्रवृत्तिरस्तु तथा च मानविषयत्वानुपपत्तिरेव घटाद्यज्ञातातायां प्रमाणं भविष्यतीति चेत्तत्राह—

**नाज्ञाततामनवगम्य पुरा प्रवेशा-**
**न्मानस्य किंचिदपि मानबलेन बोद्धुम् ।**
**शक्नोति कश्चिदपि मानबलेन बुद्धं**
**किं वा स्वभाव इति निश्चयहेत्वभावात् ॥१८॥**

नाज्ञाततामिति । अनवगम्याज्ञात्वा मानसप्रवेशात् पुरेति सम्बन्धः। मानप्रवृत्तेः पूर्वमित्यर्थः। किञ्चिदपि किमपि प्रमेयं मानबलेन बोद्धुं प्रमाणबलेनैव ज्ञातुं तथा वा व्यवहर्त्तुमित्यर्थः । कश्चिदपि पुरुषः न शक्नोतीति सम्बन्धः। तत्र हेतुः—मानबलेत्यादि। बुद्धमवगतं वस्त्विति शेषः। स्वभावः प्रकाशोऽस्य वस्तुन इति शेषः। एतदुक्तं भवति लोके हीदमिदानीमनेन ज्ञातव्यमिति बुभुत्सया हि तत्तद्विषयं प्रमाणतोऽवगच्छन्तो दृश्यन्ते । बुभुत्सा च नात्यन्तमज्ञाते न वात्यन्तं ज्ञाते भवति तदसंभवात् । ननु सामान्यतो ज्ञाते विशेषतश्चाज्ञाते सा भवतीति चेत्तत्र यदि सामान्यं विशेषाद्भिन्नं तर्हि न तज्ज्ञानादपि विशेषबुभुत्सा तस्यात्यन्तमज्ञातत्वात् । यद्यभिन्नं तर्हि विशेषोपि ज्ञात एवेति सुतरान्न तत्र बुभुत्सा । ननु सर्वापि विषयावगतिर्न बुभुत्साधीना पथिकस्य तृणादिविषयोपेक्षाज्ञानस्यापि दर्शनादिति चेन्न । तत्रापि विषयविशेषबुभुत्साभावेपि सामान्यबुभुत्सायाः सत्त्वात्तस्मादज्ञाततया ज्ञात एव घटादौ बुभुत्सा वक्तव्या । तथा च पूर्वमज्ञाततावगमाभावे बुभुत्साया एवाभावात । प्रमाणप्रवृत्तेरप्यसंभवान्न कोपि विषयप्रतिपत्तौ समर्थो भवेत् । किं च लोके मयेदं प्रमाणतोऽवगतमिति व्यवहारो दृश्यते । इदं च प्रमाणप्रवृत्तेः पूर्वं वस्तुनः अज्ञाततयावगतत्व एव संभवति । अन्यथा—इदंप्रमाणेनावगतं किं वा

विषयस्वभावादिति विषयावगतेर्विषयस्वाभाविकत्वशङ्कायाः अपि दुरपह्नवत्वेन प्रमाणेनेति निश्चयानुपपत्तेः। ततो मानप्रवृत्त्यर्थं मानतो बुद्धमिति व्यवहारार्थं च पूर्वमज्ञाततासिद्धिर्वक्तव्या। न च प्रमाणप्रवृत्त्यनुपपत्त्या तत्सिद्धिः उक्तप्रकारेणाज्ञाततावगमात् पूर्वं मानप्रवृत्तेरेवाभावात्तत्प्रवृत्त्या तदधिगमेऽन्योन्याश्रयप्रसङ्गादिति ॥ १८ ॥

ननु विषयस्याज्ञाततावगतिं विनापि तदवगतेर्मानान्वयव्यतिरेकाभ्यां मानजन्यता ज्ञातुं शक्यते। ततः प्रमाणतोऽवगतत्वव्यहारार्थमज्ञाततावगमो न वक्तव्य इत्याशङ्क्य उक्तमर्थं सदृष्टान्तं प्रपञ्चयति—

प्रक्षालनेन धवलं किमिदं बभूव
किंवा पुराऽपि धवलं स्वयमेव वस्त्रम्।
इत्येवमेष न विवेक्तुमलं कदाऽपि
यो दृष्टवान्न मलिनं वसनं पुरस्तात् ॥१९॥

प्रक्षालनेनेति। द्वाभ्यामेषः पुरुषः एवं विवेक्तुमलं समर्थो नेति सम्बन्धः। एवशब्दार्थमाह—प्रक्षालनेनेत्यादिनेत्यन्तेन। धवलं शुभ्रमिदं वस्त्रमिति सम्बन्धः। कदाचित्कदाचिदपीत्यर्थः। एष क इत्याकाङ्क्षायामाह—य इत्यादिना। वसनं वस्त्रं वसनं मलिनं न दृष्टवानिति सम्बन्धः। पुरस्ताद्धावल्यदर्शनात्पूर्वम् ॥ १९ ॥

दार्ष्टान्तिकमाह—

एवं पुरानधिगतं यदि नानुभूतं
मानेन बोधितमिदं प्रतिभाति मेयम्।

न स्वप्रकाशमिति शक्यमिदं विवेक्तुं
केनापि नैव तदवस्थतयैव दृष्टेः ॥ २० ॥

एवमिति । वक्ष्योक्तप्रकारेण पुरा मानवृत्तेरिति शेषः । अनुभूतमवगतमेयमनधिगतमिति नानुभूतं यदीति सम्बन्धः । बोधितं ज्ञापितं सदिदं मेयं प्रतिभाति स्फुरति न स्वप्रकाशं स्वप्रकाशं सत् न स्फुरति इदं केनापि पुरुषेण विवेक्तुं न शक्यमेवेति सम्बन्धः । इदंशब्दार्थ एव मानेनेत्यादिना इतीत्यन्तेन दर्शितः । अशक्यत्वे हेतुः—तदवस्थतयेति । प्रकाशकालमात्रावच्छिन्नतयैव दृष्टेर्दर्शनात् प्रकाशकालावच्छिन्नस्यैव घटादेर्ज्ञायमानत्वात् । तज्ज्ञानस्य च प्रमाणजन्यत्वाजन्यत्वपक्षयोस्तुल्यत्वान्न विवेकः सम्भवति । न चान्वयव्यतिरेकाभ्यां विषयावगतेः प्रमाणजन्यत्वनिश्चयः पूर्वमज्ञाततावगतिं विनान्वयव्यतिरेकयोर्दुर्निरूपत्वात्ताभ्यां चक्षुरादिजन्यत्वनिश्चयेऽपि मानजन्यत्वनिश्चयासंभवाच्च अज्ञातार्थावगाहिन एव मानत्वादिति मानेनेति वदतो भावः ॥ २० ॥

ननु घटाद्यज्ञाततायाः प्रमाणसिद्धत्वाभावेऽप्यात्मा ज्ञाततावन्नित्यानुभवबलादेव तत्सिद्धिः स्यादिति चेन्न—अज्ञानस्य समानाश्रयविषयत्वनियमेन घटादिविषयाज्ञानस्य घटाद्याश्रितत्वापत्त्या नित्यानुभवसम्बन्धाभावेन तद्बलादपि सिद्ध्यनुपपत्ते । तस्मादात्मन एवाज्ञातत्वं नत्वनात्मनः तथा च न तद्विषयप्रमाणानां तत्त्वावेदकत्वमित्यभिप्रेत्योपसंहरति—

अज्ञातमर्थमवबोधयितुं न शक्त-
मेवं प्रमाणमखिलं जडवस्तुनिष्ठम् ।
किं त्वप्रबुद्धपुरुषं व्यवहारकाले
संश्रित्य संजनयति व्यवहारमात्रम् ॥ २१ ॥

अज्ञातमर्थमिति । एवं सत्यनात्मनो ज्ञातत्वे प्रमाणाभावे सतीत्यर्थः । जडवस्तुनिष्ठं जडवस्तुविषयं घटादेरज्ञातत्वाभावादेव न तद्विषयप्रमाणं सर्वमज्ञातार्थावबोधनसमर्थमित्यर्थः । तत्किमिदानीं प्रत्यक्षादिकं प्रमाणमेव नेति चेन्न । तस्याज्ञातवस्त्ववबोधकत्वाभावेन तत्त्वावेदनप्रामाण्याभावेपि व्यवहारयोग्यवस्तूपदर्शनेन व्यावहारिकं प्रामाण्यमस्तीत्याह—किंत्वित्यादिना । अप्रबुद्धपुरुषं तत्त्वावबोधरहितं पुरुषम् । एतच्चाज्ञानिन एव व्यवहारः संभवतीत्यभिप्रेत्योक्तम् । व्यवहारकाले व्यवहारदशायां संश्रित्याश्रित्य आश्रयणं चाभिमानविषयत्वं संजनयति उत्पादयति तत्तद्विषयज्ञानजननद्वारेति शेषः । व्यवहारशब्दोभिवदनादिपरः मात्रचा तत्र विषयत्वं व्यावर्त्यते ॥ २१ ॥

ननु प्रत्यक्षादेस्तत्त्वावेदकत्वाभावे लोके सत्यमिथ्यादिविभागो न स्यात् । न च व्यवहारिकत्वतदभावाभ्यां तद्विभागः । व्यावहारिकत्वं हि व्यवहारजनकत्वं व्यवहारजनकत्वं च भ्रान्तिस्थलेपि दृश्यत इत्याशङ्क्य सदृष्टान्तं तद्विभागमाह—

**आबोधतः सकलमेव हि सत्यमिथ्या-**
**भ्रान्तिप्रमाणविनिवर्त्यनिवर्तकत्वम् ।**
**स्वप्नेऽपि दृष्टमिदमेवमिहापि जाग्र-**
**त्काले भवत्वखिलमापरमात्मबोधात् ॥ २२ ॥**

आबोधत इति । जाग्रद्बोधोदयपर्यन्तं हीति प्रसिद्धौ । इदं सकलं स्वप्नेपि दृष्टं हीत्यन्वयः । इदंशब्दार्थमेवाह—सत्यासत्येति । सत्यत्वमिथ्यात्वभ्रान्तित्वप्रमाणत्वनिवर्त्यत्वनिवर्त्तकत्वमेवं स्वप्नवदखिलं सत्यत्वादिकमापरमात्मबोधाज्जीवब्रह्मैक्यसाक्षात्कारपर्यन्तम् । तथा च यथा स्वप्ने प्रातीतिके सति प्रत्यक्षादेस्तत्त्वावेदनप्रामाण्याभावेन तत्स्थप्रपञ्चस्य वस्तुतो मिथ्यात्वाविशेषेऽपि निद्रादोषदुष्टानां

मूढानां शुक्त्यादितद्विषयज्ञानतज्जनकचक्षुरादेः सत्यप्रमाणनिवर्त्तकत्वं शुक्तिरूप्यादितद्विषयज्ञानतज्जनकचक्षुरादेस्तु मिथ्याभ्रान्तिनिवर्त्यत्वं चेति विभागो दृष्टिमात्रप्रयुक्तो जाग्रद्बोधोदयपर्यन्तं दृष्टः। एवं जाग्रत्प्रपञ्चस्यापि प्रत्यक्षादितत्त्वावेदनप्रमाण्याभावेन वस्तुतः सत्यमिथ्यादिविभागाभावेपि तत्त्वसाक्षात्कारोदयपर्यन्तमविद्यामहापिशाचग्रस्तानामविवेकिनां दृष्टिमात्रप्रयुक्तः सत्यामिथ्यादिविभागः सम्भवतीति भावः ॥ २२ ॥

ननु सर्वस्यापि प्रमाणप्रमेयजातस्य वस्तुतो मिथ्यात्वाविशेषे शिष्टानां बौद्धार्हतकापिलकणभुगादिशास्त्रादिकं तत्प्रमेयतप्तशिलारोहणादिगतेष्टोपायतादिकं च वितथं हेयं वेदतन्मूलमीमांसाशास्त्रादिकं तत्प्रमेयाग्निहोत्रादिगतश्रेयःसाधनत्वादिकं चावितथमुपादेयमिति विभागः कथं संगच्छते वस्तुतः प्रमाणप्रमेयवैषम्याभावे तदधीनहेयोपादेयसुखदुःखादिव्यवस्थानुपपत्तिरित्याशङ्क्य स्वप्नदृष्टान्तेनैव सर्वमुपपद्यत इत्याह—

**स्वप्ने तप्तशिलाधिरोहणगता निःश्रेयसोपायता**
**मिथ्या ब्राह्मणतर्पणादिनिलया सत्या तथा लौकिकी।**
**स्रक्सत्या तदहिर्मृषैव विदितो निद्रानिवृत्तौ पुनः**
**स्वप्ने दृष्टमशेषमेव वितथं ग्राह्यं तथा जागरे ॥ २३ ॥**

स्वप्नेतप्तेत्यादिना श्लोकद्वयेन। तप्तशिलाधिरोहणगता तन्निष्ठा मिथ्येति लिङ्गविपरिणामेन विदितेत्यनुषङ्गः। ब्राह्मणतर्पणादिनिलया ब्राह्मणभोजनादिनिष्ठा निःश्रेयसोपायतेत्यनुषङ्गः सत्या विदितेत्यप्यनुषङ्गः स्वप्न एव लौकिकमुदाहरणमाह—तथेति। यथा शास्त्रीयमुदाहरणं तथा स्रग् माला सत्या विदितेत्यप्यनुषङ्गः। तदहिः स्रजि परिकल्पितसर्पः विदित इति पाठः। ननु स्वप्नेपि वस्तुत एव सत्यमिथ्यादिविभागः

ततः कथं तद्दृष्टान्तेन जाग्रतो मिथ्यात्वसाधनमित्याशङ्क्याह—निद्रानिवृत्तौ पुनरिति। अशेषं पूर्वोक्तं सर्वं वितथमेवेति सम्बन्धः। मिथ्यैवेत्यर्थः। स्वप्नदृष्टस्य कस्य चिद्वस्तुसत्त्वे जाग्रत्यपि तत्तथैवानुभूयेत। न हि परमार्थसतोऽवस्थाविशेष एव नियतप्रतिपत्तिर्युज्यते। न च वस्तुसत्त्वेपि तस्य क्षणिकत्वादेव जाग्रत्यनुपलम्भ इति वाच्यम्। तत्र किं सत्येव जाग्रच्छरीरे स्वाप्नशरीराद्युत्पत्तिः। उत विनष्टे तस्मिन्। नाद्यः। मनुष्यशरीरादौ तिष्ठति। व्याघ्रादिशरीराद्यभिमानानुपपत्तेः। अत एवात्मवादिनस्तव एकदा शरीरद्वयप्रवेशासंभवात्। एकदा शरीरद्वयव्यापारानुसंधानप्रसङ्गाच्च। न द्वितीयः। पुनरुत्थानकाले पूर्वोत्पन्नमनुष्यादिदेहाद्यनुपलम्भप्रसङ्गात्। तदानीमेव तदुत्पद्यत इति चेन्न। तत्कारणमातापितृरेतः सेकाद्यभावान्मिथ्यात्वपक्षे तु न नियतकारणसंपत्त्यादिकमपेक्ष्यते। अविद्ययैव विचित्रसर्वोत्पत्त्युपपत्ते। ततः स्वप्नदृष्टं सर्वं मिथ्यैवेत्यर्थः। तथा च यथा स्वप्नदृष्टपदार्थानां सर्वेषां मिथ्यात्वेपि तप्तशिलाधिरोहणादिगतश्रेयःसाधनत्वादिकं प्रतीतं तद्बोधकबुद्धशास्त्रादिकं च वितथं हेयं ब्राह्मणभोजनादिगतश्रेयःसाधनत्वादिकं तद्बोधकवैदिकशास्त्रादिकं चावितथमुपादेयमिति विभागबुद्धिः। एवमेव जाग्रत्यपि वस्तुसत्त्वाभावेपि विभाग उपपद्यतइति दार्ष्टान्तिकमाह—ग्राह्यं तथेति। तथा स्वप्नवदेव जाग्रत्यपि सर्वं ग्राह्यं न तु तत्र प्रमाणप्रमेयवैषम्यापेक्षा। न हि जाग्रत्यनुभवकाले विचारकाले वा विवेकिनामणुमात्रमपि स्वाप्नाद्विशेषः कश्चित्प्रतीयत इत्यर्थः॥ २३॥

ननु कथं न प्रतीयते यतः स्वप्ने कृतस्य यागादेर्जाग्रति क्रियमाणस्य च स्पष्टमेव विशेषः प्रतीयत इति चेत्तत्र किं तयोः साधनकृतो विशेषः किं वा स्वरूपकृतः किं वा फलकृत. न सर्वथापि ऋत्विक्पश्वादेः साधनस्याग्नेयादेः स्वरूपस्य स्वर्गादेश्च फलस्योभयत्रापि समत्वादस्ति हि स्वप्नेपि स्वप्नानुष्ठिततया यागफलं स्वर्गोनुभूयत इत्यभिमानः। ननु स्वप्ने संन्यासिनापि स्वस्य यागाद्यनुष्ठानमनु-

भूयते न तु जाग्रति तथानुष्ठानमनुभूयते तत्कथमनयोः साम्यमिति चेन्न । संन्यासिनोपि स्वप्ने गृहस्थाभिमानपूर्वकमेव यागाद्यनुष्ठानाभिमानात् । नन्वेवं सति स्वप्नानुष्ठितयागः पुरुषो नैव जाग्रति नैव तमनुतिष्ठेत् तत्प्रयोजनस्य सिद्धत्वात् ततश्च स्वप्नकृतयागस्य फलं नास्तीत्येव वक्तव्यम् । तथा च फलकृतो विशेषोऽस्त्येवेति चेन्न । जाग्रत्यपि प्रतिवसन्तं ज्योतिष्टोमावृत्तिवत् जाग्रत्फलानुभवार्थं वा तदुपपत्तेः । नन्वेवमप्याधानादेः पुनरनुष्ठानानुपपत्तिः । तन्निष्पाद्याहवनीयादेः स्वप्न एव सिद्धत्वादिति चेन्न । शास्त्रीयं कर्म यथाशास्त्रमेवानुष्ठेयं शास्त्रं च येन यजमानेन यदाधानमनुष्ठितं तस्यैव तस्मिन्नग्नौ यागं विधत्ते नत्वन्ययजमानसाध्येऽग्नावपि यजमानश्च स्वप्नजाग्रतोः शरीरभेदात् भिद्यते पूर्वं ब्राह्मणस्यैव सतो जन्मान्तरे वैश्यस्य वैश्यस्तोमे प्रवृत्तिदर्शनादस्ति च जाग्रत्स्वप्नयोः शरीरभेदः अत एव स्वप्नानुष्ठितब्रह्महत्यादेर्जाग्रदनुष्ठितेन साम्येपि न जाग्रत्पुरुषस्तेन पतितो भवति इत्येतत्सर्वमभिप्रेत्य ग्राह्यं तथेत्युक्तमेवार्थं प्रपञ्चयति—

**श्रेयःसाधनताऽग्निहोत्रनिलया सत्येति संगृह्यते**
**मिथ्या तप्तशिलाधिरोहणगता शिष्टैः परित्यज्यते ।**
**रज्जुः सत्यतया स्थितैव तदहिर्मिथ्यैव तावद्भवे-**
**द्यावन्मूलतमोविदारणपटुर्विद्योदयो माऽऽगमत् ॥२४॥**

श्रेयःसाधनतेति । अग्निहोत्रनिलया अग्निहोत्रनिष्ठा इतिशब्दः प्रकारे संगृह्यते उपादीयत इत्यर्थः । शिष्टैरित्यत्राप्यनुषञ्जनीयम् । जाग्रत्यपि लौकिकमुदाहरणमाह—रज्जुरिति । तदहिः रज्ज्वां परिकल्पितः सर्पः । एवं विभागप्रतीतेरवधिमाह—तावदिति । मूलतमोविदारणपटुः सत्यमिथ्याविभागभ्रान्तिमूलाज्ञाननिवर्त्तनक्षमः विद्योदयः आत्मसाक्षा-

त्कारोदयः आगमात्तत्वमादेस्तथा च जाग्रद्दृष्टपदार्थः स्वप्नपदार्थवत् दृष्टिमात्रसन्नित्यर्थः । ननु कथं तस्य दृष्टिमात्रसत्वं तत्र प्रमाणाभावादिति चेन्न—विमतं दृष्टिमात्रशरीरं दृश्यत्वात् स्वाप्नपदार्थवदित्यनुमानस्यैव तत्र प्रमाणत्वात् । न च प्रत्यभिज्ञाबाधः प्रत्यभिज्ञाया अपि स्वप्न इवोपपत्तेः । न चैवं सति बौद्धसिद्धान्तप्रवेशापातः तन्मतेऽपि प्रपञ्चस्य क्षणिकविज्ञाने कल्पिततया दृष्टिमात्रशरीरत्वादिति वाच्यम् । अस्माभिः प्रपञ्चव्यतिरिक्तस्यापि परमानन्दाद्वितीयाङ्गीकारेण महतो वैषम्यस्य विद्यमानत्वादन्यथा येन केनापि प्रकारेण साम्यापादने सर्वेषामपि वादिनां तन्मतापातप्रसङ्गात् । एवमन्याश्च या या अनुपपत्तयोऽत्रवादिभिरुद्भावनीयाः ताः सर्वा अपि स्वप्ननिदर्शनेनैव परिहर्त्तव्याः तस्मान्न किञ्चिदवद्यमिति भावः ॥ २४ ॥

एवं निर्दुष्टत्वेन स्थिते स्वाभिमतदर्शनरहस्ये प्रकारान्तरेणापि बौद्धसाम्यं परिहर्त्तुं बौद्धसिद्धान्तसमतामाशङ्कते—

**ननु शाक्यभिक्षुसमयेन समः**
**प्रतिभात्ययं च भगवत्समयः ।**
**यदि बाह्यवस्तु वितथं नु कथं**
**समयाविमौ न सदृशौ भवतः ॥ २५ ॥**

ननु शाक्येति । नन्विति चोद्ये शाक्यभिक्षुसमयेन समः भदन्तसिद्धान्तेन समः तुल्यः अयं इयता सन्दर्भेण प्रतिपादितः भगवत्समयः सर्वज्ञभगवत्पादराद्धान्तः कथं साम्यमित्याशङ्क्य साम्यप्रकारमेवाह—यदीति । बाह्यवस्तु घटादि वितथमसत्यं समयौ सिद्धान्तौ इमौ भदन्तसर्वज्ञबादरायणाभिमतौ बाह्यवस्तुनोवैतथ्याङ्गीकारे पक्षद्वयेपि विशेषाभावादिमौ कथं तुल्यौ न भवेतां किन्तु भवेतामित्यर्थः ॥ २५ ॥

ननु सर्वशून्यवादी बौद्धः वयं तु न सर्वशून्यवादिनः किन्तु बोधमात्रसत्यत्ववादिनः तत्कथमस्माकं तस्य च साम्यमित्याशङ्क्य माभूत् शून्यवादिना साम्यं विज्ञानवादिना तु भविष्यतीत्यभिप्रेत्याह–

यदि बोध एव परमार्थवपु-
र्न तु बोध्यमित्यभिमतं भवति ।
ननु चाऽश्रितं भवति बुद्धमुने-
र्मतमेव कृत्स्नमिह मस्करिभिः ॥ २६ ॥

यदि बोध एवेति । वपुः स्वरूपं बोध्यं दृश्यं घटादि भवति यदीति सम्बन्धः । ननु चेति खल्वर्थः । इह परीक्षाभूमौ मस्करिभिः श्रीबादरायणमतानुगतश्रीशङ्करभगवत्पादादिभिः विज्ञानवादिभिरपि विज्ञानमेव परमार्थमन्यत्सर्वं तत्र कल्पितमपरमार्थमित्युच्यते । भगवद्भिरपि परमार्थसति दृगात्मनि प्रपञ्चः परिकल्पित इत्युच्यते । अतो न मतद्वयवैषम्यमित्यर्थः । तथा च जगत्पारमार्थिकत्वं वक्तव्यमिति भावः ॥ २६ ॥

प्रपञ्चवैतथ्यस्य मतद्वयसाम्येऽप्यान्तरालिकवैषम्यस्य सत्त्वान्न बौद्धसाम्यमित्यभिप्रेत्य परिहरति –

ननु मातृमानविषयावगती-
रपरस्परं प्रति विभागवतीः ।
उपयन्भदन्तमुनिना सदृशः
कथमेष वैदिकमुनिर्भवति ॥ २७ ॥

ननु मात्रिति । वैदिकमुनिः श्रीमदाचार्यः कथमेव कथं वा भदन्त-

मुनिना बौद्धेन सदृशो भवति न कथमपीत्यर्थः । तत्र हेतुगर्भितं विशेषणम् । नन्विन्याद्युपयन्नित्यन्तं मातृमानविषयावगतीः प्रमातृप्रमाणप्रमेयप्रमितीः परस्परं भेदवतीः उपयन्नङ्गीकुर्वन् । ननु खलु यद्यपि मात्रादिप्रपञ्चवैतथ्यमुभयोरपि समानं तथापि तानि मात्रादीनि व्यवहारकाले परस्परभिन्नान्येवाचार्यैरङ्गीक्रियन्ते न तथा विज्ञानवादिभिः ते हि केवलं विज्ञानं प्रमातृ तदेवासन्याकारयुक्तं प्रमेयमसत्प्रकाशनं सत् प्रमितिः तत्प्रकाशनशक्तं प्रमाणमित्यनेन रूपेण विज्ञानस्यैकस्यैव चतुष्टयात्मत्वं वर्णयन्ति । न तु तेषां परस्परभेदम् । अत एतादृशवैषम्यस्य विद्यमानत्वात्कथं तेन साम्यमित्यर्थः ॥ २७ ॥

किं च प्रमात्रादिविभागो नित्यसिद्धपरमात्माश्रितमाययैव विजृम्भितः स च स्थिर इत्यस्माभिरङ्गीक्रियते न तथा विज्ञानवादिभिस्तन्मते स्थायिन आत्मनस्तदाश्रितानाद्यविद्यायास्तत्कार्यप्रपञ्चस्थेम्नश्चाभावादतोपि महद्वैषम्यमित्यभिप्रेत्याह—

**परमात्मसंश्रयतमोजनितं**
**प्रविभक्तमेव तु परस्परतः ।**
**स्थिरमभ्युपेतमिह नः समये**
**ननु मातृमानविषयप्रभृति ॥ २८ ॥**

परमात्मेति । मातृमानविषयप्रभृतीतिप्रभृतिशब्देन प्रमितिर्गृह्यते । एतच्चतुष्टयं परमात्मसंश्रयतमोजनितं परमात्माश्रितमायाविजृम्भितम् । एवकारोऽत्रापि सम्बध्यते । परस्परतः प्रविभक्तमेवेति सम्बन्धः । अन्योऽन्यभिन्नमेवेत्यर्थः । स्थिरं बहुतरकालावस्थाय्येव नोऽस्माकं समये सिद्धान्तेऽभ्युपेतमङ्गीकृतम् । ननु खल्वतः कथं साम्यमित्यर्थः ॥ २८ ॥

किं च विषयविज्ञानव्यतिरिक्तस्वप्रकाशस्थस्वरूपः सजाती-

ननु सर्वशून्यवादी बौद्धः वयं तु न सर्वशून्यवादिनः किन्तु बोधमात्रसत्यत्ववादिनः तत्कथमस्माकं तस्य च साम्यमित्याशङ्क्य माभूत् शून्यवादिना साम्यं विज्ञानवादिना तु भविष्यतीत्यभिप्रेत्याह–

यदि बोध एव परमार्थवपु-
र्न तु बोध्यमित्यभिमतं भवति ।
ननु चाऽऽश्रितं भवति बुद्धमुने-
र्मतमेव कृत्स्नमिह मस्करिभिः ॥ २६ ॥

यदि बोध एवेति । वपुः स्वरूपं बोध्यं दृश्यं घटादि भवति यदीति सम्बन्धः । ननु चेति खल्वर्थः । इह परीक्षाभूमौ मस्करिभिः श्रीबादरायणमतानुगतश्रीशङ्करभगवत्पादादिभिः विज्ञानवादिभिरपि विज्ञानमेव परमार्थमन्यत्सर्वं तत्र कल्पितमपरमार्थमित्युच्यते । भगवद्भिरपि परमार्थसति दृगात्मनि प्रपञ्चः परिकल्पित इत्युच्यते । अतो न मतद्वयवैषम्यमित्यर्थः । तथा च जगत्पारमार्थिकत्वं वक्तव्यमिति भावः ॥ २६ ॥

प्रपञ्चवैतथ्यस्य मतद्वयसाम्येऽप्यान्तरालिकवैषम्यस्य सत्त्वान्न बौद्धसाम्यमित्यभिप्रेत्य परिहरति –

ननु मातृमानविषयावगती-
रपरस्परं प्रति विभागवतीः ।
उपयन्भदन्तमुनिना सदृशः
कथमेष वैदिकमुनिर्भवति ॥ २७ ॥

ननु मात्विति । वैदिकमुनिः श्रीमदाचार्यः कथमेव कथं वा भदन्त-

मुनिना बौद्धेन सदृशो भवति न कथमपीत्यर्थः। तत्र हेतुगर्भितं विशेषणम्। नन्वित्याद्युपयन्नित्यन्तं मातृमानविषयावगतीः प्रमातृप्रमाणप्रमेयप्रमितीः परस्परं भेदवतीः उपयन्नङ्गीकुर्वन्। ननु खलु यद्यपि मात्रादिप्रपञ्चवैतथ्यमुभयोरपि समानं तथापि तानि मात्रादीनि व्यवहारकाले परस्परभिन्नान्येवाचार्यैरङ्गीक्रियन्ते न तथा विज्ञानवादिभिः ते हि केवलं विज्ञानं प्रमातृ तदेवासन्याकारयुक्तं प्रमेयमसत्प्रकाशनं सत् प्रमितिः तत्प्रकाशनशक्तं प्रमाणमित्यनेन रूपेण विज्ञानस्यैकस्यैव चतुष्टयात्मत्वं वर्णयन्ति। न तु तेषां परस्परभेदम्। अत एतादृशवैषम्यस्य विद्यमानत्वात्कथं तेन साम्यमित्यर्थः॥ २७॥

किं च प्रमात्रादिविभागो नित्यसिद्धपरमात्माश्रितमाययैव विजृम्भितः स च स्थिर इत्यस्माभिरङ्गीक्रियते न तथा विज्ञानवादिभिस्तन्मते स्थायिन आत्मनस्तदाश्रितानाद्यविद्यायास्तत्कार्यप्रपञ्चस्थेम्नश्चाभावादतोपि महद्वैषम्यमित्यभिप्रेत्याह—

**परमात्मसंश्रयतमोजनितं**
**प्रविभक्तमेव तु परस्परतः।**
**स्थिरमभ्युपेतमिह नः समये**
**ननु मातृमानविषयप्रभृति॥ २८॥**

परमात्मेति। मातृमानविषयप्रभृतीतिप्रभृतिशब्देन प्रमितिर्गृह्यते। एतच्चतुष्टयं परमात्मसंश्रयतमोजनितं परमात्माश्रितमायाविजृम्भितम्। एवकारोऽत्रापि सम्बध्यते। परस्परतः प्रविभक्तमेवेति सम्बन्धः। अन्योऽन्यभिन्नमेवेत्यर्थः। स्थिरं बहुतरकालावस्थाय्येव नोऽस्माकं समये सिद्धान्तेऽभ्युपेतमङ्गीकृतम्। ननु खल्वतः कथं साम्यमित्यर्थः॥ २८॥

किं च विषयविज्ञानव्यतिरिक्तस्वप्रकाशस्थस्वरूपः सजाती-

मात्मनोऽसत्त्वप्रसङ्गात्तस्मादेवमेव वक्तव्यमिति भावः । स्थैर्यस्य ग्राह्यग्राहकस्वरूपत्वे दृष्टान्तमाह—भगुरत्वमिव सर्वस्य ते दर्शन इति । यथा ते तव क्षणिकवादिनो दर्शने पक्षे सर्वस्य ग्राह्यग्राहकलक्षणस्य जगतः भङ्गुरत्वं स्वरसविनाशित्वं स्वरूपमेव न धर्मः क्षणिकपक्षे धर्मधर्मिभावानुपपत्तेः । तथा अस्मन्मतेऽपीत्यर्थः । अतः प्रपञ्चस्य वैतथ्येपि प्रमात्रादिभेदादिवैलक्षण्यान्न बौद्धसाम्यमिति भावः ॥ ३१ ॥

नन्वेवमपि जगत्प्रपञ्चस्य वितथत्वाङ्गीकारे स्वप्नवैषम्यं न स्यात् । न च प्रत्यभिज्ञया स्थायित्वसिद्धेर्विशेषः कल्पितत्वाविशेषेण तस्याप्यनुपपत्तेरित्यभिप्रेत्याशङ्कते—

ननु कल्पितं यदि हि जागरितं
वद कीदृशी खलु विलक्षणता ।
स्वपनादमुष्य भवतोऽभिमता
परिकल्पितत्वमुभयोस्तु समम् ॥ ३२ ॥

ननु कल्पितमिति । नन्विति चोद्ये स्वपनात् स्वप्नात् । अमुष्य जागरितप्रपञ्चस्य कीदृशी विलक्षणता भवतो वेदान्तिनोऽभिमता न केनापि प्रकारेण विलक्षणता सिद्ध्यतीत्यर्थः । कुतो वैलक्षण्यन्न सिद्ध्येदित्याशङ्क्य कल्पितत्वस्योभयत्रापि तुल्यत्वादित्याह—परिकल्पितत्वमिति । तु शब्दो हेतौ यतः उभयोर्जागरितस्वप्नयोः कल्पितत्वं समम् इत्यर्थः ॥ ३२ ॥

कल्पितत्वाविशेषेपि व्यावहारिकत्वप्रतीतिकत्वभेदेन तयोर्विशेषात्स्थायित्वं जाग्रतः सिद्ध्यतीत्यभिप्रेत्य परिहरति—

न प्रमातरि सति प्रबाध्यते
जागरः स्वपनदृष्टवस्तुवत् ।

मातृमानविषयोपलब्धिभिः
साकमेव तमसो निराकृतेः ॥ ३३ ॥

न प्रमातरीति । प्रमातर्यन्तःकरणावच्छिन्नचैतन्ये सति जागरो जाग्रद्दृष्टपदार्थो न प्रबाध्यते । स्वमूलाज्ञानेन सह न निवर्त्यते । तत्र वैधर्म्यदृष्टान्तः । स्वप्नेति । यथा स्वप्नदृष्टपदार्थः प्रमातरि सत्येव जाग्रत्येव बाध्यते नैवं जाग्रत्पदार्थः सति प्रमातरि बाध्यत इत्यत्र हेतुमाह—मातृमानेत्यादिना । प्रमातृप्रमाणप्रमेयप्रमितिभिः साकं सहैव तमसो जागरकारणाविद्याया निराकृतेस्तत्त्वसाक्षात्कारेण निवर्त्यत्वादित्यर्थः । तथा च सति प्रमातरि बाध्यत्वं प्रातीतिकत्वं तद्विपरीतं च व्यवहारिकत्वमिति तयोर्विशेषात् जाग्रत्स्थैर्यमपि प्रत्यभिज्ञया संगच्छत इत्यर्थः ॥ ३३ ॥

प्रमात्रादिना सहैव जागरकारणाविद्याया निराकरणं प्रमात्रादौ सत्येव स्वाप्नपदार्थस्य निराकरणमित्यत्रोपपत्तिमाह—

देशकालपुरुषैरवस्थया
जागरस्य खलु कारणं तमः ।
साकमेव सहसा निरस्यते
वेदवाक्यजनितात्मसंविदा ॥ ३४ ॥

देशेति । देशो जम्बूद्वीपादिः कालो नौपाधिकः कालः पुरुषः प्रमाता तैःअवस्थाऽवान्तरकालः तया च साकमेवेति सम्बन्धः । खलुशब्दो हेतौ । यतस्तमोविद्यादेशादिभिः सहैव जाग्रत्पदार्थस्य कारणं न तु देशादिषु सत्सु केवलस्य जाग्रत्पदार्थस्य सर्गाद्यकाले देशादीनामभावात्ततस्तु जातं सकलं विचित्रमिति श्रुतेश्च । ततस्तत्कारणं तमस्तैः सहैव निरस्यते न तेषु विद्यमानेषु केवलजागरेण सह निव-

मात्मनोऽसत्वप्रसङ्गात्तस्मादेवमेव वक्तव्यमिति भावः । स्थैर्यस्य ग्राह्यग्राहकस्वरूपत्वे दृष्टान्तमाह—भङ्गुरत्वमिव सर्वस्य ते दर्शन इति । यथा ते तव क्षणिकवादिनो दर्शने पक्षे सर्वस्य ग्राह्यग्राहकलक्षणस्य जगतः भङ्गुरत्वं स्वरसविनाशित्वं स्वरूपमेव न धर्मः क्षणिकपक्षे धर्मधर्मिभावानुपपत्तेः । तथा अस्मन्मतेऽपीत्यर्थः । अतः प्रपञ्चस्य वैतथ्येपि प्रमात्रादिभेदादिवैलक्षण्यान्न बौद्धसाम्यमिति भावः ॥ ३१ ॥

नन्वेवमपि जगत्प्रपञ्चस्य वितथत्वाङ्गीकारे स्वप्नवैषम्यं न स्यात् । न च प्रत्यभिज्ञया स्थायित्वसिद्धेर्विशेषः कल्पितत्वाविशेषेण तस्याप्यनुपपत्तेरित्यभिप्रेत्याशङ्कते—

**ननु कल्पितं यदि हि जागरितं**

**वद कीदृशी खलु विलक्षणता ।**

**स्वपनादमुष्य भवतोऽभिमता**

**परिकल्पितत्वमुभयोस्तु समम् ॥ ३२ ॥**

ननु कल्पितमिति । नन्विति चोद्ये स्वपनात् स्वप्नात् । अमुष्य जागरितप्रपञ्चस्य कीदृशी विलक्षणता भवतो वेदान्तिनोऽभिमता न केनापि प्रकारेण विलक्षणता सिद्ध्यतीत्यर्थः । कुतो वैलक्षण्यन्न सिद्ध्येदित्याशङ्क्य कल्पितत्वस्योभयत्रापि तुल्यत्वादित्याह—परिकल्पितत्वमिति । तु शब्दो हेतौ यतः उभयोर्जागरितस्वप्नयोः कल्पितत्वं सममत इत्यर्थः ॥ ३२ ॥

कल्पितत्वाविशेषेपि व्यावहारिकत्वप्रतीतिकत्वभेदेन तयोर्विशेषात्स्थायित्वं जाग्रतः सिद्ध्यतीत्यभिप्रेत्य परिहरति—

**न प्रमातरि सति प्रबाध्यते**

**जागरः स्वपनदृष्टवस्तुवत् ।**

मातृमानविषयोपलब्धिभिः
साकमेव तमसो निराकृतेः ॥ ३३ ॥

न प्रमातरीति । प्रमातर्यन्तःकरणावच्छिन्नचैतन्ये सति जागरो जाग्रद्दृष्टपदार्थो न प्रबाध्यते । स्वमूलाज्ञानेन सह न निवर्त्यते । तत्र वैधर्म्यदृष्टान्तः । स्वपनेति । यथा स्वप्नदृष्टपदार्थः प्रमातरि सत्येव जाग्रत्येव बाध्यते नैवं जाग्रत्पदार्थः सति प्रमातरि बाध्यत इत्यत्र हेतुमाह—मातृमानेत्यादिना । प्रमातृप्रमाणप्रमेयप्रमितिभिः साकं सहैव तमसो जागरकारणाविद्याया निराकृतेस्तत्त्वसाक्षात्कारेण निवर्त्यत्वादित्यर्थः । तथा च सति प्रमातरि बाध्यत्वं प्रातीतिकत्वं तद्विपरीतं च व्यवहारिकत्वमिति तयोर्विशेषात् जाग्रत्स्थैर्यमपि प्रत्यभिज्ञया संगच्छत इत्यर्थः ॥ ३३ ॥

प्रमात्रादिना सहैव जागरकारणाविद्याया निराकरणं प्रमात्रादौ सत्येव स्वाप्नपदार्थस्य निराकरणमित्यत्रोपपत्तिमाह—

देशकालपुरुषैरवस्थया
जागरस्य खलु कारणं तमः ।
साकमेव सहसा निरस्यते
वेदवाक्यजनितात्मसंविदा ॥ ३४ ॥

देशेति । देशो जम्बूद्वीपादिः कालो नौपाधिकः कालः पुरुषः प्रमाता तैःअवस्थाऽवान्तरकालः तया च साकमेवेति सम्बन्धः । खलुशब्दो हेतौ । यतस्तमोऽविद्यादेशादिभिः सहैव जाग्रत्पदार्थस्य कारणं न तु देशादिषु सत्सु केवलस्य जाग्रत्पदार्थस्य सर्गाद्यकाले देशादीनामभावात्ततस्तु जातं सकलं विचित्रमिति श्रुतेश्च । ततस्तत्कारणं तमस्तैः सहैव निरस्यते न तेषु विद्यमानेषु केवलजागरणे सह निव-

र्त्यते । एकस्मिन्नधिष्ठाने एकदाध्यस्तानामधिष्ठानज्ञानेन एकनिवृत्ता-वन्यनिवृत्त्यवश्यंभावेन जाग्रत्पदार्थनिवृत्तौ तेन सहोत्पन्नदेशादीनामपि निवृत्त्यवश्यंभावात् । नैवं स्वप्नपदार्थो देशादिभिः सहोत्पद्यते । यद्यपि स्वप्ने देशादेरपि तादात्विकस्यैवानुभवात् । तेन सहैवोत्पत्तिः सर्व-स्यापि स्वप्ने वासनामात्रत्वात् । तथापि व्यावहारिकजाग्रद्देशादौ सत्येव तज्जातीयस्यैव मायिकरूप्यवदुत्पत्तिः तस्यैव वासनामात्रत्वं चेति न विरोधः तथा च सत्स्वेव देशादिषु स्वप्नपदार्थस्य निवृत्ति-सम्भवात् प्रतिप्रमात्रादौ बाध्यत्वं तस्य नैवं जाग्रत इति भावः । ननु कुतस्तद्बाधः । ननूक्तं तत्त्वज्ञानेनेति चेत् किं तत्त्वज्ञानमात्मविषय-ज्ञानमिति चेत् तर्ह्यहमिति ज्ञानस्य सर्वदा सत्वात् नित्यनिवृत्ति-प्रसङ्ग इत्याशङ्क्य—नाहमिति ज्ञानं तत्त्वज्ञानं किन्तु तत्त्वमादिवाक्य-समुपजातब्रह्मात्मविषयाखण्डसत्यज्ञानानन्दब्रह्माहमिति ज्ञानमेव तदेव सविलासमज्ञानं निवर्त्तयतीत्यभिप्रेत्याह—वेदवाक्येति । वेदवाक्यं तत्त्वमादिवाक्यं तेन जनिता या आत्मसंवित् ब्रह्मात्मविषया ब्रह्माह-मिति साक्षात्प्रमितिः तयैव सहसा स्वसमय एव निरस्यते नत्वह-मिति ज्ञानेन अतो न नित्यनिवृत्तिप्रसङ्ग इत्यर्थः ॥ ३४ ॥

प्रमात्रादिभिः साकमेव जाग्रत्पदार्थो बाध्यते तेषु सत्स्वेव स्वप्न-पदार्थो बाध्यत इत्यत्रोपपत्तिमुक्त्वाऽनुभवमपि प्रमाणयति—

स्वप्नदृष्टमिह रज्जुसर्पव-
देशकालपुरुषेषु बाध्यते ।
जागरः पुनरयं तथाविधं
बाधकं न लभतेऽसमीक्षणात् ॥ ३५ ॥

स्वप्नदृष्टमिति । वस्त्विति शेषः । इह जगति प्रमात्रादौ सति बाध्यत्वे दृष्टान्तमाह—रज्जुसर्पवदिति । पुनः शब्दः स्वप्नाज्जागरस्य विशे

षद्योतकः । विशेषमेवाह—तथाविधमिति । देशादिषु सत्सु जायमानं न लभते न प्राप्नोति । उभयत्राप्यनुभवमेव प्रमाणमाह—समीक्षणादिति । स्वप्नस्य सत्येव देशादौ जाग्रति बाध्यत्वेनानुभवाज्जाग्रतश्च तस्मिन्सत्यबाध्यत्वेनानुभवादित्यर्थः । तथा च सति सति प्रमातरीत्याद्युक्तव्यवस्थोपपद्यत इति भावः । एतच्च सर्वं जाग्रद्दर्शनेन स्वप्नदृष्टस्य बाध इति लौकिकप्रतीत्यनुरोधेनोक्तमत एव समीक्षणादिति हेतुरुक्तः । वस्तुतस्तु न जाग्रद्दर्शनेन स्वप्नपदार्थस्य तदानीमसंभवादधिष्ठानज्ञानाभावादविद्याया एकत्वाच्च । न च मिथ्यात्वनिश्चयलक्षणो बाधो बाधशब्देन विवक्षितः । तथात्वे विचारदशायां जग्रत्पदार्थेऽपि तत्सद्भावेन प्रातीतिकलक्षणस्यतत्रातिव्याप्तिप्रसङ्गात्तस्मात्प्रमातृपदेन तत्तद्विषयोपलब्धोच्यते । तथा च स्वोपलब्धरि सति बाध्यत्वं प्रातीतिकत्वं तदबाध्यत्वं व्यवहारिकत्वमिति तल्लक्षणमत्र विवक्षितं स चोपलब्धा जाग्रत्यन्तः करणावच्छिन्नं चैतन्यं तस्यैव प्रमाणव्यापारयितृत्वात् स्वप्ने च केवलचैतन्यमेव न त्वन्तः करणावच्छिन्नं तत्र तत्प्रेर्यप्रमाणाद्यभावात् तदनपेक्षणाच्च । तथा च स्वप्नोपलब्धरि केवलचैतन्ये सत्येव तत्त्वसाक्षात्कारेण स्वप्नपदार्थस्य स्वोपादानाज्ञानेन सह निवृत्तेः । जाग्रत्प्रदार्थस्य च स्वोपलब्ध्यन्तःकरणावच्छिन्नेन सहैव निवृतेः । न लक्षणस्यातिव्याप्त्यादिदोषः । न च जाग्रत्प्रपञ्चस्यापि साक्षिणा प्रतीयमानत्वात् प्रातीतिकलक्षणस्यातिव्याप्तिः व्यावहारिकलक्षणस्य बाधश्चेति शङ्क्यम् । अन्तःकरणावच्छिन्नस्यापि तदुपलब्धृत्वात्प्रमातृपदेन यावत्स्वोपलब्धेर्विवक्षितत्वादिति द्रष्टव्यम् । अथवा-मिथ्यात्वनिश्चयलक्षणो बाध एव बाधशब्देन विवक्ष्यते । प्रमातृपदेन चान्तःकरणावच्छिन्न एव विवक्ष्यते । तथा च प्रमातृसत्यत्वनिश्चयदशायां मिथ्यात्वबुद्धिविषयत्वयोग्यत्वं प्रातीतिकत्वं तस्मिन्सति तदयोग्यत्वं व्यावहारिकत्वमिति लक्षणनिष्कर्षः । न च प्रातीतिकलक्षणस्य जाग्रत्यतिव्याप्तिः । जाग्रतो हि विवेकदशायां

दृश्यत्वादिहेतुना मिथ्यात्वनिश्चयो वक्तव्यः। तादृशश्च निश्चय आत्मव्यतिरिक्तं सकलं विषयीकुर्वन् प्रमातारमपि विषयीकरोति। तस्यापि दृश्यत्वात्। तथा च तस्य प्रमाता सहैव मिथ्यात्वनिश्चयविषयत्वात् तत्सत्यत्वनिश्चये च तदभावान्नातिव्याप्तिरिति भावः॥ ३५॥

तस्मान्मिथ्यात्वाविशेषेपि व्यावहारिकत्वप्रातीतिकत्वाभ्यां स्वप्नजाग्रतोर्विशेषे सिद्धे जाग्रतः स्थायित्वं सिद्ध्यतीत्यभिप्रेत्योपसंहरति—

**तेन सत्यमिह जागरं विदुः**
**स्वप्नविभ्रमविरुद्धधर्मकम्।**
**आपरात्मपरमार्थदर्शना-**
**त्तेनबाधितवपुर्न सत्क्वचित्॥ ३६॥**

तेनेति। येन देशादिभिः सहैव जाग्रद्बाध्यते न तु स्वप्नवत् तेषु सत्सु तेन इह जगति जागरं सत्यं विदुर्जानन्ति लौकिकाः। तत्र हेतुः—स्वप्नविभ्रमेति। स्वप्नविभ्रमविरुद्धः देशकालादिषु सत्सु बाध्यस्वप्नदृष्टपदार्थेऽवर्त्तमानः धर्मो देशादिभिः सहैव बाध्यत्वादिरूपो यस्याम्। जागरामिति। ननु जागरस्य सत्यत्वेऽऽत्मवत्परमार्थतया बाधो न स्यादित्यत आह—आपरात्मेति। आङ्मर्यादायां परो देहत्रयानुपहितः कूटस्थचैतन्यबोध आत्मा स एव परमार्थतश्च तद्विषयं यद्दर्शनं सत्यज्ञानानन्दब्रह्माहमस्मीति साक्षात्कारस्तस्मात्पूर्वमेव जागरः सत्यः न तु तत्परमपि। अतः सर्वदा सत्यत्वाभावाद्बाधः स्यादित्यर्थः। आत्मदर्शनात्पूर्वमेव जागरः सत्य इत्यत्र हेतुमाह—तेन बाधितवपुरिति। तेनात्मदर्शनेन जागरो यतो बाधितवपुः अत इत्यर्थः। तथा विद्वान्नामरूपाद्विमुक्त इत्यादौ प्रपञ्चस्यात्मदर्शनेन बाधः श्रूयते तच्च सर्वदा

सत्यत्वे न स्यात् अतो बाधितपुष्पादात्मदर्शनात् पूर्वमेव स सत्य इत्यर्थः। ननु बाधितत्रपुष्पं सर्वदा सत्यत्वस्य विरोधि न भवति नेह नानेति श्रुत्या ब्रह्मात्मन्येव प्रपञ्चप्रतिषेधात्तत्साक्षात्कारेण तस्मिन्प्रपञ्चबाधेपि पुरो देशे निषिध्यमानरजतादिवदन्यत्र तत्सत्वोपपत्तेरित्याशङ्क्याह—न सन् क्वचिदिति। क्वचिद्ब्रह्मव्यतिरिक्तस्थले प्रपञ्चः सन्न भवति प्रमाणाभावादनुपपत्तेश्च। तथाहि—किन्निषेधप्रत्यय एव निषिध्यमानस्य देशान्तरसत्वं विषयीकरोति। किं वा तदनुपपत्तिः। नाद्यः। प्रसक्तप्रतियोगिकाभावमात्रविषयस्य तस्य देशान्तरीयतत्सत्वविषयत्वानुपपत्तेः। न द्वितीयः। निषेधप्रत्ययो हि निषिध्यमानप्रसक्तिं विनानुपपद्यमानस्तामेव कल्पयति। न तु निषिध्यमानस्यान्यत्र सत्तामप्यनुपयोगात्। ननु निषेधश्रुत्यापि प्रपञ्चाभावः पारमार्थिक इत्येव बोधनीयः प्रपञ्चो नास्तीत्येवंरूपेण निषेधे प्रत्यक्षादिविरोधस्यानिवार्यत्वात् अभावस्य च पारमार्थिकत्वं पारमार्थिकप्रतियोगित्वं प्रतियोगिनश्च पारमार्थिकत्वं क्वचिद्देशकालान्तरे सत्वमतो निषेधानुपपत्त्यैवान्यत्र सत्वं सिध्यतीति चेतत्र न देशकालान्तरे विद्यमानत्वं वस्तुनः पारमार्थिकत्वं देशकालयोरसत्वप्रसङ्गान्न ह्यनौपाधिको देशः कालश्च देशान्तरे कालान्तरे वा विद्यते। अनौपाधिकदेशकालान्तरस्याभावात्। नन्वौपाधिके तत्तद्देशे तत्तत्काले च तयोरपि वृत्तिः स्यादिति चेन्न। औपाधिकस्यानौपाधिककार्यतया तदाश्रयत्वानुपपत्तेः। किं च श्रुतिरपि न प्रपञ्चाभावः पारमार्थिक इति ब्रूते प्रपञ्चपारमार्थिकतायामपि तथाविधप्रतीतिसंभवेनात्मनो ऽद्वितीयत्वपरश्रुत्यन्तरविरोधापत्तेः। ननु प्रपञ्चाभावः पारमार्थिको न प्रपञ्च इति निषेधप्रतीतिवर्णनात् किमिति श्रुत्यन्तरविरोध इति चेत्तर्हि प्रपञ्चः पारमार्थिको न भवतीत्यत्रैव श्रुतेस्तात्पर्यं वर्ण्यतां न प्रपञ्चाभावः पारमार्थिक इत्यत्राप्युभयत्र तात्पर्यकल्पनायां गौरवात्। नचैवं सति प्रपञ्चाभावस्य कथं पारमार्थिकत्वसिद्धिरिति

वाच्यम् । तस्याधिष्ठानमात्रतया अधिष्ठानपारमार्थिकतावगाह्यागमेनैव तत्पारमार्थिकतासिद्ध्युपपत्तेः । ननु निषिद्ध्यमानप्रसक्तिर्नाम तत्प्रतीतिः सा च निषिद्ध्यमानप्रतियोगिनो देश कालान्तरे सत्त्वं विनानुपपन्ना निषेधप्रदेश एव प्रतियोगिनः प्रतीतौ निषेधानुपपत्तेः । न च घटवत्तया प्रतीतदेश एवेह घटो नष्ट इति तन्निषेधवत्तदुपपत्तिरिति वाच्यम् । यत्र हि प्रध्वंसो निषेधविषयः तत्र तथा भवति प्रध्वंसस्य प्रतियोगिसमानदेशत्वात् । यत्र त्वत्यन्ताभावस्तद्विषयस्तत्र न तथात्यन्ताभावस्य प्रतियोगिव्यधिकरणत्वात् । न चात्र प्रपञ्चप्रध्वंसो निषेधप्रतीतिविषयः किन्तु तदत्यन्ताभाव एव प्रध्वंसविषयत्वे सतोपि प्रतियोगिनो ध्वंससंभवेन प्रपञ्चस्य मिथ्यात्वासिद्धिप्रसङ्गात्तस्मान्निषेधानुपपत्त्यैव प्रपञ्चस्यान्यत्र सत्त्वं सिध्यतीति चेत् । सत्यम् । अत्र प्रतिषेधप्रत्ययेन प्रपञ्चात्यन्ताभावो विषयीक्रियत इति तथापि नान्यत्र प्रपञ्चस्य सत्त्वप्रसक्तिः ब्रह्मण्येव तत्संभवात् । नचैवं सति निषेधानुपपत्तिः न हि प्रपञ्चः प्रपञ्चत्वेन निषिद्ध्यते । येन तत्रैव तत्सत्त्वे निषेधानुपपत्तिः किन्तु पारमार्थिकत्वाकारेण । ननु येन प्रकारेण प्रपञ्चस्यात्यन्ताभावो धर्ष्यते । तेन प्रकारेण प्रपञ्चस्यात्मनि सत्त्वेन तत्र तदत्यन्ताभावः सिद्ध्यति । अन्यत्र सत्वे तस्यात्मवद्वस्तुतया मिथ्यात्वानुपपत्तिः । उभयत्र चासत्वेऽत्यन्तासतः प्रसक्त्यभावात् तन्निषेधानुपपत्तिरिति चेन्न प्रतियोगिनो हि प्रसिद्धिर्वक्तव्या । प्रतियोगी च प्रपञ्चः आत्मनि सिद्ध एव । ननु प्रतियोगिप्रसिद्धिवत् प्रतियोगितावच्छेदकस्यापि प्रसिद्धिर्वक्तव्येति चेत् । अस्त्येव साप्यात्मन्येव । ननु प्रतियोगितावच्छेदकधर्मविशिष्टतया प्रतियोगिप्रसिद्धिरभावप्रसिद्धावङ्गमिति चेन्न । लाघवात् प्रतियोगितवच्छेदकप्रतियोगिप्रसिद्धिमात्रस्यैवाभावज्ञानकारणत्वात् । सा च क्वचिद्विशिष्टविषयिणी क्वचिद्विशकलितविषयिणीति नानुपपत्तिः । नन्वेवं सति घटवद्भूतले समवायितया घटात्यन्ताभावसत्वात्तत्र घटवत्तया ज्ञान

भ्रान्तिः स्यादिति चेन्न। येनाकारेण यत्र यदत्यन्ताभावः तेनाकारेण तत्र तद्वत्ताप्रतीतिर्हि भ्रान्तिर्भवति च घटस्य भूतल समवेतत्वप्रतीतिर्भ्रान्तिः घटस्य च तत्र स्वरूपेणानिषिद्धत्वान्न तत्र तद्वत्ताप्रतीतिर्भ्रान्तिर्भवति । प्रपञ्चस्य तु वास्तवत्वेन निषेधे अनिषेध्यप्रपञ्चाकारस्याप्यवास्तवत्वमेव घटे भूसमवायित्ववत् तत्र तदभावात् तस्मात्प्रमाणाभावान्नान्यत्र सन्प्रपञ्चः किं च प्रपञ्चस्य ब्रह्मणि प्रतिषिध्यमानस्यान्यत्र सत्त्वानुपपत्तिश्च प्रसक्तं हि प्रतिषिध्यते नाप्रसक्तमिति सर्वसम्मतं प्रसक्तिश्च यत्र प्रतिषेधः तत्रत्यैव कारणमिति परैरप्युपेयते । सा च प्रपञ्चस्यान्यत्र सत्त्वे न संभवति। अन्यथाख्यातेर्निरस्तत्वात्। किं च कार्यं स्वोपादान एव तिष्ठति नान्यत्र निखिलप्रपञ्चोपादानं च ब्रह्मैवातः कथं ब्रह्मणि प्रपञ्चनिषेधेऽन्यत्र प्रपञ्चः सन् भवेत् । तस्मादन्यत्र सत्त्वाभावान्नेतीति वाक्यानुगृहीततत्त्वमादिवाक्यसमुपजातब्रह्मात्मसाक्षात्कारनिवर्त्यतया प्रतिपन्नोपाधौ बाध्यमानत्वाच्च जाग्रन्मिथ्याव्यवहारदशायामबाध्यमानत्वाच्च व्यावहारिक इति भावः ॥ ३६ ॥

ननु प्रतिपन्नोपाधौ बाध्यमानत्वन्न मिथ्यात्वप्रयोजकं बाधो ह्यधिष्ठानतत्त्वज्ञानादारोप्यस्य निवृत्तिर्न हि सा सर्वसंप्रतिपन्नमिथ्याभावे स्वप्ने संभवति इदानीं स्वप्नाधिष्ठानपूर्णात्मतत्त्वज्ञानाभावान्न च स्वप्नस्याहं कर्त्तैवाधिष्ठानमिति वाच्यम्। तथात्वे सर्वस्याप्यहंतासामानाधिकरण्यप्रतीतिप्रसङ्गात् । अहमिति विशेषदर्शनाच्च । अतः कथं प्रतिपन्नोपाधौ बाध्यमानत्वेन जाग्रतो मिथ्यात्वमित्याशङ्क्येदानीं तादृशाधिष्ठानज्ञानासंभवेपि कालान्तरेऽधिष्ठानपूर्णात्मज्ञानादेव स्वप्नस्याप्यात्यन्तिकनिवृत्तेर्नाप्रयोजकत्वमित्यभिप्रेत्याह—

**तत्र सत्यमनृतं च भेदतः**

**प्रत्यगात्मतमसा विकल्पितम् ।**

प्रक्षिणोति परमात्मवस्तुगा
बुद्धिवृत्तिरविचालिनी सती ॥ ३७ ॥

तत्र सत्यमिति । तत्र पूर्णात्मनि सत्वद्वैविध्ये वा सत्यं व्यवहारकाल एव सत्यं जाग्रत्पदार्थमनृतं व्यवहारकालेपि सर्वदाऽसन्तं प्रातीतिकं स्वप्नपदार्थं ज्ञाननिवर्त्यत्वे हेतुत्वेन तदुभयं विशिनष्टि—भेदत इत्यादिना । आत्मनः पृथक्त्वेन परस्परवैलक्षण्येन वा प्रत्यगज्ञानेनारोपितं प्रक्षिणोति । प्रकर्षेणात्यन्तं निवर्त्तयति मूलाज्ञानेन सह निवर्त्तयतीत्यर्थः । परमात्मवस्तुगा परमात्मविषयिणी बुद्धिवृत्तिः साक्षात्प्रमितिः अविचालिनी परमात्मैक्याकारा । न च प्रतिपन्नोपाधौ बाध्यमानत्वस्य मिथ्यात्वप्रयोजकत्वे स्वप्ने तन्निश्चयाभावात्कथं लौकिकानां तत्र मिथ्यात्वव्यहार इति वाच्यम् । जागरे उत्तरोत्तरभ्रमनिवर्त्यपूर्वपूर्वभ्रमविषय इव विरोधिज्ञाननिवर्त्यत्वज्ञानादेव तदुपपत्तेः । तज्ज्ञानस्यैव तद्व्यवहारप्रयोजकत्वात् । अत एव जागरे तदभावात् न मिथ्यात्वव्यवहार इतिभावः । अथवा—यदुक्तं न सन् कचिदिति तत्रैवोपपत्त्यन्तरमाह—तत्र सत्यमिति । तत्र एवं सर्वस्याप्यवास्तवत्वे सति यद्यात्मनि बाध्यमानः प्रपञ्चोऽन्यत्र सन्नित्युच्यते तदायमनात्मनि विद्यत इति वक्तव्यम् । तन्न संभवति आत्मव्यतिरिक्तस्य सर्वस्याप्यात्मसाक्षात्कारेण बाधितत्वादिति भावः । यद्वा - लोके हि घटादिकार्यं लीयमानं शक्तिमत्कारण एव विलीयमानं दृश्यते । अन्यथा—कालान्तरे कार्योत्पाद्ायोगात् तद्वत्तत्त्वज्ञानेन प्रपञ्चोपि विलीयमानः शक्तिमत्कारणे अविद्याशवले ब्रह्मण्येव विलीयत इति वक्तव्यम् । ततः कथं स्वकारणाज्ञानेन सह बाध इत्याशङ्क्याह—तत्र सत्यमिति । सत्यं कारणं कार्याभावेपि कारणस्य सत्वात् तच्चाज्ञानमनृतं कार्यकारणव्यतिरेकेणासत्वादज्ञानस्य स्वपरनिर्वाहकत्वात्प्रत्यगात्मतमसा विकल्पितमिति सत्यस्यापि विशेषणं तत्त्वज्ञानस्याज्ञान-

विरुद्धत्वात्तदपि नाशयत्येव । तथा च नाज्ञानेन सह निवृत्त्यनुपपत्तिरित्यर्थः ॥ ३७ ॥

ननु व्यवहारकाले प्रपञ्चस्य सत्यत्वाङ्गीकारे कथं तथा आत्मनोऽद्वितीयत्वं कथं वा तस्याविद्याकार्यत्वं किंचाविद्यानिवृत्तेः प्रागसत्यायास्तत्त्वबोधसाध्यत्वाङ्गीकारे कथमात्मनः श्रुतिसिद्धनित्यमुक्तता तत्राह—

नित्यबोधपरिपीडितं जग-
द्विभ्रमं नुदति वाक्यजा मतिः ।
वासुदेवनिहतं धनंजयो
हन्ति कौरवकुलं यथा पुनः ॥ ३८ ॥

नित्यबोधेति । नित्यबोधेनानासिद्धिस्वरूपचैतन्येन परिपीडितं वस्तुतो निवर्तितं ज्ञानस्वभावस्याविद्याविरोधिस्वभावात् वृत्त्यभिव्यक्तचैतन्यस्यैव प्रयोजकत्वात् नित्यबोधपरिपीडितमित्युक्तं तथा च जगतो व्यवहारकाले सत्वेऽप्यविद्यायास्तत्त्वसाक्षात्कारेण निवर्त्यमानत्वे च नित्यबोधेन वस्तुतो निवर्त्तितस्यैव प्रपञ्चस्य साक्षात्कारेण निवर्त्यनानात्वान्नाद्वैतक्षतिः । न वा नित्यमुक्तत्वक्षतिरिति भावः । आविद्यकत्वमप्यस्तीत्याह—जगद्विभ्रममिति । जगदेव विभ्रमः अधिष्ठानपूर्णात्मविपरीतरूपत्वेन प्रतीयमानत्वात् । तथा च शुक्तिरूप्यादिवदविद्याकार्यत्वमित्यर्थः । नुदति निवर्त्तयति । वाक्यजा तत्वमादिवाक्यजन्या मतिः साक्षात्कारः । ननु नित्यबोधमहिम्नैवाविद्या तत्कार्यनिवृत्तौ तन्निवृत्तये तत्साक्षात्कारप्रयासो व्यर्थः स्यादित्याशङ्क्य न व्यर्थः प्रतीयमानानिवर्चनीयाकारनिवृत्त्या तदर्थवत्त्वादित्यभिप्रेत्य वस्तुतोऽन्येन निवृत्तस्यापि प्रतीयमानाकारनिवृत्तिमात्रेण प्रयत्ना-

न्तरस्याप्यर्थवत्त्वे दृष्टान्तमाह—वासुदेवेति। वासुदेवः श्रीकृष्णः तेन हतं संहृतं कौरवकुलं कुरुवंशं धनञ्जयोऽर्जुनः यथा हन्ति तथेत्यन्वयः। तथा चोक्तं भगवता 'द्रोणं च भीष्मं च जयद्रथं च कर्णं तथान्यानपि योधवीरान्। मया हतास्त्वं जही'ति कालरूपिणा मया हतानेव त्वं जहीत्यर्थः। अथवा—ननु बुद्धिवृत्तिः प्रक्षिणोतीन्युक्तमनुपपन्नं बुद्धिवृत्तेर्जडाया आविद्यानिवर्त्तकत्वानुपपत्तेरित्याशङ्क्याह—नित्यबोधेति। नित्यबोधो वाक्यार्थबुद्धिवृत्त्यभिव्यक्तात्मस्वरूपबोधः तेन परिपीड्यमानमित्यर्थः। मतिः अखण्डाकारवृत्तिः। तथा च वृत्तेर्जडत्वेपि वृत्त्यभिव्यक्तचैतन्येनैव प्रपञ्चस्य निवर्त्यमानत्वात् वृत्तेश्च निवर्त्तकचैतन्याभिव्यञ्जकत्वमात्रेणैव निवर्त्तकत्वोक्तेर्नोक्तदोष इत्यर्थः। अन्येन निवर्त्यमानं प्रति सहकारितया प्रयोजकत्वमात्रेण तन्निवर्त्तकत्वोक्तौ दृष्टान्तः—वासुदेवेति। निहतं निहन्यमानं तदुक्तं—भगवता—निमित्तमात्रं भव सव्यसाचिन्निति ॥ ३८ ॥

तदेवं स्वमते जाग्रत्स्वप्नयोस्तत्त्वज्ञाननिवर्त्यतया प्रतिपन्नोपाधौ बाध्यतया च मिथ्यात्वाविशेषेपि व्यावहारिकत्वप्रातीतिकत्वाभ्यामवान्तरविशेषसद्भावात्प्रपञ्चस्य सर्वसंप्रतिपन्नः सत्यमिथ्याविभागः सम्भवतीत्युपपादितमिदानीं प्रतीयमानसत्यमिथ्याविभागान्यथानुपपत्त्यापि प्रपञ्चस्याविद्यकत्वं वक्तव्यमित्यभिप्रेत्य द्वैतसत्यत्ववादितेऽयं विभागो न सिद्ध्यतीत्याह—

सत्यमेवमनृतं च दुर्लभं
ब्रह्मवादिसमयाद्बहिः पुनः।
सत्यतो यदि मृषा पृथग् भवे-
त्सत्यमेव तदपि प्रसज्यते ॥ ३९ ॥

सत्यमेवमिति। एवं यथाऽस्मन्मते सत्यपदार्थोऽसत्यपदार्थश्च सुलभ

एवं ब्रह्मवादिसमयाद्बहिर्वेदान्तवादादन्यत्र तद्द्वयं सुलभन्न भवति। कथं न भवतीति चेत् तत्र किं सत्याद्वस्तुनो मृषात्वेनाभिमतं वस्तु भिन्नमुताभिन्नमुत भिन्नाभिन्नम्। तत्राद्यमनूद्य दूषयति-सत्यत इति। मृषा मिथ्यात्वेनाभिमतं वस्तु सत्यतः सत्याद्वस्तुनः पृथक् भिन्नं यदि भवेदिति सम्बन्धः। तदपि मृषात्वेनाभिमतं वस्त्वपि सत्यमेव स्यात् सत्यप्रतियोगिको हि भेदः सत्य इत्येव वक्तव्यम्। असत्त्वे तुच्छेन तेन सत्यमिथ्यावस्तुनोः परस्परासंकीर्णत्वानुपपत्तेः। सत्यप्रतियोगिकस्य तस्यासत्वानुपपत्तेश्च। न च भेदोऽनिर्वचनीयः परपक्षेऽनिर्वचनीयत्वाप्रसिद्धेः भेदस्य चानिर्वचनीयत्वाङ्गीकारे किमपराद्धं प्रपञ्चमिथ्यात्वेन तुल्यन्यायत्वात्। सत्यत्वे च तस्य तदाश्रयभूतं मृषात्वेनाभिमतं वस्त्वपि सत्यमेव स्यान्मृषावस्तुनः सत्यधर्माश्रयत्वानुपपत्तेरित्यर्थः॥ ३९॥

अभेदपक्षमनूद्य दूषयति—

**सत्यतो यदि मृषा न भिद्यते**
**सत्यमेव सुतरां तदिष्यताम्।**
**न द्वयात्मकतयाऽनृतं मतं**
**पक्षयोः कथितदूषणद्वयात्॥ ४०॥**

सत्यतो यदि मृषेति। तच्छब्दो मृषात्वेनाभिमतवस्तुविषयः सत्याद्भेदेपि मृषावस्तुनः सत्यत्वापत्तौ किमु वक्तव्यं तदभेद इत्यभिप्रायेणोक्तं सुतरामिति। भेदाभेदपक्षं दूषयति—न द्वयेति। अनृतमसत्याभिमतं वस्तुद्वयात्मकतया सत्यभिन्नाभिन्नात्मकतया न मतं तत्र हेतुः—पक्षयोरिति। भेदपक्षेऽभेदपक्षे चोक्तस्य सत्यभेदाश्रयत्वात्सत्यं स्यात् सत्याभिन्नत्वात्सुतरां सत्यं स्यादिति दूषणद्वयस्यात्रापि संभवादित्यर्थः। भेदाभेदयोरेकत्र विरोधाच्चेत्यपि द्रष्टव्यम्॥ ४०॥

नन्वस्तु मृषावस्तुनोऽपि सत्यत्वं का नः क्षतिरित्याशङ्क्य क्षतिरस्तीत्याह—

वेदवाक्यविषयस्य सत्यता
बुद्धवाक्यविषयो मृषा भवेत् ।
इत्यतः कथयितुं न शक्नुया-
द्ब्रह्मवादिसमयाद्बहिर्मुखः ॥ ४१ ॥

वेदवाक्येति । अत इत्यादौ सम्बन्धनीयम् । यतः सर्वस्यापि सत्यता अतः ब्रह्मवादिसमयाद्बहिर्मुखः समयान्तरनिष्ठो नैयायिकादिः वेदवाक्यविषयस्य वेदवाक्यप्रतिपाद्यज्योतिष्टोमादेरेव सत्यता बुद्धवाक्यप्रतिपाद्यः चैत्यवन्दनादिस्तु मृषैव इत्येवं विभागेन वदितुं समर्थो न भवेत् । तथा च चैत्यवन्दनादेरपि यागादिवदुपादेयतया सुखदुःखादिव्यवस्थाभावात्सर्वसाङ्कर्यापत्तिः स्यादतः सत्यमिथ्याविभागोऽङ्गीकर्त्तव्य इति भावः ॥ ४१ ॥

तस्मात्सर्वसंमतसत्यमिथ्याविभागान्यथानुपपत्त्या प्रपञ्चस्याविद्यकत्वमेव वर्णनीयमित्युपसंहरति—

सत्यमेवमनृतं च भेदतः
कल्पितं भवतु वर्णितान्नयात् ।
तत्र तद्घटयितुं हि शक्यते
नेतरत्र कथितोपपत्तिभिः ॥ ४२ ॥

सत्यमेवमिति । एवं सति प्रपञ्चसत्यत्वपक्षे सत्यमिथ्याविभागासंभवे सतीत्यर्थः । सत्यं सत्यत्वेनाभिमतं जाग्रद्दृष्टवियदादि अधि-

होत्रादि चानृतं स्वप्नदृष्टगजादिवस्तुचैत्यचन्दनादि च वर्णितात् न प्रमातरीत्यादिनोपपादितात् तथाप्युक्तेभेदतः परस्परभिन्नत्वेन कल्पितमारोपितमेवास्तु। न च कल्पितत्वपक्षेपि सत्यमिथ्यावैलक्षण्यमुपपादयितुमशक्यमिति शक्यं वक्तुं मृषावस्तुनः सत्यप्रतियोगिकानिर्वचनीयभेदाश्रयत्वेन तद्वैलक्षण्यस्य वर्णयितुं शक्यत्वादित्यभिप्रेत्याह—तत्रेति। तत्रारोपितत्वपक्षे तत्सत्यानृतवैलक्षण्यं घटयितुमुपपादयितुं नेतरत्र पक्षान्तरे तदुपपादयितुं न शक्यं तत्र पूर्वोक्तमेव हेतुं स्मारयति—कथितेति। भेदाभेदविकल्पोक्तयुक्तिभिरित्यर्थः ॥४२॥

तस्मात्सर्वस्यापि प्रपञ्चस्यारोपितत्वेन मिथ्यात्वाविशेषेप्युपपादितप्रकारेणावान्तरवैषम्यसंभवात्तन्मात्रेण च लौकिकवैदिकासंकीर्णव्यवहारोपपत्तेः। तदर्थं प्रपञ्चस्याद्वैतश्रुतिविरुद्धपारमार्थिकत्वस्यावक्तव्यत्वात्। परमार्थत्वे चासंकीर्णव्यवहारानुपपत्तेः। प्रत्यक्षादेर्व्यावहारिकमेव प्रामाण्यं न तत्त्वावेदकमित्युपसंहरति—

व्यावहारिकमतोऽवगम्यतां
मानजातमखिलं न तात्त्विकम्।
बाह्यवस्तुविषयं विरोधतोऽ-
बुद्धबोधविधिशक्त्यसंभवात् ॥४३॥

व्यावहारिकमिति। यतः सर्वस्यापि बाह्यवस्तुनः कल्पितत्वमेव न पारमार्थिकत्वमतस्तद्विषयमखिलं प्रमाणजातं व्यावहारिकमेव न तात्त्विकं न तत्त्वावेदकमित्यवगम्यतामिति सम्बन्धः। अखिलमिति प्रत्यक्षादिप्रमाणापेक्षया, मानजातमिति चक्षुराद्यवान्तरप्रमाणापेक्षया तत्त्वावेदकत्वाभावे हेत्वन्तरमाह—अबुद्धबोधेति। अबुद्धबोधविधिः अज्ञातार्थविषयज्ञानोत्पादनं तत्र शक्त्यसंभवात्। अज्ञातत्त्वावेदकत्वाभावे हेत्वन्तरमाह—अबुद्धेति। अर्थज्ञापनासंभवादित्यर्थ। तत्र हेतुः—विरोधत इति।

अज्ञातपदार्थो ति प्रत्यकूतत्त्वं प्रत्यक्षादिकं च पराग्बोधनस्वरसं तथा च पराग्विषयस्य प्रत्यग्विषयत्वविरोधात् नाज्ञातार्थबोधकत्वा-मर्थ्यसंभवः। तदभावे च न प्रत्यक्षादेस्तत्त्वावेदने प्रामाण्यमज्ञातार्थ-बोधकस्यैव तत्त्वादित्यर्थः ॥ ४३ ॥

ननु किमिदमज्ञातार्थबोधकत्वं यदभावात्प्रत्यक्षादेरतत्त्वावेदक-त्वमुपवर्ण्येत अप्रकाशमानवस्तुविषयत्वमिति चेन्न स्वप्रकाश-ब्रह्मविषयवेदान्तनामप्रामाण्यप्रसङ्गात्। ननु तद्विषयस्यापि ब्रह्मणः पूर्णानन्दाकारेण प्रकाशमानत्वमस्तीति चेन्न। पूर्णानन्दाकारस्यापि स्वप्रकाशबोधांशाभिन्नतया प्रकाशमानत्वात्। ननु तर्ह्यप्रकाशमानतया प्रतीयमानवस्तुविषयत्वं तदिति चेत् न प्रत्यक्षादेरपि तत्त्वावेदक-त्वप्रसङ्गात्। तस्याप्येतावन्तं कालं घटो मया न ज्ञात इत्यप्रकाश-मानतया प्रतीयमानघटादिविषयत्वात्। ननु प्रमाणान्तरागोचरवि-षयत्वं तदिति चेत्किं यदा कदा चित्प्रमाणान्तरागोचरविषयत्वं किं वा स्वसामग्र्यव्यवहितपूर्वक्षणीयप्रमाणान्तरागोचरविषयत्वं न तद्द्व-यमपि एकक्षणानुभूतविनष्टघटादिविषयप्रत्यक्षादेरपि तत्त्वावेदकत्व-प्रसङ्गात्। अनुमानादिकं चात्मन्यपि तुल्यं तस्मादज्ञातार्थबोधकत्वस्य दुर्निरूपत्वात्तदभावेन प्रत्यक्षादावतत्त्वावेदकत्वं वर्णयितुमशक्यमिति चेन्न भावरूपाज्ञानविषयविषयत्वस्यैवाज्ञातार्थबोधकत्वरूपत्वात्। नन्वेवं सति प्रत्यक्षादेर्व्यावहारिकप्रामाण्यमपि न स्यात्। प्रमाण-लक्षणानाक्रान्तत्वात्। न च तत्र प्रमितिजनकत्वमेव प्रमाणलक्षणमिति वाच्यम्। धारावाहिकविज्ञानजनकचक्षुरादेरपि प्रामाण्यप्रसङ्गादिति चेदज्ञातार्थबोधकत्वं हि प्रमाणसामान्यलक्षणं तत्राज्ञातत्वं मुख्या-मुख्यभेदेन द्विविधं मुख्यं तावदात्मनः तस्य भावरूपाज्ञानविषयत्वात्। अत एवात्मविषयप्रमाणस्य मुख्यमज्ञातार्थबोधकत्वमिति तत्त्वावेदन-प्रामाण्यं अमुख्यं तु घटादेः तस्य भावरूपाज्ञानविषयत्वाभावात्। ननु कथं तर्हि तस्याज्ञातत्वं ज्ञानसामग्रीक्षणतदव्यवहितपूर्वक्षणक-

लीनज्ञानविषयत्वानधिकरणत्वेनेति गृहाण । तथा च घटादेर्मुख्याज्ञातत्वासंभवेपि गौणाज्ञातत्वस्य विद्यमानत्वात् तद्बोधकप्रत्यक्षादेर्व्यावहारिकप्रामाण्यमस्त्येव । नन्वात्मनोपि घटादिवदेवाज्ञातत्वमस्तु विनिगमकाभावात् । तथा च घटादिप्रमाणस्य व्यावहारिकत्वे तत्प्रमाणस्यापि व्यावहारिकत्वमेव । तत्प्रमाणस्य च तत्त्वावेदकत्वे घटादिप्रमाणस्यापि तात्त्विकत्वं स्यादिति चेन्न । विनिगमकाभावासिद्धेः न हि स्वप्रकाशस्यात्मनो घटादिवदागन्तुकज्ञानाभावमात्रेणाज्ञातत्वं संभवति । घटादेस्तु ज्ञानाधीनप्रकाशस्य तदभावेन तदुपपद्यते । तथा च भावरूपाज्ञानविषयत्वेनैवात्मनोऽज्ञातत्वं घटादेस्तु उक्तविशेषणविशिष्टज्ञानविषयत्वानधिकरणत्वेन । नन्वेवमपि मुख्यामुख्यविभागो वैपरीत्येन किमिति न स्यादिति चेन्न । भावरूपाज्ञानं हि वस्तुतत्त्वमेव विषयीकरोति तस्यैव नित्यवत् प्रकाशप्रसक्त्याऽज्ञानविषयतौचित्यादतो भावरूपाज्ञानविषयत्वेन प्राप्तमज्ञातत्वमेव मुख्यमागन्तुकज्ञानाभावस्तु अवस्त्वपि विषयीकरोति । कल्पितरजतादावपि तत्सत्वात् । ततस्तत्प्रयुक्तमज्ञातत्वममुख्यमेव । तस्माद्घटादेः प्रत्यक्षादितात्त्विकप्रामाण्यप्रयोजकमुख्याज्ञातत्वासंभवात् न तद्विषयप्रत्यक्षादेस्तत्वावेदकत्वमतो न वेदान्तबाध इति परमप्रकृतमुपसंहरति—

एवं न तत्त्वविनिवेदनशक्तियोगः
संभाव्यतेऽनधिगताधिगतेरयोगात् ।
मानान्तरस्य सकलस्य ततश्च तेन
बाधस्त्रयीशिरसि वर्णयितुं न शक्यः ॥ ४४ ॥

एवमिति । एवमुक्तप्रकारेण सकलस्य मानान्तरस्य वेदान्तव्यतिरिक्तप्रत्यक्षादिमानस्य तत्त्वविनिवेदनशक्तियोगः तत्त्वावेदनसाम-

र्थ्यसम्बन्धो न सम्भाव्यत इत्यत्र एवं शब्दपरामृष्टं पूर्वोक्तमेव हेतुं स्मारयति—अनधिगतेति। अज्ञातवस्तुबोधनस्यासंभवादित्यर्थः। यतस्तत्त्वावेदकत्वाभावः। ततश्च तेन प्रत्यक्षादिना वेदान्तबाधः वर्णयितुं न शक्यत इत्यर्थः॥ ४४॥

ननु 'तदनन्यत्वमारम्भणशब्दादिभ्यः' 'भावाच्चोपलब्धेरि'तिसूत्राभ्यां कार्यानुगतकारणस्वरूपकार्यसत्तामात्रावगाहिन्याः प्रत्यक्षबुद्धेस्तात्त्विकप्रामाण्यमङ्गीकृत्य कार्यकारणभेदावगाहिविकल्पबुद्धेर्वाचारम्भणश्रुत्यनुरोधेन तदभावमभिधाय सूत्रकारेण समन्वयस्य प्रत्यक्षादिविरोधः परिहृतः। तत्कथं भवद्भिः प्रत्यक्षमात्रस्य तत्त्वावेदकत्वं निराक्रियत इत्याशङ्क्याह—

आरम्भणादिवचसा खलु निर्विकल्प-
प्रत्यक्षबुद्धिमनुसृत्य विकल्पबुद्धेः।
आभासतां मुनिरुवाच तदास्य भावो
विज्ञायते स्फुटतरो गुडजिह्विकायाम्॥ ४५॥

आरम्भणादीति। तदनन्यत्वमारम्भणशब्दादिभ्य इत्यादिवाक्येन निर्विकल्पप्रत्यक्षबुद्धिं कार्यानुगतकारणस्वरूपकार्यसत्तावगाहिप्रत्यक्षबुद्धिं भेदादिविशेषानवगाहित्वात्तस्या निर्विकल्पकत्वमनुसृत्य प्रमाणमित्यङ्गीकृत्येत्यर्थः। विकल्पबुद्धेः कार्यकारणभेदादिविषयसविकल्पबुद्धेराभासतामप्रमाणतां मुनिर्बादरायणः तदा तदनन्यत्वमित्यादिसूत्रप्रणयनसमयेऽस्य मुनेर्भावोऽभिप्रायः गुडजिह्विकायांनिम्बरसायमानजिह्वायां गुडानुलेपनं गुडजिह्विका तस्यां सूत्रकारो ह्यद्वैतप्रत्यङ्मात्रं विषयवेदान्तसमन्वयस्य भेदावगाहिप्रत्यक्षादिविरोधं परिजिहीर्षुः सहसा सकलप्रत्यक्षाप्रामाण्यकथने प्रतिपत्त्राव्याकुलचित्तो भविष्यतीति मत्वा गुडजिह्विकान्यायेनादौ कारण-

स्वरूपकार्यसत्तावगाहिप्रत्यक्षस्य प्रामाण्यमङ्गीकृत्य भेदविषयप्रत्यक्षस्य तन्निराचकार न तु वस्तुतस्तत्प्रामाण्यं तदभिप्रेतं प्रत्यङ्मात्रसमन्वयस्य भेदावगाहिप्रत्यक्षेणैव घटादिकार्यानुगतकारणमृत्पिण्डादिस्वरूपसत्वावगाहिनापि विरोधस्याविशिष्टत्वात् । तस्मात्सूत्रकारस्य तत्र तात्पर्याभावान्न तद्विरोध इत्यर्थः ॥ ४५ ॥

ननु भगवान् जैमिनिः सत्संयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमिति प्रत्यक्षलक्षणसूत्रेण द्विविधस्यापि प्रत्यक्षस्य तात्त्विकं प्रामाण्यमसूसुचत् । तत्कथं बादरायणस्येत्थं तद्विरुद्धत्वेनाभिप्रायो वर्ण्यत इत्याशङ्क्य जैमिनेरपि प्रत्यक्षस्य व्यावहारिकप्रामाण्य एवाभिप्रायः न तु तत्त्वावेदन इति वक्तुमादौ तेनापि निर्विकल्पकप्रामाण्यमेवाभ्युपेतं न तु सविकल्पकप्रामाण्यमिति तत्कृतलक्षणार्थपरीक्षयाह—

**सत्संप्रयोग इति जैमिनिरप्युवाच**
**यल्लक्षणं तदुभयोः सममेव विद्यात् ।**
**आपाततस्तदथ युक्तिनिपीडितं स-**
**त्सन्मात्रसंविदि निषीदति निर्विशङ्कम् ॥४६॥**

सत्संप्रयोग इति । इदंचोक्तसूत्रैकदेशग्रहणं लक्षणं प्रत्यक्षलक्षणं तल्लक्षणमुभयोः सविकल्पकनिर्विकल्पकयोरापाततः एव समं विज्ञाय तान्नामेत्यर्थः । सम्यग्विचारे तु नैवमित्याह—तदपीति । प्रत्यक्षलक्षणमपि युक्तिनिपीडितं सद्युक्त्या सम्यग्विचारेण संकुचितं सत् सन्मात्रसंविदि कारणस्वरूपसत्तामात्रविषयनिर्विकल्पप्रत्यक्षे निषीदति पर्यवस्यति । सत्ता अबाधितेनार्थेनेन्द्रियस्य यः सन्निकर्षः तज्जन्यं ज्ञानं प्रत्यक्षमिति हि प्रत्यक्षलक्षणसूत्रार्थः । स चाबाधितार्थो न सविकल्पकविषयः सामान्यादिर्भवेदिति सामान्यादेर्वृत्त्यादिविकल्पेन

दुर्निरूपत्वान्निर्विकल्पकविषयस्तु कारणस्वरूपमात्रमबाधितमतस्तत्प्रयोगस्यैव सत्संप्रयोगत्वात्तज्जन्यं निर्विकल्पमेव प्रत्यक्षं प्रमाणमिति तदभिमतं न तु सविकल्पकं तत्र तदुक्तप्रत्यक्षलक्षणाभावादित्यर्थः ॥ ४६ ॥

नन्वस्तु निर्विकल्पकमेव प्रत्यक्षं प्रमाणमिति तदभिमतं न तु सविकल्पकं तत्र तदुक्तप्रत्यक्ष ( लक्षणस्याभावात् ) तथापि द्विविधप्रत्यक्षस्यापि तत्त्वा वेदकत्वाभावोक्तिर्विरुध्यत इत्याशङ्क्य निर्विकल्पकप्रामाण्यमपि विचार्यमाणे व्यावहारिकमित्येव तदभिमतं न तत्त्वावेदनमतो न विरोध इत्यभिप्रायेणाह—

**तत्रापि दुर्घटमवैति यदा तु तत्त्व-**
**बोधं विवक्षति विसृज्य विकल्पजालम् ।**
**किं कारणं वदति येन स तत्त्वगामि-**
**विज्ञानमर्थमवबोधयदप्रबुद्धम् ॥ ४७ ॥**

तत्रापीति । निर्विकल्पकप्रत्यक्षेपि दुर्घटं प्रत्यक्षलक्षणमिति शेषः । अवैति जानाति जैमिनिरित्यनुषज्यते कदा जानातीत्याकाङ्क्षायामाह-यदात्विति । तत्त्वबोधं परमार्थाद्वितीयबोधं विवक्षति अभिप्रैति । यदा तु जैमिनिर्वेदान्तजन्यपरमार्थवस्तुतत्त्वबोधमभिप्रैति तदा घटादिविषयनिर्विकल्पकप्रामाण्यमपि न तात्त्विकमवैति । तद्विषयस्य घटादिस्वरूपस्यातत्त्वेनावधारणादित्यर्थः । एवं तस्याभिप्रायवर्णने किं बीजमिति पृच्छति—किं कारणमिति । निर्विकल्पके प्रत्यक्षलक्षणस्य दुर्घटतां जानातीत्यत्र किं कारणं किं लिङ्गमित्यर्थः । तद्वचनगतमेव लिङ्गमाह—वदतीति । येन हेतुना स जैमिनिः तत्त्वगामि तत्त्वविषयम् अप्रबुद्धमज्ञातं यतो जैमिनिरज्ञातमर्थमवबोधयद्विज्ञानमेव तत्त्वज्ञान-

मित्याह तत एवं ज्ञायते । नूनं वेदान्तानामेव तात्त्विकं प्रामाण्यं तदभिमतमज्ञातार्थविषयत्वात् न निर्विकल्पकप्रत्यक्षस्यापि तद्विषयस्याज्ञातत्वाभावादित्यर्थः ॥ ४७ ॥

जैमिनिना कुत्रैवमुक्तमित्याकाङ्क्षायामाह—

**औत्पत्तिके हि भगवानयमप्रबुद्ध-**
**मर्थं प्रमाणविषयं कथयांबभूव ।**
**अत्राऽऽह तत्र ननु धर्मगतं प्रमाणं**
**तत्त्वार्थगामि कथितं न परात्मगामि ॥ ४८ ॥**

औत्पत्तिक इति । औत्पत्तिकसूत्रे हिः प्रसिद्धौ । अयं जैमिनिः अर्थेऽनुपलब्धे तत्प्रमाणमित्यत्र ह्यज्ञातार्थगन्तृ प्रमाणमिति जैमिनिनोक्तमित्यर्थः । ननु जैमिनिवचनादेव प्रत्यक्षादेस्तत्त्वावेदकत्वपरित्यागे तस्मादेव वचनाद्धर्मविषयप्रमाणस्यैव तत्त्वावेदकत्वं स्यात् न ब्रह्मप्रमाणवेदान्तस्येत्यभिप्रेत्य चोदयति—अत्राऽऽहेति । एवं स्थिते किमाहेत्याकाङ्क्षायामाह-तत्रेति । औत्पत्तिकसूत्रे । नन्विति प्रसिद्धौ धर्मगतं धर्मविषयं तत्त्वार्थगामि तात्त्विकवस्तुविषयं परात्मगामि परमात्मविषयमौत्पत्तिकसूत्रे हि धर्मविषयप्रमाणस्य चोदनाया एव तात्त्विकं प्रामाण्यमुक्तं तस्या एव प्रकृतत्वात् न ब्रह्मप्रमाणस्य तथा च ब्रह्मप्रमाणस्यापि तात्त्विकत्वं न स्यादित्यर्थः ॥ ४८ ॥

परिहरति—

**सत्यं यदाह पितृमान् व्यवहारदृष्टि-**
**माश्रित्य तत्कथितवान्प्रकृतोपयोगात् ।**

दूरप्रसरितनिसृष्टनिगूढभाव-

स्तद्बादरायणमतानयनात्प्रतीमः ॥ ४६ ॥

सत्यमिति । औत्पत्तिकसूत्रे धर्मविषयस्य प्रामाण्यमेवोक्तमिति पितृमान् शिक्षितबुद्धिः भवान् यदाह तत्सत्यं कथं तर्हि भवदिष्ट-सिद्धिस्तत्राह—व्यवहारेति । व्यवहारानुकूलदृष्ट्या तद्धर्मप्रमाणस्य तात्त्विकत्वमेवं कथने हेतुमाह—प्रकृतोपयोगादिति । धर्मानुष्ठानानुकूल-प्रकृतधर्मविचारोपयोगादित्यर्थः । जैमिनिराचार्यो हि धर्मविचाराय प्रवृत्तो धर्मे प्रतिज्ञातचोदनाप्रामाण्यानुरोधेन धर्मविषयप्रमाणं तत्वा-वेदनमित्याह—अन्यथा प्रकृतविचारासंगतेः । न हि धर्मविचारं प्रति-ज्ञाय तत्प्रमाणमतत्त्वावेदकमित्युक्तिः शोभामावहति । अतो वस्तुतो तत्त्वावेदनमपि धर्मप्रमाणं धर्मस्य व्यावहारिकसत्यतामाश्रित्य तत्त्वावेदनमित्युक्तं न तु वेदान्तानामतत्त्वावेदकत्वाभिप्रायेण वस्तुतो जैमिनेरपि वेदान्तानामेव तत्त्वावेदनप्रामाण्यमित्यत्रैव तात्पर्यमित्याह-दूरप्रसारितेति । दूरेऽप्रकृतत्वात् गभीरत्वाच्च दूरभूते वेदान्तार्थे प्रसारितो विस्तारितो निसृष्टः स्वाभाविको निगूढो नितरां गूढो भावोऽभिप्रायो यस्य स तथोक्तः । यदि जैमिन्याचार्यस्य वेदान्त-तत्त्वावेदनप्रामाण्य एव दृष्टिः तर्हि किमिति तेन मुखतो नोक्तमित्या-शङ्क्योक्तं-निगूढेति । अप्रकृतत्वात्प्रकृतानुपयुक्तत्वात् प्रकृतविरुद्धत्वाच्च तन्मुखतो नोक्तमित्यर्थः । नन्वेवन्तस्याभिप्राय इति कुतो हेतोर्ज्ञायते तत्राह—तद्बादरायणेति । तद्व्यवहारिकदृष्टिमाश्रित्यैव कथितमित्येत-द्बादरायणमतानयनात् बादरायणस्यानपेक्षत्वादिति प्रमाणतया बाद-रायणमतस्याङ्गीकारात् बादरायणस्य चात्मविषयवेदान्तानामेव तत्त्वावेदनप्रामाण्यस्याभिमतत्वात् । वस्तुतत्त्वस्याप्येवंरूपत्वाज्जैमि-नेरप्यभिप्राय एवमेवेति जानीम इत्यर्थः ॥ ४६ ॥

नन्वात्मा वाऽरे द्रष्टव्य इत्यादौ आत्मातिरिक्तनियोगस्यापि तत्त्वावेदनवेदान्तमेयत्वं गम्यते अतस्तन्न्यायेनानात्मविषयप्रत्यक्षादेरपि तात्त्विकत्वं किं न स्यादित्याशङ्क्याह—

द्रष्टव्य इत्यपि विधिर्न विधिप्रमेय-
मात्मानमेव विनियच्छति तत्कुतश्चेत् ।
अज्ञातता च परमात्मन एव यस्मा-
द्यस्माच्च कर्तृवशवर्ति न दर्शनं तत् ॥ ५० ॥

द्रष्टव्यइत्यपीति । द्रष्टव्य इति विधिरपीति सम्बन्धः । द्रष्टव्य इत्यादितव्यप्रत्ययोपीत्यर्थः । विधिप्रमेयं विधिर्नियोगः प्रमेयं यस्य विधिप्रत्ययस्य तमात्मानं स्वात्मानं नियच्छति नियमयति । किन्त्वात्मपर एवेत्यर्थः । अथवात्मानं परमात्मानं विधिप्रमेयं विधीयमानदर्शनविषयतया न नियच्छति न विनियुङ्क्ते इत्यर्थः । विधिः प्रमेयमिति व्यस्तपाठे द्रष्टव्य इत्यादिविधिरपि न विधिर्न विधायकः न नियोगप्रतिपादकः किन्त्वात्मानं परमात्मानमेव प्रमेयं नियच्छति तात्पर्येण प्रतिपादयतीत्यर्थः । उभयत्रापि हेतुं पृच्छति—तत्कुतश्चेदिति । तद्विधिवाक्यस्यापि न नियोगपरत्वं किन्त्वात्मपरत्वमेवेत्येतत् कुतः कस्माद्धेतोरिति चेदित्यर्थः । द्वितीयस्योत्तरमाह—अज्ञाततेति । आद्यस्योत्तरमाह—यस्माच्चेति । कर्तृवशवर्त्यनुष्ठातृपुरुषपरतन्त्रं दर्शनं ज्ञानं तत्तस्मात् ॥ ५० ॥

ननु द्रष्टव्यादिविधेर्नियोगपरत्वनिराकरणे तव्यादिप्रत्ययस्य का गतिः कथं वा तस्यात्मपरत्वं तत्राह—

अर्हे कृत्यतृचश्च पाणिनिवचः स्पष्टं विधत्ते यत-
स्तस्माद्दर्शनयोग्यतां वदति न स्तव्यो न तत्त्वान्तरम् ।

**तस्मादात्मपदार्थमात्रनियतं मेयत्वमेकान्ततो**

**द्रष्टव्यादिवचो वदत्यनुभवादज्ञात आत्मा यतः ॥५१॥**

अर्ह इति । अर्हार्थान् कृत्यतृचः कृत्प्रत्ययान् तृचप्रत्ययं च पाणिनिवचः अर्हे कृत्यतृचश्चेति सूत्रं तथा च तव्यादिप्रत्ययस्य नियोगपरत्वनियमाभावात् अर्हार्थत्वेन गतिरित्याह— दर्शनयोग्यतामिति । मुमुक्षुणा द्रष्टुं योग्य आत्मेन्यात्मनो दर्शनयोग्यतां वदति । तथा चात्मपरत्वं सम्भवतीत्यर्थः । नः अस्माकं तव्यः द्रष्टव्य इत्यादि तव्यप्रत्ययः न तत्त्वान्तरमात्मातिरिक्तं नियोगाख्यं वस्तु नः प्रतिपादयतीत्यर्थः । तथा च वेदान्तानामात्मपरत्वेनैव तत्त्वावेदनप्रामाण्यमित्युपसंहरति— तस्मादिति । यस्माद् द्रष्टव्य इत्यादितव्यप्रत्ययः आत्मनो दर्शनयोग्यतामेव वदति न नियोगमतस्तस्मादात्मपदार्थमात्रनियतं परमात्मैकनिष्ठं मेयत्वं तात्त्विकमेयत्वमेकान्ततस्तात्पर्यतः द्रष्टव्यादिवाक्यमात्मनो वेदान्तैर्दर्शनयोग्यतां वदत् आत्मन एव वेदान्तप्रमेयत्वं तात्पर्येण वदतीत्यर्थः । आत्मनो ज्ञातत्वे मानमाह—अनुभवादिति । नित्यानुभवात् साक्षिणः । तथा च द्रष्टव्यादिवचोदृष्टान्तेनापि प्रत्यक्षादेस्तात्त्विकप्रामाण्यमित्यर्थः ॥ ५१ ॥

नन्वेवं सति सत्संप्रयोग इत्यादिजैमिनीयप्रत्यक्षसूत्रं व्यर्थम् । आत्मन एव तात्त्विकप्रमेयतया सत्वेन तदतिरिक्तसतोऽभावादित्याशङ्क्य पारमार्थिकसत्वाभावेऽप्यापेक्षिकसत्वमादायैव तल्लक्षणस्य प्रवृत्तत्वान्न वैयर्थ्यमित्यभिप्रेत्याह—

**रूपादिविभ्रममपेक्ष्य हि शुक्तिकादौ**

**सत्संप्रयोगजनितैव तु बुद्धिवृत्तिः ।**

तामप्यपेक्ष्य सति संहृतसर्वभेदे
सत्संप्रयोगजनिता मतिरभ्युपेया ॥५२॥

रूप्यादिविभ्रमेति । शुक्तिकादौ शुक्तित्वादिविशिष्टशुक्तिकादिविषये बुद्धिवृत्तिः शुक्तित्वादिसामान्यविशिष्टाकारबुद्धिवृत्तिः यद्यपि शुक्तित्वादिसामान्यस्य वृत्तिविकल्पादिना दुर्निरूपतया तद्विशिष्टस्याप्यसत्वमेव तथापि तस्य तदप्रतिसंधानदशायाम् तत्रारोपितसत्त्वेन स्पष्टं रजताद्यपेक्षतया सत्वमिति कृत्वा तत्संप्रयोग जन्यं सविकल्पकज्ञानं सत्संप्रयोगजनितमिति प्रत्यक्षप्रमाण मित्युच्यत इत्यर्थः। ततोऽपि व्यक्तिमात्रविषयस्य निर्विकल्पकस्य सत्संप्रयोगजत्वमस्तीत्याह—तामप्यपेक्ष्येति । तां सामान्यविषयसविकल्पकबुद्धिवृत्तिं सति व्यक्तौ संहृतसर्वभेदे निराकृत सामान्यादिसकलभेदकधर्मे संहरणं च विद्यमानस्यापि सामान्यादेरविषयीकरणमात्रं सामान्यादिकमविषयीकृत्य केवल, व्यक्तिमात्रविषयिणी मतिरित्यर्थः । तत्संप्रयोगे तत्र तच्छब्देन सदुच्यते । सत्संप्रयोगेति च पाठः व्यक्तः सामान्यवद्वृत्तिविकल्पादिना दुर्निरूपत्वाभावत्तस्मादपि तस्याः सत्वमिति तद्विषयं निर्विकल्पकज्ञानं तत्संप्रयोगजमभ्युपेयमित्यर्थः ॥ ५२ ॥

निर्विकल्पस्यापि सत्संप्रयोगजत्वं वस्तुतो नास्तीत्याह—

वेदान्तवाक्यजनितां परमात्मबुद्धि-
वृत्तिं व्यपेक्ष्य पुनरत्र न काचिदस्ति ।
सत्संप्रयोगजनिता भुवनत्रयेऽपि
बुद्धिस्तमोविरचितं हि जगत्समस्तम् ॥ ५३ ॥

वेदान्तेति । परमात्मबुद्धिवृत्तिं परमात्मविषयबुद्धिवृत्तिं व्यपेक्ष्य अपेक्ष्यात्र भुवनत्रयेपि काचिद् बुद्धिः सत्संप्रयोगजनिता नास्तीति सम्बन्धः । तत्र हेतुमाह—तमोविरचितमिति । अविद्याकल्पितं हि यतः तथा च कल्पितस्य वस्तुसत्त्वानुपपत्तेः । व्यक्तेरपि तमोविरचितत्वात् न तन्मात्रविषयनिर्विकल्पकरूपापि बुद्धिः वस्तुनः प्रमा आत्मनस्त्वकल्पिततया सदा सत्त्वात् तद्विषयिणी बुद्धिर्वस्तुतः प्रमैवेत्यर्थः ॥५३॥

नन्वेवमपि धर्मस्य चोदनाप्रमेयत्वेनापूर्वतया मुख्याज्ञातत्वसंभवेन च तद्विषया धीस्तत्त्वमतिरेव स्यादित्याशङ्क्याह—

धर्मेऽपि तत्त्वमतिरेव तु चोदनायाः
सत्त्वादिवस्तुनि यथाऽत्तनिबन्धना धीः ।
अज्ञाततापि सदृशी व्यवहारकाले
तत्त्वावबोधसमये न तु तत्त्वबुद्धिः ॥ ५४ ॥

धर्मेऽपीति । चोदनाया इति हेतुपञ्चमी धीरित्येतदत्राप्यनुषञ्जनीयम् अपिशब्दोऽत्र सम्बध्यते चोदनाजन्या धीरपीत्यर्थः । सदृशी सत्वादिवस्तुसदृशी व्यवहारकाल एवेति सम्बन्धः । धर्मचोदनाजन्या धीरपि सत्त्वादिजातिधीवत् बाधितविषयत्वात्स्वप्रमेयस्य तद्वदेव भावरूपाज्ञानविषयत्वाभावाच्च । व्यवहारकाल एव तत्त्वमतिरित्यर्थः । एवकारव्यावर्त्यमाह—तत्त्वाववोधेति । तत्त्वसाक्षात्कारसमये धर्मबुद्धिरपि तत्त्वबुद्धिर्न भवतीत्यर्थः ॥ ५४ ॥

ननु घटादेरज्ञातत्वाभावेन तद्विषयप्रत्यक्षादेस्तत्वावेदनप्रामाण्यनिराकरणमनुपपन्नं घटादेः सत्यत्वेन तद्विषयप्रामाण्यस्यापि तात्त्विकत्वावश्यंभावात् । न च तत्सत्यत्वमापेक्षिकं परमार्थसद्ब्रह्मपरिणामत्वेन घटादेरपि परार्थसत्त्वादित्याशङ्क्य विवर्त्तवादाश्रयणेन

परिणामवादस्य निराकृतत्वान्नैवमित्यभिप्रेत्यारम्भणाद्यधिकरणसिद्धमर्थं दर्शयति—

**आरम्भणादिवचनं सकलं प्रवृत्तं**
**प्रत्यक्षबुद्धिविषयादपहर्त्तुमुच्चैः ।**
**तत्त्वं यथोदितनयेन विवर्त्तवाद-**
**माश्रित्य सत्यपरिणामनिवारणेन ॥ ५५ ॥**

आरम्भणादीति । तदनन्यत्वमारम्भणशब्दादिभ्यः भावे चोपलब्धेरित्यादिसूत्रं प्रत्यक्षबुद्धिविषयाद् घटादेस्तत्त्वं परमार्थत्वमपहर्त्तुमिति सम्बन्धः उच्चैः स्पष्टं यथोदितनयेन यथावत्तत्र तत्रोक्तन्यायेन विवर्त्तवादं स्वस्वरूपापरित्यागेनानिर्वचनीयरूपान्तरप्राप्तिलक्षणविवर्त्तसिद्धान्तं सत्यपरिणामनिवारणेन सत्यो यः परिणामः तत्त्वतोऽन्यथाभावस्तन्निराकरणेनारम्भणादिसूत्रं यथोक्तन्यायेन परिणामनिराकरणपूर्वकं विवर्त्तवादमाश्रित्य घटादेः परमार्थसत्वं पराकर्त्तुं प्रवृत्तमिति न घटादेः परमार्थसत्वमित्यर्थः—अयम्भावः । उत तमादेशमप्राक्ष्यः येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति । यद्विज्ञानात् सर्वविज्ञानं तत्किं त्वं जानासीत्युद्दालकश्वेतकेतुसंवादेन एकविज्ञानेन सर्वविज्ञानप्रतिज्ञामवतार्य श्रुतिः स्वयमेव भेदप्रपञ्चस्यासत्यतोपवर्णनेन तामुपपादयति यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमित्यादिना । तस्य चायमर्थः । यथा घटादिविकारो न तत्कारणमृदादेः पृथक् सन् किन्तु केवलं वाचामुकोयममुकोयमित्यारभ्यते । अत एव विकारघटादिस्वरूपमृदादिज्ञानात् घटादिस्वरूपं ज्ञातं भवति । तथा ब्रह्मकार्यं जगदपि न ब्रह्मव्यतिरेकेण पृथक् सत् किन्तु ब्रह्मैव तत्स्वरूपं ततः तद्ज्ञानेन सर्वविज्ञानमुपपन्नमिति । एतच्च विवर्त्तवादाश्रयण एव

सङ्गच्छते। परिणामपक्षे तु कार्यस्य कारणात् पृथक्सत्त्वेनान्यविज्ञानेनान्यविज्ञानायोगात् प्रतिज्ञाश्रुतिः पीड्येत । किं च मृदादिकारणे विद्यमाने उपलभ्यमान एव च घटादिकार्यं विद्यते उपलभ्यते च नान्यथेति सर्वसंमतम्। एतच्च घटादेर्मृदाद्यात्मकत्व एव संभवति न तु तदन्यत्वे । नन्वन्यस्मिन्नग्नौ सत्येवान्यस्य धूमस्य स्थितिर्दृश्यत इति चेन्न—विनष्टेऽपि वह्नौ गगनविपरिवर्त्तिधूमोपलम्भात् । ननु समवायोपाधिक एवायं नियम इति चेन्न । एवमप्यन्यत्वप्रयुक्तनियतानुपलम्भदूषणस्यानिवृत्तत्वाद्यद्यस्मात् भिन्नं तत्तस्मिन्नुपलभ्यमान एवोपलभ्यते नेति व्याप्तेः कुलालघटादौ दर्शनात् । ननु तत्रासमवायित्वमुपाधिरिति चेन्न—गन्धतद्वतोः साध्याव्यापकत्वात् न हि गन्धाश्रये गृह्यमाण एव गन्धो गृह्यते। न च तत्रासमवायित्वमस्तीति। किंचोत्पत्तेः पूर्वं कारणे कार्यं सदेवेति वक्तव्यमसत उत्पत्त्यनुपपत्तेः। ननु सतोप्युत्पत्तिरनुपपन्नेति चेन्न—अभिव्यक्तेरेवोत्पत्तिपदार्थत्वात् । अभिव्यक्तिश्चान्धकारावृतघटस्येव प्रदीपादिना कारणव्यापारेण विद्यमानस्यैवोपपद्यते । नन्वभिव्यक्तेरप्यसत्त्योत्पत्तिरनुपपन्नेति चेन्न—अभिव्यक्तेरनिर्वचनीयत्वेनासत्वाभावात्। ननु पूर्वं कारणे कार्यस्य नात्यन्तासत्वं येनोत्पत्तिर्न स्यात् किन्तु तस्मिन् तत्प्रागभाव एवेति चेन्न। कारणावस्थाव्यतिरिक्तप्रागभावसत्वे प्रमाणाभावात्। ननु कार्यानुपलब्धिरेव तत्र प्रमाणमिति चेन्न । विद्यमानस्याप्यन्धकारावृतवस्तुवदनभिव्यक्तत्वेनानुपलम्भोपपत्तेः। न चात्र विनिगमकाभावः असत्त्वकल्पनातः कार्यस्य सत्त्वकल्पनाया एव लघुत्वेन लाघवस्यैव विनिगमकत्वात्। न चात्राप्यनभिव्यक्तिरभावः कल्पनीयः। तस्य त्वन्मतेपि समत्वात्। तथा च कार्यस्य स्वोत्पत्तेः पूर्वं सत्त्वे कारणस्वरूपमेव कार्यसत्तेति वक्तव्यमन्यस्यानुपलम्भात्। न हि मृत्पिण्डव्यतिरेकेण घटो नाम कश्चित्पत्तेः पूर्वं तत्रास्ति । ततः कार्यस्य कारणस्वरूपातिरेकेण सत्त्वा-

दपि जगत्कार्यं स्वकारणात् ब्रह्मणः पृथक् सन्न भवति। तथा च श्रुतिरपि सदेव सोम्येदमग्र आसीदिति सच्छब्दपरामृष्टब्रह्मणेदंशब्दपरामृष्टस्य जगतः सामानाधिकरण्येनाभेदमेव दर्शयति। अभेदश्च जगतो ब्रह्मव्यतिरेकेणासत्त्व एव संगच्छते पृथक्सतोरैक्यानुपपत्तेः। तथा च यत्सत् तत्सर्वदा सर्वत्र सदेव भवति यथात्मा न हि सतः क्वचित्कदाचिदसत्वं संगच्छते। सतोऽसत्वधर्मित्वानुपपत्तेः। यच्च क्वचित्कदाचिदसत् तत्सर्वदा सर्वत्रासदेव यथा गन्धर्वनगरादि न ह्यसतः सत्वाश्रयत्वमुपपद्यत इति कार्याकारस्य स्वोत्पत्तेः पूर्वं कारणव्यतिरेकेणासत्वे ततः परमपि तद्व्यतिरेकेण कार्यमसदेव प्रतीयमानाकारस्त्वनिर्वचनीयः। तस्मादात्मन एव परमार्थसत्त्वाज्जगतश्च तत्परिणामत्वाभावेन तादृशसत्त्वाभावान्न प्रपञ्चविषयप्रमाणस्य तत्त्वावेदकत्वम्। ननु सच्च त्यच्चाभवदिति जगतो ब्रह्मपरिणामत्वं श्रूयते। परिणामश्च परिणामसमानसत्ताको जगति विख्यायते ततः परमार्थसद्ब्रह्मपरिणामजगदपि परमार्थसदेव। न च जगतो ब्रह्मणः पृथक् सत्वे एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा पीड्येत अन्यज्ञानादन्यज्ञानायोगादिति वाच्यम्। परिणामवादे कार्यकारणयोरभिन्नत्वस्यापि सत्त्वेन तदुपपत्तेः। अत एवात्मैवेदं सर्वम् ऐतदात्म्यमिदं सर्वमित्यादिरपि संगच्छते। अतः कथं प्रपञ्चविषयप्रत्यक्षादेरतत्वावेदकत्वमिति चेत्तत्र किं सत्यज्ञानानन्दब्रह्मस्वरूपे स्थित एव ब्रह्मणो जगदाकारेण परिणामित्वं श्रुतिराचष्टे। किं वा तस्मिन्विनष्टे। आद्ये। नामान्तरेण विवर्तवाद एवाश्रितो भवति। लोके रज्ज्वादिस्वरूपे सति सर्पादिरूपान्तरापत्तेर्विवर्तत्वदर्शनाद्दध्याद्याकारेण परिणामिनि क्षीरादौ क्षीरस्वरूपदर्शनाच्च। द्वितीये जगदुपादानब्रह्मणोऽसत्त्वेन जगतः स्थित्यनुपपत्तिः। प्रलयकाले शून्यपरिशेषापातश्च। ननु ब्रह्मणो नात्यन्तमसत्वं तस्य प्रपञ्चाकारेणैव वर्त्तमानत्वात्। अतो न जगतः स्थित्यनुपपत्तिः। नापि शून्यपरिशेषापातः प्रपञ्चाका-

रेणैव वर्तमानस्य ब्रह्मणः पुनः प्रलयकाले सत्याद्याकारेण परिणामित्वादिति चेन्न तथात्वे सत्यादिस्वरूपस्य कार्यतया विनाशप्रसङ्गेन मोक्षाभावप्रसङ्गात्। निरवयवस्य तस्य सावयवपृथिव्याद्याकारेण परिणामानुपपत्तेश्च। ननु मृत्पिण्डे घटाद्याकारेण परिणममाने तदवयवा अपि परिणमन्त इति वाच्यम्। अवयवविकारं विना अवयविविकारानुपपत्तेः एवं तत्तदवयवपरिणामे च तत्तदवयवा अपि परिणमन्त इति निरवयवपरिणामसिद्धिरिति चेत्तन्न परिणामो नाम यदि स्वावयवानां स्वावयवसंयोगेन सम्मूर्छितावस्थानमित्युच्यते तदा कथं निरवयवस्य तत्सम्भवः। अवयवाभावात्। यदि द्रव्यान्तरोत्पत्तिः तदावयविनि परिणममानेऽवयवानामपि परिणाम इत्येतन्न संभवति। तथा हि किं घटव्यतिरिक्तद्रव्यान्तरोत्पत्तिरवयवपरिणामः किं वा घटोत्पत्तिरेव। नाद्यः। तादृशद्रव्यान्तरोत्पत्त्यदर्शनात्। मृत्पिण्डस्य च पूर्वमेव सिद्धत्वात्। न द्वितीयः। तस्य मृत्पिण्डपरिणामत्वात्। किंच निरवयवद्रव्यमागन्तुकहेतुना संबध्य परिणमते। उतासंबध्य। नाद्यः। निरवयवस्य हेतुसंबन्धानुपपत्तेः। न द्वितीयः। सर्वदा परिणामप्रसङ्गात्। अज आत्मा महान् ध्रुवः कूटस्थमचलं ध्रुवमित्यादिश्रुतिस्मृतिविरोधाच्च। न वस्तुतो रूपान्तरापत्तिलक्षणपरिणामो ब्रह्मणः संभवति। किं च परिणामपक्षे कार्यकारणयोर्भेद एव वक्तव्यः। अभेदे कार्यकारणभावानुपपत्तेः। तथा चैकविज्ञानेन सर्वविज्ञानप्रतिज्ञाश्रुतिबाधः। ऐतदात्म्यमिदं सर्वमित्यादिश्रुतिविरोधश्च। ननु कार्यकारणयोर्भेदाभेद एव तथा च भेदस्य विद्यमानत्वात्कार्यकारणभावः अभेदस्य विद्यमानत्वात् प्रतिज्ञादिकमपि सिद्ध्यतीति चेन्न। एकत्र भेदाभेदयोर्विरुद्धत्वेनासम्भवात्। ननु नास्ति विरोधः। अनुभूयमानत्वात् अनुभूयते हि हेमपरिणामरुचकस्वस्तिकादौ हेमाकारेणाभेदः रुचकस्वस्तिकाद्याकारेण भेदश्च नह्यनुभवसिद्धे विरोधः कश्चिदस्तीति चेत्तत्र किं

रुचकाकारस्य हेमाकारात् भेदोऽभेदो वा । आद्ये न रुचकस्य स्वस्तिकाभेदः संभवति । तदनुगतहेमाकाराद्भिन्नत्वात्प्रतिज्ञाश्रुतिश्च पीड्येत। कारणाकारात् कार्याकारस्य भिन्नत्वात् । द्वितीये हेमाकारवद्रुचकाकारस्यापि स्वस्तिकेऽनुवृत्तिप्रसङ्गः । तस्मात्परिणामपक्षस्यानुपपन्नत्वाद्विवर्तवादे चोक्तदोषाभावेन तस्यैवाङ्गीकार्यत्वात् प्रत्यक्षादेर्न तात्त्विकविषयत्वमित्यारम्भणाद्यधिकरणसिद्धमिति ॥ ५५ ॥

नन्वारम्भणादिनये कारणसत्ताव्यतिरिक्तकार्यसत्तैव निराक्रियते न विवर्त्तवादाश्रयणं तत्र प्रतीयते । तदाश्रयणेपि निराकार्यत्वेनैव तदाश्रयणं किं न स्यादतः कथं विवर्त्तवादमाश्रित्यारम्भणाद्यधिकरणं प्रवृत्तमित्युक्तम् तत्राह—

वाक्यप्रवृत्तिमनुसृत्य च सूत्रकाः
सिद्धान्ततामनयदत्र विवर्त्तवादम् ।
तत्त्वप्रकाशनविधावपहृत्य शक्ति-
मारम्भणादिवचनादरप्रमायाः ॥ ५६ ॥

वाक्यप्रवृत्तिमिति । वाचारम्भणं विकारो नामधेयमित्यादि तदनन्यत्वमारम्भणेति मूलवाक्यप्रवृत्तिं तद्वाक्यार्थमिति यावत् । अत्रारम्भणाधिकरणे नयतेर्द्विकर्मकत्वाद्विवर्त्तवादं सिद्धान्ततामनयदित्युक्तं विवर्त्तवादं सिद्धान्तत्वेन प्रापितवानित्यर्थः । उक्तं स्मारयन् विवर्त्तवादाश्रयणे बीजमाह—तत्त्वप्रकाशनविधाविति । अपरप्रमाया वेदान्तव्यतिरिक्तप्रत्यक्षादिजन्यप्रमायाः तत्त्वप्रकाशनविधौ शक्तिं तत्त्वाभिव्यक्तिकरणे सामर्थ्यमारम्भणादिवचनादपहृत्य इति सम्बन्धः । यद्यप्यारम्भणाधिकरणे कारणसत्ताव्यतिरिक्तकार्यसत्तानिराकरणमेव मुखतः प्रतीयते तथापि तन्निराकरणमुखेन विवर्त्तवादोप्यङ्गीकृत एव तस्य

सूत्रस्य शब्दतोऽर्थतश्च वाचारम्भणश्रुतितुल्यतया तन्मूलकत्वात्। तस्याः श्रुतेश्च विकारो नामधेयमात्रं न परमार्थसदित्येवंरूपार्थतया विवर्त्तपरत्वात्। तन्मूलकसूत्रस्यापि श्रुतिसमानार्थतया विवर्तपरत्वस्यैव युक्तत्वात्। कार्यस्य पृथक्सत्तानिराकरणाच्च। न च तस्य पूर्वपक्षत्वेनैवाश्रयणमद्वैतब्रह्मसमन्वयप्रतिप्रत्तिशेषत्वेन सिद्धान्तत्वात्। अन्यथा कारणसत्ताव्यतिरिक्तकार्यसत्तानिराकरणस्यैवानुपपत्तेः। उतरत्र स्ववचसैव तद्व्युत्पादनानुपपत्तेश्च इत्यर्थः॥ ५६॥

नन्वारम्भादिपक्षोपि प्रामाणिको भवति अक्षपादादिपरमर्षिभिरङ्गीकारात्तत्कथं विवर्त्तवाद एव सिद्धान्ततया बादरायणसंमत इति शङ्कित्वा तदङ्गीकारमङ्गीकरोति—

**आरम्भसंहतिविकारविवर्त्तवादा-**
**नाश्रित्य वादिजनता खलु वावदीति।**
**आरम्भसंहतिमते परिहृत्य वादौ**
**द्वावत्र संग्रहपदं नयते मुनीन्द्रः॥ ५७॥**

आरम्भेति। वादशब्दः प्रत्येकमभिसम्बध्यते। तत्रारम्भवादो नाम मृदादौ कारणे प्रागसदेव घटादिकार्यं समवाय्यसमवायिनिमित्तकारणैरारभ्यत इति वादो नैयायिकाद्यभिमतः। संहतिवादो नाम खरस्नेहोरणस्वभावानां चतुर्विधपरमाणूनां पृथिव्यादिरूपेण संघातः रूपविज्ञानवेदनासंज्ञासंस्कारलक्षणपञ्चस्कन्धानामाध्यात्मिकसर्वव्यवहारास्पदभावेन संघात इतिवादो वैभाषिकसौत्रान्तिकसंमतः। परिणामवादो नाम मृदादिकारणं वस्तुतो घटाद्याकारेण परिणमत इति वादस्तत्त्वतोऽन्यस्यान्यात्मतालक्षणः कपिलाद्यभिमतः। विवर्तवादो नाम—कारणवस्तु भ्रान्त्या कार्यात्मना प्रतीयत इतिवादोऽतत्त्वतोऽन्यस्यान्यात्मतालक्षणो वैदिकशिरोमणिश्रीमद्बादरायणसम्मतः।

वादिजनता वादिजनानां समूहः तत्तद्वादीति यावत् । खलु प्रसिद्धौ । वावदीति भृशं व्यवहरति । तर्हि कथं विवर्त्तवादस्यैव सिद्धान्तत्वं तत्राह—आरम्भसंहतिमते इति । अद्वैतसमन्वयानुपयुक्तत्वादत्यन्तमनुपपन्नत्वाच्चेति शेषः । आरम्भवादसंघातवादौ परिहृत्य विहाय द्वौ वादावारम्भादिद्वयव्यतिरिक्तौ परिणामविवर्त्तलक्षणौ । अत्रारम्भणाद्यधिकरणे संग्रहपदं संग्रहणमाश्रयणं तत्पदं तद्विषयत्वं नयते प्रापितवान् । वादद्वयं संगृहीतवानित्यर्थः ॥ ५७ ॥

ननु परिणामवादस्याप्यङ्गीकृतत्वे विवर्तवाद एव सिद्धान्तत्वेनाङ्गीकृत इति कथमुक्तमित्याशङ्क्य प्रतिपत्त्राशयानुरोधेन परिणामवादस्याभ्युपगमवादत्वान्न दोष इत्यभिप्रेत्याह—

तत्रापि पूर्वमुपगम्य विकारवादं
भोक्त्रादिसूत्रमवतार्य विरोधनुत्यै ।
प्रावर्तत व्यवहृतेः परिरक्षणाय
कर्मादिगोचरविधावुपयोगहेतोः ॥ ५८ ॥

तत्रापीति । तयोः परिणामविवर्त्तवादयोर्मध्येऽपि पूर्वमादौ विकारवादं परिणामवादमुपगम्याभ्युगम्य । नन्वारम्भणाद्यधिकरणे परिणामाभ्युपगमो न प्रतीयत इत्यत आह—भोक्त्रादीति । भोक्त्रापत्तेरविभागश्चेत्स्यात् लोकवदित्यादिसूत्रम् । नन्वभ्युगमवादेन समाश्रिते परिणावादे आरम्भादिवादस्यापि समाश्रयणं किं न स्यात्तत्राह—विरोधनुत्येति । अद्वैतसमन्वयस्य भेदावगाहिप्रत्यक्षादिविरोधपरिहाराय प्रावर्त्तत प्रवृत्तवान् । आरम्भवादे हि समाश्रिते तत्परिहारो न भवेत् कार्यकारणयोरत्यन्तं पृथक् सत्वात् परिणामवादे तु कार्यकारणयोरभेदस्यापि सम्भवात् तत्परिहारो भवतीति स एवाश्रित इत्यर्थः ।

प्रयोजनान्तरमाह—व्यवहृतेरिति । भोक्तृभोग्यादिव्यवस्थितव्यवहारस्य-परिरक्षणायाबाधनाय । ननु माभूद्व्यवहारपरिरक्षणं प्रयोजना-भावादित्याशङ्क्याह—धर्मादीति । धर्मोऽग्निहोत्रादिः आदिपदेनोपासना गृह्यते । तद्गोचरस्तत्प्रतिपादको यो विधिः कर्मवाक्यमुपासनावाक्यं च तस्मिन्नुपयोगाद्धेतोर्व्यहारपरिरक्षणं कर्त्तव्यमित्यर्थः । इदमत्र विवक्षितम् । गुणोपसंहारपादे हि क्रममुक्तिविषयाण्यभ्युदयफलानि चोपासनावाक्यानि विचार्यन्ते । उपासनायां च भोक्तृभोग्यादिव्य-वस्थापेक्ष्यते । अन्यथोपासनाऽयोगात् । तदभावे च क्रममुक्त्या-द्यभावप्रसङ्गात् । एवं कर्मविधावपि भोक्तादिविभागोऽपेक्ष्यते । अन्यथा तदननुष्ठानप्रसङ्गेन वेदान्तापेक्षितविशिष्टाधिकार्यलाभप्रस ङ्गात् । तस्य कर्माधीनत्वात् । ततः कर्मोपसनाविध्यपेक्षितभोक्त्रादि-विभागसिद्धै सत्यपरिणामवादोभ्युपगतः विवर्त्तवादे च सर्वस्यापि मिथ्यात्वात् भोक्तादिव्यवस्था न सिद्ध्येदिति मन्दमतेर्भ्रान्तिः स्यादिति तदाशयानुरोधेन सोऽङ्गीकृत इति ॥ ५८ ॥

ननु तर्हि परिणामवादेनैव विवर्त्तवादप्रयोजनस्यापि सिद्ध-त्वात किं विवर्त्तवादाश्रयणेनेत्यत आह—

साक्षादिहाभिमतमेव विवर्त्तवाद-
माहत्य सूचयति पूर्वमपेक्षमाणः ।
आरम्भणादिवचनेन विवर्त्तवादं
शक्नोति वक्तुमुदिते परिणामवादे ॥ ५९ ॥

साक्षादिति । इह वेदान्ते आरम्भणाद्यधिकरणे वा पूर्वविकारवाद-मपेक्षमाणः सन्साक्षान्मुख्यत्वेनाभिमतं विवर्त्तवादमेवाहत्यायमेव सिद्धान्त इति पिण्डीकृत्य सूचयतीति सम्बन्धः । यद्यपि परिणाम-

वादे कारणैक्यं सिध्यति तथाप्येकरसब्रह्मात्मैक्यं विवर्त्तवादं विना न सिद्ध्यति विकारवादे कारणस्य ब्रह्मणोऽनेकरसत्वापत्तेः कार्यस्यापि पृथक्सत्वेन प्रत्यक्षादिविरोधस्यापरिहार्यत्वाच्च । अतस्स एव मुख्यत्वेनाङ्गीकृत इत्यर्थः । तर्हि विवर्त्तवादस्यैव प्रथमसूचनं किं न स्या त्तत्राह—आरम्भणादीति । परिणामवाद उदिते प्रतिपादिते सति अधिकार्यारम्भणादिवचनेन विवर्त्तवादं वक्तुमनायासेन गृहीतुं शक्नोतीति पूर्वमपेक्षमाण इति सम्बन्धः । परिणामवादाङ्गीकारेण ब्रह्मणः प्रपञ्चाकारत्वे वर्णिते तस्यावास्तवत्वमात्रमेव ज्ञातव्यमिति विवर्त्तवादो ग्रहीतुं सुकरो भवति । अतः परिणामवाद एव प्रथममाश्रित इत्यर्थः ॥ ५९ ॥

श्रुत्याप्येवमेवाध्यारोपापवादन्यायेन परिणामपुरस्सरमेव विवर्त्तवादस्य व्युत्पादितत्वादयं क्रमो न्याय्य इत्यभिप्रेत्याह—

आरुह्य भूमिमधरामितराधिरोढुं
शक्येति शास्त्रमपि कारणकार्यभावम् ।
उक्त्वा पुरा परिणतिप्रतिपादनेन
संप्रत्यपोहति विकारमृषात्वसिद्ध्यै ॥ ६० ॥

आरुह्येति । आश्रित्य भूमिवत् भूमिं सत्वव्यवस्थास्पदत्वाद धरामधस्तनामितरोर्ध्वा भूमिः अधिरोढुमाश्रयितुं शक्या शास्त्रं तदैक्षत बहु स्यां प्रजायेय इत्यादिवक्ष्यमाणश्रुतिः अपिशब्दः सूत्रापेक्षया यथा लोके सोपानपर्वारोहणेऽधस्तनपर्वाननारुह्योत्तरपर्वारोहणं दुष्करं तदारुह्य तु तदा तत्सुकरम् । एवमेव पूर्वभूमिस्थानीयपरिणामवादे आरूढे ऊर्ध्वभूमिस्थानीयविवर्त्तवादोऽधिरोढुं सुकर इति कृत्वा श्रुतिः पुरा आदौ परिणतिप्रतिपादनेन परिणामव्युत्पादनेन कारणकार्यभावमुक्त्वेदानीं

सम्प्रति तदनन्तरं विकारमृषात्वसिद्ध्यै कार्यस्यातात्त्विकत्वसिद्ध्यै ऐतदात्म्यमित्यादिनाऽपोहति निषेधति । तथा च श्रुत्याप्येवं व्युत्पादितत्वात् विवर्त्तहेतुत्वेनादौ परिणामवादाङ्गीकरणमुचितमिति-भावः ॥ ६० ॥

ननु कथं विवर्त्तवादस्य हेतुः परिणामः यावता तत्त्वतोऽन्यथा-भावः परिणाम इति परिणामलक्षणमाचक्षते स्वयं च वक्ष्यति न हि कार्यस्य तात्त्विकत्वं विवर्त्तवाद उपयुज्यते इत्यत आह—

विवर्त्तवादस्य हि पूर्वभूमि-
र्वेदान्तवादे परिणामवादः ।
व्यवस्थितेऽस्मिन्परिणामवादे
स्वयं समायाति विवर्तवादः ॥ ६१ ॥

विवर्त्तवादस्येति । हिशब्दः प्रसिद्धौ पूर्वभूमिः कारणमित्यर्थः । व्यवस्थिते–निश्चिते । स्वयम्-अनायासेन । यद्यपि तत्त्वतोऽन्यथाभावः परिणाम इति तल्लक्षणमन्ये संगिरन्ते तथापि वेदान्तवादे विवर्त्तात्मकप्रपञ्च एव व्यवहारदृष्ट्या सत्यतया प्रतिपन्नः परिणाम इत्युच्यते । तन्मते वस्तुतोऽन्यथाभावासंभवात् । तथा च परिणामज्ञानस्य निषेध्यज्ञानत्वेन विवर्त्तवादे उपयोगोऽस्तीति स एव प्रथम-मङ्गीकृत इति भावः ॥ ६१ ॥

ननु हेतुत्वेपि किमर्थं प्रथमं तदङ्गीकरणमित्याशङ्क्य हेतोः प्रथमं निरूपणीयत्वे लोकप्रसिद्धिं वदन् प्रकृतमुपसंहरति—

उपायमातिष्ठति पूर्वमुच्चै-
रुपेयमाप्तुं जनता यथैव ।

श्रुतिर्मुनीन्द्रश्च विवर्तसिद्धै
विकारवादं वदतस्तथैव ॥ ६२ ॥

उपायमिति । हेतुमातिष्ठत्यनुतिष्ठति पूर्वमुपेयसिद्धेः पूर्वमुच्चैः स्पष्टमुपेयं साध्यं जनता जनसमूहः श्रुतिः सृष्टिश्रुतिः वदत इति द्विवचनं यथा लोकः साध्यप्रेप्सया साधनमेव पूर्वमनुतिष्ठति न तु साध्यं तथा विवर्त्तवादसिद्धये तद्धेतुः परिणामवादः प्रथममङ्गीकृत इत्यर्थः । तस्मादारम्भादिवादस्य लोकसिद्धत्वेपि विवर्तवाद एव सिद्धान्त इति भावः ॥ ६२ ॥

इदानीं विकारवादव्युत्पादनस्याभ्युपगमवादत्वं दर्शयितुं मतभेदं विविच्य दर्शयति-

आरम्भवादः कणभक्षपक्षः
संघातवादस्तु भदन्तपक्षः ।
सांख्यादिपक्षः परिणामवादो
वेदान्तपक्षस्तु विवर्तवादः ॥ ६३ ॥

आरम्भवाद इति । कणभक्षः कणादमुनिः इदं चाक्षपादादेरप्युपलक्षणम् । भदन्तः सुगतः । सांख्यादीत्यादिपदेन भट्टभास्करौ गृह्येते ॥ ६३ ॥

तस्माद्विकारवादस्य सांख्यादिपक्षत्वात्तदङ्गीकारो विवक्षितसिद्ध्यर्थमभ्युपगमवादत्वेनैव न तु सिद्धान्तत्वेनेत्याह—

विकारवादं कपिलादिपक्ष-
मुपेत्यवादेन तु सूत्रकारः ।

श्रुतिश्च संजल्पति पूर्वभूमौ

स्थित्वा विवर्त्तप्रतिपादनाय ॥ ६४ ॥

विकारवादमिति । कपिलो नाम सांख्यदर्शनकर्त्ता । आदिशब्देन भट्टादिरुच्यते । तुशब्दोऽवधारणे । उपेत्यवादेनैव संभाषते न तु सिद्धान्तत्वेनेत्यर्थः ॥ ६४ ॥

नन्वन्यथाभावस्योभयत्रापि तुल्यत्वात्कथं परिणामविवर्त्तयोर्भेद इत्याशङ्कायां लक्षणभेदाद् भेद इत्यभिप्रेत्यादौ परिणामलक्षणमाह—

अभेदिनः सावयवस्य सत्य-

विचित्ररूपान्तरदर्शकत्वम् ।

वदन्ति धीराः परिणाममस्या-

वसुंधराया इव सस्यसृष्टिम् ॥ ६५ ॥

अभेदिन इति । उत्पद्यमानकार्याभिन्नस्यैकस्येति वा सावयवस्याव-यवसहितवस्तुनः सत्यविचित्ररूपान्तरदर्शकत्वं पारमार्थिकविविधा-कारान्तरापन्नत्वम् । अत्र वस्तुनः सत्यरूपान्तरापत्तिः परिणाम इति-लक्षणं विवक्षितम् । न चारम्भेऽतिव्याप्तिः रूपान्तरपदेनोत्पद्यमानकार्ये कारणस्याकारान्तरमात्रमेव न तु पृथगाकारीत्यर्थस्य प्रतिपादित-त्वात् । अन्यथाऽभेदिन इत्युक्तिविरोधात् । आरम्भवादे च कार्यस्य कारणात् पृथगाकारित्वात् । नापि विवर्त्तेऽतिव्याप्तिः । सत्यपदादेव तन्निरासात् । संघाते च रूपान्तरापत्त्यभावान्न तत्राप्यतिव्याप्तिः । अत इतरद्विशेषणं संभवाल्लक्षणोपपादनार्थं वाऽनूदितमिति द्रष्टव्यम् । तत्रोदाहरणमाह—अस्या वसुन्धराया इति । यथा वसुन्धराया भूमेः परिणामः सस्यसृष्टिः ओषध्युत्पादः । तद्वदोषधीनां पृथ्वीपरिणामत्वं यथा पृथिव्यामोषधयः संभवन्तीति श्रुतिसिद्धम् ॥ ६५ ॥

विवर्त्तस्य लक्षणमाह—

अभेदिनो निर्विकृतेरनेक-
मृषास्वरूपान्तरदर्शकत्वम् ।
विवर्तशब्दार्थ इह प्रसिद्ध-
स्तरङ्गभेदादिव चन्द्रभेदः ॥ ६६ ॥

अभेदिनो निर्विकृतेरिति । निर्विकृतेर्निर्विकारस्यानेकमृषास्वरूपान्तरदर्शकत्वं बहुविधमिथ्याभूताकारान्तरापन्नत्वमिह वेदान्ते अत्र निर्विकृते रूपान्तरापत्तिर्विवर्त्त इति लक्षणमभिमतं निर्विकारस्य वस्तुतः आकारान्तरापत्त्ययोगादर्थसिद्धं मृषात्वमाह—मृषेति । तथा च स्वरूपापरित्यागेन रूपान्तरप्राप्तिर्विवर्त्त इति लक्षणं सूचितं भवति । अथवा—मृषारूपान्तरापत्तिर्विवर्त्त इत्येव लक्षणमभिमम् । मृषात्वमुपपादयितुं निर्विकृतेरिति । आरोप्यस्याधिष्ठानव्यतिरेकेण सत्वं नास्तीति दर्शयितुम्—अभेदिन इति । तथा चातत्वतोऽन्यथाभावो विवर्त्त इति-लक्षणं सूचितं तत्रोदाहरणमाह—तरङ्गभेदादिवेति । यथैकस्मिन्नेवाविकारिणि चन्द्रे तरङ्गाद्युपाधिभेदेन प्रतीयमानचन्द्रनानात्वं मृषारूपं विवर्त्तः तद्वदित्यर्थः ॥ ६६ ॥

श्रुतिः परिणामवादाङ्गीकारेण कार्यकारणभावमुक्त्वा विकारमृषात्वसिद्ध्यै तन्निषेधतीत्युक्तं तत्र का वा श्रुतिरेतादृशीत्याकाङ्क्षायामाह-

अहं प्रजायेय बहु स्वयं स्या-
मित्यादिनाऽऽदौ परिणाममुक्त्वा ।
विकारमिथ्यात्वमथ ब्रुवाणा
विवर्त्तवादं श्रुतिराननाय ॥ ६७ ॥

अहमिति । तदैक्षत बहु स्यां प्रजायेयेत्यादेरनुकरणमह प्रजायेयेत्यादिद्विविधप्रपञ्चसृष्टिरनया प्रतिपाद्यते । आदिपदेन द्वे वावेत्यादि गृह्यते । अथ परिणामकीर्त्तनानन्तरं विकारमिथ्यात्वं ब्रुवती श्रुतिः स यश्चायं पुरुषे ऐतादात्म्यमिदं सर्वं स एष नेति नेत्यादिः । तदैक्षत बहु स्यां प्रजायेयेत्याद्या श्रुतिरात्मन एव प्रपञ्चाकारेण बहुभवनं दर्शयन्ती व्यवहारसत्यरूपं परिणाममुक्त्वा तत उपदर्शितविकारमिथ्यात्वं वक्तुं विवर्तवादमानीतवती । तथा च विवर्त्तवाद एव सिद्धान्त इति भावः ॥ ६७ ॥

विवर्त्तवादेऽनन्यथासिद्धं श्रुत्यन्तरं तादृशस्मृतिं च प्रमाणत्वेनोपन्यस्यति—

मायाश्रुतिस्मृतिवचः सकलं तथा च
वस्तुत्वमर्दनपरं घटते विवर्त्ते ।
सर्वस्य कारणविकारविभागभाजः
प्रागादृतस्य परमार्थतया प्रतीतेः ॥ ६८ ॥

मायेति । मायाया जगत्कारणत्वबोधकश्रुतिस्मृतिवाक्यं मायाश्रुतिवचः तच्च इन्द्रो मायाभिः पुरुरूप ईयते । मायां तु प्रकृतिं विद्यादित्यादिकम् । चशब्दोऽप्यर्थः । तथा च यथा नेह नानेत्यादिकं विवर्ते घटते तथेदमपि वाक्यं तत्र प्रमाणं भवत इत्यर्थः । तद्वाक्यस्य तत्प्रमाणत्वे हेतुमाह—सर्वस्य कारणविकारविभागभाजो वस्तुत्वमर्दनपरमिति । कार्यकारणविभागवतः प्रपञ्चस्य वास्तवत्वनिराकरणपरम् । निषेध्यस्य वास्तवत्वस्य प्रसक्तिमाह-प्रतीतेः परमार्थतया प्रागादृतस्येति । प्रतीत्यनुरोधेन परमार्थत्वेन प्रागभ्युपगतस्येन्द्रो मायाभिरित्यादिश्रुतिस्मृतिवचनं परमार्थतया प्रतिपन्नस्य विकारजातस्य भाविकत्वं निराकुर्वन्विवर्तवाद एव संगच्छते । अन्यथा मायिकत्वप्रदर्शनानु

पपत्तेः । नच मायायाः सत्यत्वात् तत्प्रदर्शनं विकार एवोपपन्नमिति वाच्यम् । तत्सत्यत्वस्य निराकरिष्यमाणत्वात् तस्मान्मायाश्रुतिस्मृतिबलादपि विवर्त्तवाद एव सिद्धान्तः न परिमाणामवादः । तथा च तदङ्गीकरणं सिद्धान्तोपयोगित्वेनेत्यर्थः ॥ ६८ ॥

ननु तर्हि संघातादिवादस्यापि परिणामवादवत् कथञ्चित्सिद्धान्तोपयोगित्वेनाङ्गीकरणसंभवात्सूत्रकारेण स कथं त्यक्त इत्याशङ्क्य संघातादिवादस्यैवानुपन्नत्वादित्यभिप्रेत्य संघातानुपपत्तिं सूत्रोक्तां तावदाह—

**संघातवादमुपगम्य तु तत्र पक्षे**
**संहन्त्रभाव इति सूत्रकृदाह दोषम् ।**
**स्थायी भदन्तसमये न हि कश्चिदत्र**
**संघातसंजननशक्तिसमन्वितोऽस्ति ॥ ६९ ॥**

संघातवादमिति । उपगम्येति—पूर्वपक्षत्वेनेत्यर्थः । संहन्त्रभाव इति दोषमिति सम्बन्धः । संघातवादे संहननहेतोः कस्यचिदसंभवात्सोऽनुपपन्न एवेत्यर्थः । ननु किमिति संघातहेत्वभाव इति चेत्तत्र वक्तव्यम् । किं संहन्यमानपदार्थ एव तद्धेतुः किं वा चित्तं किं वा तदतिरिक्तः स्थाय्यात्मा । नाद्यः । संघाताधिष्ठातुः कस्यचिदभावेऽचेतनानां पदार्थानां स्वतःसंघातानुपपत्ते. । न हि जातु संभवति दण्डचक्रादिकं स्वतएवाधिष्ठातारं किञ्चिद्विना घटादिसंघातहेतुरिति । अत एव न द्वितीयः । चित्तस्याप्यचेतनत्वात् । ननु चित्तं तत्तद्विषयसन्निधाने सत्यभिज्वलद्दण्डादिकारणचक्रं यथा कार्याय पर्याप्तं तथा व्यापारयतीति । चित्ताभिज्वलनमेव तद्धेतुर्भविष्यतीति चेन्न । अन्योऽन्याश्रयात् । तत्तद्भूतभौतिकसंघातरूपविषयेन्द्रिय-

सन्निधाने सति चित्ताभिज्वलनं सति च तस्मिन् तत्संघात इत्यभिप्रेत्य तृतीयं दूषयति—स्थायीति । हि यस्मात्संघातसंजननशक्तिसमन्वितः संघातोत्पादनसामर्थ्ययुक्तः यदि संघाताधिष्ठाता कश्चित्स्थायी स्यात् स्यात्तन्निमित्तः संघातः स एव नास्ति । तन्मते सर्वस्यापि क्षणिकत्वात् । ननु कार्योत्पत्तेःपूर्वक्षणवृतित्वमेव कारणस्यापेक्ष्यते न तु कार्यकाले सत्वमपि पूर्वक्षणवृतित्वं च क्षणिकस्यापि संभवति अतस्तादृशाधिष्ठातृनिमित्तः संघातः स्यादिति चेन्न । सव्यापारस्यैव संघातयितृत्वाद्व्यापारस्य च क्षणमात्रापवर्गिण्यसंभवात् तन्निमित्तसंघातानुपपत्तेः । किं च न कारणमात्रस्य पूर्वक्षणस्थायित्वमात्रेणालमनुयायिकारणस्य कार्यकालावस्थायित्यावश्यंभावात् । अन्यथा-कार्यस्य स्वतन्त्रतापत्तेः । न च निर्हेतुक एव संघात इति वाच्यम् । सर्वदापि संघातप्रसङ्गात् । तस्मात्संघातवादस्यानुपपन्नत्वादेव सूत्रकारेण स त्यक्त इति भावः ॥ ६६ ॥

ननु संघातवादस्यानुपपन्नत्वेन त्यागेऽप्यारम्भवादस्य सोपपत्तिकत्वात् तत्त्यागोऽनुपपन्न इति चेन्न । तस्यापि निराकृतत्वात् । किञ्चारम्भवादे हि कारणगुणाः स्वपृथक्भूतानेव कार्ये गुणानारम्भन्त इति पटादिकार्ये तन्त्वादिकारणानामप्यनुस्यूतत्वेन गुणानां द्विगुणीकृत्य वृत्तिर्वक्तव्या । तथा च तुलिततन्तुभिरारब्धे पटादौ गुरुत्वद्वयोपलम्भप्रसङ्गः । पटसंयोगिनि भूतलादौ पटसमवायितन्तुतत्समवाय्यंशुकादेरपि संयुक्ततया मूर्त्तद्रव्यस्यैकत्र युगपदवस्थानविरोधभङ्गप्रसङ्गश्चेत्येवमादिदोषस्य सत्त्वेनारम्भवादस्यानुपपन्नत्वात् । ननु विवर्त्तवादोऽप्यनुपपन्नः । कार्यस्योपादानकारणसमानधर्मत्वनियमेन चेतनब्रह्मकार्यस्य जगतोऽपि चेतनत्वापत्तेरिति चेत् न हि मायावादेऽयन्नियमः । अघटितघटनापटीयस्त्वान्मायायाः तथा च वक्ष्यति । "खमपि खादति खण्डितमीक्षते निजशिरोनयनेन करार्पितम् । किमपि दुर्घटमस्य न विद्यते यदि त्रिमूढमतिर्भवति स्वयम्" इति त्वद्गीत्या।पि

नायं नियमः । परिमण्डलपरमाणुजन्यद्व्यणुके अणुपरिमाणवत् द्व्यणुकजन्यत्र्यणुके च पारिमाण्डल्याणुत्वयोरदर्शनादिति वैशेषिकमतानुसारेण तदुद्भावितदोषपरिहारं सूत्रकृतोक्तमाह—

आरम्भवादमुपगम्य तदीययुक्ते-
स्तत्प्रक्रियामनुसरन्व्यभिचारमाह ।
वैशेषिकं प्रति महद्वदिदं हि योऽयं
यद्वापि दीर्घवदिदं जडमित्यनेन ॥ ७० ॥

आरम्भवादमुपगम्येति । तदीययुक्तेः कार्यस्य कारणसमानधर्मकत्वमितिवैशेषिकोक्तन्यायस्य तत्प्रक्रियां वैशेषिकप्रक्रियां वैशेषिकं प्रति केन सूत्रेण तदीयन्यायस्य व्यभिचारमाहेत्याकाङ्क्षायां तत्सूत्रमर्थतोऽनुक्रामति— महद्वदित्यादिना । महद्वदणुद्रव्यादुत्पद्यमानमहत्परिमाणद्रव्यवदिदं चेतनादुत्पद्यमानं जडं योऽयम् । यद्वा दीर्घवत् ह्रस्वद्रव्यात् परमाणुत्रयाद्वोत्पद्यमानदीर्घपरिमाणद्रव्यवदिदं जडं योज्यमिति । अनेन महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्यामित्यनेन सूत्रेणेत्यर्थः ॥ ७० ॥

उदाहृतसूत्रं व्याचक्षाणस्तस्तत्प्रक्रियाव्यभिचारमेव विशदयति—

ह्रस्वारब्धं त्र्यणुकमणुभिस्तद्वदारब्धमेत-
द्ध्रस्वं नो तत्र च तदणुवत्संमतं तद्वदेतत् ।
सर्वं कार्यं गगनधरणीमध्यगं चेतनोत्थं
निश्चित्कं नो जडिमघटितं युक्तमित्याचचक्षे ॥७१॥

ह्रस्वारब्धमिति । ह्रस्वपरिमाणस्य द्व्यणुकैकपरिमाणत्वात्तदन्यत्र तद्व्यवहारस्य भाक्तत्वात् । ह्रस्वशब्देन द्व्यणुकान्युच्यन्ते । तैरारब्धं

त्र्यणुकमतीन्द्रियावयवसमवेतदीर्घमहद्द्रव्यं तद्वद्यथा द्व्यणुकैरारभ्यते तद्वदणुभिस्त्रिभिः परमाणुभिः एतत्त्र्यणुकमारब्धमिति केचित् । तत् त्र्यणुकं नो ह्रस्वं न ह्रस्वपरिमाणवत्। तत्त्र्यणुकं न चाणुवच्चाणुपरिमाणवत्। एतच्चोदाहरणं द्व्यणुकस्याप्युपलक्षणम् । द्व्यणुकं हि परिमण्डलाभ्यां परिमाणुभ्यामारभ्यते। न च तत्परिमण्डलमिति। तथा च यथा पारिमाण्डल्यादिकारणगुणस्य कार्ये स्वसमानजातीयगुणारम्भकत्वनियमो नास्ति । तद्वच्चेतनजन्यप्रपञ्चेऽपि न चैतन्यनियम इति। दार्ष्टान्तिकमाह—तद्वदित्यादिना। अत्र:यद्वदित्यध्याहार्यम्। एतत् परिदृश्यमानं गगनधरणीमध्यगं गगनं च धरणी च तन्मध्यगतं वाय्वादि चेत्यर्थः। चेतनोत्थं चेतनादात्मनः सभूतं सर्वं कार्यं निश्चित्कं चेतनशून्यमत एव जडिमघटितं जाड्ययुतं नश्चेतनकारणवादिनामस्माकं युक्तमुपपन्नमित्याचचक्षे सूत्रकार इतिशेषः ॥७१॥

एवं कारणगुणानां कार्ये स्वसमानजातीयगुणारम्भकत्वनियमो नास्तीत्युक्त्वेदानीं द्व्यणुकादिनिष्ठ ह्रस्वादिपरिमाणस्य- कारणगतपरिमाणजन्यत्वाभावे तत्कारणं किमिति वीक्षायां कारणं प्रदर्शयन् कार्यगुणानामपि स्वसमानजातीयकारणगुणारब्धत्वनियमो नास्तीत्याह—

**ह्रस्वाणुत्वे कारणद्वित्वहेतो-**
**र्जाते नैते पारिमाण्डल्यहेतोः ।**
**दीर्घत्वं यद्वच्च दीर्घे महत्त्वं**
**द्रव्ये ते द्वे कारणत्रित्वहेतोः॥ ७२ ॥**

ह्रस्वाणुत्वे इति । ह्रस्वत्वाणुत्वे द्व्यणुकगते इति शेषः। कारणद्वित्वहेतोः कारणपरिमाणुद्वयसमवेतद्वित्वाख्यसंख्यालक्षणहेतोः एते ह्रस्वाणुत्वे परिमाण्डल्यहेतोर्द्व्यणुककारणीभूतपरमाणुगतपारिमाण्ड-

ण्वलक्षणपरिमाणाद्धेतोर्न जाते कार्यपरिमाणं हि कारणगतद्वित्वादिसंख्याप्रयुक्तसंयोगमहत्वान्यतमेनारभ्यते । तत्र द्व्यणुकपरिमाणे ह्रस्वत्वादौ कार्यसमवेततया कार्यत्वेन निश्चिते तदारम्भकं परिमाणुद्वित्वमेव वक्तव्यम्। परिमाणुपरिमाणस्य नित्यपरिमाणत्वेनानारम्भकत्वात् । प्रशिथिलावयवसमवायिप्रचयसंयोगस्य च परिमाणावसंभवात् । ततः कार्यगुणानां स्वसमानजातीयकारणगुणारभ्यत्वनियमस्तत्रैव व्यभिचरतीत्यर्थः। व्यभिचारस्थलान्तरमाह —दीर्घत्वमिति । द्रव्ये त्र्यणुकलक्षणे यद्दीर्घत्वं यच्च दीर्घे तस्मिन्महत्वं ते द्वे दीर्घत्वमहत्वे कारणत्रित्वहेतोः त्र्यणुककारणीभूतद्व्यणुकादिनिष्ठत्रित्वसंख्यालक्षणहेतोः जाते कार्यगतमहत्वादिकं हि कारणगतबहुत्वमहत्वप्रचयसंयोगान्यतमेनैव भवति । त्र्यणुककारणद्व्यणुके च महत्वप्रचययोरभावात्त्रित्वाख्यं बहुत्वमेव त्र्यणुकगतमहत्वाद्यरम्भकमिति वक्तव्यम्। अतस्तत्रापि पूर्वोक्तनियमो व्यभिचरित इत्यर्थः ॥ ७२ ॥

इदानीं कार्यकारणगुणानां स्वसमानजातीयगुणारभ्यारम्भकत्वनियमाभावस्य वैशेषिकप्रक्रियानुसारित्वं दर्शयितुं तस्याप्येवमेवाभिप्रेतमित्याह—

**द्व्यणुकस्य जन्म परमाणुयुगात्**
**परिमण्डलादिति कणादमतम् ।**
**द्व्यणुकत्रयात्त्र्यणुकजन्म पुन-**
**र्नियमं न कश्यपसुतो वदति ॥ ७३ ॥**

द्व्यणुकस्येति। परमाणुयुगात् परमाणुद्वयात् परिमण्डलात् पारिमाण्डल्यपरिमाणयुक्ताद् द्व्यणुकस्याणुपरिमाणयुक्तद्व्यणुकद्रव्यस्य जन्म द्व्यणुकत्रयादणुपरिमाणयुक्तद्व्यणुकत्रयात् त्र्यणुकजन्म महत्परि-

माणयुक्तत्र्यणुकद्रव्यजन्म च कणादमतमिति यतः अतः कश्यपसुतः कणादः नियमं न वदतीति योजना ॥ ७३ ॥

ननु परमाणुद्वयात् द्व्यणुकत्रयाच्च द्व्यणुकत्र्यणुकजन्म तन्मतमित्येतावन्मात्रेण कथं तस्योक्तनियमानभिमतिरितिगम्यत इत्याशङ्क्य परमाणुद्वयादित्यादिना सूचितां नियमानभिमतिमेव विशदयति—

द्व्यणुकत्र्यणुकव्यपाश्रयं
परिमाणं प्रति कारणाश्रयः।
न तु कारणमिष्यते गुण-
स्तदवष्टभ्य वयं जिगीषवः ॥ ७४ ॥

द्व्यणुकेति। द्व्यणुकत्र्यणुकाश्रितं परिमाणं ह्रस्वमहत्त्वादि प्रति कारणाश्रयः परमाणुद्व्यणुकाश्रितः गुणः परमाणुगुणः कारणं नेष्यते। फलितमाह—तदिति। नियमस्य व्यभिचारदर्शनमवष्टभ्याश्रित्य वयं ब्रह्मकारणतावादिनः जिगीषवः जेतुमिच्छवः त्वदुक्तनियमस्य त्वद्रीत्या प्रदर्शिते व्यभिचारेऽस्माकं विजयः स्यादित्यर्थः ॥ ७४ ॥

न केवलं नियमाभावे तदङ्गीकारमात्रमपि त्ववश्यमेव वक्तव्यमन्यथा पारिमाण्डल्यादिपरिमाणादेव ह्रस्वादिगुणोत्पत्त्यङ्गीकारे कार्यपरिमाणातिशयो न स्यात्। परिमाणस्य स्वसमानजातीयपरिमाणारम्भकत्वादिति विपक्षे बाधकमाह—

यदि कारणसंश्रयाद् गुणाद्-
द्व्यणुकादेः परिमाणमिच्छति।
द्व्यणुकादिसमाश्रये तदा
परिमाणेऽतिशयो विरुध्यते ॥ ७५ ॥

यदि कारणेति । द्व्यणुकत्र्यणुककारणीभूतपरमाणुद्व्यणुकाश्रिताद्गुणात् पारिमाण्डल्यह्रस्वादेर्द्व्यणुकादेः द्व्यणुकत्र्यणुकयोः परिमाणमिच्छति यदि तदा द्व्यणुकादिसमाश्रिते द्व्यणुकत्र्यणुकाश्रिते परिमाणेऽतिशयः ह्रस्वमहत्वादिरूपेण प्रतीयमानोतिशयो विरुध्येतेत्यर्थः । कारणगुणस्य स्वसमानजातीयारम्भकत्वनियमे पारिमाण्डल्यात् द्व्यणुके पारिमाण्डल्यमेव स्यात् । ततश्च द्व्यणककार्यत्र्यणुकेपि तदेव स्यादेवमुत्तरोत्तरत्रापीति सर्वं परिमाणुमात्रमेवेत्यदृश्यं स्यादित्यर्थः । अतः स नियमो नास्तीति भावः । ननु सामान्यगुणानां स्वसमानजातीयगुणारभ्यत्वारम्भकत्वनियमाभावेपि विशेषगुणानां सोऽस्त्येव रूपादौ तथैव दर्शनात् । चैतन्यादिश्च विशेषगुण इति चेन्न : चित्रावयव्यारम्भकरूपादौ व्यभिचारात् । चैतन्यादेश्च स्वरूपत्वेनागुणत्वाद्घटः स्फुरति अस्ति प्रिय इति चैतन्याद्यात्मधर्मस्य घटादौ दर्शनाच्च । तदुक्तम् "अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् । आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम्"इति तात्पर्यम् ॥ ७५ ॥

इदानीमारम्भादिवादवत्परिणामवादस्य सूत्रकारेण दूषितत्वादभ्युपगम्यवाद एवायमित्याह—

परिणामवादमुपगम्य तथा
रचनाद्यसंभवमुवाच मुनिः ।
परमेश्वरं न हि विना घटते
जडरूपवस्तुपरिणाम इति ॥ ७६ ॥

परिणामवादमिति । तथारम्भादिवादवद्रचनाद्यसम्भवं रचना वियदादिप्रपञ्चनिर्माणमादिपदेन तत्परिपालनादिकं गृह्यते । तदसम्भवमुवाच रचनानुपपत्तेश्च नानुमानमिति सूत्रेणेत्यर्थः । परिणामवादे रचनाद्यसम्भवोपपत्तिमाह—परमेश्वरमिति । अधिष्ठातारं विना जडरूप-

वस्तुपरिणामः जडरूपप्रधानवस्तुनः सकाशात्परिणामो न घटते। हि यतः अतस्तदसम्भव इत्यर्थः। अयम्भावः—परिणामवादे हि जडप्रधानादेव जगत्परिणाम इति वक्तव्यम्। चेतनपरिणामस्य कृत्स्नप्रसक्तिरित्यादिना निरस्तत्वादनुपपन्नत्वाच्च। एतच्च न सम्भवति। चेतनाधिष्ठितस्य जडस्य परिणामित्वानुपपत्तेः। लोके कुलालादिचेतनाधिष्ठितादेव मृत्पिण्डादेर्घटादिपरिणामदर्शनात्। न चाचेतनमात्रस्यापि क्षीरादेर्वत्सवृद्ध्यादिपरिणामहेतुत्वं दृष्टमिति वाच्यम्। तत्रापि चेतनेन वत्सेन वा परमेश्वरेण वाधिष्ठितस्यैतस्य तद्धेतुत्वात्। तर्हि चेतनाधिष्ठितादेव प्रधानात् जगत्परिणामोऽस्त्विति चेन्न। गुणत्रयसाम्यावस्था हि प्रधानं नाम न च तदा तस्मात्परिणामः संभवति गुणवैषम्यप्रयुक्तत्वात्परिणामस्य गुणवैषम्यकाले च प्रधानत्वाभावादिति भावः॥ ७६॥

ननु परिणामवादस्यापीतरवादवत् दूष्यत्वे कथं तस्य विवर्त्तवादहेतुत्वमित्याशङ्क्य यद्यपि तस्यापि दूष्यत्वमविशिष्टं तथापि तयोरनुवादापेक्षया एतदनुवादस्य विशेषोऽस्तीति तद्धेतुत्वं संभवतीत्यभिप्रेत्येतरयोरनुवादेपि परस्परं विशेषोऽस्तीत्याह—

क्वचिदभ्युपेत्य कथनं कुरुते
परपक्षदूषणकथावसरे।
निजपक्षदोषपरिहारपरः
क्वचिदभ्युपेत्य वदतीह मुनिः॥७७॥

क्वचिदभ्युपेत्येति। अभ्युपेत्य कथनं संघातवादस्येति शेषः। परपक्षो बुद्धपक्षः निजपक्षदोषपरिहारपरः वैशेषिकैः स्वपक्षोद्भावितदूषणपरिहारतत्परः अभ्युपेत्यारम्भवादमिति शेषः॥ ७७॥

विशेषमेव स्पष्टयति—

परपञ्चनिषेधमाचरन्
क्वचिदङ्गीकरणं करोति सः ।
परदर्शितदोषनुत्तये
क्वचिदित्येष विशेष ईरितः ॥ ७८ ॥

परपञ्चेति । परशब्दो बुद्धपरः आचरन्कुर्वन्नङ्गीकरणं संघातवादस्येति शेषः । परदर्शितदोषनुत्तये वैशेषिकोद्भावितस्य चेतनकार्यस्य जगतोपि चेतनत्वापत्तिलक्षणदोषस्य निरासाय क्वचिदङ्गीकरणं करोतीन्यनुषज्यते—आरम्भवादस्येति शेषः । संघातवादङ्गीकारस्तद् दूषणार्थ एव नान्यार्थः । आरम्भवादानुवादस्तु ब्रह्मकारणतावादे वैशेषिकोद्भावितदूषणपरिहारमुखेन तद्दूषणार्थ इत्यनयोर्विशेष इत्यर्थः ॥ ७८ ॥

परिणामवादानुवादस्तु न केवलं तद्दूषणार्थ एव । अपि तु अद्वैतवादे परवाद्युद्भावितभोक्त्रादिसाङ्कर्यदोषसमाधानार्थश्चेत्याह—

भोक्त्रादिसूत्रे परिणामवाद-
माश्रित्य तद्वादिभिरुक्तदोषम् ।
समादधानो मुनिराह तस्मा-
त्सिद्धान्तसिद्धिः पुनरुत्तरत्र ॥ ७९ ॥

भोक्त्रादीति । तद्वादिभिः परिणामवादिभिस्तत्तद्वादिभिर्वोक्तदोषं भोक्तृभोग्यादीनामेकत्वलक्षणम् । ननु परिणामवादेनापि भोक्तृभोग्यादीनामेकत्वलक्षणदोषपरिहारे तस्यैव सिद्धान्तत्वमस्त्वित्या-

शङ्कयाह—तस्मादिति। तस्मात्परिणामवादप्रतिपादकभोक्त्रादिसूत्रादुत्तरसूत्रे तदनन्यत्वमित्यादौ सिद्धान्तसिद्धिं विवर्त्तवादसिद्धिमाहेति सम्बन्धः। परोद्भावितदोषपरिहारेऽपि परिणामवादे वस्तुसच्छेदस्यापि विद्यमानत्वान्न तस्य सिद्धान्तत्वमित्यर्थः॥ ८०॥

तर्हि कथं तस्य विवर्त्तवादहेतुत्वमितरयोर्वा कथं तन्नेत्याशङ्क्य पूर्वोक्तं स्मारयति—

**प्रत्यासन्ना परिणतिरियं विप्रकृष्टन्तु पूर्वः**
**संघातादिः सकल उदितो वेदसिद्धान्तसिद्धेः**
**एतावत्त्वादियमभिमता सूत्रकारस्य भाति**
**भ्रान्तिभ्रष्टस्फुटनिजमनःकौशलानां नराणाम्॥८०॥**

प्रत्यासन्नेति। वेदसिद्धान्तसिद्धेः वेदो वेदान्तः विविर्त्तवादसिद्धेरित्यर्थः। इयं परिणतिः परिणामवाद इत्यर्थः। प्रत्यासन्ना सन्निकृष्टा संघातादिस्तु विप्रकृष्टः परिणामवादे कारणैक्यस्य विद्यमानतया विवर्त्तानुकूलत्वेन तत्सन्निकृष्टता इतरयोस्तु कार्यकारणयोरत्यन्तभेदस्य विद्यमानतया तदननुकूलत्वाद्विप्रकृष्टत्वमित्यर्थः। अतो विवर्त्तहेतुत्वं परिणामस्यैवेति भावः। स्वसिद्धान्तप्रत्यासत्तिवशादेव सूत्रकारस्य परिणामवाद एव सिद्धान्त इति परेषां भ्रान्तिर्भवतीत्याह—एतावत्त्वादिति। वेदसिद्धान्तसिद्धेः प्रत्यासन्नत्वादित्यर्थः। इयं परिणतिः सूत्रकारस्याभिमतेति भातीत्यर्थः। केषां भ्रान्तिभ्रष्टस्फुटनिजमनःकौशलं विवेको येषां ते तथा अविवेकिनामिति यावत्॥ ८०॥

इदानीं परिणामवादस्य वेदसिद्धान्तसिद्धिं प्रति प्रत्यासन्नत्वमेव प्रपञ्चयितुमधिकार्याशयानुरोधेन दृष्टित्रैविध्यमाह—

आरोपदृष्टिरपवादकदृष्टिरेवं
व्यामिश्रदृष्टिरिति दृष्टिविभागमेनम् ।
संगृह्य सूत्रकृदयं पुरुषं मुमुक्षुं
सम्यक्प्रबोधयितुमुत्सहते क्रमेण ॥ ८१ ॥

आरोपदृष्टिरिति । आरोपदृष्टिर्नाम ब्रह्मैव जगदाकारेण वर्त्तत इति ब्रह्मणि सप्रपञ्चत्वबुद्धिः वस्तुतत्त्वाभिप्रायेणारोपशब्दप्रयोगः । अपवाददृष्टिर्नाम ब्रह्म निष्प्रपञ्चमिति ब्रह्मणि निष्प्रपञ्चत्वबुद्धिर्व्यामिश्रदृष्टिर्नाम ब्रह्म वस्तुतो निष्प्रपञ्चमविद्यया सप्रपञ्चमिति सप्रपञ्चत्व निष्प्रपञ्चत्वोभयविषयणी बुद्धिरिति । अनेन प्रकारेण दृष्टिविभागं दृष्टिभेदं संगृह्य प्रतिपत्त्युपायत्वेनाश्रित्य क्रमेण मुमुक्षुं साधनचतुष्टयसम्पन्नं सम्यक्प्रबोधयितुमुत्सहते । त्वं ब्रह्मासीति सम्यग्बोधयितुं प्रवर्त्तते । तथा च मुमुक्षुरपि तथैव प्रतिपत्तुं शक्नोतीत्यर्थः ॥ ८१ ॥

अस्त्वेवं दृष्टित्रैविध्यं परिणामस्य विवर्त्तोपायत्वे किमायातं कीदृग्भूताश्चैताः दृष्टयः किं क्रमविशिष्टाश्चेत्याकाङ्क्षायामाह—

आरोपदृष्टिरुदिता परिणामदृष्टि-
द्वैतोपशान्तिरपवादकदृष्टिरन्त्या ।
मध्ये विवर्त्तविषया द्वयमिश्रदृष्टि-
र्व्यामिश्रदृष्टिरधरोत्तरभूमिभावात् ॥ ८२ ॥

आरोपदृष्टिरुदितेति । परिणामदृष्टिरित्यारोपदृष्टेर्लक्षणं परिणामदृष्टिश्च ब्रह्मैव प्रपञ्चाकारेण वर्तत इति पूर्वोक्ता दृष्टिर्द्वैत्योपशान्तिरित्यपवादकदृष्टेर्लक्षणं द्वैताभावविषयिणी निष्प्रपञ्चं ब्रह्मेति दृष्टिरित्यर्थः । अन्त्या तृतीया मध्ये आरोपापवाददृष्ट्योर्मध्ये द्वयमिश्रदृष्टिरितिव्या-

मिश्रदृष्टेर्लक्षणं सप्रपञ्चनिष्प्रपञ्चत्वलक्षणारोपापवाददृष्टिद्वयमिश्रता दृष्टिरित्यर्थः। तदेवाह— विवर्त्तविषयेति। अतत्त्वतोऽन्यथाभावो विवर्त्तः। तथा च वस्तुतो निष्प्रपञ्चं भ्रान्त्या सप्रपञ्चमिति बुद्धिरित्यर्थः। ननु व्यामिश्रदृष्टेः कथं विवर्त्तविषयत्वं तत्राह— अधरेति। अधरोत्तरभूम्योः सप्रपञ्चनिष्प्रपञ्चत्वदृष्ट्योस्तत्र भावात्सप्रपञ्चत्वनिष्प्रपञ्चत्वदृष्टिद्वयं यदि तत्त्वाद् व्यामिश्रदृष्टेर्विवर्त्तस्यापि तादृक्रूपत्वादित्यर्थः। अत्र चापवादविवर्त्तदृष्ट्योरन्त्यमध्यगतत्वोक्त्या परिणामदृष्टेर्विवर्त्तनियतपूर्वभावित्वमर्थात्सूचितम्। तथा च परिणामस्य विवर्त्तोपायत्वं युक्तमित्यर्थः। ननु विवर्त्तदृष्टेः सप्रपञ्चत्वदृष्टिघटिततया तज्जन्यत्ववन्निष्प्रपञ्चत्वदृष्टिघटिततयाऽपवाददृष्टिजन्यत्वं च वक्तव्यम् तथा च तस्या अपवाददृष्टिपश्चाद्भाविन्वेन कथं मध्यगतत्वमिति चेन्न। निष्प्रपञ्चब्रह्मदृष्टिर्हि द्विधा साक्षात्काररूपा परोक्षरूपा चेति। तत्र यद्यपि परोक्षरूपनिष्प्रपञ्चब्रह्मदृष्टिर्विवर्त्तदृष्टौ कारणं तां विना वस्तुतो निष्प्रपञ्चं मायया सप्रपञ्चमिति विवर्त्तदृष्टेरनुदयात्तथाप्यपरोक्षरूपा निष्प्रपञ्चब्रह्मदृष्टिर्विवर्त्तदृष्टौ कारणम्। तां विना वस्तुतो निष्प्रपञ्चं मायया सप्रपञ्चमिति विवर्त्तदृष्टेरनुदयात्तथाप्यपरोक्षरूपा निष्प्रपञ्चदृष्टिविवर्त्तदृष्टिसाध्यैव भेददृष्टेर्मिथ्यात्वनिश्चयं विना निष्प्रपञ्चब्रह्माहमिति साक्षात्कारायोगात्। तथा च तादृश्या एवापवाददृष्टेरत्र विवक्षितत्वान्न विवर्त्तदृष्टेर्मध्यगतत्वानुपपत्तिरिति भावः॥ ८२॥

ननु दृष्टित्रयाश्रयणेन किमर्थं मुमुक्षुबोधनम् अन्त्ययैकयैव दृष्ट्या तद्बोधनसंभवादित्याशङ्क्य मुमुक्षूणां मन्दमध्यमोत्तमभावेनानेकविधत्वान्मन्दं प्रति हठात्तद्बोधनासंभवात् क्रमेणैव संबोधनीय इति तदाशयानुसारेण दृष्टित्रयाश्रयणमित्यभिप्रेत्य दृष्टीनां मन्दादिभावमाह—

**तत्त्वावेदकमानदृष्टिरधमा तत्त्वच्युतिर्मध्यमा**

**तत्त्वप्रच्युतिविभ्रमक्षयकरी तत्रान्त्यदृष्टिर्मता।**

जीवैकत्वमुमुक्षुभेदगतितो व्यामिश्रदृष्टिर्द्विधा
भिन्ना तत्र च पूर्वपूर्वविलयादूर्ध्वोर्ध्वलब्धिर्भवेत् ॥८३॥

तत्त्वावेदकेति । तत्त्वावेदकमानविषया इदमिति दृष्टिः प्रपञ्चस्य तात्त्विकदृष्टिरिति यावत् । अनेन परिणामदृष्टिरुक्ता । अधमा निकृष्टा अविवेकिनिकृष्टमतिपरिकल्पितत्वान्निकृष्टतिर्यगादेरपि सत्त्वादुत्कृष्टब्रह्मावगतिदूरत्वाच्चेत्यर्थः । तत्त्वक्षतिः प्रपञ्चस्य वस्तुत्वासत्त्वबुद्धिरित्यर्थः । अनेन विवर्त्तदृष्टिरुक्ता मध्यमा परिणामदृष्टेः सकाशादीषदुत्कृष्टापरोक्षविवेकिपुरुषाश्रितत्वादुत्कृष्टब्रह्मावगतिं प्रति साधनत्वाच्चेत्यर्थः । तत्त्वप्रच्युतिविभ्रमक्षयकरी प्रपञ्चस्य तात्त्विकत्वबुद्धिप्रच्युतिं विभ्रमक्षतिं च करोतीति तथोक्ता । अनेनापवाददृष्टिरभिहिता । सा हि न विवर्तदृष्टिवत्प्रपञ्चस्य तात्त्विकत्वमात्रं निषेधति किन्तु प्रपञ्चो नासीदस्ति भविष्यति तुच्छ एवेति अतात्त्विकप्रपञ्चबुद्धिं च निराकरोति । अधिष्ठानसाक्षात्कारस्य श्रौतस्य भ्रान्तिविरुद्धत्वादित्यर्थः । तत्र दृष्टिषु मध्ये इदं चादौ योजनीयम् । अन्त्यदृष्टिरुत्तमदृष्टिरित्यर्थः । परमपुरुषार्थसाधनत्वादितः परमपेक्ष्यमाणाभावाच्चेत्यर्थः । आविद्यकप्रपञ्चविषयदृष्टित्रैविध्यमाचार्यैरप्युक्तं "तुच्छानिर्वचनीया च वास्तवी चेत्यसौ त्रिधा । ज्ञेया माया त्रिभिर्बोधैः श्रौतयौक्तिकलौकिकैः" इति । एवं पुरुषबुद्ध्यनुरोधेन परिणामविवर्त्तनिष्प्रपञ्चविषयभेदेन दृष्टित्रैविध्यमुक्त्वा विवर्त्तदृष्टावपि पुरुषबुद्ध्यनुरोधेनावान्तरभेदमाह—जीवकैत्वेति । जीवैकत्वमतितो मुमुक्षुभेदमतितश्चेत्यर्थः । अस्मिन्संसारमण्डलेऽहमेक एव जीवो नित्यशुद्धबुद्धमुक्तसत्यपरमानन्दस्वभावो मदाश्रयमद्विषयानाद्यनिर्वचनीयाविद्यातत्कल्पितनिखिलभूतभौतिकनामरूपात्मकप्रपञ्चसत्तास्फूर्तिप्रदतया तदधिष्ठानं परिदृश्यमानचेतनास्तु स्वप्नकल्पितचेतनवच्चेतनाभासाः मत्स्वाभाविकस्वरूपपरिज्ञानादेव निखिलानर्थभाजनानाद्यविद्यानिवृ

त्तिरिति पुरुषधौरेयनिष्ठा जीवैकत्वविषया काचिद्विवर्त्तदृष्टिः अन्या तु अहमिवानेकेऽविद्योपाधिका जीवाः केचिन्मुक्ताः केचिन्मुमुक्षवः केचिच्च रागिणः प्रपञ्चश्च ईश्वरविषयाज्ञानात् परिकल्पित इति जीवानेकत्वविषया त्रिवर्त्तदृष्टिरिति विवर्त्तदृष्टिद्वैविध्यमित्यर्थः। एवं मन्दमतेः प्रपञ्चः सत्य इत्येव प्रतिभाति मध्यमस्यासत्य इत्युत्तमस्य निष्प्रपञ्चं ब्रह्मैव भातीति तदाशयानुरोधेन दृष्टित्रैविध्यमुक्त्वा मन्दमध्ययोरुत्तरोत्तरदृष्टिप्राप्तावुपायमाह—पूर्वेति। पूर्वपूर्वदृष्टिविलयादुत्तरोत्तरदृष्टिप्राप्तिर्भवेदित्यर्थः ॥ ८३ ॥

तदेव प्रपञ्चयति—

**परिणामबुद्धिमपमृश्य पुमान्**
**विनिवर्त्तयत्यथ विवर्त्तमतिम् ।**
**उपमृश्य तामपि पदार्थधिया**
**परिपूर्णदृष्टिमुपसर्पति सः ॥ ८४ ॥**

परिणामेति। उपमृद्य बाधित्वा अर्थविवेकानन्तरं विवर्त्तमतिं विनिवर्त्तयति सम्पादयतीत्यर्थः। तामपि विवर्त्तदृष्टिमपि पदार्थधिया तत्त्वंपदलक्ष्यार्थज्ञानेनोपमृद्य परिपूर्णदृष्टिमुपसर्पति परमपुरुषार्थकाष्ठां परिपूर्णब्रह्मसाक्षात्कारलक्षणापवाददृष्टिं प्राप्नोति। पुरुषो हि प्रथममहरहरधीयमानसर्वं कर्मेत्यादिवेदान्तवाक्यात्स्वाभाविकदृष्ट्यनुरोधेन सत्यं ब्रह्मैव जगदाकारेण वर्त्तते। जगच्च सत्यमिति जानाति। ततो जन्मान्तरपुण्यपुञ्जपरिपाकवशात् सद्गुरुं प्राप्योपजातविवेकः सन् असङ्गाद्वयस्य ब्रह्मणो वस्तुतस्तत्त्वान्तरानुपपत्तेरिति परिणाममुपमृद्य माययैव तत्त्वान्तरत्वप्रतीतिरिति विवर्त्तं प्रतिपद्यते। ततो दृढविवेकनिराकृतासंभावनादिराचार्येश्वरानुगृहीतस्तत्त्वंपदलक्ष्यपरिज्ञानेन तामप्युपमृद्य परमपुरुषार्थकाष्ठामन्त्यां दृष्टिं प्रतिपद्यत इत्यर्थः ॥८४॥

नन्वेतादृशदृष्टिक्रमः कस्यापि न दृश्यते कस्य चिद्यावज्जीवविकारसत्यताबुद्धेरेव दर्शनात्। कस्यचित्परिणामबुद्धिं विनैव विवर्त्तबुद्धिदर्शनादित्याशङ्क्य सत्यमेकदेशशास्त्रश्राविणां व्युत्क्रमेण शास्त्रश्राविणां वैतादृशी बुद्धिः क्रमेण चतुर्लक्षणीशास्त्रश्राविणः साधनचतुष्टयसम्पन्नस्य तु क्रमेणैव दृष्टिर्भवतीत्यभिप्रेत्याह—

अथ शब्दसूचितमुमुक्षुरिमं
खलु दृष्टिभेदमुदितक्रमतः।
उपढौकते विगलिताखिलधी-
रवतिष्ठते निजमहिम्नि ततः ॥ ८५ ॥

अथशब्देति। नित्यानित्यविवेकादिसाधनचतुष्टयसम्पन्नस्य अथशब्दसूचितेत्यनेन क्रमेण चतुर्लक्षणीश्राविणः क्रमेण दृष्टित्रयं भवतीति सूचितम्। खल्विति प्रसिद्धौ उदितक्रमतः पूर्वोक्तक्रमतः उपढौकते प्राप्नोति। साधनचतुष्टयसम्पन्नो ह्यधिकारी श्रोतव्यादिविधिवलाच्छ्रवणादिकमनुतिष्ठासुः क्रमेण चतुर्लक्षणीं मीमांसां शृणोति। तत्र तस्य जगत्कारणे ब्रह्मणि समन्वयप्रतिपादकसमन्वयाध्यायश्रवणेन जगतः परिणामत्वबुद्धिर्भवति अविरोधाध्यायश्रवणेन विवर्त्तताबुद्धिर्भवति तृतीयाध्यायश्रवणेन वैराग्यादिदार्ढ्येन तत्त्वंपदलक्ष्यार्थपरिज्ञानितया चतुर्थाध्यायश्रवणेन तत्त्वमसिवाक्यार्थविगलतनिखिलभेदब्रह्मसाक्षात्कारलक्षणापवाददृष्टिर्भवतीत्यर्थः। तत्साक्षात्कारफलमाह—विगलितेति। ततो वाक्यार्थबोधात् विगलिताखिलधीः निरस्तनिखिलविश्वभ्रमः अनेनानर्थनिवृत्तिः फलमिति दर्शितम्। निजमहिम्नावतिष्ठत इत्यनेनानन्दावाप्तिर्दर्शिता ॥ ८५ ॥

इदानीमुक्ताधिकारिणः परिणामादिदृष्टिवत्क्रमेण जीवनानात्वतदेकत्वबुद्धिरपि भवतीति सदृष्टान्तमाह—

परिणाम इत्यथ विवर्त्त इति
बहवोऽहमेव च मुमुक्षुरिति ।
परिपुष्कलं च परमं पदमि-
त्यवगत्य तिष्ठति महिम्नि निजे ॥ ८६ ॥

परिणाम इति । बहव इत्यत्र मुमुक्षव इतिविभक्तिपरिणामो द्रष्टव्यः परिपुष्कलं परिपूर्णं यथाधिकारी परिणाम इत्यवगम्य तदनन्तरं विवर्त्त इत्यवगम्य तदनन्तरं परिपूर्णं ब्रह्मावगम्य स्वमहिम्नि तिष्ठति। एवं विवर्त्तदृष्टिकाले स एव मुमुक्षवो बहवः अहमेव मुमुक्षुरित्यवगच्छतीत्यर्थः। परिणाम इत्यादिकं दृष्टान्तार्थे द्वितीयाध्यायाभ्यासादशायां स्वाभाविकदृष्ट्यनुरोधेन यथाप्रतीत्यर्थसद्भावमपि पश्यन् प्रतीयमानाविद्यकजीवनानात्वं पश्यति । तृतीयाध्यायाभ्यासेन तु स्वप्नदृष्टान्तेन प्रतीतिव्यतिरेकेणार्थाभावं प्रतीयमानचेतनानामाभासत्वं च पश्यन् जीवैकत्वं पश्यतीति भेदः ॥ ८६ ॥

नन्वध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यत इत्यादौ विवर्त्तदृष्टेरारोपत्वव्यवहारात् कथं परिणामदृष्टेरेवारोपदृष्टित्वमुदितमित्याशङ्क्याह—

परिणामधियो विवर्त्तधी-
रपवादात्मतया व्यवस्थिता ।
सकलद्वयमर्दिनीं धियं
प्रति साऽऽरोपगिराभिधीयते ॥८७॥

परिणामेति । अपवादात्मतया व्यवस्थिताऽपवादत्वेन स्थिता तथा च विवर्त्तबुद्ध्या परिणामबुद्धेस्तात्त्विकत्वापवादेन तदपेक्षयाप्यस्या-

ऽऽरोपितरूपत्वेनारोपैकरूपत्वात् परिणामदृष्टेरेवारोपत्वमुक्तमित्यर्थः। तर्हि कथं विवर्त्तदृष्ट्यामारोपत्वव्यवहारः। तत्राह—सकलद्वयमर्दिनीं धियमिति। आविद्यकप्रपञ्चनिषेधकनिष्प्रपञ्चब्रह्मात्मधियं प्रति सा विवर्त्तदृष्टिः आरोपगिराभिधीयते। आरोपत्वेनोच्यत इत्यर्थः। निष्प्रपञ्चब्रह्मदृष्टेर्विवर्त्तदृष्टिबाधकत्वात् तदपेक्षया साप्यारोपो भवतीत्यर्थः॥ ८७॥

अत एव विवर्त्तदृष्टेरारोपापवादरूपत्वेनापि व्यामिश्रदृष्टित्वं नेतरयोस्तदभावादित्याह—

उभयव्यतिमिश्ररूपतां
भजते तेन विवर्त्तधीरियम्।
प्रथमोत्तमयोर्द्वयोः पुन-
र्व्यतिमिश्रीभवनं न विद्यते॥ ८८॥

उभयेति। तेन येनापवादरूपेणारोपरूपेण च स्थिता तेनोभयव्यतिमिश्ररूपतामारोपापवादलक्षणोभयमिश्ररूपतां प्रथमोत्तमयोः परिणामोपवाददृष्ट्योर्व्यतिमिश्रीभवनमुभयमिश्ररूपत्वम्॥ ८८॥

एवमेकस्यैवाधिकारिणः क्रमेण दृष्टित्रयं जीवानेकत्वतदेकत्वदृष्टिश्च भवतीत्युक्तमिदानीं पुरुषभेदेन एता दृष्ट्यो भवन्तीति मतान्तरमाह—

कृपणधीः परिणाममुदीक्षते
क्षपितकल्मषधीस्तु विवर्त्तताम्।
स्थिरमतिः पुरुषः पुनरीक्षते
व्यपगतद्वितयं परमं पदम्॥ ८९॥

कृपणधीरिति । स्वर्गादिभोगलोलुपो मन्दमतिः परिणामं जगतः परिणामत्वमुदीक्षते पश्यति । क्षपितकल्मषधीः शुद्धाशयः विवर्त्तता-मुदीक्षत इत्यनुषज्यते । स्थिरमतिः अतिशुद्धाशयतयाऽसम्भावनादिचलनरहितः व्यपगतद्वितयं निराकृतद्वैतप्रपञ्चं परमं पदं ब्रह्मात्म-स्वरूपमीक्षते ॥ ८९ ॥

मुमुक्ष्वैकत्वानेकत्वबुद्धिरपि पुरुषभेदेनेत्याह—

पुरुषभेदवशाद् विविधा भवे-
त्क्षपितकल्मषधीरपि मध्यमा ।
जगदनेकमुमुक्षुकमीक्षते
पुरुष एकतरो न तथेतरः ॥ ९० ॥

पुरुषभेदेति । क्षपितकल्मषधीः शुद्धाशयनिष्ठा धीः मध्यमा आरोपापवाददृष्ट्योर्मध्यगता विवर्त्तदृष्टिरिति यावत् । द्वैविध्यमेवाह—जगदिति । एकतरः द्वयोर्मध्ये अन्यः जगदनेकमुमुक्षुकमेवेत्यर्थः । अनेके मुमुक्षवो जीवा यस्मिन् तत्तथोक्तमितरः न तथा जगदनेकमुमुक्षुकं नेक्षते किन्त्वेकमुमुक्षुकमेवेत्यर्थः । अत्र च शुद्धितारतम्यं हेतुः ॥ ९० ॥

अस्य पक्षस्य स्वमतत्वं व्यावर्त्तयति—

इति तु केचिदुशन्ति महाधिय-
स्तदपि संभवतीति न दुष्यति ।
इह तु सूत्रकृताऽर्थगिरोदितः
पुरुष एकविधस्त्रिविधो न तु ॥ ९१ ॥

इति तु केचिदिति । अनेन प्रकारेण तु खलु । उशन्ति इच्छन्ति ।

अस्यापि पक्षस्याङ्गीकार्यत्वं दर्शयति—तदपीति। तन्मतमपि। अथवा—अस्य पक्षस्यानङ्गीकार्यत्वं दर्शयति। तदपीति। सम्भवतीति न यतो दुष्यतीत्यर्थः। अयम्भावः-यदि पुरुषभेदेनैव दृष्टित्रयं भवतीति नियमः तत्तु नास्त्येव। एकस्यापि पुरुषस्य कालभेदेन दृष्टित्रयाश्रयत्वोपपत्तेस्तथैवोपलब्धेः पूर्वपूर्वस्योत्तरोत्तरदृष्टिहेतुत्वेन चरमदृष्ट्याश्रये पूर्वपूर्वदृष्टिसत्वभावाच्च। यदि पुरुषभेदेनापि भवतीति संभवमात्रं नत्विष्टमेवेति। अस्मदुक्त एव पक्षः सूत्रकृतोप्यभिमत इत्याह—इहत्विति। इह वेदान्तेऽथ गिरा अथशब्देनैकविधः एकप्रकारः एक एवेत्यर्थः। दृष्टित्रयाश्रय इतिशेषः। त्रिविधो न तु त्रिप्रकारः पुरुषो दृष्टित्रयाश्रयो नोदित इत्यर्थः। सूत्रकृता हि सकलशास्त्रश्रवणाधिकारित्वेन एक एव साधनचतुष्टयसम्पन्नः पुरुषोऽथशब्देन सूचितः। न तु प्रत्यध्यायमन्योऽन्यः। अतः प्रत्याध्यायनिर्वर्त्यदृष्टयोपि क्रमेणैकस्यैव भवन्ति न तु पुरुषभेदेनेत्यर्थः॥ ९१॥

ननु प्रत्यध्यायमधिकारिभेद एव सूत्रकृद्विवक्षितः किमिति न भवेत्त्राह—

तिसृषु भूमिषु तस्य च तिष्ठतः
क्रमवशात्स्वयमुत्तमभूमिका।
समुपसर्पति तत्र च तिष्ठतः
समुपशाम्यति कारणकार्यधीः॥ ९२॥

तिसृष्विति। आरोपविवर्त्तापवादलक्षणासु भूमिषु दृष्टिषु तिष्ठत दृष्टित्रयं भजमानस्येत्यर्थः। तस्याधिकारिणः क्रमवशात् क्रमेण स्वयमनायासेनोत्तमभूमिकाऽखण्डसाक्षात्कारलक्षणापवाददृष्टिः। समुपसर्पति आयाति। तत्र च तिष्ठतः अखण्डसाक्षात्कारलक्षण

दृष्टौ वर्त्तमानस्याखण्डसाक्षात्कारवत इत्यर्थः । कारणकार्यधीः सविलासाविद्याभ्रमः हिरण्यगर्भादिभेदविभ्रमो वा प्रत्यध्यायमधिकारिभेदविवक्षायामेकस्याप्यनवच्छिन्नब्रह्मसाक्षात्कारानुदयप्रसङ्गादनर्थनिवृत्तिर्न भवेत् समन्वयाविरोधादिपरिज्ञानस्य तत्र कारणत्वात् । तदिदमुक्तं – क्रमवशादिति । शास्त्रादावपि प्रत्यध्यायमधिकारिभेदासूचनाच्च न स सूत्रकृद्विवक्षितः । तथा चाथशब्दोपात्तनिखिलशास्त्रोपयुक्ताधिकारिविशेषणमुमुक्षोत्पादनमहिम्नैक एव दृष्टित्रयभागिति सूत्रकृत्संमत इत्यर्थः ॥ ६२ ॥

न केवलं प्रथमसूत्रपर्यालोचनयैकस्य दृष्टित्रयवत्त्वं किन्तु निखिलसूत्रतन्मूलश्रुतितदुभयार्थदर्शिभाष्यकारादिवचनपर्यालोचनयापि तथैव वक्तव्यमित्यभिप्रेत्याह –

**श्रुतिवचांसि मुनिस्मरणानि च**
**द्वयविशारदगीरपि सर्वशः ।**
**त्रयमपेक्ष्य दशात्रितयं विना**
**न हि घटामुपयाति कदाचन ॥ ६३ ॥**

श्रुतिवचांसीति । तदैक्षत बहु स्यां प्रजायेयेति वाचारम्भणं विकारो नामधेयं तत्त्वमसीत्यादिवेदान्तवाक्यानि मुनिस्मरणानि मुनिप्रणीतान्यखिलसूत्राणि द्वयविशारदगीः श्रुतिसूत्रद्वयनिपुणानां भाष्यकाराणां गीः सर्वशः सर्वप्रकारेणेत्यर्थः । त्रयमपेक्ष्यैकनिष्ठदृष्टित्रयमपेक्ष्य घटामुपयान्तीत्यत्राप्यनुषज्यते । श्रुत्यादीनामुक्तदृष्टित्रयापेक्षायां को हेतुस्तत्राह-दशात्रितयमिति । एकस्य दृष्टिभेदेनावस्थात्रयं घटां घटनां सामञ्जस्येन प्रतिपत्तिजनकतामिति यावत् । उपयातीति गीरित्येकवचनापेक्षया श्रुत्याद्यपेक्षया तूपयान्तीत्यपि द्रष्टव्यम् । उत्तरोत्तर-

दृष्टेः पूर्वपूर्वापेक्षत्वाद्दृष्टित्रयमपेक्ष्यैव ब्रह्मात्मप्रतिपत्तिं श्रुत्यादयो जनयन्ति। अन्यथा—तेषां तज्जनकत्वमेव न स्यादित्यर्थः ॥ ६३ ॥

तस्मादभ्युपगमवादेनैव परिणामवादमङ्गीकृत्य स्वाभाविकदृष्ट्यनुरोधेन प्रत्यक्षादिमानस्य च तत्त्वावेदकत्वमभ्युपेत्यादौ सूत्रकारैः समन्वयविरोधः परिहृत इत्याह—

अतोऽनपोह्यैव च तत्त्वसंवि-
दुत्पादनेऽध्यक्षमितेः पुरस्तात् ।
सामर्थ्यमक्षादिविरोधमस्य
निवारयामास समन्वयस्य ॥ ६४ ॥

अतोऽनपोह्येति । यतो दृष्टित्रयापेक्षाऽतः पुरस्तादादावध्यक्षमितेः प्रत्यक्षादिमानस्य तत्त्वसंविदुत्पादने तत्त्वावेदने सामर्थ्यमनपोह्यैवाभ्युपगम्येति यावत्। अस्य समन्वयस्याद्वैतसमन्वयस्याक्षादिविरोधं प्रत्यक्षादिविरोधं निवारयामासेत्यर्थः ॥ ६४ ॥

आरम्भणाधिकरणे त्वभ्युपगमं परित्यज्य विवर्त्तवादमेवाश्रित्य समन्वयविरोधं परिहृतवानित्याह—

इहाधुनाऽऽरम्भणशब्दशक्तिं
संश्रित्य तत्त्वावगतिक्षमत्वम् ।
अक्षादिमानस्य निराकरोति
समन्वयस्यापनयन्विरोधम् ॥ ६५ ॥

इहेति । आरम्भणाधिकरणेऽधुना परिणामेऽनुपपत्तिस्फूर्त्त्यनन्तरमित्यर्थः। आरम्भणशब्दशक्तिं वाचारम्भणं विकार इत्यादि शब्दसामर्थ्यं

संश्रित्य वाचारम्भणमित्यादिशब्दसामर्थ्याद्विवर्त्तमाश्रित्येत्यर्थः। अक्षादिमानस्य तत्त्वावगतिक्षमत्वं तत्त्वावेदनसामर्थ्यं निराकरोति। किमर्थमिति तदाह—समन्वयस्येति। ब्रह्मात्मविषयसमन्वयस्य विरोधं प्रत्यक्षादिविरोधमपनयन् निराकुर्वन् अद्वैतब्रह्मसमन्वयविरोधपरिहारार्थमेव तन्निराकारणमित्यर्थः॥ ६५॥

ननु परिणामाश्रयणेनाप्यद्वैतब्रह्मसमन्वयविरोधस्य परिहृतत्वात् किं विवर्त्ताश्रयणेन तन्निराकरणमित्याशङ्क्याह—

अखण्डवाक्यार्थमनुव्रजन्ती
समन्वयोत्थापितबुद्धिवृत्तिः।
अक्षादिभिस्तत्त्वनिवेदने हि
सद्यः परिम्लायति निर्विशङ्कम्॥ ६६॥

अखण्डेति। अनुव्रजन्ती अनुगच्छन्ती विषयीकुर्वन्तीति यावत्। समन्वयोत्थापितबुद्धिवृत्तिः समन्वयनिरूपणसहकृततत्त्वमादिवाक्योत्पादितःहंब्रह्मास्मीत्येवमाकारान्तःकरणवृत्तिरित्यर्थः। हि यतः परिम्लायति बाधिता भवतीत्यर्थः। निर्विशङ्कं निःसंदेहं न ह्यद्वैतमात्रसमन्वयो वेदान्तैः प्रतिपाद्यते येन परिणामवादाङ्गीकारेण प्रत्यक्षादेस्तत्त्वावेदकत्वेपि कार्यकारणयोस्तादात्म्यात् तद्विरोधः परिहृतो भवेत् किन्त्वखण्डसच्चिदानन्दैकरसैकब्रह्मसमन्वयः। न हि तादृशसमन्वयः प्रत्यक्षादेस्तत्त्ववेदनाङ्गीकारे सम्भवति। एकरसत्वासम्भवात्। प्रत्युत बाधित एव भवति। तथा च सूत्रकृतो वरघाताय कन्योद्वहनन्यापातः। अतो निर्विशेषब्रह्मसमन्वयसिद्ध्यर्थं विवर्त्तवादाश्रयणेन तन्निराकरणं युक्तमित्यर्थः॥ ६६॥

ननु माभूत्तर्हि वेदान्तादखण्डवाक्यार्थप्रतिपत्तिः प्रत्यक्षानुरोधेन

संसर्गबुद्धिरेव तस्मादस्त्वित्याशङ्क्य पूर्वोक्तं स्मारयति—

अखण्डमेवाद्वयमात्मतत्त्वं
त्रयीशिरोवाक्यमनुप्रविष्टाः ।
वदन्ति शब्दा इति शब्दशक्ति-
निरूपणे पूर्वमुदीरितं हि ॥ ९७ ॥

अखण्डमेवेति । त्रयीशिरो वाक्यमनुप्रविष्टाः त्रयीशिरस्यन्तर्भूता इति यावत् । शब्दः तत्त्वमादयः अखण्डमेव निर्विशेषमेवाद्वयमात्मतत्त्वं वदन्ति लक्षयन्ति न तु तादात्म्यवाद इव सविशेषात्मतत्त्वं पूर्वमुदीरितं कुत्रेत्याकाङ्क्षायामाह—शब्दशक्तिनिरूपण इति । प्रथमाध्याये शब्दशक्तिनिरूपणावसर इत्यर्थः । हि यतः अतोऽखण्डमात्रबोधनसमर्थतत्त्वमादेर्न पदार्थमात्रविषयप्रत्यक्षाद्यनुरोधेन संसर्गनिष्ठत्वसंभव इत्यर्थः ॥ ९७ ॥

तस्माद्विवर्त्तवादाश्रयणेन वेदान्तैरेव तादृक्प्रत्यक्षादेस्तत्त्वावेदकप्रामाण्यनिराकारणमुपपन्नमित्युपसंहरति—

अतो विरोधस्य निराससिद्धौ
निरस्यतेऽक्षादिषु तत्त्वभागः ।
संरक्ष्यतेऽसंव्यवहारशक्ति-
भागः पुनः सर्वमतोऽनवद्यम् ॥ ९८ ॥

अत इति । यतस्तत्त्वमादिवाक्यमखण्डार्थनिष्ठं यतश्च प्रत्यक्षादेर्नानधिगतार्थविषयत्वमतः अखण्डसमन्वये प्रत्यक्षादिविरोधस्य तत्त्वभागः तत्त्वावेदनप्रामाण्यांशः । ननु प्रत्यक्षप्रामाण्यस्य वेदान्तो-

पजीव्यत्वात् कथं तदुपजीविना वेदान्तेन तद्बाध्यते न्यायविरोधादित्याशङ्क्याह—संरचयत इति। न बाध्यते संव्यवहारशक्तिभागः व्यावहारिकप्रामाण्यांशः वेदान्तैर्हि स्वप्रतीतौ स्ववाच्यसम्बन्धपरिज्ञाने च प्रत्यक्षादिगतव्यावहारिकप्रामाण्यमात्रमेवापेक्ष्यते न तु तत्त्वावेदनांशोऽपि अनुपयोगादननुकूलत्वाच्च। व्यावहारिकप्रामाण्यं विवर्त्तविषयेऽपि तेषां संभवति अत उपजीव्यांशस्य बाधान्न न्यायविरोध इत्यर्थः। विरोधनिरासमुपसंहरति—सर्वमिति। अतः-यतो व्यावहारिकप्रामाण्यांशो न बाध्यते तत्त्वावेदनांशश्च बाध्यते अतः॥ ९८॥

ननु प्रत्यक्षादेरतत्त्वावेदनप्रामाण्यमनुपपन्नम् तद्विषयस्य प्रपञ्चस्य प्रमाणदोषजन्यत्वेनातात्त्विकत्वाभावात् लोके च दोषजन्यस्यैवातात्त्विकत्वदर्शनात्। न चाविद्यालक्षणात्मदोषजन्यत्वेनातात्त्विकत्वम्, अधिष्ठानविषयप्रमितिकरणाश्रयदोषजन्यत्वाभावात्। तस्यैव दोषत्वात्। न चाविद्याप्रपञ्चाधिष्ठानपूर्णात्मविषयप्रमाकरणनिष्ठा तस्य स्वप्रकाशत्वेन तद्विषयप्रमाकरणाभावादित्याशङ्क्याविद्याया दोषत्वमुपपादयति—

**चितिवस्तु नः स्वमहिमस्फुरणे**
**स्वयमेव कारणमिति प्रगतम्।**
**प्रतिबध्य तच्चितिगताग्रहणं**
**विपरीतबुद्धिमुपढौकयति॥ ९९॥**

चितिवस्तु न इति। नः अस्माकं स्वमहिमस्फुरणे स्वस्वरूपानवच्छिन्नानन्दस्फुरणे स्वयमेव कारणं न स्वव्यतिरिक्तकारणान्तरापेक्षेत्यर्थः। इति प्रगतं प्रसिद्धं चितिगताग्रहणं चैतन्यनिष्ठाज्ञानं तत्स्वमहिमस्फुरणं प्रतिबध्य विपरीतबुद्धिमधिष्ठानविपरीतप्रपञ्चाकारबुद्धिमुप-

ढौकयति प्रापयति। अधिष्ठानविशेषज्ञानप्रतिबन्धकत्वे सत्यधिष्ठानविपरीतकार्यजनकस्य दोषस्याधिष्ठानतत्प्रमाणाश्रयत्वमेव वक्तव्यं न त्वधिष्ठानप्रमितिकरणाश्रयत्वमपि गौरवात्। अधिष्ठानप्रमाणं चात्र स्वयं प्रकाशात्मस्वरूपमेवेति। तदाश्रिततद्विशेषज्ञानप्रतिबन्धकतद्विपरीतकार्यजनकाविद्याया अपि प्रमाणदोषत्वात्। तज्जन्यस्यप्रपञ्चस्यातात्त्विकत्वमुपपन्नमिति तद्विषयप्रत्यक्षादेरतत्त्वावेदनत्वमुपपन्नमिति भावः। ननु ज्ञानोत्पादकस्यैव काचादेर्दोषत्वं प्रसिद्धं नत्वर्थोत्पादकस्य दण्डादौ तदप्रसिद्धेः अविद्या चार्थोत्पादिकेति कथं तस्याः दोषत्वमिति चेन्न—ज्ञानजनकत्वस्य दोषत्वेऽप्रयोजकत्वात्। अन्यथा—चतुष्टयसन्निकर्षस्यापि दोषत्वप्रसङ्गात्। ननु भ्रान्तिज्ञानजनकत्वं तत्र प्रयोजकमिति चेत्तर्हि सत्यं घटादिजनकस्य दण्डादेरदोषत्वेपि मिथ्याभूतपदार्थजनकस्याप्यज्ञानस्य दोषत्वोपपत्तिः। काचादेरपि भ्रान्तिरजतादिजनकत्वाङ्गीकारात् ज्ञानमात्रजनकत्वमसिद्धमेव अतोऽविद्यादोष एवेति तात्पर्यम्॥ ६६॥

नन्वेवं प्रत्यक्षादेर्न व्यावहारिकप्रामाण्यमपि दोषजन्यविषयस्य शुक्तिरूप्यज्ञानवद्व्यावहारिकप्रमाण्यस्यैव युक्तत्वात्। यदि च सकललोकव्यवहारोच्छेदभीत्या तन्नाङ्गीकुरुषे तदा तत्त्वावेदनत्वमेव स्वीकर्त्तव्यम्। तथा च कथन्नोपजीव्यविरोध इत्याशङ्क्य न दोषजन्यविषयत्वं व्यावहारिकत्वं विरुणद्धि दोषस्य ह्यधिष्ठानविपरीतकार्योत्पादकत्वमेव स्वभावः न तु प्रातीतिककार्योत्पादकत्वमेवेति नियमः। भस्मकादिदोषे व्यभिचारात्तथा च प्रपञ्चस्य व्यावहारिकत्वेप्यद्वितीयात्मविपरीतरूपतयाऽविद्यालक्षणदोषजन्यत्वं सम्भवत्येवेति नोपजीव्यविरोधः इत्याभिप्रेत्याह—

**व्यवहारनिर्वहणशक्तिमसौ**

**न चिदग्रहोऽस्य विनिवारयति।**

परमार्थवेदनविधिक्षमता-
मवखण्डयन्नपि मनः प्रभृतेः ॥ १०० ॥

व्यवहारेति । अस्य प्रत्यक्षादेर्व्यवहारनिर्वहणशक्तिमुचितव्यवहार-सम्पादनसामर्थ्यं चिद्ग्रहः चैतन्याश्रिताज्ञानं न विनिवारयति । एवं प्रत्यक्षादिगततत्त्वावेदनसामर्थ्यनिर्वाहकत्वमपि न स्यादिति नेत्याह— परमार्थेति । मनः प्रभृतेर्मनआदिप्रत्यक्षस्य परमार्थवेदनविधि-क्षमतां तत्त्वावेदनकरणसामर्थ्यमवखण्डयन्नपि निराकुर्वन्नपि व्यवहा-रनिर्वहणशक्तिं न निवारयतीत्यर्थः । प्रत्यक्षादेरविद्योपदर्शितार्थविषय-त्वादेव तद्गततत्त्वावेदकत्वनिवारकत्वं तस्या इत्यर्थः ॥ १०० ॥

ननु वेदान्तानामपि प्रमाणत्वाविशेषात्तद्गततत्त्वावेदकत्वनिवार-कत्वमपि तस्याः किं न स्यादित्याशङ्क्य प्रमाणत्वाविशेषेऽप्यविद्योपद-र्शितार्थविषयत्वाभावान्नैवमित्यभिप्रेत्याह—

चितिवस्तुबुद्धिजनकस्य पुन-
र्वचसो न खण्डयति शक्तिमसौ ।
स्वनिबन्धनस्फुरणमेव चितेः
प्रतिबध्य तिष्ठति न वाचनिकम् ॥ १०१ ॥

चितिवस्त्विति । अखण्डचैतन्यवस्तुविषयबुद्धिजनकस्य वचसस्त-त्त्वमादिवाक्यस्य शक्तिं तत्त्वावेदनसामर्थ्यमसौ चिद्ग्रहः न खण्ड-यति न निवारयति । नन्वेवमपि वेदान्तानामखण्डात्मतत्त्वप्रमिति-जनकत्वमनुपपन्नमविद्यादोषप्रतिबद्धत्वात् । लोके प्रतिबन्धक-दोषनिरासे सत्येव प्रमाणानां स्वविषयप्रमितिजनकत्वदर्शनात् । न चात्रापि निवृत्त एव तस्मिन् ते स्वविषयाखण्डात्मतत्त्वप्रमितिं जन-यन्तीति वाच्यम् । वैयर्थ्यादन्योऽन्याश्रयाच्चेत्याशङ्क्याह—स्वनिबन्धनेति ।

असौ चितेः स्वप्रकाशचैतन्यस्य स्वनिबन्धनस्फुरणं स्वरूपप्रकाशप्रयुक्तस्फुरणमेव प्रतिबध्य तिष्ठति प्रतिबध्नाति। न वाचनिकं तत्त्वमादिवाक्यनिबन्धनस्फुरणन्न प्रतिबध्नातीत्यर्थः। प्रमाणदोषो हि स्वाश्रयप्रयुक्तप्रकाशमेव प्रतिबध्नाति। काचादौ तथैव दर्शनात् अविद्यादोषाश्रयश्च स्वरूपचैतन्यमेव। न वेदान्त इति। स्वप्रकाशचैतन्यनिबन्धनप्रकाश एव प्रतिबध्यते न वेदान्तजन्यः। तथा च तस्य प्रतिबन्धनिवृत्त्यपेक्षा नास्तीति भावः॥ १०१॥

तर्ह्यविद्या चक्षुरादेरपि तत्त्वावेदनसामर्थ्यं न विहन्यात्। तदाश्रयत्वाभावादित्याशङ्क्य पूर्वोक्तयुक्त्यैव दूषयन्नुपसंहरति—

प्रत्यक्षादेरेष दोषस्ततोऽयं
वेदान्तानां नैव दोषानुबन्धः।
सत्यं वस्तु च्छादयन्नद्वितीयं
द्वैतं यस्मादानयत्येष दोषः॥१०२॥

प्रत्यक्षादेरिति। अयं चिदग्रहः प्रत्यक्षादेरेव दोषः। तत्त्वावेदनसामर्थ्यप्रतिबन्धक इत्यत्र हेतुमाह—सत्यमित्यादिना। एष अविद्याख्यो दोषः सत्यमबाधितं परमार्थमद्वितीयमखण्डैकरसं वस्तु छादयन्नाच्छादयन् द्वैतमद्वैतविपरीतरूपं सत्यविपरीतरूपमपरमार्थं चेति द्रष्टव्यम्। आनयति चक्षुरादिविषयत्वेन सम्पादयति। तत इति सम्बन्धः। तथा च प्रत्यक्षादेरविद्योपदर्शितापरमार्थवस्तुविषयत्वादेव प्रत्यक्षादिकं प्रत्यविद्या तदाश्रितत्वाभावेपि दोष इत्युच्यते। वेदान्तानां च तादृक्त्वाभावान्नैव दोषानुबन्धः दोषसम्बन्धगन्धोपि नास्तीत्यर्थः॥ १०२॥

एवं प्रत्यक्षादेस्तत्त्वावेदनप्रामाण्यस्यानुपजीव्यत्वात् व्यावहारिकत्वेन सावकाशत्वाच्च। न तेन तत्त्वंपदार्थविषयवेदान्तबाध

इत्युक्तमिदानीं त्वंपदार्थस्यासङ्गत्वाद्यावेदकवेदान्तवाक्यस्य कर्तृत्वाद्यावेदकप्रत्यक्षेण भिन्नविषयत्वादपि न बाध इत्याह—

किं च प्रतीचि सकलोपनिषत्प्रवृत्ता
मानान्तरं सकलमेव तु तत्पराचि ।
प्रत्यक्पराग्विषयगोचरयोस्तु बुद्ध्योः
स्पर्धा न संभवति मेयविभागसिद्धेः ॥१०३॥

किंचेति । प्रतीचि प्रत्यगात्मनि । उपनिषत्—असङ्गो ह्ययं पुरुष इत्यादिका प्रवृत्ता असङ्गत्वादिप्रतिपादकत्वेन प्रवृत्ता मानान्तरं कर्तृत्वाद्यावेदकं प्रमाणान्तरं पराचीत्युक्तेऽहंकारस्य देहाद्यपेक्षयान्तरत्वेन प्रतीयमानत्वादसंभवशङ्का स्यात् तदर्थं तत्पराचीत्युक्तम् । यद्यपि देहाद्यपेक्षयाऽहंकरणमान्तरं तथापि तं प्रत्यगात्मानमपेक्ष्य पराग् बाह्यमेवेत्यर्थः । अत्र च प्रवृत्तमिति विभक्तिविपरिणामो द्रष्टव्यः । फलितमाह—प्रत्यगिति । प्रत्यग्रूपः पराग्रूपश्च यौ विषयावात्मानात्मलक्षणौ तद्गोचरयोः आत्मानात्मविषयिण्योरित्यर्थः । बुद्ध्योरसङ्गत्वादिकर्तृत्वाद्यावेदकयोः स्पर्धा विरोधो न संभवति । तत्र हेतुः—मेयविभागसिद्धेरिति । विभिन्नविषयत्वादित्यर्थः । लोके हि समानविषययोरेव तमःप्रकाशयोर्विरोधो दृष्टः न भिन्नविषययोः न हि जातु रामनाथसन्निधिनिविष्टप्रदीपप्रभया हिमगिरिगुहान्तर्वर्तिसंतमसनिरासो दृष्टपूर्वः भिन्नविषयं चासङ्गत्वावेदकवेदान्तात् कर्तृत्वाद्यावेदकप्रत्यक्षादि मानं वेदान्तस्यात्मविषयत्वात्प्रत्यक्षादेरनात्मविषयत्वात् । अतो न तयोर्विरोध इत्यर्थः । ननु भिन्नविषयत्वमसिद्धमहं करोमि जानामीति कर्तृत्वादेश्चैतन्यसामानाधिकरण्येन प्रतीयमानस्यानात्मधर्मत्वे चैतन्यसमानाधिकरण्यानुपपत्त्यात्मधर्मत्वमेव तं विषयीकुर्वता प्रत्यक्षेणाप्यात्मनो विषयीकरणादिति चेदुच्यते—

आत्मा तावत्स्वयंप्रकाश इति सर्वैरभ्युपगन्तव्यः। अन्यथा जगदवभासानुपपत्तेः। नन्वात्मा स्वसमवेतज्ञानेनैव जगदवभासयिष्यतीति चेत्तत् किं ज्ञानं जडप्रकाशः उत चैतन्यप्रकाशः। आद्येपि किं प्रकाशमानं सदर्थमवभासयति। उताप्रकाशमानम्। नाद्यः। अनवस्थाप्रसङ्गात्। न द्वितीयः। स्वयमप्रकाशमानस्य विषयप्रकाशत्वानुपपत्तेः। प्रदीपादेः स्वयं प्रकाशमानस्य विषयप्रकाशत्वदर्शनात्कल्पनाया दृष्टानुरोधित्वस्यैव न्याय्यत्वात्। स्वयमप्रकाशमानस्य घटादितुल्यत्वेनान्यप्रकाशत्वानुपपत्तेश्च। न च चक्षुरादिवदप्रकाशमानस्यापि ज्ञानस्यार्थप्रकाशत्वमिति वाच्यम्। चक्षुर्हि प्रकाशजनकतयार्थप्रकाशकमेव न तु तत्प्रकाशः। ज्ञानन्तु प्रकाश एव न तु प्रकाशकं प्रकाशान्तराजननात्।

किं च—घटप्रतीत्यनन्तरमेव प्रतीयते घट इति प्रतीतिविशेषणकतया घटप्रतीतिर्दृश्यते। विशिष्टप्रतीतिश्च विशेषणप्रतीतिपूर्विकैवेति नियमः। तत्र कथं ज्ञानस्यास्वप्रकाशत्वे विशेषणीभूतप्रतीति—प्रतीतिं विना तद्विशिष्टप्रतीतिः स्यात्। ननु तत्रापि प्रतीत्यन्तरेण विशेषणप्रतीत्युपस्थितौ सत्यामेव तद्विशिष्टप्रतीतिरिति चेन्न। प्रतीतिविषयप्रतीतेरननुभवपराहतत्वात् न हि घट इति प्रतीत्य घटः प्रतीयत इति विशिष्टप्रतीतेः पूर्वं नियमेन प्रतीतिविषयप्रतीत्यन्तरं कश्चिदनुभवति। किञ्चास्ति तावत्सर्वेषां नियमेन स्वसमवेतज्ञानविषयसंशयविपर्यासविरहः। स च ज्ञानस्य जडप्रकाशत्वपक्षे किंनिमित्त इति वक्तव्यं संशयादिसामग्रीविरहप्रयुक्त इति चेत्स वा किंनिमित्तः। किं विशेषादर्शनविरहप्रयुक्तः। उत कोटिस्मरणादिविरहप्रयुक्तः। न चरमः। नियमेन तद्विरहस्य वक्तुमशक्यत्वात्। प्रथमे विशेषादर्शनविरहो नाम विशेषदर्शनं तच्च ज्ञाने ज्ञानत्वेन तद्दर्शनमेव तच्च यद्युत्पन्नमात्रज्ञाने नियमेनाङ्गीक्रियते तदा ज्ञानस्य नियमेन ज्ञानान्तरवेद्यत्वाभावादन्यथा सुषुप्त्याद्यभावप्रसङ्गात् व्यवसाय एव तादृग्रूप इति वक्तव्यम्। तथा च कथं तस्य परप्रकाश्यत्वम्।

एतेन विशिष्टवैशिष्ट्यज्ञानस्य विशेषणतावच्छेदकप्रकारकज्ञानजन्यतया प्रतीतिविषयज्ञानान्तरं मध्ये त्वयापि वाच्यम् घटज्ञानस्यैव ज्ञानत्वप्रकारत्वाभावादिति निरस्तम्। किंचा जिज्ञासितस्य ज्ञानस्यानुव्यवसायवेद्यत्वे सुषुप्त्यादिविरामप्रसङ्गः। न च सामग्र्यन्तरप्रतिबद्धत्वादजिज्ञासितमपि सर्वदा न ज्ञायत इति न सुषुप्त्यादि विरामप्रसङ्ग इति वाच्यम् इमं घटं जानामीति सन्निकृष्टानुव्यवसायस्थले घटज्ञानसामग्र्यां विद्यमानायामेवानुव्यवसायदर्शनेन सामग्र्यन्तरस्य तदप्रतिबन्धकत्वात्। जिज्ञासितस्य च तस्य ग्राह्यत्वेऽन्योऽन्याश्रयः। अज्ञाते जिज्ञासाऽयोगात्। ज्ञानज्ञाने सति जिज्ञासा तस्यां च सत्यां तज्ज्ञानमिति। किंच ज्ञानभेदे तत्क्रमे च तत्कारणमनःसंयोगभेदक्रमावेव प्रयोजकौ वक्तव्यौ। अन्यथा धारावहनस्थले ज्ञानभेदतत्क्रमयोरनुपपत्तेः। न च तत्र प्रागभावभेदाद्भेदः। सजातीयप्रत्यक्षविभुविशेषगुणानां पर्यायेणोत्पत्तिस्वभावाच्च क्रम इति वाच्यम्। प्रागभावस्य प्रतियोगिभेदाधीनभेदकत्वेन प्रतियोगिभेदस्य तद्भेदाधीनत्वेऽन्योऽन्याश्रयात्। कारणक्रमाधीनकार्यक्रमोपपत्तौ निर्बीजस्वभावकल्पनानुपपत्तेश्च। तथा च व्यवसायानुव्यवसाययोर्भिन्नसंयोगजन्यतयाऽनुव्यवसायक्षणे व्यवसायस्य नष्टत्वात् तस्य प्रत्यक्षत्वानुपपत्तिः। ननु सामग्रीभेदतत्क्रमयोरेव कार्यगततत्प्रयोजकत्वं सर्वत्रैवं दर्शनात् तौ चात्र सुलभावनुव्यवसायसामग्र्यां व्यवसायस्यानुप्रवेशादिति चेत्तथापि ज्ञानविषयसविकल्पकनिर्विकल्पकाद्यनेकक्षणव्यवहितत्वात् व्यवसायस्य प्रतीयत इति वर्त्तमानत्वप्रतीत्यनुपपत्तिः। ननु स्वप्रकाशत्वं नाम स्वविषयत्वं तच्च न संभवति ज्ञानजनकेन्द्रियप्रत्यासत्त्याश्रयत्वस्यैव ज्ञानविषयत्वे प्रयोजकत्वात् ज्ञानस्य च तादृशप्रत्यासत्त्याश्रयत्वाभावात् ततः स्वप्रकाशत्वानुपपत्त्यैव परप्रकाश्यत्वमिति चेत्। न हि स्वप्रकाशत्वं स्वविषयत्वमङ्गीक्रियते विरोधात्। किन्तु प्रकाशान्तरसम्बन्धं विना

प्रकाशमानत्वं, स्वव्यवहारे स्वातिरिक्तज्ञानान्तरानपेक्षत्वं वा। ततश्च न तादृशप्रत्यासत्याश्रयत्वापेक्षा। न च तदपि ज्ञानविषयत्वेऽनुगतं प्रयोजकं घटादीनामीश्वरज्ञानविषयत्वाभावप्रसङ्गात्। जन्यज्ञानेऽयं नियम इति चेन्न। आत्मादेरपि घटादिज्ञानविषयत्वप्रसङ्गात्। प्रमेयमिति ज्ञानस्याविषयत्वेन स्वयंप्रकाशत्वप्रसङ्गाच्च। ननु तस्यापि प्रमेयत्वलक्षणप्रत्यासत्याश्रयत्वमस्तीति चेत्। न ह्येतावता स्वयमस्वयं भवति। न वा स्वविषयप्रकाशोऽप्रकाशः। किं च ज्ञानस्यास्वयंप्रकाशत्वे धारावहनबुद्धिर्न सिध्यति। सा किं प्रत्यक्षेण किं प्रकारान्तरेण। नाद्यः। धाराविरामप्रसङ्गात्। चरमक्षणे च पूर्वसविदां विनष्टत्वेन तदनुपपत्तेः। अस्तु तर्हि व्यवहारलिङ्गेन तज्ज्ञानमिति चेन्न। तत्तद्बुद्धिजन्यव्यवहारस्य तदा तदा ज्ञाने घटबुद्धिधाराविरामप्रसङ्गात्। चरमक्षणे च पूर्वपूर्वबुद्धिजन्यव्यवहाराभावात्। ननु तत्तद्बुद्धिजन्यस्मृत्या तदनुमानमिति चेत्। सापि न तावत्पूर्वोत्तरबुद्ध्योर्मध्ये भवति दत्तदोषात्। नापि चरमबुद्ध्यनन्तरं तत्रापि प्रतिज्ञानं स्मृतिभेदे तावद् घटानुभवमात्रसिद्धावपि नाविरतधारा तत्सिद्धिः। स्मृत्यभेदे तु नतराम्। नन्वेका स्मृतिस्तावत्कालावच्छिन्नं घटं विषयीकरोतीति तावत्कालावच्छिन्नधारानुभवोपि सिद्ध्यतीति चेन्न। अनुभवस्य कालाविषयकत्वेन स्मृतेरपि तदविषयत्वात्। घटमात्रविषयिण्या च स्मृत्या तदसिद्धेः। एकविषयानेकसंस्कारस्यैकस्मृतिजनकत्वाच्च। स्वयंप्रकाशत्वपक्षे तु तत्तद्घटादिज्ञानेन वा तज्जन्यतत्तदज्ञानविषयतत्तत्संस्कारेण वैकस्मृत्यानेकवर्णावगाह्येकस्मृत्या वर्णानामिव तत्सिद्धा तस्माज्ज्ञानस्य जडप्रकाशत्वमनुपपन्नम्। अस्तु तर्हि ज्ञानं स्वप्रकाशमात्मा च तेनैव विषयान् कर्मतया पश्यन् स्वयं च तदाश्रयतया सिद्ध्यति। तस्यापि स्वप्रकाशत्वे उभयस्वप्रकाशत्वकल्पनागौरवात् ज्ञानकर्मत्वे च जडत्वप्रसङ्गादिति चेत्तर्हि तादृशी संविदात्मैव स्यात्। तथा ह्यात्मा संविदभिन्नः संवित्कर्मतामन्तरेण-

परोक्षत्वात्संविद्वत् । न चाप्रयोजको हेतुः विपक्षे बाधकाभावादिति वाच्यम् । संविद्विषयत्वानात्मत्वापत्त्योरेव बाधकत्वात् संविदतिरिक्तस्य संविदधीनप्रकाशस्य तदुभयसद्भावनियमात्संविद आत्मातिरिक्तत्वे कल्पनागौरवापाताच्च । तथा हि—यदि स्वप्रकाशसंविद आत्मातिरिक्ता इति कल्प्येरन् प्रतिविषयमन्यदन्यदेव ज्ञानं कल्पनीयम् । तथाभिन्नेष्वेकरूपानुभवसिद्ध्यर्थं ज्ञानत्वं चापरं कल्पनीयम् । संविद आत्मत्वे तु नैवमिति । ननु ज्ञानभेदो नास्माभिः कल्पनीयः घटज्ञानं पटज्ञानमित्यनुभवसिद्धत्वात्तस्येति चेन्न । संवित्स्वसजातीयप्रतियोगिकभेदशून्या निष्प्रतियोगिकत्वे सत्युपाधिपरामर्शमन्तरेणाविभाव्यमान भेदत्वाद्गगनवदिति । तदैक्यस्य प्रमाणसिद्धत्वेन भेदप्रत्ययस्य घटादिभेदेनेवाकाशस्य विषयभेदेनान्यथासिद्धत्वात् । ननूत्पादविनाशाभ्यां भेदोऽनुभूयत इति चेन्न । संविदुत्पादाद्यसिद्धेः । ननु घटज्ञानमुत्पन्न पटज्ञानं नष्टमिति तावनुभूयेते इति चेत् न तयोरपि घटादिसम्बन्धविषयत्वेन संविद्विषयत्वाभावात् । तस्मात्स्वयंप्रकाशज्ञानाभिन्नतया आत्मा स्वप्रकाश इत्येव सर्वैरुपगन्तव्यम् । अत्रायं पुरुषः स्वयं ज्योतिरितिश्रुतिरपि साक्षात्स्वरूपप्रकाशत्वमेव दर्शयति । नन्वहं जानामीति ज्ञानाश्रयतया प्रतीयमान आत्मा कथं तदभिन्नः स्यादिति चेत् न ह्यत्रात्मा ज्ञानाश्रयत्वेन प्रतियते किन्त्वहंकार एव । स एवात्मेतिचेत् किमेष प्राभाकरः उतान्यः नाद्यः । मामहं जानामीति ज्ञानकर्मतया प्रतीयमानस्यैव ज्ञानाश्रयत्वानुभवात् । ज्ञानकर्मत्वेनानुभूयमानतया ऽहंकारस्य घटादिवदनात्मत्वानुमानस्य निरङ्कुशत्वात् । न च ज्ञानानाश्रयत्वमुपाधिः सुषुप्त्यादावात्मनोपि ज्ञानानाश्रयत्वेन तस्य साधनव्यापकत्वात् पक्षेतरत्वाच्च । न च ज्ञानासमवायिकारणानाश्रयत्वमुपाधिः । मनसि साध्याव्यापकत्वात् । संयोगस्याप्यव्याप्यवृतित्वेनात्मनोपि तादृशसंयोगानाश्रयतया साधनव्यापकत्वाच्च । तस्माज्ज्ञानवेद्यस्यानात्मत्वनियमात्तस्यैव तदाश्रयतया प्रतीयमानत्वात् ।

नात्मनो ज्ञानाश्रयत्वं कथं तर्हि चैतन्यस्य ज्ञानस्यानात्माश्रयत्वमिति चेद् न कथञ्चित्का तर्हि जानामीति प्रत्ययस्य गतिः। तस्यान्तःकरणवृत्त्याश्रयत्वविषयत्वेनोपपत्तेः । न चान्तः करणस्य ज्ञानाश्रयत्वे प्रमाणाभावः। ह्रीर्धीरित्येतत्सर्वं मन एवेत्यादिश्रुतेरेव प्रमाणत्वात्। तथाचाहंकारस्य ज्ञानकर्मतया घटादिवदनात्मत्वात् तत्साधन स्वप्रकाशसाक्षिस्वरूपत्वादात्मनस्तयोर्भेद एवोचितः। किंचाहमिति पराग्व्यावृत्तो ज्ञानाश्रयोहंकारोऽनुभूयते । चैतन्यं तु घटः स्फुरति पटः स्फुरति अहं स्फुरामीति चाहंकारे पराच्यपि सर्वत्रानुवृत्ततया प्रतीयते । स्फुरणस्यैव चैतन्यत्वात्। चैतन्यं चात्मेति साधितं तत्र कथमनुवृत्तचैतन्यात्मरूपत्वं व्यावृत्ताहंकारस्य स्यात्। व्यावृत्तानुवृत्तयोरेकत्वायोगात्। किं चात्मा यद्यहंकारतावन्मात्रः स्यात्तदा सुषुप्त्यादावात्मनि प्रतीयमानेऽहंकारोपि प्रतीयेत। ननु तदा विषयानुभवाभावान्नाहंकारः प्रतीयत इति चेत्तर्हि तदभिन्नात्मापि न प्रतीयेत स च प्रतीयत एव उत्थितस्य परामर्शात्। नन्वहंकारोपि स्वापादौ प्रतीयत एव तस्य स्वप्रकाशचैतन्यात्मत्वादिति चेत्तर्हि कदाचिदहमित्यभिमन्यमानोऽस्वाप्समिति स्मृतिरापद्येत नतु सुखमहमस्वाप्समिति। स्वापकालीनसुखानुभवितृत्वेनाहंकारोपि स्मर्यत इति चेन्न। तस्य प्रत्ययस्य स्थविरोहं बाल्ये पितरावन्वभूवमित्यत्र स्थाविर्यवदहंकारस्य तदानीं स्मर्त्रवच्छेदकत्वविषयत्वेनोपपत्तेः। अन्यथा ह्यस्तनाहंकार इव पूर्वोक्तानुसंधानापत्तिप्रसङ्गात । श्रुतिरप्यथात आत्मा देश इति प्रकृतादहंकारात् पृथगेवात्मानं दर्शयति। भगवत्स्मृतिरप्यहंकारविमूढात्मा कर्ताहमिति मन्यत इत्यात्मनः कर्तृत्वादिप्रयोजकमहंकारं दर्शयन्ती तद्भिन्नमेवात्मानमुपदिशति। तस्मादहंकारस्य चैतन्यकर्मत्वात् चैतन्याद्व्यावृत्तत्वात् चैतन्ये प्रतीयमानेप्यप्रतीयमानत्वादित्यादिन्यायात् श्रुतिस्मृतिभ्यां चात्मान्यत्वमेव। तर्हि कथं भिन्नयोरात्माहंकारयोरेकत्वानुभवः घटादिवत् तद्गतरूपादिवच्चा-

हंकारतद्धर्माचात्मनः सकाशात् किमिति पृथक् नानुभूयेते इति चेच्छरीरैक्याभिमानवन्मिथ्यातदात्म्याध्यासादेकत्वावगम इत्यवेहि। ननु शरीरेऽहमित्यहंकारैक्यावभासो न मिथ्या किन्तु गौण एव। अहमिति शरीराद्विविक्तस्यैवात्मनः प्रतीतेर्भिन्नत्वेन प्रतीयमानयोश्च सामानाधिकरण्यप्रत्ययस्य गौणत्वादिति चेत। न तावदत्राविवेकिनामात्मनः शरीरात्पृथगवभासोऽस्ति तथात्वे परलोकसम्बन्धिनि आत्मनि चार्वाकादीनामपि विवादाभावप्रसङ्गात्। न च विवेकिनां शरीरेऽहमिति प्रत्ययो गौणः अध्यासहेत्वविवेकाभावादिति वाच्यम्। अपरोक्षाध्यासस्य ह्यपरोक्षविवेकाभावो हेतुः। स च विवेकिनामप्यस्त्येव न च विविक्ततया प्रतीतिमात्रं गौणत्वे प्रयोजकमध्यासविरोधिविविक्तप्रत्ययस्यैव गौणत्वप्रयोजकत्वदर्शनात्। तस्मादहंकारात्मनोर्भिन्नत्वात्तदभेदावगमस्य च तादात्म्याध्यासनिमित्तत्वात् सिद्धमहंकारधर्मकर्तृत्वाद्यवगाहिप्रत्यक्षादेरात्मनोऽसङ्गताद्यावेदकवेदान्ताद् भिन्नविषयत्वमित्यलमतिविस्तरेण ॥ १०३ ॥

इदानीमारोपितभेदविषयत्वादपि न तेनाद्वैततत्त्वावेदकवेदान्तानां बाध इति वक्तुमादौ प्रत्यक्षादेस्तत्तद्वस्तुमात्रविषयत्वमेव न भेदविषयत्वमित्याह—

अभिन्न एवैष पटः समीक्ष्यते
न भेदगन्धोऽपि पटे समीक्ष्यते।
पटेऽपि भेदो यदि कल्प्यते तदा
पटो विदीर्येत कुतस्तदा पटः ॥ १०४ ॥

अभिन्न इति। भेदरहित एव पटो गृह्यते। पटस्वरूपमात्रमेव गृह्यत इति यावत्। एवकारव्यावर्त्यमाह—न भेदगन्ध इति। अल्पोपि

भेदो न प्रतीयत इत्यर्थः। ननु घटो भिन्नः पटो भिन्न इति भेदोपि प्रत्यक्षेण प्रतीयत इति चेत्सत्यम्। सा प्रतीतिर्भ्रान्तिरेव। न च बाधकाभावः। यौक्तिकबाधस्य सत्त्वात्। तथा हि किं वस्तुस्वरूपं भेदः उत तद्धर्मः। नाद्यः इत्याह—पटेऽपीति। भेदः स्वरूपभूतभेदः कल्प्यतेऽङ्गीक्रियते। विदीर्येत द्विधा भवेदित्यर्थः। ततः किं तत्राह—कुत इति। पट एव न स्यादित्यर्थः भेदो हि विदारणात्मा यदि पटादिस्वरूपं स्यात्। तदा पटो द्विधा भवेत्। एवं तत्तद्भेदस्वरूपतया तत्तद्वस्तुनो विशीर्णत्वेन न किञ्चिदप्येकं स्यादित्यर्थः॥ १०४॥

ननु यदपेक्षया यस्य स्वरूपं भेदः तत्स्वरूपं तदपेक्षया विदारणात्मकं भवति पटादिस्वरूपं च घटाद्यपेक्षया भेदरूपं तदपेक्षया विदीर्णं भवति न स्वरूपापेक्षयापि तत्स्वरूपस्य स्वापेक्षया भेदत्वाभावादित्याशङ्क्याह—

घटात्पटो भिन्न इतीष्यते यदि
स्फुटं प्रसज्येत विकल्पिता भिदा।
न सत्यमापेक्षिकमीक्षितं क्वचि-
त्तथा च यत्नेन निवेदयिष्यते॥ १०५॥

घटादिति। घटात्पटो भिन्न इति प्रतीतेरितरापेक्षितस्वरूपमेव भेदोऽङ्गीक्रियते यदीत्यर्थः। विकल्पिता आरोपिता भिदा भेदः यदि घटापेक्षपटस्वरूपमेव भेद इत्युच्येत तदा भेदस्यारोपितत्वमेव स्यात्। सापेक्षस्वरूपस्य कल्पितत्वदर्शनादित्यर्थः। ननु सापेक्षत्वेपि वास्तवत्वं किं न स्यात्तत्राह—न सत्यमिति। निरपेक्षस्वरूपस्यैव रज्ज्वादेः सत्यत्वदर्शनादित्यर्थः। आपेक्षिकस्य सत्यत्वं नेत्येतत्तृतीयाध्याये वक्ष्यत इत्याह—तथा चेति। निरूपयिष्यते पदार्थनिरूपणप्रकरण इत्यर्थः। किं

च यदि स्वरूपं भेदः स्यात् तदा तस्य सापेक्षत्वमपि न स्यात्। स्वरूपस्य निरपेक्षत्वात्। नचैकस्य स्वरूपद्वयमस्ति अन्यतरस्य स्वरूपाद् भिन्नत्वेनास्वरूपत्वात्। किंच स्वरूपस्यैव भेदत्वे दूरे वृक्षादि-स्वरूपे ज्ञायमाने तद्भेदविषयः संशयो न स्यात् तस्यापि ज्ञातत्वात्। नन्वसाधारणधर्मवत् स्वरूपज्ञानं भेदज्ञानं तच्च न दूरतोऽनुभूयमान-वृक्षादावस्तीति संशयः स्यादिति चेत्किं वस्तुगत्या साधारणधर्म-वज्ज्ञानं भेदज्ञानम्। अथवा असाधारणधर्मवानयमित्यसाधारणध-र्मवत्त्वप्रकारकं ज्ञानमाहोस्विदसाधारणधर्मवृक्षत्वादिप्रकारकं ज्ञानम्। नाद्यः। प्रमेयत्वेन ज्ञातेषु दूरस्थतरुषु भेदसंशयाभावप्रसङ्गात्। तदा-तस्यापि वस्तुगत्याऽसाधारणधर्मवृक्षत्वादिमज्ज्ञानत्वात्। द्वितीयेपि धर्मस्य किमिदमसाधारणत्वं किमेतद्वृत्तित्वमात्रम्। किं वाऽन्यावृत्तित्वे सत्येतद्वृत्तित्वम्। नाद्यः। तेष्वेव तरुषु संशयानु-पपत्तेः। तत्रापि प्रमेयत्वस्य वृक्षवृत्तित्वज्ञानसंभवात्। द्वितीयेऽपि किं यत्किंचिदन्यावृत्तित्वमन्यावृत्तित्वपदार्थः उत सकलान्यावृत्तित्वम् अथवा प्रकृतान्यसकलावृत्तित्वम्। नाद्यः। वृक्षत्वेन ज्ञायमानेषु दूरस्थतरुषु तत्संशयानुपपत्तेः। तत्रापि वृक्षान्यघटाद्यवृत्तित्वेन वृक्षवृत्तित्वेन च वृक्षत्वाद्यनुभवसंभवात्। न द्वितीयः। असंभवात्। सर्वस्यापि सर्वापेक्षयान्यत्वेन तदवृत्तिधर्मस्याभावात्। व्याघाताच्च सकलान्यावृत्तेरेतद्वृत्तित्वानुपपत्तेः। न तृतीयः। परस्परा-श्रयादिपातात्। घटादेः सकलस्य वृक्षान्यत्वपरिज्ञाने सति वृक्षवृत्तिधर्मस्य वृक्षान्यसकलावृत्तित्वज्ञानं भवति। घटादेश्च सकलस्यान्यत्वपरिज्ञानं नाम भिन्नत्वज्ञानं तच्च घटाद्यन्यावृत्तित्वेन घटादिवृत्तिधर्मज्ञानं तच्च वृक्षस्य घटाद्यन्यत्वपरिज्ञानं विना न संभव तीति। असम्भवि चैतादृशं ज्ञानं नहि वृक्षव्यतिरिक्तं सर्वं केन चिदसर्वज्ञेन ज्ञातुं शक्यम् न च सर्वज्ञानं विना सर्वसर्वस्य वृक्षान्यत्व-परिज्ञानं सम्भवति। न च तद्विना धर्मस्य तदवृत्तित्वज्ञानं सम्भवतीति।

नापि तृतीयः। अयं घट इत्येतद्घटत्वेन ज्ञातेपि सोऽयं न वेति भेदसंशदर्शनात्। किं च व्यावृत्तेषु घटेष्वनुवृत्तभेदप्रत्ययो दृश्यते भिन्नोऽयं भिन्नोऽयमिति। न च सोऽनुगतभेदं विना सम्भवति। न च वस्तुस्वरूपमनुगतमेकं दृश्यते। ननु व्यावृत्तवस्तुस्वरूपत्वेपि भेदस्यानुगतैकधर्मावच्छेदेनानुगतः प्रत्ययो भविष्यतीति चेतर्ह्यावश्यकस्य तस्यैव भेदत्वेन स्वरूपस्य तदसिद्धिप्रसङ्गः। ननु वस्तुस्वरूपस्य भेदत्वव्यतिरेकेण स एव धर्मो न सिद्ध्यति तस्य भिन्नाभिन्नवृत्तिविकल्पासहत्वादिति चेन्न। अनिर्वचनीयभेदस्यानुपपत्त्यभावात्। तस्यानुपपत्त्येकशरीरत्वात्। किञ्च घटो भिन्नः पटो भिन्नः घटस्य भेदः पटस्य भेद इति वस्तुविशेषणतया वस्तुविशेष्यतया च भेदग्रहणं दृश्यते। न च तत्तस्य वस्तुस्वरूपत्वे युज्यते। एकस्य स्वं प्रति विशेषणविशेष्यभावानुपपत्तेः। किं चास्मिन्स्वरूपभेदपक्षे भिन्नो घट इति सह प्रयोगानुपपत्तिः। पर्यायतापातात्। ननु प्रवृत्तिनिमित्तभेदात् न पर्यायतापत्तिरिति चेत्। न तदनिरूपणात्। ननु किमिति तदनिरूपणं भिन्नतया प्रकाशमानत्वस्यैव भेदशब्दप्रवृत्तिनिमित्तत्वादिति चेत् किमिदं भिन्नतया प्रकाशमानत्वं किं भिन्न इति प्रतीतिविषयत्वं किं वा भिन्न इतिप्रतीतिरूपत्वम्। नाद्यः। ज्ञानं भिन्नमिति प्रयोगानुपपत्तेः। ज्ञानस्य तादृशप्रतीतिविषयत्वाभावात्। न द्वितीयः। घटो भिन्न इति प्रयोगानुपपत्तेः। घटस्य तादृशप्रतीतिरूपत्वाभावात्। एकस्मिन्नेव भेदभ्रमेणायमस्माद्भिन्न इति प्रयोगस्य साधुत्वप्रसङ्गश्च। प्रवृत्तिनिमित्तवैशिष्ट्यस्य सत्त्वात्। ननु तथा प्रमीयमाणत्वं तदिति चेन्न। तादृशधर्मपरिज्ञानदशायामपि भेदशब्दप्रयोगात्। भिन्नो घटो भिन्नतया प्रमीयत इत्यनयोरर्थभेदाभावप्रसङ्गाच्च। नन्वऽन्योन्याभावो भेदपदस्य प्रवृत्तिनिमित्तमिति चेत्तर्हि स एव भेदोऽस्तु किमनेन। न च घटादिपदस्य घटत्वादिकं प्रवृत्तिनिमित्तं भेदपदस्य तु तत्स्वरूपमिति प्रवृत्तिनिमित्तभेद इति वाच्यम्। तत्तद्वस्तुस्वरूपाणामनन्तत्वेन

तदनुपपत्तेः। तस्मात्स्वरूपभेदपक्षोऽनुपपन्न इति भावः। अत्र कश्चिज्जल्पति—यथा भवन्मतेऽभेदस्य वस्तुस्वरूपत्वेपि देवदत्तादिस्वरूपग्रहणेपि तदभेदविषयः संशयोऽनुगतप्रत्ययः सहप्रयोगादिश्चोपपद्यते। एवं स्वरूपभेदपक्षेपि किं न स्यादिति तत्र न तावदभेदस्य स्वरूपत्वपक्षे संशयानुपपत्तिः ज्ञातेपि देवदत्तस्वरूपेऽभेदाज्ञानात् तत्संशयोपपत्तेः। ननु कथं ज्ञातेपि देवदत्तस्वरूपे तावन्मात्राभेदविषयाज्ञानं तिष्ठतीति चेन्न। अन्वयव्यतिरेकाभ्यां कालद्वयसम्बन्धप्रकारकदेवदत्तस्वरूपविषयैन्द्रियकज्ञानस्य कालद्वयसम्बन्धानुपपत्तिज्ञानजन्यशाब्दज्ञानस्य वा तदज्ञाननिवर्त्तकत्वेन तदभावे तदनिवृत्तेरुपपत्तेः। ननु यथानियतान्वयव्यतिरेकाभ्यां कालद्वयसम्बन्धप्रकारकस्वरूपज्ञानस्यैवाभेदज्ञानादिनिवर्तकत्वम्। एवं भिन्नत्वेन ज्ञानमेव भेदसंशयादिविरोधी तया तन्निवर्त्तकं तथा च स्वरूपज्ञाने सत्यपि तादृशज्ञानाभावात्संशयादिरिति चेत्। तत्र यदि भिन्नत्वं नाम भेदवत्त्वं तदसंभवि स्वरूपस्यैव भेदत्वेन धर्मधर्मिभावायोगात्। यदि च घटत्वादिवदखण्डो धर्मस्तदा तेनैव भेदव्यवहारोपपत्तौ न स्वरूपभेदकल्पनया कृत्यमस्ति। नाप्यनुगतव्यवहारानुपपत्तिः। अनिर्वचनीयभेदाभावमादाय तदुपपत्तेः। न चैवं स एवाभेदोऽस्त्विति वाच्यम्। तदाश्रयवस्तुस्वरूपस्य भिन्नत्वानुपपत्तेरभेदात्मकत्वस्याप्यभावे वस्तुन एवासिद्धिप्रसङ्गाद्भेदाभेदात्मकव्यतिरेकेण वस्तुनो रूपान्तराभावात् कल्पितभेदाभावस्य शास्त्रप्रतिपाद्यत्वानुपपत्तेश्च स्वरूपाभेदोऽङ्गीकरणीयः। अनिर्वचनीयभेदाभावमादायैव च सहप्रयोगादेरप्युपपत्तिरित्यलम्॥ १०५॥

ननु मा भूत्स्वरूपं भेदः धर्मस्तु भविष्यति। स च वस्तुस्वरूपे ज्ञातेपि धर्मिप्रतियोगिज्ञानसापेक्षज्ञानस्तदभावे न ज्ञायत इति नोक्तसंशयाद्यनुपपत्तिरिति चेत् स किं धर्मोऽन्योऽन्याभावः। किं वाऽन्य एव पृथक्त्वलक्षणः। नाद्यः सम्भवतीत्याह—

न भेदबुद्धिर्घटते प्रमाणतो
विनाऽपि धर्मिप्रतियोगिसंविदा ।
न भेदबुद्धिं विरहय्य कल्प्यते
तथैव धर्मिप्रतियोगिधीरपि ॥ १०६ ॥

न भेदबुद्धिरिति—अन्योन्याभावलक्षणभेदबुद्धिरपि धर्मिप्रतियोगिसंविदा विना धर्मिज्ञानेन विना प्रतियोगिज्ञानेन च विनेत्यर्थः। इदमस्माद्भिन्नमिति धर्म्यादिघटितस्यैव भेदस्यानुभवात्। धर्म्यादिज्ञानं विना भेदज्ञानं न सिद्धयतीत्यर्थः । अस्तु धर्म्यादिज्ञानं तत्राह—न भेदेति । तथैव यथैव धर्मिप्रतियोगिज्ञानं विना भेदज्ञानं न संभवति । तथैव भेदबुद्धिमिदमिदं न भवतीत्यन्योन्याभावलक्षणभेदबुद्धिं विरहय्य विना धर्म्यादिज्ञानमपि न संभवति । अन्यथा एकस्मिन्नपि वस्तुनि धर्मिप्रतियोगित्वज्ञानं स्यात् । तथा चान्योऽन्याश्रयादिदोषाद्भेदज्ञानं न सम्भवतीत्यर्थः । यद्यपि भेदोऽनुभूयते तथाप्युक्तरीत्या प्रमाणसिद्धत्वाभावान्न वास्तवत्वमित्यभिप्रेत्योक्तम् । प्रमाणत इति ॥ १०६ ॥

पृथक्त्वलक्षणो भेद इति द्वितीयपक्षन्निरस्यति—

परस्पराभावधिया न भेदधी-
र्विनोपपन्ना न तया विनेतरा ।
इतीदमन्योन्यसमाश्रयं यतो
मतिद्वयं तेन तदस्तु कल्पितम् ॥ १०७ ॥

परस्परेति । अन्योन्याभावज्ञानेन विना पृथक्त्वधीर्नोपपन्ना तया पृथक्त्वधिया विनेतराऽन्योन्याभावधीर्नोपपन्ना । इदमस्मात्पृथगिति

धर्मप्रतियोगिघटितमेव पृथक्त्वमनुभूयते । तत्र च धर्मिप्रतियोगिज्ञानस्यान्योन्याभावज्ञानपूर्वकत्वेऽऽत्माश्रयाद्यापातात् पृथक्त्वज्ञानपूर्वकत्वमेव वक्तव्यम् । तथा चान्योऽन्याभावज्ञाने सति धर्मिप्रतियोगिज्ञानसंभवात् पृथक्त्वज्ञानं पृथक्त्वज्ञाने सति धर्म्यादिज्ञानसंभवादन्योऽन्याभावज्ञानमित्यनेन प्रकारेण मतिद्वयमन्योऽन्याभावज्ञानं पृथक्त्वज्ञानं चान्योन्यसमाश्रयं यत इति सम्बन्धः । ननु भेदज्ञानस्य धर्मिप्रतियोगिज्ञानजन्यस्य तत्सापेक्षत्वेपि न धर्म्यादिज्ञानस्य भेदज्ञानापेक्षा । अनुपयोगात् । नचैवं सत्येकस्मिन्नपि वस्तुनि धर्मिप्रतियोगिज्ञानसंभवेन तन्निष्ठभेदप्रतियोगित्वबुद्धिः किं न स्यादिति वाच्यम् । न हि धर्मिप्रतियोगित्वज्ञानं भेदज्ञाने कारणम् । येन भेदज्ञानाभावेन धर्मिप्रतियोगित्वज्ञानं न सम्भवति । सम्भवति चेदेकस्मिन्नपि तज्ज्ञानं स्यादित्यापद्येत । किन्तु वस्तुतो यौ धर्मप्रतियोगिनौ तज्ज्ञानमेव अस्तु वा धर्मिप्रतियोगित्वज्ञानमपि तत्र कारणं तथापि न भेदज्ञानापेक्षा नवैकस्मिन्नमपि तत्त्वज्ञानप्रसङ्गः विद्यमानभेदयोः स्वरूपेण ज्ञायमानयोरेव हि धर्मित्वं प्रतियोगित्वं वा गृह्यते न गृह्यमाणभेदयोः । अतो नान्योऽन्याभावपक्षे ऽन्योऽन्याश्रय इत्याशङ्कामुपसंहारव्याजेनापाकरोति—तेनेति । तस्मादन्योन्यसमाश्रितत्वात् तदन्योन्याभावलक्षणभेदज्ञानं पृथक्त्वलक्षणभेदज्ञानं चेति मतिद्वयमपीत्यर्थः । कल्पितमारोपितविषयम् । एतदुक्तं भवति । इदमस्माद्भिन्नमिति प्रतियोगित्वप्रकारकं हि भेदज्ञानं भवति । पञ्चम्या अवध्यर्थत्वादवधेश्च प्रतियोगित्वात्पूर्वोपस्थितस्यैव च प्रकारत्वं दण्डादौ तथैव दर्शनात् । तथैव भवदङ्गीकृतेश्च । ननु गत्यन्तराभावात्प्रतियोगित्वं पूर्वानुपस्थितमपि प्रकार इति चेन्न । खाण्डनिकं प्रत्येवमुपन्यासस्यानर्हत्वात् । नन्वस्तु पूर्वं प्रतियोगित्वज्ञानं तच्च भेदज्ञानं विनापि विद्यमानभेदस्य स्वरूपेण गृह्यमाणस्य भवतीति नान्योन्याश्रय इति चेन्न । भेदज्ञानं विनापि विद्यमानभेदमात्रेण प्रतियोगित्वज्ञाने मिलितयोः नीरक्षीरयोरपि

परस्परभेदप्रतियोगित्वज्ञानं किं न स्यात् । ननु प्रतियोगितावच्छेदकधर्मप्रकारेण ज्ञायमानयोर्विद्यमानभेदयोरेव परस्परभेदप्रतियोगित्वज्ञानं नीरक्षीरयोश्च भेदसत्त्वेपि न प्रतियोगितावच्छेदकधर्मप्रकारेण ज्ञानमिति न प्रतियोगित्वज्ञानमिति चेत्किं प्रतियोगितावच्छेदकधर्मवानयमितिज्ञानं प्रतियोगित्वज्ञाने कारणमुच्यते । किं वा वस्तुगत्या यः प्रतियोगितावच्छेदको धर्मः तत्प्रकारकं ज्ञानम् । नाद्यः । प्रतियोगित्वज्ञानं विना तदवच्छेदकधर्मवानयमिति ज्ञानानुपपत्तेरन्योऽन्याश्रयात् । न द्वितीयः । अहमित्यात्मत्वाकारेणात्मनि ज्ञायमाने शरीरत्वप्रकारेण च शरीरे ज्ञायमानेपि शरीरात्मनोः परस्परभेदप्रतियोगित्वज्ञानादर्शनात् प्रतियोगित्वज्ञाने वा सर्वेषामपि शरीराद्भिन्नत्वेनात्मनः साक्षात्कृतत्वात् तद्विषयसंशयविपर्ययाद्यनुपपत्तिप्रसङ्गः । किं च शुक्लः पट इति प्रतियोगितावच्छेदकधर्मप्रकारेण ज्ञायमानेपि शौक्ल्येन पटनिष्ठभेदप्रतियोगित्वं गृह्यते । शौक्ल्यपटयोरभेदेनानुभवात् । ननु समवायलक्षणदोषात्तद्ग्रहणमिति चेत्तर्ह्यक्षचरणचरणपरिचरणप्राप्तगुणगुणिविवेकज्ञानदशायामपि तद्ग्रहणं न स्यात् । समवायलक्षणदोषस्य तदापि भावात् तथा चाक्षचरणपरिचरणं व्यर्थमेव स्यात् । किञ्च घटस्य पटभिन्नत्वसंशयदशायां तद्व्यतिरेकनिश्चयदशायां च पटनिष्ठभेदप्रतियोगित्वनिश्चयविरह इति प्रतियोगित्वज्ञानं भेदनिश्चयसाध्यमेव । तथा च भेदज्ञानमन्योन्याऽश्रयाद्यजगरग्रस्तमेवेति । तस्मात्प्रत्यक्षादेरनिर्वचनीयभेदविषयत्वान्न तेनाद्वैतप्रतिपादकवेदान्तबाध इति भावः । अथवा अस्तु प्रत्यक्षादेरपि तत्त्वावेदकत्वं तथापि नाद्वैतसमन्वयस्य तेन बाधः स हि स्वविषयाद्वैतविरुद्धभेदावगाहिमानेनैव बाध्यते न तु मानमात्रेण । प्रत्यक्षादिकं च न तथा वस्तुमात्रविषयत्वादित्यभिप्रेत्य वास्तवमाह किंच प्रतीचीति । अद्वैतवस्तुनि पराचि बाह्यवस्तुस्वरूपे मेयविभागसिद्धेः । अविरुद्धमेयविभागसिद्धेः । ननु कथं प्रत्यक्षादीनां स्वरूपमात्रविषयत्वं

प्रपञ्चनिष्ठस्यात्मप्रतियोगिकभेदस्य परस्परप्रतियोगिकभेदस्य च विषयीकरणादिति चेत् । न तावदात्मप्रतियोगिको भेदो ग्रहीतुं शक्यः। आत्मनः स्वप्रकाशतया प्रमाणविषयत्वासंभवेन तत्प्रतियोगिकभेदस्यापिप्रमाणतो ग्रहीतुमशक्यत्वात् । नापि प्रपञ्चभेदो ग्रहीतुं शक्यः। वस्तुविदारणादन्योन्याश्रयादिदोषग्रस्तत्वात् । क्वचित्प्रतीतेश्चानिर्वनीयभेदविषयत्वेनाप्युपपत्तेरित्यभिप्रेत्याह— आभन्न एवेत्यादिना । तदस्तु कल्पितमित्यन्तेनार्थस्तु पूर्ववत् ॥ १०७ ॥

किं च सफलस्यैव प्रमाणस्य प्रामाण्यं न तु निष्फलस्य जडप्रपञ्चविषयप्रत्यक्षादेश्च न किञ्चित्फलं सम्भवति तदनिरूपणात् । तथा च प्रत्यक्षादेर्निष्फलत्वेनाप्रमाणत्वादपि न तेन वेदान्तबाध इति वक्तुं किं प्रत्यक्षादेरज्ञाननिवृत्तिः फलम् उत प्राकट्यमिति विकल्पाद्यन्निरस्यति —

असन्निवृत्तिर्न च, सन्निवृत्ति-
र्न चोपपन्ना सदसन्निवृत्तिः ।
जडप्रमाणस्य फलं ततोऽपि
न तेन वेदान्तजबुद्धि बाधः ॥ १०८ ॥

असदिति । किन्निवर्त्यमज्ञानमसत् उत सत् किं वोभयरूपमुतानिर्वचनीयम् । नाद्य इत्याह—असन्निवृत्तिरिति । असतो निवृत्तिर्नोपपन्ना । तस्य तुच्छत्वात्। तथा च प्रत्यक्षादिनिवर्त्याज्ञानस्यासत्त्वे तन्निवृत्तेरेवानुपपत्तेः। साफल्यं न भवतीत्यर्थः। न द्वितीय इत्याह–न च सन्निवृत्तिरिति। सतोपि निवृत्तिर्नोपपन्ना सत आत्मवत्सर्वदा सत्त्वनियमात्तथा च तस्य सत्त्वे तन्निवृत्त्यनुपपत्तेः सफलन्न भवतीत्यर्थः । न तृतीय इत्याह—न चोपपन्नासदिति । सदसद्रूपस्यापि वस्तुनो निवृत्तिर्न संभवति । विरोधेन

सदसद्रूपवस्तुन एवाभावादित्यर्थः । न चतुर्थ इत्याह—जडप्रमाणस्येति । प्रमाणानां हि स्वविषयाज्ञाननिवृत्तिरेव फलम् । अनिर्वचनीयाज्ञानस्य जडविषयत्वाभावात् भवद्भिरनङ्गीकाराच्च न तत्प्रमाणस्य तन्निवृत्तिः फलमुपपन्ना न फलत्वेनोपपन्नेत्यर्थः । फलितमाह—ततोऽपीति । यस्मात्सदादिनिवृत्तिर्न फलं ततो हेतोः अपिशब्दात् पूर्वोक्तहेतोरपि तेन प्रत्यक्षादिज्ञानेन वेदान्तजबुद्धिबाधः वेदान्तजन्याद्वयादिबोधबाधो नेत्यर्थः ॥ १०८ ॥

द्वितीयेपि किं प्राकट्यं परप्रकाश्यं ज्ञानफलमुत स्वप्रकाशरूपं नाद्य इत्याह—

असत्प्रसूतिर्न च सत्प्रसूति—<br>
र्न चोपपन्ना सदसत्प्रसूतिः ।<br>
जडप्रमाणस्य फलं ततोऽपि<br>
न तेन वेदान्तजबुद्धिबाधः ॥ १०९ ॥

असदिति । ज्ञानजन्यं प्राकट्यमसत् । उत सत् । उतोभयरूपं नाद्य इत्याह—असत्प्रसूतिरिति । असतः प्रसूतिरुत्पत्तिर्न सम्भवति । न हि शशविषाणं कदाचिदुपपन्नं दृष्टं तथा च प्राकट्यस्यासत्वे ज्ञानजन्यत्वानुपपत्तेर्न तदुत्पत्तिर्जडप्रमाणस्य फलमुपपन्नेत्यर्थः । न द्वितीय इत्याह—न च सत्प्रसूतिरिति । सतोपि प्रसूतिरनुपपन्ना । सत्वादेव न हि सतो घटादेः कदाचिदुत्पत्तिर्दृष्टा । तथाच प्राकट्यस्य सत्वेप्युत्पत्त्यनुपपत्तेः । न तत्प्रसूतिस्तत्फलमित्यर्थः । न तृतीय इत्याह—नचोपपन्ना सदसत्प्रसूतिरिति । विरोधेन सदसद्रूपवस्तुन एवाभावादित्यर्थः । ततः यतः प्राकट्यस्य सदादिरूपत्वे तत्प्रसूतिः फलन्न सम्भवति ॥ १०९ ॥

अस्तु—तर्हि स्वप्रकाशं प्राकट्यं प्रमाणस्य फलमिति चेन्न—प्रमाणफलस्य विषयनिष्ठत्वनियमेन स्वप्रकाशसंविदो जडाश्रितत्वेनोत्पत्त्यनुपपत्तेः । किं च तत्प्राकट्यं व्यापारवतः फलमुत व्यापारशून्यस्य नाद्य इत्याह—

> जडार्थसंविन्न च कुर्वतः फलं
> तदा हि कुर्वत्त्वमपीदृशं भवेत् ।
> अकुर्वतस्तत्फलमित्युदीरय-
> न्विहस्यते दुर्मतिरर्भकैरपि ॥ ११० ॥

जडार्थसंविदिति । जडपदार्थनिष्ठस्वप्रकाशप्राकट्यलक्षणा संवित्कुर्वतः व्यापारवतो न फलं तत्रोपपत्तिमाह—तदा हीति । तदा कुर्वतः फलमङ्गीकारे कुर्वत्त्वं व्यापारवत्त्वं व्यापार इति यावत् । ईदृशं प्राकट्यवत्कुर्वत एव फलं स्यादित्यर्थः । प्राकट्यस्य व्यापारवत्फलत्वे व्यापारस्यापि कार्यत्वाद्व्यापारवज्जन्यत्वं वक्तव्यम् । एवं तस्य तस्यापीति व्यापारानवस्थानात् जागराद्यकालप्रमाणफलानुपपत्तिरित्यर्थः । न द्वितीय इत्याह—अकुर्वत इति । व्यापारशून्यस्य तत्प्राकट्यं व्यापारवत एव कारकत्वात्कारकस्यैव फलजनकत्वात् । अकुर्वतस्तत्फलमितिवदन् बालानामप्युपहास्यो भवतीत्यर्थः । अथवा तादृशसंवित्स्वात्मजनकस्य फलमुत स्वात्माजनकस्य । नाद्यः । स्वात्मजनकत्वं हि स्वजननानुकूलव्यापारवत्त्वं तथा च तत्तद्व्यापारानुकूलतत्तद्व्यापारवत्त्वेनानवस्थाप्रसङ्गः । द्वितीये तदजनकस्य तत्फलमिति वदन् मूढधीरर्भकाणामप्युपहास्य इत्याह—जडेति । कुर्वतः स्वजनकस्य ईदृशं स्वजनकफलमितरत्समानम् । एतच्च प्राकट्यस्य स्वप्रकाशत्वपक्षोक्तदूषणं परप्रकाशत्वपक्षेपि द्रष्टव्यम् ॥ ११० ॥

इदानीं स्वप्रकाशत्वपक्षं परप्रकाश्यत्वपक्षवत्सदादिविकल्पेनापि

दूषयति—

सती न संवित्क्रियते हि सत्त्वा-
न्न चासती तद्वदसत्त्वहेतोः ।
न चोपपन्नं सदसत्त्वमस्या-
स्ततो न कार्यत्वमुपैति संवित् ॥ १११ ॥

सतीति । संविद्विषयनिष्ठस्वप्रकाशप्राकट्यं क्रियते जन्यते । इतरत्स्पष्टम् ॥ १११ ॥

किं चोत्पत्त्यनुकूलशक्तिविशिष्टं प्राकट्यमुत्पाद्यते । उत तदुपलक्षितम् । नाद्यः । शक्तेरपि जन्यत्वप्रसङ्गात् । न द्वितीयः । नभसोपि चूर्णीकरणप्रसङ्गादिति प्राकट्यपक्षे दोषान्तरमाह—

न शक्यमुत्पाद्यमिति प्रशस्यते
तदा हि शक्तेरपि जन्यताऽऽपतेत् ।
अशक्यमुत्पाद्यमितीष्यते यदि
द्रुतं नभश्चूर्णय मुद्गरादिना ॥ ११२ ॥

न शक्यमिति । शक्यमुत्पादनशक्तिविशिष्टं न प्रशस्यते सम्यङ् न भवति । तत्र हेतुमाह—तदा हीति । तदा शक्यस्य जन्यत्वे शक्तेरपि जन्यताऽऽपतेत् । हि यतः शक्तिविशिष्टस्यैव शक्यत्वात् शक्तेश्च जन्यत्वे शक्तिविशिष्टाया एव तस्या जन्यत्वमिति शक्त्यानन्त्यप्रसङ्ग इत्यर्थः । अशक्यमुत्पादनशक्तिशून्यं द्रुतं शीघ्रं चूर्णय घटवत् चूर्णं कुरु अतस्तन्न सम्भवतीत्यर्थः । ननु न कार्यानुकूलव्यापारवदेव कारणं येनानवस्था भवेत् नापि शक्यमेव कार्यं येन शक्तेरपि

न्यतापत्तेत् किन्तु नियतपूर्ववर्त्तिकारणं नियतपश्चाद्भावि कार्यं तथा च न कुर्वत्त्वशक्यत्वादिविकल्पदोष इति चेन्न—पूर्ववर्तित्वं हि प्रागभावावच्छिन्नकालवृत्तित्वं पश्चाद्भावित्वं च कार्यसत्तावच्छिन्न-कालवृत्तित्वं स्वतः कालस्य पूर्वापरभागशून्यत्वात् तथा च प्राग-भावकालयोरकारणत्वप्रसङ्गः कार्यस्य चाकार्यत्वप्रसङ्गः प्रागभावस्य स्वावच्छिन्नकालवृत्तित्वासम्भवात् कालस्य चावृत्तित्वात् स्ववृत्तित्वा-सम्भवाच्च। कार्यस्य च स्वावच्छिन्नकालवृत्तित्वानुपपत्तेः। पूर्वभा-वित्वपश्चाद्भावित्वयोः कार्यकारणस्वरूपापेक्षायामन्योन्याश्रयत्वाच्च। तथा च व्यापारवत एव कारणत्वं शक्यस्यैव कार्यत्वमिति कुर्वत्वा-दिविकल्पदोषस्तदवस्थ एवेति न प्राकट्यं प्रत्यक्षादिज्ञानफलमिति भावः ॥ ११२ ॥

ननु व्यवहारस्तत्फलमिति चेत्तस्य प्रमाणफलस्फुरणजन्यत्वात् हानादिरूपेणाननुगतत्वादसार्वत्रिकत्वाच्चेत्यभिप्रेत्य जडप्रमाणानाम-द्वैतप्रमाणबाधकत्वनिरसनमुपसंहरति—

जडप्रमाणस्य फलानिरूपणा-
ज्जडस्य तत्त्वं न निरूपणक्षमम्।
अतो न मानान्तरमर्थतोऽपि न
त्रयीशिरोवस्तु निराकरिष्यति ॥ ११३ ॥

जडप्रमाणस्येति। जडविषयप्रमाणस्य फलानिरूपणात् न तस्य स्वतो वेदान्तबाधकत्वमित्यर्थः। किं च प्रत्यक्षादिप्रमेयघटादितत्त्व-मपि दुर्निरूपं तथा हि-तत्सत्। उतासत्। उतोभयरूपम्। तत्र त्रेधापि जन्यत्वविनाशत्वदृश्यत्वाद्यनुपपत्तेर्विरोधाच्चातो विषयतोऽपि प्रत्यक्षा-देर्न वेदान्तबाधकत्वमित्याह—जडस्य तत्त्वमिति। न निरूपणक्षमं सदादि-रूपेणेत्यर्थः। अतः यतो जडवस्तुनः स्वरूपमपि सदादिरूपेण न

निरूपणाक्षममतः अर्थतो विषयतोपि नः अस्माकं त्रयीशिरोवस्तु वेदान्तप्रतिपाद्यवस्तु ॥ ११३ ॥

एवमान्तरबाह्यप्रत्यक्षादीनामात्मविषयत्वाभावेन भिन्नवस्तुविषयत्वासम्भवेन प्रपञ्चस्वरूपमात्रविषयतया च वेदान्ताविरुद्धमेयकत्वात् फलवत्वस्य च दुर्निरूपत्वात् प्रत्यक्षादिविषयस्य च दुर्निरूपत्वान्न तैर्वेदान्तबाध इत्युक्तम् । इदानीमस्तु वा कर्तृत्वाद्यवगाहिप्रत्यक्षादेरात्मविषयत्वं बाह्यप्रत्यक्षादेश्च भिन्नप्रपञ्चविषयत्वमस्तु च तादृशप्रत्यक्षेणासङ्गाद्वितीयब्रह्मावेदकवेदान्तानां विरोधः । तथापि न प्रत्यक्षादिना वेदान्तबाधः किन्तु वेदान्तैरेव तद्बाध इत्याह—

**आत्मन्येव समस्तमस्तु यदि वा मानान्तरं तेन च**
**स्पष्टं वेदशिरोविरुद्धमिति च स्वीकुर्महे कामतः ।**
**एवं सत्यपि पूर्वभाविसकलं मानान्तरं बाधते**
**पश्चात्कस्यचिदेव वेदशिरसो जाता परब्रह्मधीः ॥११४॥**

आत्मन्येवेति । यदि वा यद्वा मानान्तरं कर्तृत्वाद्यवगाहिप्रत्यक्षादिकं समस्तमात्मन्येवास्तु आत्मविषयमेवास्त्वित्यर्थः । तेन मानान्तरेण वेदशिरः असङ्गताद्यावेदकवाक्यं विरुद्धमिति स्वीकुर्महे । चकाराद्बाह्यप्रत्यक्षादिकं च भिन्नप्रपञ्चविषयमेवास्तु तेन चाद्वितीयावेदकवेदान्तवाक्यं विरुद्धमिति स्वीकुर्महे । किं च प्रत्यक्षादिकमप्यात्मविषयमेव घटः सन् पटः सन्निति प्रपञ्चानुगततत्कारणपरमात्मसत्ताया विषयीकरणात्तथा च सप्रपञ्चब्रह्मणः प्रत्यक्षादिना विषयीकरणात् तेन ब्रह्मणो निष्प्रपञ्चत्वावेदकवेदान्तवाक्यं च विरुद्धमिति स्वकुर्मह इति योज्यते । तर्हि कथमसङ्गाद्वैतनिष्प्रपञ्चब्रह्मसिद्धिः वेदान्तानां तद्विरुद्ध प्रत्यक्षादिभिर्दूषितत्वादित्यत आह–एवं सत्यपीति । विरोधे सत्यपीत्यर्थः ।

पूर्वभावि वेदान्तापेक्षया पूर्वप्रवृत्तं प्रत्यक्षादेश्च पूर्वप्रवृत्तत्वमज्ञानसिद्धत्वात् वेदान्तजन्यधियश्च पश्चाद्भावित्वं श्रवणादिसापेक्षत्वाद्वेदशिरसो निमित्तात् पश्चाज्जाता पश्चात्वं च प्रत्यक्षाद्यपेक्षया परब्रह्मधीः असङ्गाद्वैतनिष्प्रपञ्चब्रह्मसाक्षात्कारः साप्यतिशुद्धाशयस्यैवेत्याह—कस्यचिदिति ॥ ११४ ॥

ननु कथंवेदान्तजन्यज्ञानस्य परत्वेन प्रत्यक्षादिबाधकत्वमुच्यते । प्रत्यक्षादेरेवासंजातविरोधित्वेनोत्पन्नतया बलवत्वेन तद्बाधकत्वस्य युक्तत्वादित्याशङ्क्य सोपपत्तिकं दृष्टान्तमाह—

**पूर्वोत्पन्नमृगाम्बुविभ्रमधियो बाधं विना नोत्तरं**
**विज्ञानं समुदेतुमूषरभुवो याथात्म्यमावेदयत् ।**
**शक्नोतीति यथा मृगाम्बुधिषणामुन्मृद्नदुत्पद्यते**
**तद्वद्वेदशिरोवचोजनितधीर्भेदभ्रमं ब्रह्मणि ॥ ११५ ॥**

पूर्वोत्पन्नेति । मृगाम्बुविभ्रमो मृगतृष्णिकायामुदकभ्रान्तिः । ऊषरभुवो याथात्म्ये ऊषरभूमित्वमावेदयत् प्रकाशयत् । धिषणा धीः उन्मृद्नत् बाधमानं यथापूर्वोत्पन्नसंजातविरोधिनमपि भ्रान्तिप्रत्ययं निराकुर्वदेवोत्तरम् ऊषरत्वावगाहिज्ञानमुत्पद्यते । तत्कस्य हेतोः तद्बाधं विना अस्योत्पत्त्यनुपपत्तेः पूर्वं तु न तथा तत्काले उत्तरस्यानुत्पन्नत्वादित्यर्थः । दार्ष्टान्तिकमाह—तद्वदिति । ब्रह्मणीति विषयसप्तमी । तथा तत्त्वमादिवेदान्तवाक्यजन्यब्रह्मविषयधीः पूर्वोत्पन्नमसंजातविरोधिनमपि प्रत्यक्षादिजन्यप्रपञ्चभेदभ्रममुन्मृद्नदेवोत्पद्यते । ततः पूर्वोत्पन्नतयाऽसंजातविरोधित्वमकिञ्चित्करमित्यर्थः ॥ ११५ ॥

उत्तरस्य पूर्वबाधकत्वं मीमांसान्यायेनापि दर्शयितुमाह—

**पौर्वापर्ये पूर्वदौर्बल्यमाह**
**षष्ठेऽध्यायेऽर्थसंस्थितो जैमिनिर्यत् ।**
**वक्ष्यामस्तत्सर्वमानीय तुभ्यं**
**बुद्धिं स्वीयां सम्यगत्रावधत्स्व ॥ ११६ ॥**

पौर्वापर्य इति । निमित्तयोः पूर्वापरभावे सति पूर्वस्य दौर्बल्यमिति षष्ठाध्यायप्रमेयविचारे स्थितो जैमिनिराचार्यो यदाह तत्सर्वमानीय तुभ्यं वक्ष्यामः । बुद्धिं सम्यगवधत्स्व । अवहितां कुरु समाहितमना भवेत्यर्थः ॥ ११६ ॥

तदुक्तमेवार्थमधिकरणरचनारूपेण दर्शयति—

**उद्गातृप्रतिहर्तृकर्तृकतया जातौ वियोगौ क्रमा-**
**द्यस्मिन्कर्मविधिप्रयोगसमये तत्रैष नः संशयः ।**
**किं सर्वद्रविणव्ययो भवतु वा संस्थापनं दक्षिणा-**
**हीनस्येति तदा परं बलवदित्यूचे मुनिर्जैमिनिः ॥११७॥**

उद्गात्रिति । उद्गातृप्रतिहर्त्तारौ ऋत्विग्विशेषौ कर्त्तारौ ययोर्वियोगयोस्तयोर्भावस्तत्ता तयेत्यर्थः । वियोगौ हस्तविश्लेषौ यस्मिन् ज्योतिष्टोमादौ कर्मणि कर्मविधिप्रयोगसमये विधीयत इति विधिः अन्योन्य हस्तादानेन हविर्धानतो बहिर्निष्क्रमणलक्षणं तस्य प्रयोगोऽनुष्ठानं तत्समये यस्मिन्कर्मणि प्रसर्पणकाले उद्गातृविच्छेदः प्रतिहर्तृविच्छेदश्च क्रमाज्जात इत्यर्थः । तत्र तस्मिन्कर्मणि । अनेन विषयो दर्शितः संशयमाह—एष इति । नः एष संशयो जायत इत्यर्थः । संशयप्रकारमेवाह—किमिति । सर्वद्रविणव्ययः सर्वस्वत्यागः । किं वा दक्षिणाहीनस्य प्रकृतयागस्य संस्थापनं समाप्तिः किं प्रतिहर्तृविच्छेदनिमि-

तेन यं यागः सर्वस्वदक्षिणः कर्त्तव्यः किं वोद्गातृविच्छेदनिमित्तेनायमदक्षिण एव समापनीय इति संशयो भवतीत्यर्थः । पूर्वपक्षस्तदेत्यनेन सूचितः । यो विच्छेदः पूर्वं संजातः तत्प्रयोज्यमेव कर्त्तव्यमिति पूर्वपक्षे प्राप्त इत्यर्थः । सिद्धान्तमाह—परामिति । पश्चाद्भाविनिमित्तमेव पूर्वापेक्षया बलवत्स्वकार्यं प्रयोजयतीत्यर्थः । अत्रेदं विवक्षितम् । ज्योतिष्टोमे तावदध्वर्य्वाद्यृत्विजामन्योऽन्यहस्तादानेन यज्ञशालातो बहिर्निष्क्रमणं श्रूयते । अध्वर्युं निष्क्रामन्तं प्रस्तोता संतनुयात् तमुद्गाता तं प्रतिहर्ता तं ब्रह्मेति तत्र प्रतिहर्तृविच्छेदे सर्वस्वदक्षिणया यागसमाप्तिः श्रूयते सर्ववेदसं दद्यादिति । उद्गातृविच्छेदे च दक्षिणाराहित्येन यागसमाप्तिः श्रूयते । अदक्षिणः स यज्ञः संस्थाप्य इति । तत्रोभयोर्युगपद्विच्छेदे च ऐच्छिकविकल्पः तुल्यबलवत्त्वादिति निर्णयः। यत्र च पूर्वापरभावेन विच्छेदः तत्र संशयः किं पूर्वविच्छेदः स्वकार्यं प्रयोजयति । उतोत्तरविच्छेद इति । तत्रासंजातविरोधित्वात्प्रबलः पूर्व एव स्वकार्यं प्रयोजयतीति प्राप्ते राद्धान्तः पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवदिति निमित्तयोः पूर्वापरभावे सति पूर्वस्य दौर्बल्यं पूर्वोपमर्दमन्तरेणोत्तरस्यानुपपत्तेः । तथा चोत्तर एव स्वकार्यं प्रयोजयति । तदुक्तं—भट्टपादैः । पूर्वात्परबलीयस्त्वं तत्र नाम प्रतीयताम् । अन्योन्यनिरपेक्षाणां यत्र जन्मधियां भवेदिति ॥ ११७ ॥

एवं पौर्वापर्ये पूर्वदौर्बल्यमित्यस्य भागस्यार्थमुक्त्वा प्रकृतिवदितिभागस्यार्थमाह—

**यद्वत्प्राकृतवैकृतावतितरामन्योन्यसंस्पर्धिनौ**
**धर्मौ बाध्यनिवर्तकावभिमतौ बुद्धौ क्रमेणान्वयात् ।**
**पाठव्यत्ययसम्भवेऽपि हि तयोर्बुद्धिक्रमो विद्यते**
**पूर्वा प्राकृतधर्मधीरितरधीरन्त्या तथैवोत्थितेः ॥ ११८ ॥**

यद्वदिति । प्राकृतवैकृतौ प्रकृत्युपदिष्टो धर्मः प्राकृतः विकृत्युपदिष्टो धर्मो वैकृतः तावतितरामत्यन्तमन्योन्यसंस्पर्धिनावन्योन्यविरोधिनौ । इदं च बाध्यबाधकत्वे हेतुत्वेनोक्तं धर्मौ बर्हिषः कुशमयत्वशरमयत्वलक्षणौ बाध्यनिवर्त्तकाभिमतौ प्राकृतकुशमयत्वं बाध्यम् । वैकृतशरमयत्वं बाधकमित्यभिमतौ । तत्र हेतुमाह—बुद्धिक्रमेणान्वयादिति । पूर्वप्रतीतं हि पूर्वमन्वययोग्यं चरमप्रतीतं तु पश्चात्प्राकृतं च कुशमयत्वादिकं पूर्वप्रतीतमिति पूर्वमन्वीयते । वैकृतं तु शरमयत्वादिकं तद्वैपरीत्येन पूर्वमन्वीयमानं च कुशमयत्वादिकं चरमभावि शरमयत्वादिकमनुपमृद्यैवान्वयाय कल्पते । पूर्वप्रतीतिकाले चरमभाविनोऽनुपस्थितेः उपस्थितयोरेव बाध्यबाधकत्वात् । पश्चादन्वीयमानं च शरमयत्वादिकं पूर्वप्रतीतकुशमयत्वादिकमुपमर्दयदेवान्वेति । पूर्वप्रतीतबाधं विनोत्तरस्य प्रत्येतुमशक्यत्वात्तथा च यथा प्राकृतं विकृतावतिदेशेन प्राप्तं पूर्वप्रतीतं कुशमयबर्हिः विकृत्युपदिष्टेन पश्चादुपस्थितेन शरमयबर्हिषा बाध्यते । तद्वत्पूर्वविच्छेदनिमित्तयागोप्युत्तरविच्छेदनिमित्तयागेन बाध्यत इत्यर्थः । ननु यदि प्रथमोपस्थिततया कुशमयबर्हिषो बाध्यत्वं तर्हि प्रथमं केनचिद्विकृतिप्रकरणे पठ्यमाने तत्रोपदिष्टशरमयबर्हिषः प्रथममुपस्थितनया कुशमयबर्हिषा बाधः स्यादिति चेत्तत्राह—पाठव्यत्ययसंभवेपीति । व्यत्ययो व्यतिक्रमः तयोः प्राकृतवैकृतयोः बुद्धिक्रमो ज्ञानक्रमः तमेव दर्शयति—पूर्वेति । प्राकृतधर्मधीः कुशमयत्वधीः पूर्वा इतरधीः शरमयत्वधीः अन्त्या पश्चाद्भाविनी बुद्धिक्रमो विद्यत इति सम्बन्धः । तत्र हेतुः—तथैवोत्थितेरिति । कुशमयत्वादेः पूर्वत्वेन शरमयत्वादेश्चान्त्यत्वेनोपस्थितेरित्यर्थः । यद्यपि विकृतिप्रकरणस्य कदाचित्प्रथमपाठोस्ति तथापि विकृतिरिति कर्त्तव्यमाकाङ्क्षमाणा स्वसन्निधावुपदिष्टमपि धर्ममसम्पूर्णत्वात् नादौ स्वीकरोति किन्तु प्रकृतावुपदिष्टान् धर्मान् चोदकतः प्राप्तानादौ स्वीकरोति । तदनन्तरमेव स्वसन्निधावुपदिष्टधर्मं स्वीकरोतीति

तद्बुद्ध्योर्नियतपूर्वापरभावस्य सत्त्वात् बाध्यबाधकभावोपि व्यवस्थित एवेति भावः ॥ ११८ ॥

ननु यदि पौर्वापर्ये पूर्वस्य दौर्बल्यं न्यायसिद्धमिति व्युत्पाद्यते तर्हि परदौर्बल्यमपि न्यायसिद्धमङ्गीकर्त्तव्यम् । अस्ति हि पूर्वोत्तर-मीमांसयोः प्रथमावगत्यनुरोधेन चरमावगतं नेयमिति न्यायः ततः किमत्र विनिगमनकारणं तत्राह—

सापेक्षावुदितौ यदा तु भवतः पूर्वापरौ प्रत्ययौ
पूर्वस्तत्र निवर्त्तको भवति तत्रान्त्यो निवर्त्यो यथा ।
वेदोपक्रमजा मतिर्बलवती नर्गादिसंहारजा
वेदोपक्रममुख्यभाग्भवति तत्रर्गादिवाणी गुणात् ॥ ११९

सापेक्षाविति । अन्योन्यसापेक्षावुदितावुत्पन्नौ तत्र तयोर्मध्ये यदा ह्यन्योन्यनिरपेक्षयोः पूर्वापरीभूतप्रत्यययोर्विरोधः तदा तयोर्मध्ये चरम-प्रत्यय एव प्रबलः पूर्वस्य निवर्त्तकः तस्य पूर्वोपमर्दनं विनानुत्पत्तेः यदा पुनरन्योन्यसापेक्षयोस्तयोर्विरोधस्तदा प्रथमप्रत्यय एव प्रबल-उत्तरबाधकः चरमप्रत्ययो हि पूर्वप्रत्ययमुपजीव्य जायमानस्तदविरोधे सत्येवोत्पत्तुमर्हति । अन्यथोपजीव्यविरोधेन तदुत्पत्त्यनुपपत्तेः । प्रथमप्रत्ययस्तु न स्वोत्पत्तौ चरमप्रत्ययमपेक्षते पूर्वमेवोत्पत्तेः । किन्तु क्वचिदुत्पन्नस्य स्वस्य विषयविशेषपर्यवसानायैव तथा चोत्तरनिरपेक्ष-तया पूर्वस्योत्पन्नत्वात् उत्तरस्य च पूर्वसापेक्षत्वेनोत्पन्नत्वेनोपजीव्य-बाधकत्वानुपपत्तेस्तत्र पूर्वमेव बलवदिति न विनिगमनाभाव इत्यर्थः। अत्र पूर्वतन्त्रोदाहरणमाह—यथा वेदोपक्रमेति । वेदशब्देनोपक्रमो वेदोप-क्रमस्तस्माज्जाता तथा उपक्रमस्थवेदशब्दजनितेति यावत् । ऋगादि-संहारजा ऋगादिशब्देन यः संहारः उपसंहारः तस्माज्जाता उपसंहा-रस्थर्गादिशब्दजनितेति यावत् न बलवतीत्यनुषज्यते । एवं प्राबल्या-

दिव्यवस्थायां फलितमाह—वेदेति । तत्रैवं प्राबल्यादिव्यवस्थायां वेदोपक्रममुख्यता उपक्रमस्थवेदशब्दस्य मुख्यार्थप्रतिपादकत्वमित्यर्थः । ऋगादिवाणी उपसंहारस्थ ऋगादिशब्दः गुणात् लक्षणावृत्त्या स्वार्थं बोधयतीति शेषः । उच्चैर्ऋचा क्रियते उपांशु यजुषेत्यादिविधिवाक्ये मन्त्रवाचिनामृगादिशब्दानां प्रयोगात् । यजुर्वेदोत्पन्ना अध्वर्युणा प्रयुज्यमाना अपि ऋच उच्चैः पठितव्या इत्युच्चैष्ट्वादिकं मन्त्रधर्म एवेत्याशङ्कायामसंजातविरोधित्वात्प्रबलमुपक्रममनुसृत्य तदनुसारेणोपक्रमापेक्षोपसंहारस्य नेतव्यत्वात् । उपक्रमे च त्रयो वेदाः असृज्यन्तेत्यादौ वेदशब्दसमावेशात् मुख्यार्थवेदशब्दाऽनुसारेण विध्युद्देशगतानामपि ऋगादिशब्दानां लक्षणया वेदपरत्वमेवेति ऋग्वेदोत्पन्ना एव ऋच उच्चैः पठनीयाः ऋचोपि यजुर्वेदोत्पन्ना उपांश्वेवेत्युच्चैष्ट्वादिकं वेदधर्म एवेति स्थितमिति भावः ॥ ११९ ॥

उत्तरमीमांसायामपि प्रथमश्रुतानुसारेण चरमश्रुतन्नेतव्यमित्यत्रोदाहरणमाह—

ब्रह्मपुच्छमिति वाक्यगामिनो-
र्ब्रह्मपुच्छमितिशब्दयोर्द्वयोः ।
ब्रह्मशब्दबलवत्तरत्वतः
पुच्छशब्दपरिपीडनं मतम् ॥ १२० ॥

ब्रह्मपुच्छमिति । ब्रह्मपुच्छमिति ब्रह्मपुच्छं प्रतिष्ठेति वाक्यस्थयोश्चरमश्रुतपुच्छशब्दस्य मुख्यार्थमादाय ब्रह्मपदस्य स्वप्रधानब्रह्मपरत्वविरोधे सति प्रथमश्रुतब्रह्मश्रुत्यनुरोधेन चरमश्रुतं पुच्छशब्दं मुख्यार्थात्प्रच्याव्य पुच्छवत् पुच्छमितिलक्षणयाधारमात्रपर इति सर्वाधिष्ठानस्वप्रधानब्रह्मैव तत्प्रतिपाद्यमिति संमतमित्यर्थः । तथा च पारमर्षं सूत्रं "मान्त्रवर्णिकमेव च गीयत" इति ॥ १२० ॥

नन्वेमुपक्रमानुरोधेनोपसंहारस्य नेतव्यत्वे बहूनामधिकरणानां बाधः स्यात् तथा ह्याकाशस्तल्लिङ्गादित्यधिकरणेऽस्य लोकस्य कागतिरित्याकाश इति होवाचेत्यत्राकाशशब्दस्य भूताकाशरूढस्यापि प्रथमश्रुतस्यापि सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणमिति वाक्यशेषस्थसर्वभूतकारणत्वलयाधारत्वज्यायस्त्वादिलिङ्गैरेवकारश्रुत्या च ब्रह्मपरत्वं निर्णीतम् । तथा "अत एव प्राण" इत्यत्र प्राण इति होवाचेत्युपक्रमस्थः प्राणशब्दः पञ्चवृत्तिवायुविकारे प्राणे रूढतरोपि सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहत इति वाक्यशेषस्थसर्वभूतसंवेशनोद्गमनादिलिङ्गैर्ब्रह्मपरो निर्णीतः । एवमेवान्यत्रापि गायत्र्यादिशब्दा निर्णीताः तथा च तत्सर्वं पीडितं स्यादिति चेत् यत्र हि वाक्यशेषे उपक्रमस्थप्रमाणापेक्षया बहूनि लिङ्गानि सन्ति तत्र तद्विरोधे प्रथमश्रुतमप्यन्यथा नेयम् । यत्र तु नैवं तत्र प्रथमश्रुतानुरोधेनैव चरमश्रुतं नेतव्यमित्यभिप्रेत्याह—

अथ यद्युपक्रमणमल्पतरं
भवति प्रभूतमुपसंहरणम् ।
बलवत्तदा चरममेव भवे-
दुभयोर्विरोधसमये नितराम् ॥ १२१ ॥

अथ यदीति । अथशब्दः प्रकृतादर्थान्तरपरः । उपक्रमणमुपक्रमः । अल्पतरमल्पप्रमाणोपेतं प्रभूतमनेकप्रमाणोपेतमुभयोरुपक्रमोपसंहारयोः नितरां विरोधसमये उपक्रमणं यद्यल्पतरमित्यन्वयः ॥ १२१ ॥

अयमपि न्यायः सापवाद एव । यत्राल्पधर्मोपक्रमणमपि प्रतिपाद्यपरमनन्यथासिद्धं च तत्रानेकधर्मकोप्युपसंहारोऽन्यथा नेतव्यः । यथा आत्मा वा इदमेक एवाग्र आसीदित्यत्रोपक्रमस्थाव-

धारणश्रुतिबलात् स ईक्षत लोकान्नु सृजा इति स इमाल्ँलोकानसृजत ताभ्यो गामानयत ताभ्योऽश्वमानयदित्यादिवाक्यशेषप्रतिपन्नसविशेषात्मलिङ्गान्यथासिद्धानि बहून्यपि बाधित्वा आत्मशब्दः परमात्मपर इति दर्शित इत्याह—

अथ यत्नुपक्रमणमल्पमपि
प्रतिपाद्यवस्तुविषयं भवति ।
अविवक्षितार्थविषयं चरमं
भवति प्रभूतमपि बाध्यमदः ॥ १२२ ॥

अथेति । अथशब्दः पूर्ववत् । अल्पमप्यल्पप्रमाणोपेतमपि प्रतिपाद्यवस्तुविषयं प्रयोजनवत्त्वेन प्रतिपाद्यवस्तुपरम् । तदा चरममुपसंहरणं प्रभूतमपि बाध्यं तत्र हेतुः— अविवक्षितार्थविषयमिति । प्रयोजनशून्यविषयत्वेन विवक्षितार्थत्वाभावादित्यर्थः । अदः इदं तस्माद्वेदान्तानां प्रतिपाद्यपरत्वात् प्रत्यक्षादीनां च प्रतिपाद्यवस्तुविषयत्वाभावात् प्रत्यक्षादिबाधकत्वं तेषां युक्तमिति सिद्धम् ॥ १२२ ॥

एवं प्रसङ्गागतं विचारं परिसमाप्य प्रकृतं वेदान्तानां प्रत्यक्षादिबाधकत्वं न्यायान्तरेणाप्युपपादयति—

आसन्नवस्तुविषयेण यथाऽक्षजेन
बाधो भवत्यनुमितेर्व्यवधानयोगात् ।
प्रत्यक्त्वमात्रविषयेण तथाऽऽगमेन
युक्तोऽक्षजादिविषयावगमस्य बाधः १२३ ॥

आसन्नवस्त्विति । प्रमात्रव्यवहितवस्तुविषयेणाक्षजेन प्रत्यक्षज्ञानेन व्यवधानयोगादनुमितिविषयस्य व्यवधानसंभवात् व्यवहितवस्तु-

विषयत्वादित्यर्थः । प्रत्यक्त्वमात्रविषयेणातिशयेन प्रत्यक्स्वरूपात्मविषयेणाक्षजादिविषयावगमस्य प्रत्यक्षादिजन्यप्रपञ्चविषयज्ञानस्य लोके हि वह्न्यनुष्णत्वाद्यवगाहिप्रत्यक्षेण तद्विरुद्धतदनुष्णत्वादिविषयानुमितर्बाध्यत इति सर्वसंमतं तत्कस्य हेतोः प्रमात्रव्यवहितवस्तुविषयतया प्रत्यक्षस्य बलत्वात् तद्व्यवहितवस्तुविषयतयानुमानस्य दुर्बलत्वात् । नन्वासन्नविषयत्वस्य प्रबलत्वप्रयोजकत्वे निकटवर्त्तिवह्न्यनुष्णत्वानुमानेप्यासन्नविषयत्वमस्तीति तस्य बाध्यत्वं न स्यादिति चेत् । न ह्यासन्नत्वं निकटदेशवर्तित्वं किन्त्वव्यवधानेन प्रमातृसम्बद्धत्वं तच्च मुख्यममुख्यं च मुख्यं त्वात्मस्वरूपस्यैव प्रमातृस्वरूपतयाऽत्यन्तसन्निहितत्वात् । अमुख्यं तु प्रत्यक्षविषयघटादिवस्तुनः तद्धि स्वसंप्रयुक्तेन्द्रियद्वारानिस्सृतान्तःकरणसम्बद्धत्वेनान्तःकरणोपाधिकप्रमातृसम्बद्धं भवति । अनुमितौ तु विषयेन्द्रियसंयोगाभावात् न तद्द्वाराप्यन्तःकरणोपाधिकप्रमातृसम्बन्धो विषयस्य यत्रापि चक्षुःसंयुक्तवह्न्यादावनुष्णत्वाद्यनुमितिर्भवति तत्रापि नानुमितिविषयस्यानुष्णस्पर्शस्येन्द्रियसम्बन्ध इति न तद्द्वारा प्रमातृसम्बन्धः । तथा च वेदान्तानामपि सर्वान्तरप्रत्यक्स्वरूपविषयतया बलवत्ताप्रयोजकासन्नवस्तुविषयत्वस्य सत्त्वात् प्रत्यक्षादिबाधकत्वमुपपद्यत इति भावः ॥ १२३ ॥

किं च प्रत्यक्षाद्युपजीव्यवस्तुविषयत्वादपि वेदान्तानां बलवत्त्वमित्याह—

**किञ्चाऽऽम्नायवचः प्रमेयबलतः सर्वं प्रमाणान्तरं**
**स्वार्थं साधयतीति तत्सकलमेवाऽऽयत्तमस्मिन्भवेत् ।**
**यद् यत्राऽऽयतते विरोधसमये तेनास्य तद्बाधने**
**सामर्थ्यं न च विद्यते श्रुतिवचोबाधे यथा हि स्मृतेः॥१२४॥**

किंचेति। आम्नायवचः प्रमेयबलतः वेदान्तप्रतिपाद्यसच्चिदानन्दस्वरूपब्रह्मबलात् स्वार्थं स्वविषयं साधयति प्रकाशयति इति यतस्तस्मात्तत्प्रत्यक्षादिप्रमाणमस्मिन्वेदान्तप्रतिपाद्ये ब्रह्मण्यायत्तमधीनं तादृशवस्तुप्रतिपादकवेदान्ताधीनमित्यर्थः। प्रत्यक्षादिप्रमितिर्हि प्रकाशमानैव स्वस्वविषयं प्रकाशयतीति वक्तव्यम्। अप्रकाशमानायास्तस्याः स्वविषयप्रकाशकत्वानुपपत्तेः। प्रदीपादेः प्रकाशमानस्यैव प्रकाशकत्वदर्शनाच्च। न च तत्प्रकाशः प्रमाणान्तरेण भवति। तत्प्रवृत्तिसमये नियमेन प्रमाणान्तरानुत्थानात्। अनवस्थानाच्च। नापि स्वतः सम्भवति जडत्वात्। अतः स्वतः प्रकाशतत्साक्षिवेदान्तमेय ब्रह्मानुभवमहिम्नैव प्रकाशमाना स्वविषयं प्रकाशयति। ब्रह्मणश्च स्वप्रकाशानुभवरूपत्वं वेदान्तैरेव सिध्यतीति भवति प्रत्यक्षादिकं तादृशवेदान्ताधीनमित्यर्थः। अस्तु प्रत्यक्षादेर्वेदान्ताधीनत्वं तथापि प्रत्यक्षादिनैव वेदान्तबाधः किं न स्यात्तत्राह—यदिति। यद्वस्तु यत्र विषये आयतते आयत्तं भवति यदधीनं भवतीत्यर्थः। तेनोपजीव्येन विरोधसमयेऽस्यायत्तस्योपजीवकस्य तद्बाधने उपजीव्यबाधने सामर्थ्यं न विद्यते तत्र दृष्टान्तमाह—श्रुतीति। यथा स्वप्रमाण्ये वेदमपेक्षमाणायाः स्मृतेर्वेदविरोधे तद्बाधकत्वं नास्ति किन्तु स्वयमेव तेन बाध्यते तस्योपजीव्यतया बलवत्वात्। एवं प्रत्यक्षादिना न वेदान्तबाधः किन्तु तेनैव प्रत्यक्षादिबाध इत्यर्थः॥ १२४॥

तस्माद्वेदान्तानामुत्तरप्रमाणत्वादत्यासन्नवस्तुविषयत्वादुपजीव्यत्वाच्च तज्जन्याखण्डाकारवृत्तिः सविषयं प्रत्यक्षादिकं समूलं निवर्तयत्येवेत्युपसंहरति—

**ब्रह्माज्ञानसमुद्भवं ग्रहगणं सातिग्रहं ब्रह्मणः**
**स्वाकारग्रहणेन वेदशिरसो जाता मतिर्बाधते।**

**विद्या वस्तुबलेन जन्म लभते माया तु निर्वस्तुका**
**सा तामुद्भवमात्रतः क्षपयति ध्वान्तं यथा भस्करः॥१२५**

ब्रह्माज्ञानेति। ब्रह्माज्ञानात्समुद्भवो यस्य स तथोक्तः गृह्यन्ते एभिर्विषया इति ग्रहाः चक्षुरादयस्तेषां गणाः ग्रहगणाः अतितरां गृह्यते वाध्यते पुरुषोऽनेनेत्यतिग्रहः शब्दादिविषयस्तेन सहितः सातिग्रहः सविषयं समूलं प्रत्यक्षादिकमिति यावत्। वेदशिरसस्तत्वमादिवाक्यात् जाता मतिरखण्डाकारवृत्तिः बाध्यते। ननु-वेदान्तजन्यब्रह्मज्ञानं सविलासाज्ञानबाधकमित्यनुपपन्नं श्रुतवाक्यानामनुष्ठितविचाराणामप्यज्ञानतत्कार्यानुवृत्तिदर्शनादिति चेत्। न तेषां ब्रह्मैकाकारतज्ज्ञानाभावादित्यभिप्रेत्याह—ब्रह्मणः स्वाकारग्रहणेनेति। अखण्डसच्चिदानन्दस्वरूपब्रह्मणः स्वाकारत्वेन ग्रहणादखण्डसच्चिदानन्दैकाकारविषयत्वादित्यर्थः। ननु वृत्तेरप्यविद्याकार्यतया कथमेतादृशं सामर्थ्यं तत्राह—विद्येति। विद्या शाब्दात्मसाक्षात्कारः वस्तुबलेन स्वविषयबलेन वस्त्वधीना हि विद्येत्यर्थः। माया तु नैवमित्याह—माया त्विति। निर्वस्तुका निस्तत्त्वा। एतदुक्तं भवति—विद्या हि लक्षणावृत्त्या तत्त्वमादिशब्दाज्जायमाना यथा शब्दसामर्थ्यमेव जायते। शब्दसामर्थ्यं चाखण्डसच्चिदानन्दस्वरूपविषयमिति वस्तुस्वभावानुसारिण्येव विद्या तथा च यथा वस्त्वनुसारित्वलक्षणं विद्यात्वं विद्याया वस्त्वधीनमेव मायायाः मायात्वन्तु न वस्त्वधीनं वस्तुविपरीतरूपप्रदर्शकत्वस्यैव मायात्वात्। तथा च वृत्तेरविद्याकार्यत्वेन स्वतः सामर्थ्याभावेपि स्वविषयवस्तुबलात् सामर्थ्यस्य विद्यमानत्वात्। मायायाश्च विषयस्वभावानुसारित्वाभावेन निस्तत्त्वत्वात्। निस्तत्त्वाविद्यानिवर्त्तकत्वमुपपन्नमित्यर्थः। ज्ञानाभ्यासादिकं व्यावर्त्तयति—उद्भवमात्रत इति। क्षपयति निवर्त्तयति। तत्र दृष्टान्तः—ध्वान्तमिति। अन्धकारं यथा सूर्यः स्वोदयमात्रेणैवान्धकारं निवर्त्तयति नान्यापेक्षया। एवं विद्यापीत्यर्थः॥ १२५॥

ननु विद्याऽविद्यां निवर्त्तयतु नाम विरोधात् कर्तृत्वादिसंसारं तु कथं निवर्त्तयेत्। तस्याविद्यात्वाभावात्। विद्याया अविद्यैकनिवर्त्तकत्वादित्याशङ्क्य विद्यया अविद्याया निवृत्तौ तत्कार्यकर्तृत्वादिसंसारस्यापि निवृत्तिर्मूलच्छेदे वृक्षनाशवद्भवतीत्यभिप्रेत्य संसारं वृक्षत्वेन निरूपयति—

**रागद्वेषप्रशाखं विषयगुणसमुद्भासिधीवृत्तिशाखं**
**धर्माधर्मप्रवृत्तिप्रचुरसुखसमुद्वेगभोगप्रवालम्।**
**छिन्द्याः संसारवृक्षं निशितमतिमहाशास्त्रनिक्षेपदक्षः**
**प्रत्यक्तत्त्वस्थलीगं निबिडतमतमोमूललब्धप्ररोहम्॥१२९॥**

रागद्वेषेति। हे शिष्य त्वं संसारवृक्षं छिन्द्या इति सम्बन्धः। संसारस्य कथं वृक्षत्वं वृक्षधर्मवत्त्वादित्याह—रागेति। रागद्वेषावेव प्रकृष्टा प्रधाना शाखा यस्य तं प्रसिद्धो हि वृक्षः प्रधानशाखयैवाविचलं तिष्ठति उत्तरोत्तरं वर्द्धते च संसारोपि रागद्वेषाभ्यामेवोत्तरोत्तरं वर्द्धते अविचलश्चेति तयोः प्रधानशाखात्वरूपणं विषयगुणसमुद्भासिधीवृत्तिशाखं विषयाः शब्दादयः गुण इत्यगुणस्याप्युपलक्षणं शब्दादिविषयेषु समीचीनत्वेनासमीचनत्वेन च समुद्भासिन्यः प्रकाशमाना धीवृत्तय एव शाखा क्षुद्रविटपा यस्य तं शब्दादिगोचरशोभनाध्यासरूपबुद्धिवृत्तिक्षुद्रविटपमित्यर्थः। प्रसिद्धस्य वृक्षस्य क्षुद्रशाखा महाशाखाजन्या भवन्ति शब्दादिगोचरशोभनाध्यासरूपधीवृत्तयश्च रागादिमतां रागद्वेषाख्यमहाशाखाजन्या भवन्तीति तासां क्षुद्रशाखात्वेन रूपणं धर्माधर्मप्रवृत्तिप्रचुरसुखसमुद्वेगभोगप्रवालधर्माधर्मरूपा या प्रवृत्तिः तया प्रचुरौ यौ सुखसमुद्वेगौ सुखदुःखे तद्भोगस्तत्साक्षात्कार एव प्रवालं पल्लवं यस्य तं प्रसिद्धपल्लवं हि मलयानिलादिसहकारिसमागमे सति क्षुद्र-

शाखायां जन्यते। सुखदुःखानुभवोपि धर्मादिना शोभनाशोभनाध्यास रूपितधीवासनायां जन्यत इति तस्य प्रवालत्वरूपणम्। यद्वा प्रवाल-पदेन पल्लवकुसुमफलानां त्रयाणामपि ग्रहणं धर्माधर्मप्रवृत्तेः प्रचुरसु-खसमुद्वेगयोश्च भोगस्य च यथाक्रमं पल्लवादिभावरूपणं पूर्वपूर्वस्यो-त्तरोत्तरजनकत्वात्। ननु रागद्वेषादीनां परमार्थत्वात्तन्निरूपितसंसार-वृक्षोपि परमार्थ एव। अतः कथं विद्यया तन्निवृत्तिस्तत्राह—निबिडेति। अतिशयेन निबिडं दुरवगाहं सदसदादिरूपेण विवेक्तुमशक्यं यत्तमो ऽविद्यातस्मादेव मूलात्कारणात् लब्धः प्ररोह उत्पत्तिर्यस्य तं रागद्वेषा-दीनामसङ्गे आत्मनि परमार्थतोऽसंभवादाविद्यकत्वमेवेतितन्निरूपित-संसारवृक्षोप्याविद्यक इत्यर्थः। ननु संसारवृक्षस्याविद्योपादानतया-विद्याश्रितत्वादात्माश्रितत्वञ्च स्यात्तथा च ब्रह्मणः सर्वाधिष्ठानत्व प्रसिद्धिर्विरुद्ध्यते आत्माश्रयया विद्यया निवृत्तिश्च न स्यादित्या-शङ्क्याह—प्रत्यक्तत्त्वस्थलीगमिति। प्रत्यक्तत्त्वं प्रत्यगात्मा स एव स्थली आश्रयः तन्निष्ठमित्यर्थः। प्रत्यगात्मनोपि विवर्त्तमानाविद्याधिष्ठानत्व-लक्षणोपादानत्वस्य विद्यमानत्वात् सर्वाधारत्वप्रसिद्धिर्न विरुद्ध्यते। विद्यासंसारयोः समानाश्रयत्वं चास्तीत्यर्थः। अथवा संसारवृक्षस्य तमोमूलजन्यत्वे जडत्वेन चैतन्यसम्बन्धाभावादन्धीभावप्रसङ्ग इत्याशङ्क्य चैतन्यसम्बन्धोप्यस्तीत्याह—प्रत्यगिति। एवं संसारस्य निवृत्त्युपयोगित्वेन वृक्षत्वन्निरूप्य तन्निवृत्तिसाधनमाह—निशितेति। निशितं तीक्ष्णं यन्मतिमहाशस्त्रमखण्डसाक्षात्कारलक्षणमहाशस्त्रं तस्य च तैक्ष्ण्यं परमसूक्ष्मब्रह्मविषयत्वात् महत्त्वं च पाशुपतादि-शस्त्रेणाप्यनुच्छेद्यसंसारमहावृक्षच्छेदकत्वात्। तस्य निक्षेपे तदुत्पादने दक्षः समर्थः। अविद्यानिवर्तनक्षमाखण्डसाक्षात्कारलक्षणमहाशस्त्र-वानित्यर्थः। अस्य च त्वमित्यनेन सम्बन्धः। एतदुक्तं भवति। प्रत्यगात्मा-श्रितानाद्यनिर्वचनीयाविद्यायाः पूर्वपूर्वभोगवासनाकर्मचित्रभित्तेः प्रथमं रागद्वेषाध्यासो भवति। ततः केषु चिद्विषयेष्वनित्यदुःखा-

शुचिषु नित्यत्वसुखत्वशुचित्वभ्रान्तिर्भवति। केषु चिच्चोक्तविपरीतेषु विपरीतबुद्धिः ततः कर्तृत्वाद्यभिमानपूर्वकं तत्तदर्थविषयप्रवृत्तिनिवृत्ती भवतः ततो धर्माधर्मौ ततः सुखदुःखानुभवः। तथा च प्रत्यग्विद्यया तदविद्यानिवृत्तौ तत्कार्यरागादिनिवृत्तिद्वारा सुखदुःखानुभवलक्षणस्यानर्थस्य निवृत्तिरिति छिन्द्याइत्यनेन प्रत्यक्षादिविरोधबुद्ध्यैतादृशीबुद्धिर्न त्याज्या विरोधस्य निरस्तत्वात्। किन्तूपादेयैवानर्थनिवृत्तिफलतयेति सूचितम् ॥ १२६ ॥

नन्विन्द्रो मायाभिरित्यादिवाक्यान्मायाया एव जगत्कारणत्वं प्रतीयते नत्वविद्यायाः अविद्या च मायाया भिन्नैव अतः कथं जगत आविद्यकत्ववर्णनमित्याशङ्क्याह—

**प्रत्यग्वस्तुन एव तत्र विषये माया तमः कारणं**
**ध्वान्तं बीजमबोध इत्यपि गिराऽविद्यैव संकीर्त्यते ।**
**तस्या एव विलास एष भवता गुर्वादिभेदान्वितः**
**संक्लृप्तो न तु विद्यते पृथगसौ सान्ध्ये यथा धामनि ॥१२७॥**

प्रत्यग्वस्तुन एवेति। प्रत्यगात्मनस्तत्त्वविषये स्वस्वरूपभूतब्रह्मणि-विषये या अविद्या सैवात्माश्रयविषयाविद्यैव मायादिगिराप्युच्यते। अथवा—प्रत्यग्वस्तुनोऽविद्यैव तत्र विषये तत्र तत्र स्थले इन्द्रो मायाभिः तमः आसीदित्यादौ मायादिगिरोच्यते। तथा च मायायाः कारणत्वोक्तौ अविद्याया एव कारणत्वं पर्यवस्यति। तद्भेदश्चोपरिष्टान्निराकरिष्यते अतो नोक्तदोष इत्यर्थः। नन्वस्तु जडप्रपञ्चस्याविद्यकत्वं तथापि नाद्वैतात्मसिद्धिः गुरुशिष्यादिभावेन चेतनभेदस्य प्रतीयमानत्वादित्याशङ्क्याह—तस्या इति। मायादिशब्दवाच्याविद्याया एष परिदृश्यमानविलासो विवर्त्तभूतः संसारः भवता गुर्वादिभेदान्वितः गुरु-

शिष्यादिभेदसहितः कल्पितः नन्वसौ गुर्वादिभेदः पृथक् परमार्थतोस्तीत्यर्थः । तत्र दृष्टान्तमाह—सान्ध्यमिति । जाग्रत्सुषुप्त्योरन्तरालवर्त्तित्वात्सन्ध्यं स्वप्नं सन्ध्यसम्बन्धि सान्ध्यं भेदव्यपदेश औपचारिकः धाम स्थानं यथा स्वप्नस्थाने गुर्वादिना चेतनभेदः प्रतीयमानोपि कल्पित एव न तु परमार्थः । एवं जाग्रत्यपि ततश्च वस्तुतो जीवस्यैकत्वात् तत्त्वबोधादद्वैतब्रह्मात्मत्वमुपपद्यत इत्यर्थः ॥ १२७ ॥

इदानीं गुर्वादिदृष्टान्तार्थं (१) स्पष्टयति—

मुक्तामुक्तौ विद्वदज्ञौ त्वदन्या-
वाकाशादि क्ष्मावसानं च विश्वम् ।
स्वाविद्योत्थस्वान्तनिष्पन्दनं त-
द्विज्ञातव्यं माग्रहीरन्यथैतत् ॥ १२८ ॥

मुक्तेति । यथाकाशादि पृथ्व्यन्तं विश्वं प्रामाणिकत्वेन प्रसिद्धमपि स्वाविद्योत्थस्वान्तनिस्पन्दनं स्वाविद्याकल्पितान्तःकरणविजृम्भितमेव न तु परमार्थसत्तथामुक्तोऽमुक्तः विद्वान् अज्ञः त्वमन्यः इत्येतदपि स्वाविद्याकल्पितमनोविजृम्भमात्रं विज्ञातव्यम्। अन्यथा परमार्थत्वेन माग्रहीरित्यर्थः । न च प्रपञ्चस्य मनोविजृम्भणत्वे पूर्वोक्तविरोधः । तत्रापि मनो द्वारा अज्ञानस्य प्रपञ्चहेतुत्वेनोक्तेः । अथवा—सर्वमविद्याविजृम्भितमेव । तत्र चान्तःकरणमपि भोक्तृकोटिनिक्षिप्तनया भोग्यविश्वकल्पनहेतुरिति स्वान्तनिष्पन्दनमित्युक्तम् । तथा चोभयमपि विश्वहेतुरित्यर्थः ॥१२८॥

नन्वनादौ काले न कश्चिदपि मुक्त इत्यतिसाहसमस्मदादीनां मुक्तिर्भविष्यतीत्यत्रानाश्वासप्रसङ्गात् गुरुशिष्यादिभावसुखित्वदुःखित्वादिव्यवस्थाविलोपप्रसङ्गाच्च श्रुतिस्मृतिसिद्धा च वामदेवादीनां मुक्तिः तत्कथं मुक्तामुक्तादिभेदः कल्पित इत्यभिप्रायेण शङ्कते—

(१) आदर्शपुस्तकेऽत्रपाठस्य त्रुटिरिव लक्ष्यते ।

कालोऽतीतोऽनादिरेष्यन्ननन्तो
मुक्तामुक्तौ तत्र पूर्वं तथोर्ध्वम् ।
तस्मादेतद्दुर्घटं शङ्कसे चे-
न्माशङ्किष्ठाः स्वप्नदृष्टान्तदृष्टेः ॥ १२९ ॥

कालोऽतीत इति । अतीतकालोनादिः एष्यन्नागामी कालोऽनन्तः तत्रातीतागामिकालयोर्मध्ये पूर्वमतीतकाले मुक्तामुक्तौ आस्तामिति तथोर्ध्वमेष्यत्काले पि मुक्तामुक्तौ भविष्यत इति शेषः । तस्माद्यत अनाद्यतीतकाले आगामिन्यनन्तकाले च मुक्तामुक्तावास्तां भविष्यतश्च तस्मादेतज्जगदेकजीवकमेव वस्तुतः मुक्तामुक्तादिभेदस्तु मनोमात्र विजृम्भित इत्येतद्दुर्घटमसम्भवीति शङ्कसे चेत्तत्र किं मुक्तामुक्तादिभेदान्यथानुपपत्त्या जीवभेदः सिषाधयिषितः किं वा जीवभेदाभावे न्यायसिद्धमुक्तामुक्तभेदस्तद्व्युत्पादकश्रुतिस्मृतिसुखित्वदुःखित्वादिव्यवस्था चेत्येतत्सर्वं नोपपद्यत इति चोद्यते । आद्येपि किं पारमार्थिकजीवभेदः सिषाधयिषित उतौपाधिकतद्भेदः । नाद्यः । तस्य निराकरिष्यमाणत्वात् । द्वितीयेपि किमन्तःकरणं जीवोपाधिरित्यङ्गीकृत्य तद्भेदः सिषाधयिषितः उताज्ञानं नाद्यः तस्य जीवोपाधित्वानुपपत्तेः । अन्यथा सुषुप्तावन्तःकरणाभावेन तदुपाधिकजीवस्यापि नाशप्रसङ्गात् । न च सुषुप्तावप्यन्तःकरणमस्तीति वाच्यम् । तत्सत्त्वे प्रमाणाभावात् । न चोत्थानानुपपत्तिः प्रमाणं, तस्यान्यथापि संभवात् । न च प्राणादिव्यापारस्तत्र प्रमाणं क्रियाशक्तिभावेनापि तदुपपत्तेः । प्राणस्यान्तःकरणभिन्नत्वाच्च । सति संपद्य न विदुः स्वमपीतो भवतीति श्रुत्या सुप्तौ स्थूलोपाधिविलयप्रयुक्तसत्संपत्तिसल्लयश्रवणविरोधाच्च । अस्तु वा सुषुप्ते तत्सद्भावः प्रलये तु नैवं तस्य सर्वकार्यविलयरूपत्वात् । तथा च तदुपाधिकजीवस्यापि नष्टत्वात् कृतहान्यादिदोषप्रसङ्गः । ननु तत्रापि कारणात्मना तत्सत्त्वमिति

चेद्विक्षेपशक्तिमदज्ञानाख्यकारणसद्भावव्यतिरेकेण कारणात्मना सत्त्वस्यानिरूपणात्। किञ्चान्तःकरणमपि स्वातन्त्र्येण किं चैतन्यमुपदधाति उताज्ञानोपहितं। नाद्यः। अज्ञानकार्यस्य तस्य स्वातन्त्र्येण चैतन्योपधातृत्वायोगात्। द्वितीये लाघवादावश्यकाज्ञानमेव जीवोपाधिरस्तु किमन्तःकरणस्याप्युपाधित्ववर्णनेन। नन्वाचार्याणामन्तःकरणशबलिते जीववाचकाहमादिशब्दानां व्युत्पत्तिं दर्शयतामन्तःकरणमेव जीवोपाधिरितिसंमतं तत्कथमन्तःकरणस्य जीवोपाधित्वं निराक्रियत इति चेत् न ह्यहमादिशब्दस्यान्तःकरणशबलिते व्युत्पत्तिप्रदर्शनमात्रेणान्तःकरणस्य जीवोपाधित्वमभिप्रेतं भवति। व्युत्पत्तिर्हि व्यवहारबलाद्भवति। व्यवहारश्च स्पष्टमनुभूयमान इत्यन्तःकरणशबलितस्य स्पष्टमनुभूयमानत्वेन तत्राहमादिशब्दानां व्युत्पत्तिरित्युच्यते न तु तस्य जीवोपाधित्वमभिप्रेत्य। न चैवं सत्यहमादिशब्देन जीवमनूद्य तस्य ब्रह्मात्मत्वविधानानुपपत्तिः। अज्ञानोपहितस्यैवान्तःकरणेनाप्युपहिततया तदनुवादोपपत्तेः। न चैवं किमिति तदभिप्रायो वर्ण्यते। अन्तःकरणस्यैव जीवोपाधित्वं तदभिप्रेतं किं न स्यादिति वाच्यम्। तथात्वेऽन्तःकरणानामनेकतया तदुपहितजीवस्याप्यनेकत्वं स्यात्। तच्च नोपपद्यते अनेकजीवत्वस्य "जीवाः सर्वे त्वां प्रति प्रस्फुरन्तः" [२—१४६] "किंचाज्ञानम्" [२—१५५] इत्यादिना च निराकरिष्यमाणत्वात्। न चान्तःकरणमेकमेवेति शक्यं वक्तुम्। तथात्वे कर्मफलभोगार्थमात्मन उत्क्रान्त्याद्यनुपपत्तिप्रसङ्गात्। तस्मान्नान्तःकरणं जीवोपाधिः। अस्तु तर्ह्यज्ञानं तदुपाधिरित्यङ्गीकृत्य तद्भेदस्सिषाधयिषित इति चेन्न। तथात्वे उपाधेरज्ञानस्यैकत्वेन तदुपहितजीवस्याप्येकतया तद्भेदसाधनानुपपत्तेः। अज्ञानैकत्वं चानुपदमेव वक्ष्यते। न चाज्ञानस्यैकत्वे तस्यैव च जीवोपाधित्वे जीवेश्वरयोरौपाधिकभेदस्याप्यनुपपत्तिः उपाधिभेदाभावादिति वाच्यम्। उपाधिभेदाभावेऽप्यज्ञानप्रतिबिम्बितचैतन्यस्य जीव-

तया तत्प्रतिबिम्बापेक्षितबिम्बचैतन्यस्येश्वरतया तयोर्भेदसम्भवात् । अथवा—अज्ञानं हि त्रिगुणात्मकं तत्राज्ञानस्य सत्त्वमात्रगुणावच्छेदेन ईश्वरोपाधित्वं तदुपहितेश्वरश्च तद्गुणोद्रेकसहायेन जगत्पालनादिकं करोति । गुणत्रयावच्छेदेन जीवोपाधित्वमितिभेदः । अथवा—अज्ञानं हि विक्षेपावरणशक्तिद्वयवत् तत्र तस्य विक्षेपशक्तिप्राधान्येनेश्वरोपाधित्वम् । अत एवेश्वरस्य जगदुपादानत्वविभ्रमः आवरणशक्तिप्राधान्येन जीवोपाधित्वम् । अत एव जीव आवृतस्वभावो भ्रान्त इति विभ्रमः । तथाचैकस्यैवाज्ञानस्य शक्तिभेदेनोभयोरुपाधित्वादुभयभेदः संगच्छते । नन्वेवमपि जीवभेदाभावे पूर्वोक्तसुखदुःखादिव्यवस्था मुक्तामुक्ताव्यवस्था गुरुशिष्यभावव्यवस्था मुक्तादिप्रतिपादकश्रुत्यादयश्च पीड्येरन् । तथा हि यदि जीवः सर्वशरीरेष्वेक एव स्यात्तदा देवदत्ते सुखिनि दुःखिनि वा यज्ञदत्तस्यापि तत्त्वापातः तदभेदात् । ननु यथा नानात्मवादिनामपि प्रतिशरीरमात्मन एकत्वेन हस्तपादादिप्रदेशेष्वात्मन एकत्वेपि पादावच्छेदेनकण्टकवेधादिजनितदुःखं पादावच्छिन्न एवानुभवति न हस्तावच्छिन्नः हस्ते मे वेदनेत्यनुभवात् । एवमेव जीवस्यैकत्वेपि शरीरभेदान्नैकशरीरावच्छिन्ने सुखिनि दुःखिनि वा शरीरान्तरावच्छिन्नस्य सुखित्वादिप्रसङ्ग इति चेत् तर्हि तद्वदेवात्राप्यननुसन्धानप्रसङ्गः अनुसन्धत्ते हि तत्र हस्तादिप्रदेशेषु विद्यमान एक मम आत्मा । पादे मे सुखन्न हस्त इति न चात्र कश्चिन्ममाऽस्मिन् शरीरे सुखमस्मिन् शरीरे दुःखमित्यनुसन्धत्ते अतो जीवैकत्वप्रयोजकानुसन्धानाभावात् न सकलशरीरेष्वेक एव जीवो भवतीति चेत् । तत्र किं शरीरविशिष्टस्य शरीरान्तरे सुखाद्यनुसन्धानमापाद्यते उत शरीरोपहितस्य किं वा तदुपलक्षितस्य । नाद्यः विशिष्टस्य जडतयानुसन्धातृत्वस्यैवाभावात् । न द्वितीयः । कर्णशष्कुलीभेदेन तदुपहितश्रोत्रभेदवत् शरीरपाधिभेदेन तदुपहितजीवस्यापि भिन्नतया तदनुसन्धानाभावोपपत्तेः । न हि वास्तवभेदाभावेनानुसन्धानापादनं

युक्तिमत् भेदमात्रस्य तद्विरोधित्वात्। अन्यथा—देवदत्ते सुश्रवसि यज्ञदत्तस्य बधिरस्यापि शब्दोपलम्भप्रसङ्गः। सर्वश्रवसां त्वम्तुतो भेदाभावात्। न तृतीयः। जीवस्यान्तःकरणावच्छेदेनैव कर्तृत्वं भोक्तृत्वं च। तत्रा चान्तःकरणानामनेकत्वात्। यदन्तःकरणावच्छिन्नेन यत्कर्म क्रियते तदन्तःकरणावच्छिन्नस्य तद्वासनारब्धान्तःकरणावच्छिन्नस्य तत्फलभोक्तृत्वं नान्यस्य धर्माधर्मौ ह्यन्तःकरणसमवायिनौ यदन्तःकरणसमवेतौ यौ तत्रैव सुखदुःखे जनयतः तयोः स्वाश्रयमात्रसमवेत-सुखदुःखजनकत्वस्य परैरभ्युपगमात्। तथा चान्तःकरणान्तरसमवेत-धर्माधर्मफलीभूतसुखदुःखयोर्नान्तःकरणान्तरावच्छिन्नात्मसम्बन्धिता-पादयितुं शक्यते। अत एव देवदत्ते ब्रह्महन्तरि न तत्फलभोक्तृत्वं यज्ञदत्तस्य नापि बहूनां यागादिप्रवृत्त्यनुपपत्तिः। एकस्यापि बहुतरो पाधिभेदेन भोगार्थं बहुधा प्रवृत्त्यनुपपत्तेः। तथा चान्तःकरणावच्छि-न्नस्यैव भोक्तृत्वात्। भोक्तुरेव चानुसन्धानादन्तःकरणानां च भिन्न-त्वात्। नोपलक्षितस्यानुसन्धानप्रसङ्गः। किं च किमनुसन्धानं नाम सुखादिज्ञानमात्रमुत ममेति स्वीयत्वेन तत्परिज्ञानम्। नाद्यः। तस्या-ङ्गीकृतत्वात्। अविद्याप्रतिबिम्बितसाक्षिणा सर्वस्यापि विषयीकर-णात्। न द्वितीयः। शिरःपाण्यादिनिखिलावयवोपलक्षितस्यात्मनो भोगायतनैकशरीरावच्छेदवत् निखिलशरीरोपलक्षितस्य जीवस्य भोगायतनैकशरीरावच्छेदाभावेन ममेति तदनुसन्धानप्रसङ्गायोगात्। किं च यथा त्वन्मते आत्मन एकत्वेपि जन्मान्तरानुभूतस्य जन्मान्त-रेऽननुस्मरणं शरीरभेदात्। एवमस्मन्मतेपि जीवस्यैकत्वेपि शरीर-भेदात् शरीरान्तरेऽनुभूतस्य शरीरान्तरे ऽननुस्मरणमुपपद्यते। ननु तत्र जन्मान्तरत्वमेवाननुस्मरणे प्रयोजकं न शरीरभेद इति चेन्न। विनिगमकाभावात्। ननु विनिगमकाभावासिद्धिः एकस्मिन्नपि बाल्यकौमाराद्यवस्थाभेदन शरीरभेदे सत्यप्यवस्थान्तरानुभूतस्या-वस्थान्तरे ऽनुसमरणदर्शनादिति चेन्न। अवस्थाभेदेन शरीरभेदाभावात्

योहं बालः आसं स एवैतर्हि वृद्धो भवामीति शरीरविषयप्रत्यभिज्ञादर्शनात्। नचेयं भ्रान्तिः बाधकाभावात्। ननु विरुद्धपरिमाणत्वेन भेदोऽनुमीयत इति चेन्न। प्रत्यभिज्ञाप्रत्यक्षविरोधे भेदानुमानस्यानुत्थानात्। न चैवं प्रदीपज्वालादेरप्येकत्वं स्यादिति वाच्यम्। तत्र प्रत्यक्षेणापि भेदस्यानुभूयमानत्वात्। किं च कचिद्विरुद्धपरिमाणवत्त्वेपि बलवद्बाधकवशात् प्रत्यभिज्ञयैकत्वेङ्गीकृते न सर्वत्रापि मानान्तरविरोधे तदङ्गीकर्त्तव्यमिति नियमः। तथा सति विरुद्धधर्मवत्तया प्रदीपादेर्भेदवत् तारमन्द्रादिविरुद्धशब्दाश्रयत्वेन गगनस्यापि तथात्वप्रसङ्गात्। अस्ति चात्र शरीरभेदे बलवद्बाधकं शरीरकारणस्य शुक्रशोणितधातुविशेषस्य भेदः तस्य चावस्थान्तरशरीरेऽभावात् प्रथम शरीरस्थ विनाशकारणाभावाच्च द्वितीयशरीरस्याकस्मिकत्वप्रसङ्गो विशिष्टमातापितृजन्यत्वलक्षणब्राह्मण्यादिव्यञ्जकस्य द्वितीयशरीरेऽभावेन तद्व्यङ्ग्यब्राह्मण्यादेरप्यभावप्रसङ्गश्चेति। किं च न परिमाणभेदस्य स्वाश्रयभेदेन व्याप्तिः। दृश्यते ह्येकस्मिन्नपि पटे संकुचिते विस्तृते च परिमाणभेदः। ननु माभूत्परिमाणभेदः स्वाश्रयभेदप्रयोजकः गुरुत्वभेदस्तु भविष्यति। अस्ति चावस्थाभेदेन गुरुत्वभेद इति चेन्न। एकस्मिन्नपि समानपरिमाणे फलादौ कालभेदेन गुरुत्वभेदस्य सर्वानुभवसिद्धत्वान्नियतभोजकादृष्टवलेन सुवर्णादाविव गुरुत्वभेदोपपत्तेः। अस्तु वा जन्मान्तरत्वमेवाननुस्मरणे प्रयोजकं तच्च प्रकृतेपि सुसंपादं शरीरावच्छेदेनात्मनो योन्यन्तरसम्भूतत्वं हि जन्मान्तरत्वन्नाम तच्चैकजीवकानेकशरीरेष्वप्यस्तीतिकथमनुसन्धानप्रसङ्गः। तस्यास्तत्वदर्शनप्रद्वेषमात्रविजृम्भितमेवैकजीववादे सर्वत्रभोगानुसन्धानप्रसञ्जनम्। ननु सुखादिव्यवस्थासम्भवेपि मुक्तामुक्तत्वव्यवस्था न सम्भवतीति चेन्न। तत्त्वज्ञानात्प्रागमुक्तिः तदूर्ध्वंमुक्तिरिति व्यवस्थोपपत्तेः। नन्वनादौ संसारे एकस्यापि मुक्तिसम्भवे सर्वस्यापि मुक्तिप्रसङ्गः इदानीं संसारानुपलम्भप्रसङ्गश्च। नन्वनन्तजीववादिनामप्यनन्तकल्पाना-

मतीततया प्रतिकल्पं च भूयसामात्मनां मुक्तत्वेन संसारानुपलम्भदोषस्तुल्य इति चेन्न। अनन्तकल्पात्ययेपि इदानींतनकल्पोपलम्भवदनन्तानां मुक्तावप्यमुक्तानामप्यनन्तानां सम्भवात्। न चेतः पूर्वं कस्यापि मुक्तिर्नासीदिति वाच्यम्। सर्वज्ञहिरण्यगर्भादीनामप्यमुक्तौ भविष्यन्मुक्तौ प्रत्ययाभावापातादिति चेत्! न तावदेकमुक्तौ सर्वमुक्तिप्रसङ्गः एकजीववादे संसारिण एकत्वेन सर्वपदार्थाभावेन सर्वमुक्त्यपादनस्यानवसरदुःस्थत्वात्। ननु दृश्यन्ते बहवो जीवा इति चेन्न। दृश्यमानानां शरीरतदवच्छिन्नानामजीवत्वात्। जीवस्य सतोऽविद्यावच्छिन्नस्यैकत्वात्। नापीदानीं संसारानुपलम्भप्रसङ्गः। पूर्वं जीवस्य मुक्त्यभावात्। न च सर्वज्ञानामतीतानेकहिरण्यगर्भादीनामवश्यंमुक्तत्वनियमः। तेषां सृज्यमानाविद्यकसर्वपदार्थपरिज्ञातृत्वेपि सर्वस्वरूपात्मपरिज्ञाने प्रमाणाभावात् तेषामैश्वर्यं च तादृशमेव नत्वनतिशयानन्दस्वरूपमुक्तिः। न च भविष्यन्मुक्तौ प्रत्याशानुपपत्तिः। अनेकात्मवादेऽप्यनादिकालमारभ्य एतावन्तं कालप्रयुक्तस्य स्वस्य मुक्तौप्रत्याशैव एकजीववादेपिशास्त्रप्रमाण्यादेव मुक्तिसद्भावनिश्चयेन तत्प्रत्याशोपपत्तेः। ननु व्यासभगवत्पादादयो मुक्त इति चेन्न। तेषामसंसारीश्वरांशतया संसारप्रसक्तेरेवाभावात्। ते हि स्वेच्छाधीनशरीरपरिग्रहा रामकृष्णादिवदीश्वरा एव सन्तः संसरन्तीव तथा च स्मृतिरपि "द्वापरे द्वापरे विष्णुर्व्यासरूपी महामुनिः। चतुर्भिः सहितः शिष्यैः शंकरोऽवतरिष्यति" इति च। तथा च तेषाममुक्तत्वेपि न संसारानुपलम्भप्रसङ्गः। तस्मान्न मुक्तामुक्तव्यवस्थाया असम्भवः। नन्वेमपि गुरुशिष्यव्यवस्था न संभवति। जीवस्यैकत्वात् गुरुशिष्यभावस्य भेदगर्भितत्वादिति चेन्न। जीवस्यैकत्वेपि कल्पिताचार्यमादाय तदुपपत्तेः। नन्वाचार्यस्य कल्पितत्वे तस्य शुक्तिरूप्यवज्जडत्वेन शिष्यतदुपसदनानुपपत्तिः। शिष्यस्यापि स्वशिष्येणाचार्यत्वेन कल्पिततया तत्तच्छिष्याणामप्येवमेव कल्पितत्वेन निर्जीवकं च जगत्स्यादिति चेन्न। न तावदुपसदनानुपपत्तिः। कल्पि-

तस्यापि विद्वत्तया परिकल्पितत्त्वेन शिष्यस्य तदुपसदनाद्युपपत्तेः। ननु शिष्यस्य तदुपसदनादिसंभवेपि कथमाचार्यस्य कल्पितस्योपदेष्टृत्वम् न च वाच्यं सर्पत्वेन कल्पितस्य दंशनादिजनकत्ववद्रजतत्वेन परिकल्पितस्य कंकणादिहेतुत्ववच्च विद्वत्तया कल्पितस्य विद्योपदेष्टृत्वमिति युज्यते तु कल्पितस्यापि जडस्य बाह्यार्थक्रियाकारित्वं तद्वदेवाचार्यत्वेन परिकल्पितोपि कश्चिदर्थक्रियां करोतु विद्योपदेष्टृत्वन्तु तस्य न भविष्यति। तद्धि विद्यावत एव सम्भवति न त्वविदुषः। ब्रह्मसाक्षात्काराभावे ब्रह्मोपदेष्टृत्वानुपपत्तेः। विद्यावत्त्वं च कल्पितस्यानुपपन्नमिति चेन्न। कल्पितविद्वत्तायास्तत्रापि सत्वात् उपदेशे हि विद्यावत्वमात्रमपेक्ष्यते। न वस्तुतो विद्यावत्वम्। स्वप्नोपलब्धपित्राद्युपदिष्टविद्याया अपि जाग्रति फलजनकत्वदर्शनात्। नापि शिष्यस्यापि कल्पितत्वेन जगतो निर्जीवकत्वप्रसङ्गः। शिष्यदेहस्यान्येन कल्पितत्वेपि तद्देहद्वारा श्रवणादौ प्रवर्त्तमानस्य तदुपलक्षितजीवस्य ब्रह्मस्वभावस्यान्येनाकल्पितत्वात्। वस्तुतस्तु नित्यशुद्धमुक्तस्वभावं सर्वज्ञं ब्रह्मैव स्वाध्यस्तानाद्यनिर्वचनीयाविद्याप्रतिबिम्बभावेन संसारमनुभवति। तद्बिम्बभावेनेष्टे। न च ब्रह्मणः संसारित्वेऽपसिद्धान्तः ब्रह्मैव स्वाविद्यया संसरति स्वविद्यया मुच्यत इत्यङ्गीकारात्। तत्र कदाचित्स्वस्याविद्याकल्पितसंसारनिवृतये आचार्यवानित्यादिशास्त्रादविद्यानिवर्त्तकविद्याया आचार्याधीनत्वमुपश्रुत्यैकेन देहेन प्रतिबिम्बभूतं ब्रह्म श्रवणादिकमनुतिष्ठति। देहान्तरेण बिम्बभूतं सर्वज्ञं ब्रह्मोपदिशतीति न विद्योपदेशानुपपत्तिः। न च सर्वज्ञबिम्बचैतन्यस्यैवोपदेष्टृत्वे तस्य शिष्योपदेशात्पूर्वं स्वस्य विद्यार्थं श्रवणादिव्यापारानुपपत्तिरिति वाच्यम्। ईश्वरस्य प्रवृत्त्यनभ्युपगमात् सर्वेष्वपि हि शरीरेषु जीवचैतन्यवत् बिम्बभूतेश्वरचैतन्यमप्यन्तर्यामित्वेन सन्निहितं तथा च—जीवस्य श्रवणादिशून्यप्रवृत्तावपि नोपदेष्टुरीश्वरस्य श्रवणादिप्रवृत्तिः। नन्वेवं श्रवणादिशून्यदेहेनापीश्वरस्यो

पदेष्टृत्वं किन्न स्यादिति वाच्यम्। शिष्यस्य ह्याचार्यवचनविश्वासो विद्योत्पत्तावङ्गं भवति। विश्वासश्च श्रवणादिप्रवृत्तिमद्देहविशेष एव दृश्यते न तु सर्वत्र तदुपदेष्टापि कृपालुरीश्वरः श्रवणादिमद्देहद्वारेणै-वोपदिशति न देहान्तरद्वारेणेति न कश्चिद्दोषः। न च शिष्यशरीरानु स्यूतान्तर्यामिणापि शिष्यस्य विद्योपदेशः किन्न स्यादिति वाच्यम्। परमेश्वरो हि यथाशास्त्रमेव जीवमनुगृह्णाति शास्त्रं च गुरूपसदना-दिपूर्वकमेव विद्याप्राप्तिमाह। गुरूपसदनादिकं च देहान्तरसापेक्षमि-ति नोपदेष्टुर्देहान्तरोपादानानुपपत्तिः। न चैवं सत्युपदेष्टुर्गुरोर्देहा-भावाद्देहिनश्च जीवस्यानुपदेष्टृत्वादन्योपसदनादिनान्यस्योपदेष्टृ-मित्यसामञ्जस्यापत्तिः। उपदेष्टुरन्तर्यामिणः स्वनियम्यजीवाभिन्न-त्वपरिज्ञानात्। तदुपसदनादिनापि स्वस्योपसन्नत्वाद्यभिमानोपपत्तेः। नचैवमपि जीवस्योपदेष्टृत्वाभिमानो न स्यात्। उपदेष्टुरीश्वराभिन्न-त्वज्ञानाभावादिति वाच्यम्। उपदेष्ट्रन्तर्याम्यधिष्ठितदेहादिद्वारैवो पदेशदर्शनात्। जीवस्य च देहतादात्म्यात् भ्रान्त्या तदभिमानोपपत्तेः। नचैवमपीश्वरस्य सर्वज्ञतयानधिकारिणं प्रत्युपदेशानुपपत्तेरधि-कारिणं प्रत्युपदेशे चाधिकारिणः प्रमितिजनको वेद इतिन्यायेन तदा-नीमेव तत्त्वज्ञानोत्पत्तिप्रसङ्ग इति वाच्यम्। अधिकारिणोप्यन्तः करणमालिन्यादिना असंभावनाग्रस्तत्वेन तदानीं तत्त्वज्ञानाभावो-पपत्तेः। अत एव तत्रासकृत् श्रवणादिकं श्रूयते। नचेश्वरस्योपदेष्टृ-त्वेऽहमेव त्वमित्युपदेशप्रसङ्गः न तु त्वं ब्रह्मेतीति वाच्यम्। तदाका-रज्ञानस्यैव पुरुषार्थत्वेन तथोपदेशोपपत्तेः। दृश्यते च तथाप्युपदेशः त्वं वा अहमस्मि भगवो देवते अहं वा त्वमसीति। नचान्तर्यामिणः उपदेष्टृत्वे प्रमाणाभावः, "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदाँश्च प्रहिणोति तस्मै" "तेने ब्रह्महृदा य आदिकवय" इत्यादिश्रुतिस्मृत्यो-रेव प्रमाणत्वात्। नन्वेवमप्येकस्मिन्कालेऽनेकेषां शरीरिणां सन्यासपूर्वं श्रवणादिप्रवृत्तिर्न संभवति। एकप्रवृत्त्यापि तत्फलसंभवात्। न च

स्वर्गादाविवात्र फलभेदोऽस्ति। अविद्यानिवृत्तिरूपाया मुक्तेरेकरूपत्वात्। न च यथैकस्यापि प्रभोरेकग्रामे फलासंभवशङ्कया ऽनेकग्रामेष्वनेकमनुष्यद्वारा कृष्यादौ प्रवृत्तिः एवं जीवस्याप्येकप्रवृत्त्या फलासंभवशङ्कयान्यद्वारापि प्रवृत्तिरिति वाच्यम्। शास्त्रीयात् साधनात् फलासंभवशङ्कानुपपत्तेरिति चेन्न। शास्त्रीयं हि साधनं साङ्गमनुष्ठितमेव फलायालमिति नियमः। अङ्गं चात्रातिदुर्लभविवेकवैराग्यादिकमति दुष्करगुरुशुश्रूषादिकं च। विवेकवैराग्यादिकं च प्रतिशरीरं भिन्नमेव तदाश्रयान्तःकरणानामनेकत्वात्। तथा च फलासंभवशङ्काभावेप्येकस्मिन्देहे साधनापौष्कल्याशङ्कया युगपदनेकशरीरद्वारा श्रवणादिप्रवृत्तिर्युक्तैव। नन्वेवमपि मुक्तामुक्तप्रतिपादकश्रुतिस्मृतिविरोध इति चेन्न। तस्य निरसिष्यमाणत्वात्। तस्मादनुपपत्तिलेशस्याप्यभावात्। जगदेकजीवमेवेत्येतत्सुघटमेवेत्यभिप्रायेण परिहरति—माशङ्किष्ठा इति। जगदेकजीवमेवेत्यत्र त्वयाशङ्का न कर्त्तव्या। उक्तयुक्तिभिस्तत्संभवस्योपपादितत्वादित्यर्थः। युक्तिभिरुपपादितोप्यर्थो निदर्शनप्रदर्शनं विना न शिष्यबुद्धिमध्यारोहतीति मत्या सकलसंमतनिदर्शनप्रदर्शनमुखेन तदेव हेतुत्वेनाह—स्वप्नदृष्टान्तदृष्टान्तेरिति। स्वप्ने हि द्रष्टृपुरुषाविद्याकल्पितद्रष्टैक एव जीवः अन्ये गुरुशिष्यादिरूपेण प्रतीयमाना जीवाभासा इति सर्वसंमतम्। ततश्च स्वप्ने जीवैकत्वेपि सुखित्वदुःखित्वमुक्तामुक्ताभेदगुरुशिष्यादिव्यवस्थादर्शनात् जाग्रत्यपि तथैवोपपन्नमिति न शङ्का कार्येत्यर्थः॥ १२९॥

स्वप्नदृष्टान्तमेव प्रपञ्चयति—

सुप्तो जन्तुः स्वल्पमात्रेऽपि काले
कोटीः पश्येद् वृत्तसंवत्सराणाम्।
पश्येत्कोटीरेवमागामिनां च
जाग्रत्काले योजयेत्सर्वमेतत्॥ १३०॥

सुप्त इति । निद्राणः स्वल्पमात्रेपि काले क्षणमात्रेपीत्यर्थः । वृत्तसंवत्सराणां गतसंवत्सराणां कोटीः पश्येत् । एवमागामिनां संवत्सराणां कोटीः पश्येदित्यनुषङ्गः । निद्राणो हि पुरुषः निद्रावशेन क्षणमात्र एवातीतानेकसम्वत्सरान् भविष्यन्तश्चानेके तत्र चानेके मुक्ताः अनेके च मोक्ष्यन्त इति पश्यन्ति । न च तत्रातीतानागतसंवत्सराः मुक्तामुक्ताश्च सम्भवन्ति तत्र वास्तवकालाद्यभावात् वास्तवस्य च तदोपलब्धुमशक्यत्वात् । ननु तदा तस्य स्मरणं भविष्यतीति चेन्न । अयं गज एतत्कालीन इत्याविद्यकगजादिविशेषणतयानुभूयमानस्य तस्य स्मर्यमाणत्वानुपपत्तेः जीवस्य चैकत्वान्न वास्तवमुक्तामुक्तत्वादिसम्भवः । तथा च यथा तत्र वस्तुतोऽतीताद्यभावेपि जग्राद्बोधपर्यन्तं तथा प्रतीतिः एवमेव जाग्रत्यपि वस्तुतोतीतागामिकालमुक्तामुक्तत्वाद्यभावेऽपि परमात्मबोधपर्यन्तं प्रतीतिमात्रेण तादृशव्यवहार उपपद्यत इति दार्ष्टान्तिकमाह—जाग्रत्काल इति । एतत्सर्वं कालातीतत्वानतीतत्वमुक्तत्वामुक्तत्वादिकं योजनीयमित्यर्थः ॥ १३० ॥

दार्ष्टान्तिकं प्रपञ्चयति—

कालोऽनादिस्तत्र मुक्तः शुकादिः
कालोऽनन्तो मोक्ष्यते तत्र चान्यः ।
इत्येवं ते बन्धमोक्षव्यवस्था-
संसिद्धिः स्यादापरात्मप्रबोधात् ॥ १३१ ॥

कालोऽनादिरिति । इत्यनेन प्रकारेण एवं स्वप्नवत् ॥ १३१ ॥

एवं जीवस्यैकत्वेप्यविद्यया सुखदुःखगुरुशिष्यभावमुक्तामुक्तव्यवस्थायाः स्वप्न इवातत्त्वबोधे सम्भवात् बन्धमोक्षव्यवस्था घटते अतो नाद्वितीयत्वक्षतिरित्युक्तम् । इदानीं स्वमतं विमलीकरणाय प्रकारान्तरेण बन्धमोक्षव्यवस्थां दूषयितुं मतान्तराण्युपन्यस्यति ।

तत्रादौ चैतन्यांशा एव जीवाः ते च ईश्वराद्भिन्नाः चैतन्यप्रतिबिम्बरूपाः न वास्तवभेदवन्तः । अज्ञानं च चैतन्यांशभूतसकलजीवाश्रयं ब्रह्मविषयमेकं तच्च सर्वेषु जीवेषु जातिरिव व्यक्तिषु परिसमाप्य तिष्ठति । तदेव बाह्याध्यात्मिकसकलानर्थप्रपञ्चहेतुः । तत्र कदाचित्तत्वमस्यादिवाक्याद्यस्य तत्त्वबुद्धिरुदेति तं विहायाज्ञानमन्यमाश्रयते जातिरिव नष्टव्यक्तिं विहायानष्टव्यक्तिमज्ञाने च गते तत्कार्यं सकलानर्थोऽप्यस्य नश्यति ब्रह्मात्मसम्पत्तिश्च भवति अन्यश्च संसरतीत्येवं केचिद्बन्धमोक्षव्यवस्थामाहुः । तन्मतमनुवदति —

**अज्ञानं सकलभ्रमोद्भवनकृत्पिण्डेषु सामान्यव-**
**ज्जीवानां प्रतिबिम्बकल्पवपुषां बिम्बोपमे ब्रह्मणि ।**
**विद्वांसं पुरुषं जहाति भजते विद्याविहीनं नरं**
**नष्टानष्टमिवाऽऽत्मपिण्डमधुना जातिस्तथैके जगुः॥१३२॥**

अज्ञानमिति । सकलभ्रमोद्भवनकृद्बाह्याध्यात्मिकत्रिविधत्रिश्वविभ्रमोत्पत्तिहेतुः । पिण्डेषु गवादिव्यक्तिषु सप्तमी चाधारे सामान्यवत् गोत्वादिसामान्यवत् जीवानामिति सम्बन्धषष्ठी स चाश्रयाश्रयिभावः प्रतिबिम्बकल्पवपुषां चेतनस्य परस्यांशभूतानां बिम्बोपमेऽशीभूते ब्रह्मणि विषयसप्तमी । सामान्यमिव पिण्डाश्रितं ब्रह्मविषयमज्ञानं जीवाश्रितं तच्च सकलहेतुरित्यर्थः । तादृशं चाज्ञानं विद्वांसं ब्रह्माहमस्मीतिवृत्तिसाक्षात्कारवन्तं जहाति परित्यजति विद्या तादृशवृत्तिसाक्षात्कारः तद्विहीनं भजते । तत्र दृष्टान्तः । नष्टेति । नष्टं चानष्टं चेति समाहारद्वन्द्वः आत्मपिण्डं स्वव्यक्तिं नष्टं जहाति अनष्टं भजत इति यथायोग्यं सम्बन्धः इवशब्दो यथार्थः जगुरूचुः ॥ १३२ ॥

अपरे पुनरेवमाहुः-अज्ञानानि ब्रह्मविषयाणि प्रतिजीवं भिद्यन्ते ।

तानि च संसारहेतुः माया चाज्ञानाद् भिन्ना । सा चेश्वराश्रया सैव प्रपञ्चहेतुः । तत्र यदा यस्य तत्त्वज्ञानं भवति । तदा तन्निष्ठमज्ञानं नश्यति ततश्च मुक्तो भवति अन्यश्च स्वाज्ञानेन संसरतीति तन्मत-मनुवदति—

अज्ञानानि बहून्यसंख्यवपुषो जीवान्मुमुक्षूनपि
ज्ञानाज्ञानसमाश्रयाननुयुगं तेषां च निःश्रेयसम् ।
मायामीश्वरसंश्रयामनुगमात्संसारसंवर्तिनीं
केचिद्दैवविघातनिघ्नमनसः स्वीचक्रुरल्पश्रुताः ॥१३३॥

अज्ञानानीति । अज्ञानानि बहूनि प्रतिजीवमन्यानि स्वीचक्रुः अङ्गी-चक्रुः । असङ्ख्यवपुषः अपरिमितान् ज्ञानाज्ञानसमाश्रयान् ज्ञानिनोऽविवेकिनश्च मुमुक्षून् मोक्तुमिच्छूनपि जीवान् स्वीचक्रुः । अनुयुगं प्रतियुगं यदा तत्त्वसाक्षात्कारः तदेत्यर्थः । तेषां जीवानां निश्रेयसं स्वीचक्रुः । नन्वज्ञानस्य प्रतिपुरुषमन्यत्वे कथं तत्कार्यप्रपञ्चस्य साधारण्यमित्याशङ्क्याज्ञानस्य च मायाया एव साधारणेश्वराश्रितायाः सर्वविश्वहेतुत्वात् प्रतिजीवमसाधारणसुखदुःखादिकार्ये सहकारिमात्रत्वात् साधारण्यं सम्भवतीत्यभिप्रायेणाह—मायामीश्वरसंश्रयामिति । ननु किं मायाया जगज्जननसामर्थ्यं स्वतः न किन्त्वीश्वरसम्बन्ध-वशादित्याह—अनुगमात् संसारसंवर्तिनीमिति । ईश्वरसम्बन्धात् सर्वं जगज्जननीं स्वीचक्रुः । मायाया अज्ञानातिरिक्तत्वे अज्ञानतदधी-नमात्रविरोधिज्ञाननिवर्त्यत्वाभावात्पुनरपि तत्प्रयुक्तसंसारः स्यादि-त्यतिकष्टतापत्त्या भ्रान्तप्रलपितमेवैतदित्यभिप्रेत्य तन्मतानुवादावसर एव तदस्वारस्यं दर्शयति—दैवेति । दैवप्रातिकूल्यापहतमनस इत्यर्थः । अत एवाल्पश्रुताः सकलशास्त्राश्राविणः ॥ १३३ ॥

अपरे पुनरित्थं वर्णयन्ति निरवयवनिर्भेदस्वप्रकाशब्रह्माश्रितमेवाज्ञानं तच्चैकमेव चाब्रह्माऽज्ञानसम्बन्धात् तत्कार्यद्वारानेकतां भजते। तत्र यदा यस्यात्मनो ब्रह्मात्मज्ञानं तस्य ब्रह्माश्रितं तदज्ञानन्नश्यति। यस्य तु तन्न तस्य संसारहेतुत्वेन तस्मिन्ब्रह्मण्यज्ञानं तिष्ठति। न च निरवयवे तस्मिन्नेकदाऽज्ञानभावाभावासंभवः। निरवयवेप्याकाशे पक्षितदभावदर्शनादिति तन्मतमनुवदति—

**आकाशे विहगोऽस्ति नास्ति च यथा तद्वत्परब्रह्मणि**
**स्वच्छे चिद्वपुषि स्वभावविमलेऽसङ्गे शिवे शाश्वते।**
**निर्भेदेऽनुदयव्ययेऽनवयवेऽविद्या भवेन्नो भवे-**
**दित्येवं निरवद्यमाहुरपरे पक्षव्यवस्थार्थिनः॥ १३४॥**

आकाश इति। विहगः पक्षी स्वच्छे वस्तुतोऽविद्यादोषशून्ये अत एव स्वभावविमले स्वभावादेव कर्तृत्वादिदोषशून्ये हेत्वन्तरं चाह असङ्गे रागादिदोषशून्ये शिवे सुखरूपे अनुदयव्यये आद्यन्तशून्ये अत एव शाश्वते अनवयवे निरवयवेऽविद्येति च्छेदः। निरवयवे गगने एकदा पक्षितदभावदर्शनात् न निरवयवात्मन्यज्ञानतदभावानुपपत्तिदोषोपीत्यभिप्रेत्याह—निरवद्यमिति। पक्षव्यवस्थार्थिनः स्वमते बन्धमोक्षव्यवस्थार्थिन इत्यर्थः॥ १३४॥

केचित्पुनरेवमूचुः निरवयवे ब्रह्मण्येवाज्ञानं विद्यते तत्सम्बन्धेन चात्मनोनेकात्मत्वं यस्य च तत्त्वज्ञानं तस्य तदज्ञानं नश्यति अन्यस्य तत्तस्मिन् तिष्ठतीत्येतत्सर्वं तुल्यं किन्त्वेकस्मिन्निरवयवे एकदा भावाभावयोर्वृत्त्यनुपपत्तेरन्तः करणतदभावौ द्वारीकृत्यैवाज्ञानतदभावौ ब्रह्मणि वर्तेते न केवलम् ततश्च न भावाभावयोरेकत्र वृत्तिदोषोपीति तन्मतमनुवदति—

शुद्धे वस्तुनि यद्यपि प्रविशति ध्वान्तं मनः कारणं
स्वीकृत्यैव तथाप्युपाधिमपरं ब्रह्मस्वरूपे विशेत् ।
तच्चान्तःकरणं सुसूक्ष्मवपुषा तिष्ठेद् बहिः सर्वदा
चैतन्ये तमसो नियामकमिति स्वीचक्रुरन्ये पुनः ॥१२५॥

शुद्धे वस्तुनीति । शुद्धेऽनात्माविशिष्टे वस्तुनि आत्मनि कारणं जगत्कारणं ध्वान्तमज्ञानं प्रविशति वर्तते यद्यपि तथापि अपरमात्मनोन्यं मनोलक्षणमुपाधिं स्वीकृत्यैवादायैव ब्रह्मस्वरूपे विशेत् वर्तेत । नन्वतःकरणस्योपाधित्वे सुषुप्त्यादौ तदभावात् तदा कथमज्ञानं तिष्ठेत् । किंचान्तःकरणमादाय ब्रह्मण्यज्ञानप्रवेशेऽन्तःकरणस्यापि तदाश्रयत्वं स्यादित्याशङ्कां परिहरति—तच्चेत्यादिना । तत्राज्ञानप्रवेशसमयेऽन्तःकरणं तमसोऽज्ञानस्य चैतन्ये नियामकं आश्रयत्वनियामकं सत् चैतन्यस्याज्ञानाश्रयत्वप्रयोजकं स्यादित्यर्थः । सर्वदा आमोक्षं सूक्ष्मवपुषा कारणात्मना अज्ञानशक्त्यात्मना कार्यात्मना चेत्यपि द्रष्टव्यम् । सुप्त्यादौ सूक्ष्मरूपेण जाग्रदादौ स्थूलरूपेण चेत्यर्थः । बहिः अज्ञानाश्रयचैतन्याद्बहिः, तथा च नान्तःकरणस्याज्ञानाश्रयत्वप्रसङ्गः न वा ब्रह्मणि सुप्त्यादावज्ञानवृत्त्यनुपपत्तिरित्यर्थः । अत्र चान्तःकरणस्याज्ञानवर्त्तननियामकत्वं वदतान्तःकरणाभावोऽज्ञानाभाववर्त्तननियामक इति सूचितम् ॥ १२५ ॥

केचित्त्वेवं वदन्ति—अज्ञानमेकमेव तच्च परमात्माश्रितं परमात्मा चाज्ञानवशात् कार्यद्वारेणानेकात्मकतां भजते तत्र यस्य ज्ञानं तस्य तदज्ञानं नश्यतीत्येतत्सर्वं तुल्यमेव किन्तु विनश्यदज्ञानमंशभेदेनैव नश्यति न तु सर्वात्मना एकस्य सर्वात्मना नाशेऽन्यत्र संसाराभावप्रसङ्गात् अत एव आत्मनि बन्धमोक्षव्यवस्थेति तन्मतमनुवदति—

**अज्ञानि ब्रह्म बुद्धीरनुसरति ततः स्थावरं जङ्गमं च**
**स्वाज्ञानादेव भूत्वा क्वचिदवगतितो मुक्तमन्यत्र बद्धम् ।**
**तच्चाज्ञानं विनष्टं स्थितमथ च तदेवांशभेदोपपत्ते-**
**रेवं सर्वव्यवस्था परमपुरुषगा जाघटीतीति केचित्॥१३६॥**

अज्ञानीति । अज्ञानाश्रयः बुद्धीः अन्तःकरणान्यनुसरति तत्र प्रतिफलतीत्यर्थः । ततः तत्र प्रतिफलनानन्तरं स्वाज्ञानादेव स्थावरं वृक्षादि जङ्गमं मनुष्यादि भूत्वा स्थावरादिभावमापद्येत्यर्थः । क्वचिदुपाधिविशेषेऽवगतितः तत्त्वसाक्षात्कारान्मुक्तं भवतीति शेषः । अन्यत्र तत्त्वबोधरहितस्थले बद्धं संसारि भवतीति शेषः । नन्वज्ञाननाशाभावे कथं मुक्तिस्तत्राह—तच्चेति । तद्ब्रह्माश्रितं पुनरन्तःकरणादिरूपेण परिणतं चाज्ञानं विनष्टमवगतित इत्यनुषङ्गः । नन्वज्ञानस्य नष्टत्वे कथमन्यत्र संसारस्तस्यैकत्वादित्यत्राह—अथ च तदेव स्थितमिति । अथाप्यज्ञानस्य नष्टत्वेपीत्यर्थः । तदेवाज्ञानं तिष्ठति । नन्वेकस्यैव तदा नष्टत्वं विद्यमानत्वं चानुपपन्नं तत्राह—अंशभेदेति । अंशभेदसंभवादुपपद्यत इत्यर्थः । ततश्चैवमेव बन्धमोक्षव्यवस्था संभवतीत्याह—एवमिति । अज्ञानस्यांशभेदेन नाशानाशाभ्यामित्यर्थः । सर्वव्यवस्था-बन्धमुक्त्यादिव्यवस्था परमपुरुषगा परमात्मविषया जाघटीति । भृशमुपपद्यते केचिदाहुरिति शेषः ॥ १३६ ॥

केचित्त्वेवमाहुः—यथा लोके दाशः स्वेच्छया कांश्चित् मत्स्यान् प्रति जालं प्रसारयति कांश्चित्प्रति संकोचयति । एवमेवेश्वरः कर्मसहायः सन् स्वेच्छया बन्धनीं मायां कांश्चिदज्ञानिनो जीवान् प्रति प्रसारयति कांश्चित् विदुषः प्रति संकोचयति मिथ्या मायैव च बाह्याध्यात्मिकसकलप्रपञ्चकारणमज्ञानं तु भगवत्तत्त्वावारकमेव न विक्षेपहेतुः सा च माया सत्या वास्त्विति तन्मतमनुवदति--

बाह्याध्यात्मिकवस्तुजातजननी माया हरेर्बन्धनी
शक्तिर्दाशकजालवत्प्रसरणं प्राप्नोत्यविद्यावतः।
जीवान्संकुचतीच्छया भगवतः सत्याऽस्तु मिथ्याऽथवा
संकोचश्च विलक्षणश्च भवतः स्वाभाविकावित्यपि॥१३७॥

बाह्याध्यात्मिकेति। बाह्यं साधारणं वियदादि आध्यात्मिकं प्रत्यात्मनियतं सुखदुःखादि तदुभयवस्तुविशेषजननी अत एव बन्धनी जीवस्य संसारकरी परमेश्वरस्य शक्तिः। अनेन मायास्वातन्त्र्यं निरस्तम्। दाशकजालवत्। दाशो वागुरिकः स्वार्थे कः तस्य जालं वागुरा यथा मृगादीन् प्रति प्रसरणं प्राप्नोति संकुचति च तद्वद्भगवतः कर्मसहायस्येश्वरस्येच्छयाऽविद्यावतोऽविवेकिनो जीवान् प्रतिप्रसरणं प्राप्नोति। ते चेश्वरेच्छया प्रसारितमायाबन्धेनावृताः सन्तः स्वर्गनरकादिगर्ते पतन्ति। यदा त्वीश्वरार्पणबुद्ध्यानुष्ठितयज्ञादिना तेषां भगवान् तुष्यति। तदा तत्कृपावशात् बन्धनी माया तान् प्रति संकुचति निवर्तते। ननु मायाया अज्ञानान्यत्वेन ज्ञाननिवर्त्यत्वं न स्यादित्याशङ्क्य भगवदनुग्रहादेव तन्निवृत्तेरङ्गीकृतत्वादिष्टापत्तिः। ज्ञानानिवर्त्यत्वेपि न क्षतिरिति परिहरति—सत्यास्त्विति। अथवेत्यनास्थायां वस्तुतस्तु सत्यैवेत्यर्थः। नन्वेवं सति ज्ञानस्योपयोगो न स्यात्तस्य सत्यनिवर्तकत्वाभावादित्याशङ्क्य भगवत्समर्पितकर्मादिना शुद्धाशयस्य ज्ञानिन एव भगवदनुग्रह इत्येतावन्मात्रे तस्योपयोगात्। सत्यत्वेपि तदुपपत्तिरित्याह—संकोच इति। विलक्षणः विकासः अस्मिन्पक्षे एकस्य विद्यमानस्य निवृत्त्यनुपपत्तिः। संकोचरूपत्वान्निवृत्तेरित्यर्थः। इत्यपि केचित्स्वीचक्रुरिति शेषः॥ १३७॥

मण्डनमिश्रादयस्त्वेवमाहुः—विक्षेपसंस्कारलक्षणैवाविद्या सैव निखिलजगत्कारणं न तु तदुपादानभूता आमोक्षं दण्डायमाना काचि-

दविद्यास्ति। सा च जीवाश्रया ब्रह्मविषया प्रतिजीवं भिन्ना च प्रवाहरूपेण चानादिः ज्ञानकर्मसमुच्चयाच्च तन्निवृत्त्या मोक्षः तद्रहितानां च संसार इति तन्मतमनुवदति—

संस्कारभ्रमसन्ततिं प्रतिनरं भिन्नां परब्रह्मणि
स्वीचक्रुर्विषये प्रवाहवपुषाऽनादिं तमः केचन ।
तामुच्छिद्य समुच्चयेन घटते मोक्षाय कश्चिन्नरः
कश्चित्तद्विरहेण संसरति ना जीवाश्रया सेति च॥१३८॥

संस्कारेति। संस्कारः विक्षेपसंस्कारः भ्रमो मिथ्याज्ञानं तयोः सन्ततिः प्रवाहः तां प्रतिनरं प्रतिजीवं परब्रह्मणि विषये परब्रह्मविषयिणीमित्यर्थः। ननु संस्कारस्य भ्रमस्य च जन्यस्य कथमनादिप्रपञ्चकारणत्वं तत्राह—प्रवाहेति। प्रवाहरूपेणानादिं प्रवाहानादित्वं नाम संस्कारभ्रमान्यतरव्याप्तकालत्वम्। तथा च जगतोपि प्रवाहरूपेणैवानादित्वात्प्रवाहरूपेणानादिसंस्कारजन्यत्वं युज्यत इत्यर्थः। केचन्मण्डनादयः। उक्तविशेषणविशिष्टां संस्कारभ्रमसन्ततिं तमः स्वीचक्रुरिति सम्बन्धः। तन्निवर्त्तकमाह—तामिति। संस्कारभ्रमसन्ततिं समुच्चयेन ज्ञानकर्मसमुच्चयेनोच्छिद्य निरस्य मोक्षाय घटते मुक्तो भवतीत्यर्थः। तद्विरहेण ज्ञानकर्मसमुच्चयविरहेण ना नरः जीव इत्यर्थः। सा च जीवाश्रयेत्याह—जीवाश्रयेति। सा संस्कारभ्रमसन्ततिः इति च स्वीचक्रुरित्यनुषङ्गः॥ १३८॥

एवं सप्तपक्षानुपन्यस्य तत्राद्यपक्षद्वये चाज्ञानस्य प्रत्यगात्माश्रयत्वमङ्गीकुर्वन् जीवभिन्नब्रह्मविषयत्वं साधकाभावेन निराकर्त्तुं विकल्पयति—

अज्ञस्तावत्प्रत्यगात्माऽहमज्ञ
इत्येवं नः सिध्यति स्वप्रकाशात्।

अज्ञातं तु ब्रह्म सिध्येत् कुतो वः
सम्यग्ज्ञानाद्भ्रान्तितः स्वप्रकाशात् ॥१३९॥

अज्ञस्तावदिति । अज्ञः अज्ञानाश्रयः तावदिति वाक्यालंकारे प्रत्यगात्मा तावन्नोस्माकं सर्वेषां जीवानामज्ञः सिद्धयति । एवं स्वप्रकाशादिति सम्बन्धः । एवंशब्दार्थमाह—अहमज्ञ इतीति । अहमज्ञ इत्यज्ञानाश्रयत्वेन स्वस्य प्रतीचो भानादित्यर्थः । एतस्मादिति पाठः सुयोजः । अज्ञातमज्ञानविषयस्तु ब्रह्म न कुतः अस्मात्साधकात् सिद्धयेदित्यर्थः । कुत शब्दपरामृष्टान्विकल्पानाह—सम्यग्ज्ञानदिति । किं प्रमाणज्ञानादज्ञातं ब्रह्म सिद्धयेत् किं वा भ्रान्तिज्ञानात् । अथवा स्वप्रकाशरूपानुभवादितिविकल्पार्थः ॥ १३१ ॥

तत्राद्यं दूषयति—

सम्यग्ज्ञानाद्ब्रह्मणः सिद्धिपक्षे
जाड्यं तस्य स्याद्घटादेर्यथैव ।
सम्यग्ज्ञानाद्ब्रह्मणोऽज्ञानसिद्धौ
तस्यापि स्यात्सत्यता तद्वदेव ॥१४०॥

सम्यग्ज्ञानादिति । प्रमाणज्ञानादज्ञातब्रह्मणः सिद्ध्यङ्गीकारे तस्य ब्रह्मणो यथा घटादेः प्रमाणवेद्यत्वेन जाड्यं तद्वज्जडत्वं स्यादित्यर्थः । ननु भवद्भिरपि तस्य वेदान्तप्रमाणवेद्यत्वमङ्गीक्रियत इति चेन्न । स्वयंप्रकाशप्रत्यगभिन्नस्य वेदान्तजन्याखण्डाकारवृत्तिमात्रविषयत्वस्यैव स्वाकारसमर्पकत्वलक्षणस्यास्माभिरङ्गीकारात् । तर्हि तादृशमेव प्रमाणवेद्यत्वमस्माभिरप्यज्ञातब्रह्मणः स्वीक्रियत इति चेन्न त्वन्मते स्वप्रकाशप्रत्यगभिन्नस्य तद्विषयचैतन्यप्रकाशं विना तत्सिद्ध्यनुपपत्तेरित्यर्थः । दूषणान्तरमाह—सम्यग्ज्ञानाद्ब्रह्मणोऽज्ञानसिद्धाविति ।

अज्ञानेतिच्छेदः । ब्रह्मणोऽज्ञानसिद्धौ ब्रह्मविषयाज्ञानसिद्धौ तद्वत् ब्रह्मवत् अज्ञातस्य ब्रह्मणः प्रमाणसिद्धौ नागृहीतेति न्यायेनाज्ञानस्यापि तस्मात्सिद्धिर्वक्तव्या । तथा च तदपि ब्रह्मवत् वास्तवं स्यादित्यर्थः । ननु यथा युष्माकमज्ञानस्यानुमानादिप्रमाणगम्यत्वेपि न वास्तवत्वं तद्वत्स्यादिति चेन्न । यतोऽस्माभिः प्रमाणेनाज्ञानस्याभावव्यावृत्तिरेव क्रियत इत्यङ्गीक्रियते । ननु न प्रमाणेनाभावव्यावृत्तिः कर्त्तुं शक्या तस्याकारकत्वाद्व्यावृत्तेरनादित्वाच्च । न चाभावव्यावृत्तिबोधः क्रियत इति वाच्यम् । तत्र किं प्रमाणेनाभावव्यावृत्तिमात्रमेव बोध्यते । उत व्यावृत्तिविशिष्टमज्ञानमपि । नाद्यः । केवलं व्यावृत्तिरित्यप्रतीतेः प्रत्येतुमशक्यत्वाच्च । न हि धर्म्यविशिष्टा व्यावृत्तिः क्वचित्प्रतीयते । द्वितीयेऽज्ञानस्यापि प्रमाणवेद्यत्वममतमेवेति चेन्न । प्रमाणं ह्यज्ञातांशे प्रमाण्यमश्नुते न तु ज्ञातांशेप्यज्ञानं च स्वप्रकाशानुभवरूपमात्माश्रितं तेन सिद्धमेव अतो नानुमानादिकमज्ञानांशेपि न प्रामाण्यं भजते । येनास्मन्मते तस्य प्रमाणिकत्वेन वास्तवत्वप्रसङ्गः । किन्तुभावत्वोपादानस्याभावव्यावृत्तिमात्रांश एव नैवं त्वन्मतेऽज्ञातत्वं ब्रह्मणः केनचिन्सिद्धं तस्यैवाद्यविचारणादित्यर्थः ॥ १४० ॥

द्वितीयं दूषयति—

**भ्रान्तिज्ञानाद्ब्रह्मणः सिद्धिपक्षे**
**तस्यापि स्यात्कल्पितत्वं तमोवत् ।**
**अज्ञातं चेद् ब्रह्म नः स्वप्रकाशं**
**मा भाषिष्ठाः नानुभूतिस्तथा नः ॥ १४१ ॥**

भ्रान्तिज्ञानादिति । भ्रान्तिज्ञानादेवाज्ञातब्रह्मणः सिद्ध्यङ्गीकारे तस्य

ब्रह्मणोपि तमोवद्विशेषणीभूताज्ञानवत् कल्पितत्वं स्यादित्यर्थः । तृतीयमनूद्यासंभवेन दूषयति—अज्ञातमिति । अज्ञानविषयो ब्रह्म नो ऽस्माकं जीवानां स्वप्रकाशं चेत्स्वस्य प्रतीचः प्रकाशेनैव प्रकाश इति चेत् मा संभाषिष्ठाः मैवं वद यतो नोऽस्माकं तथा स्वप्रकाशत्वेनानुभूतिः अज्ञातब्रह्मणः ॥ १४१ ॥

मायाऽज्ञानातिरिक्ता ब्रह्म तदाश्रय इति ब्रह्मणोमायावित्वं तन्मायावित्वमपि ब्रह्मणोऽज्ञानविषयत्ववत्साधकाभावेन दूषणीयमित्यतिदिशति—

अज्ञातत्वे यानवोचाम दोषान्

मायावित्वे ब्रह्मणस्तानवेहि ।

मिथ्याज्ञानात्स्वप्रकाशात्प्रमाणा-

त्संसिद्धिः स्यात्तस्य तत्कथ्यतां नः ॥१४२॥

अज्ञातत्व इति । ब्रह्मणोऽज्ञातत्वपक्षे यान् दोषान् जडत्वापत्त्यादीनवोचाम तान्दोषान्मायावित्वेपि जानीहि साधकविकल्पस्यात्रापि संभवादित्यर्थः ॥ १४२ ॥

तानेव दोषान् वक्तुं पूर्ववद्विकल्पयति—

मिथ्याज्ञानाद्ब्रह्मणः सिद्धिपक्षे

मायेव स्यात्कल्पितं तच्च तद्वत् ।

मानादिष्टं ब्रह्म मायावि चेद्वो

मायायाः स्यात्सत्यता जाड्यमस्य ॥१४३॥

मिथ्याज्ञानादिति । नोऽस्माकं मिथ्याज्ञानात्तस्य मायाविब्रह्मणः

संसिद्धिः स्यादथवा प्रमाणात् उत स्वप्रकाशादिति क्रमो द्रष्टव्यः। तत्केन साधनेन संसिद्धिः स्यादित्येतदाद्यपक्षद्वयं पूर्ववद्दूषयति— मिथ्याज्ञानादिति । ब्रह्मणो मायाविनः तद्ब्रह्म तावदितिवाक्यालङ्कारे। तद्वदितिपाठे तद्वत् ब्रह्मवत् मायायाः सत्यता स्यादिति सम्बन्धः। इष्टं सेद्धुमिति शेषः। वः पूर्वपक्षिणाम् । अस्मिन्पक्षेपि मायायाः सत्यता स्यात् प्रमाणगम्यत्वात्। तथा च तत्कार्यस्यापि सत्यतया निवृत्त्ययोगात्। निवृत्तावप्यात्यन्तिकनिवृत्त्ययोगात्। पुनरपि कदाचित्संसारः स्यादित्यर्थः। प्रमाणगम्यत्वादेवास्य ब्रह्मणोपि जाड्यं स्याद् घटादिवदित्यर्थः ॥ १४३ ॥

तृतीयमनुवदति—

तन्मायावि ब्रह्म चेत्स्वप्रकाशं
मायाऽपि स्याद्ब्रह्मवत्स्वप्रकाशा ।
मायां पश्येद्ब्रह्म चेत्स्वप्रकाशं
तत्रापि स्यात्स्वानुभूत्या विरोधः ॥ १४४ ॥

तन्मायावीति। मायावि तद् ब्रह्म नः स्वप्रकाशं चेदित्यर्थः। तत्र किं मायाविशिष्टं ब्रह्म नः स्वप्रकाशम्। उत मायोपलक्षितम्। नाद्य इत्याह—मायाऽपीति। अन्यथा मायालक्षणविशेषस्यास्वप्रकाशत्वे तद्विशिष्टब्रह्मणोपि स्वप्रकाशत्वं न स्यादित्यर्थः । द्वितीयमनुवदति मायां पश्येदिति । मायासाधकं ब्रह्मैव नः स्वप्रकाशं न तु मायाऽपीति चेदित्यर्थः। तत्र पूर्वोक्तमनुभवासंभवमेव दूषणमाह—तत्रापीति। मायोपलक्षितं ब्रह्मैव स्वप्रकाशमित्यस्मिन् पक्षेऽपि प्रत्यगभिन्नस्य ब्रह्मणः स्वप्रकाशतया प्रतीचोऽनुभावाभावादेव विरोध इत्यर्थः ॥ १४४ ॥

अननुभवमेव व्यतिरेकदृष्टान्तपूर्वकमाह—

आत्मा मूढः स्वप्रकाशो यथायं
नैवं मायि ब्रह्म नः स्वप्रकाशम् ।
अज्ञादन्यद्ब्रह्म चेत्स्वप्रकाशं
द्वे विस्पष्टे स्वप्रकाशे स्फुरेताम् ॥ १४५ ॥

आत्मेति । यथाऽयमात्मा प्रत्यगात्मा मूढः अज्ञानाश्रयस्वप्रकाशः अहमज्ञः इतिस्वानुभवगम्यः एवं मायि मायावि ब्रह्म नः स्वप्रकाशं स्वानुभवगम्यं न भवतीत्यर्थः। ननु प्रत्यगात्मवद् ब्रह्मापि नः स्वप्रकाशमेवेति वदन्तं प्रत्याह—अज्ञादन्यदिति । अज्ञादज्ञानाश्रयात्प्रतीचः यद्यज्ञानाश्रयप्रत्यगात्मव्यतिरेकेण मायावि ब्रह्मापि नः स्वप्रकाशं स्यात् स्वानुभवेन प्रतीयात् तदास्माकं शास्त्रश्रवणविधुराणामपि प्रत्यक्षेणानुभूयमानवस्तुद्वयवदज्ञमायाविनोरुभयोरपि विविक्तत्वेनापरोक्षप्रतीतिः स्यादित्यर्थः ॥ १४५ ॥

ननु पुरुषान्तरसंवेदनस्य स्वप्रकाशत्वेपि पुरुषान्तरेण स्पष्टं स्वानुभवेनागृह्यमाणत्ववद् ब्रह्मणः स्वप्रकाशत्वेप्यस्माभिरप्रतीयमानतया विस्पष्टमुभयप्रतीतिर्नास्तीति चेन्न—स्वप्रकाशत्वं हि स्वस्य प्रतीचः प्रमाणान्तरं विना प्रकाशमानत्वं तच्च पुरुषान्तरसंवेदनेऽप्यस्ति तस्य स्वविषयप्रमाणं विना तदाश्रयप्रत्यगात्मनः प्रकाशमानत्वात् । ब्रह्म च प्रमाणान्तरं विना प्रतीचो न प्रकाशत इति न तत्स्वप्रकाशम् । ननु प्रमाणं विना स्वस्य प्रकाशमानत्वमेव स्वप्रकाशत्वं न प्रतीच्न इति चेन्न—तथात्वे घटादेरपि स्वात्मानं प्रति स्वयं न प्रकाशत इत्यत्र मानाभावेन तस्यापि स्वप्रकाशत्वप्रसङ्गादित्यर्थः। तस्मात्प्रमाणाभावात् प्रत्यग्भिन्नस्य ब्रह्मणोऽज्ञानविषयत्वं मायावित्वं चानुपपन्नमिति न तद्भेदः प्रामाणिक इति भावः। एवं ब्रह्मणो जीवभिन्नत्वे जीवस्य साधकप्रमाणाभावेन ब्रह्मणोज्ञातत्वं मायावित्वं च न

सिद्ध्यतीत्युक्तम्। इदानीं ब्रह्मणो भिद्यमानाः जीवाः ब्रह्मणा ज्ञायन्ते। उत न। नाद्यः। तेषां जडत्वप्रसङ्गात्। न द्वितीयः। ब्रह्मणोऽसर्वज्ञत्वप्रसङ्गादित्यतोपि जीवब्रह्मभेदः प्रामाणिको न भवतीत्यभिप्रेत्याह—

**ज्ञायन्ते चेद्ब्रह्मणा जीवभेदा**
**जाड्यं तेषां कुड्यवन्निर्विवादम्।**
**न ज्ञायन्ते ब्रह्मणा चेत्तदानीं**
**सर्वज्ञत्वव्याहतिर्दुर्निवारा॥ १४६॥**

ज्ञायन्ते चेदिति। जीवभेदाः भिद्यन्त इति भेदाः भिद्यमानजीवा इति यावत्। जाड्यं स्यादिति शेषः। सर्वज्ञत्वव्याहतिर्ब्रह्मण इति शेषः। साधकाभावेन भिद्यमानजीवानामसिद्धिरित्यपि द्रष्टव्यम्॥ १४६॥

ननु साधकाभावोऽसिद्धः भिद्यमानजीवानां स्वयंप्रकाशत्वादेव सिद्धिसंभवादिति शङ्कते—

**जीवा एते स्वप्रकाशस्वभावा**
**निर्भासन्ते ब्रह्मणश्चेद्विभक्ताः।**
**तेषां भेदः स्वप्रकाशो न वा स्या-**
**द्दोषं ब्रूमो दुर्निवारं द्विधाऽपि॥ १४७॥**

जीवा एत इति। ब्रह्मणो विभक्ता भिन्ना स्वप्रकाशस्वभावा इति हेतुगर्भितं विशेषणं यतः स्वप्रकाशाः अतो निर्भासन्ते प्रकाशन्ते चेदिति सम्बन्धः तत्र किं जीववज्जीवनिष्ठभेदोपि स्वप्रकाशः उत नेति विकल्प्योभयथापि दोषं वक्ष्यामीति प्रतिजानीते—तेषामिति। जीवानां भेदः ब्रह्मप्रतियोगिकः द्विधापि पक्षद्वयेपीत्यर्थः॥ १४७॥

आद्ये दोषमाह—

तेषां भेदः स्वप्रकाशो यदीष्टः

सत्यत्वं स्यात्तस्य तेषां तथैव।

वेद्योऽभीष्टस्तद्विभागो यदि स्या-

त्तानज्ञात्वा तद्विभागो न वेद्यः॥ १४८॥

तेषामिति। यदि ब्रह्मप्रतियोगिकजीवभेदः स्वप्रकाशः स्यात्तदा जीवानां तेषां यथा सत्यत्वं तद्वत्तस्य भेदस्यापि सत्यत्वं स्यात्। न च सत्यत्वमिष्टमेवेत्यपि शङ्क्यम्। तत्त्वमाद्येकत्वश्रुतिविरोधात्। नात्र का चनभिदास्ति नैवात्र काचन भिदास्ति। अत्र भिदामिव मन्यमानः शतधा सहस्रधा भिन्नः मृत्योः स मृत्युमाप्नोतीति भेदनिषेधश्रुति-विरोधाच्च। स्वप्रकाशस्य चैतन्यात्मत्वनियमेन भेदत्वानुपपत्तेश्चे-त्यर्थः। द्वितीयमनुवदति—वेद्य इति। तद्विभागः जीवनिष्ठभेदः। भेदो हि धर्म्यादिविशिष्ट एव ज्ञायते। केवलभेदमात्रस्य क्वचिदप्यप्रतीतेः। जीवानां च धर्मिभूतानां प्रतियोगिब्रह्मणश्च स्वप्रकाशकत्वान्न भेद-प्रकाशकप्रकाश्यत्वं संभवतीति धर्मिज्ञानाभावात् भेदज्ञानमपि न संभवतीति तत्र दूषणमाह—तानज्ञात्वेति। तान् धर्मिभूतजीवान् ब्रह्म चाज्ञात्वा भेदप्रकाशकमानेनेत्यर्थः॥ १४८॥

एवं जीवब्रह्मभेदे जीवानां ब्रह्मासिद्धिः ब्रह्मणश्च जीवासिद्धिः सिद्धौ वा जडत्वादिप्रसङ्ग इति दूषणमुक्तं जीवानां परस्परभेदेपि परस्परासिद्धिः सिद्धौ वा जाड्याद्यापत्तिरिति दूषणं वक्तुं पूर्ववत् विकल्पयति—

जीवाः सर्वे त्वां प्रति प्रस्फुरन्तः

सम्यग् ज्ञानात् प्रस्फुरन्ति स्वतो वा।

यद्वा मिथ्याज्ञानसामर्थ्यतोऽमी

पक्षः कस्ते रोचते ब्रूहि तन्मे ॥ १४९ ॥

जीवा इति । त्वामितिप्रतिवादिनं प्रत्युक्तिः । यदि जीवाः परस्परं भिन्ना इति ब्रूषे तर्हि किं त्वया न ज्ञायन्ते उत ज्ञायन्ते । नाद्यः तानज्ञात्वा तद्भेदस्य ज्ञातुमशक्यत्वेन परस्परं भिन्ना इत्युक्त्यनुपपत्तेः ज्ञायन्ते चेत् किं ज्ञायमानाः जीवाः प्रमाणेन त्वया ज्ञायन्ते, उत स्वतः, किं वा भ्रान्त्या, एषु पक्षेषु मध्ये कः पक्षः ते तुभ्यं रोचते तं पक्षं ब्रूहि तत्र दूषणं वदाम इत्यर्थः ॥ १४९ ॥

पक्षत्रयेपि दूषणं क्रमेण दर्शयति—

सम्यग्ज्ञानाज्जीवभेदप्रसिद्धा

वद्वैतत्वं ब्रह्मणो न प्रसिध्येत् ।

जीवाः सर्वे मां प्रति स्वप्रकाशा

इत्युक्तिस्ते स्वानुभूत्या विरुद्धा ॥ १५० ॥

सम्यग्ज्ञानादित्यादिना उपेय इत्यन्तेन । यदि परस्परं भिन्ना जीवाः त्वया प्रमाणेन ज्ञायन्ते तदा ब्रह्मणः सजातीयादिभेदराहित्यलक्षणमद्वयत्वं श्रुतिप्रमितं न सिद्ध्येत् । जीवानां च जाड्यं स्यात् । यदि त्वया स्वत एव ज्ञायन्ते इदमतिसाहसवचनं नह्यन्योऽन्येन स्वतोऽनुभूयते । यदि त्वया भ्रान्त्या ज्ञायन्ते तर्हि भ्रान्तिसिद्धस्य सम्यग्ज्ञानेन बाधितत्वादेकत्वमेव परिशिष्यत इत्यस्मत्पक्षकुक्षिनिक्षेपे जीवानां बाध्यत्वं स्यादित्यर्थः ॥ १५० ॥

भ्रान्तिसिद्धस्य बाधे दृष्टान्तमाह—

मिथ्याज्ञानाज्जीवभेदप्रसिद्धौ
सम्यग्ज्ञानाद्बाध एवाभ्युपेयः ।
मिथ्याज्ञानाद्रज्जुसर्पः प्रसिद्धः
सम्यग्ज्ञानात्तस्य बाधोऽपि सिद्धः ॥ १५१ ॥

मिथ्याज्ञानादिति । सम्यग्ज्ञानात् रज्जुतत्त्वज्ञानात् ॥ १५१ ॥

यत्पुनरुक्तं प्रतिबिम्बकल्पवपुषामित्यादिना जीवेश्वरयोरंशांशित्वमिति तत्तु तृतीयाध्याये निराकरिष्यते । यत्पुनर्मण्डनादिमतं विक्षेपसंस्कारभ्रमलक्षणैवाविद्येति तदसत् । सुषुप्त्यादौ भ्रमाभावात् संस्कारस्य च रजतादिसंस्कारवत् तत्त्वप्रकाशप्रतिबन्धकत्वायोगादहमज्ञ इत्यज्ञानानुभवविषयत्वायोगाच्च । यत्तु समुच्चयेन मुक्तिरिति तन्मतं तत्तु प्रथमाध्याये निराकृतं निराकरिष्यते च तस्मादाद्यपक्षद्वयमन्त्यपक्षद्वयं चानुपपन्नमिति सिद्धम् । यत्पुनर्मतान्तरं ब्रह्माश्रितमेकमेवाज्ञानं पुरुषभेदेन स्थितिनाशाभ्यां बन्धमोक्षव्यवस्थाहेतुरिति तद्दूषयति—

एकोपाधावेकवस्तुप्रसिद्धौ
भावाभावौ नेक्षितौ क्वापि लोके ।
पद्म्यादीनामस्तिता नास्तिता च
व्योम्न्येकस्मिन्नप्यवच्छिन्न एव ॥ १५२ ॥

एकोपाधाविति । एकस्मिन्नधिकरणेऽवच्छिन्नप्रदेशभेदशून्ये एकवस्तुप्रबन्धावेकवस्तुसम्बन्धिनौ नेक्षितौ न दृष्टौ । लोके हि निरवयवे एकत्र वस्तुन्येकस्य वस्तुनो भावाभावौ एकदा न क्वापि दृश्येते । तथा च निरवयवब्रह्माश्रितस्याज्ञानस्यैकस्य एकं प्रति निवृत्तौ सर्वस्यापि

निवृत्तिः अन्यं प्रति तदनिवृत्तौ वा मुक्तस्यापि तदनिवृत्तिप्रसङ्गः । यत्पुनरत्र तेन दृष्टान्ततयोक्तमाकाशे विहगतदभावौ दृष्टाविति तदप्यसंप्रतिपत्त्या दूषयति—पक्ष्यादीनामिति । अस्तिता सद्भावः नास्तिता अभावः पक्ष्यादिसद्भावाभावौ चैकस्मिन्ननवच्छिन्ने व्योम्नि न किन्तु व्यवच्छिन्ने केन चिदवच्छिन्न एवेत्यर्थः ॥ १५२ ॥

ननु किमवच्छेदक उपाधिः सर्वगतः उत परिच्छिन्नः आद्ये तदुपहितवृत्ती पक्ष्यपि सर्वत्रोपलभ्येत । द्वितीये अवच्छेदकोपाधितदभावौ केवले गगने वर्त्तेते उतोपहिते । आद्ये पक्षितदभावयोरेव तथात्वमस्तु किमनुपलभ्यमानोपाधिकल्पनया द्वितीये किन्तेनैवोपाधिनावच्छिन्ने उत पाध्यन्तरेण । आद्ये आत्माश्रयः स्यादित्यभिप्रेत्याशङ्कते—

सोऽवच्छेदोऽप्यस्ति नास्त्यम्बरे च
तत्रान्वेष्यः सोऽप्यवच्छिन्नभावः ।
सोऽवच्छेदोऽप्यस्ति नास्त्यम्बरे चेद्
बाढं तस्मिन्सोऽप्यवच्छिन्न एव ॥ १५३ ॥

सोऽवच्छेद इति । द्वितीयमादाय परिहरति—तत्रेति । आकाशे कोऽप्यवच्छिन्नभावः येन केनाप्यवच्छिन्नमित्यर्थः । ननु तदुपाधिसद्भावाभावौ पूर्वोपाध्यवच्छिन्ने वर्त्तेते उतोपाध्यन्तरेण आद्येऽन्योन्याश्रयः स्यादित्यभिप्रेत्याशङ्कते—सोऽवच्छेदोपीति । द्वितीयमादाय परिहरति—बाढमिति । बाढमित्यनेनावच्छिन्ने वृत्तिरङ्गीकृता । अन्योऽन्याश्रयदोषस्य तस्मिन्नित्यादिना परिहारः । तस्मिन्नाकाशे कोप्यवच्छिन्नभावः अन्वेष्य इत्यनुषङ्गः । ननु तदुपाधिसद्भावाभावावपि किं प्रथमोपाध्यवच्छिन्ने वर्त्तेते उतान्येन चतुर्थादिना । आद्ये चक्रकापत्तिः स्यादित्याशङ्कां द्वितीयपक्षमादाय परिहरति—सोपीति । सः—तृतीयोपाधिः अवच्छिन्ने चतुर्थादिनेति शेषः ॥ १५३ ॥

एवं सत्यनवस्था स्यादिति शङ्कते—

**नन्वेवं स्याद् दुर्निवाराऽनवस्था**
**वाढं का नो हानिरिष्टैव साऽपि।**
**कर्मोद्भूतं नः शरीरं शरीरा-**
**त्कर्मोद्भूतिस्तत्र किं नेष्यते सा ॥ १५४ ॥**

नन्वेवमिति। एकत्र भावाभावयोर्वृत्त्यनुपपत्तेः। वृत्तौ वा तदुपजीविनो विरोधमात्रस्य दत्तजलाञ्जलित्वप्रसङ्गादनवस्थाया न दोषत्वमित्यभिप्रेत्यानवस्थामङ्गीकरोति—वाढं का नो हानिरिति। नचैवं सति कुत्राप्यनवस्थाया दोषत्वन्न स्यादिति शङ्कनीयं प्रामाणिकाप्रमाणिकत्वेन व्यवस्थोपपत्तेरित्यर्थः। न केवलमस्माभिरेवैवमुच्यते किन्तु सर्वैरपि प्रामाणिक्यनवस्थाङ्गीकृतैवेत्याह—इष्टैवेति। सा प्रामाणिक्यनवस्था कुत्रेष्टेत्याशङ्क्योदाहरणं दर्शयति—कर्मोद्भूतमिति। नः शरीरं कर्मोद्भूतं शरीराच्च कर्मोद्भूतिः। तत्रैवं सति साऽनवस्था। एतदुक्तं भवति। अस्माकं हि शरीरमस्मद्भोगहेतुत्वेनास्मत्कर्मोपार्जितमिति सर्वैर्वक्तव्यम्। कर्म चास्मच्छरीरारब्धमेवास्मदीयं सदस्मद्देहारम्भकं भवति। तत्र चात्माश्रयादिदोषपरिहाराय तत्तद्देहानां तत्तत्कर्मणां च पूर्वपूर्वतत्तत्कर्मारब्धदेहारब्धत्वेऽनवस्था भवति। सा च प्रामाणिकत्वादेव यथा न दोषाय एवमवच्छेदपरम्परापीत्यर्थः। न ह्यवच्छेदकान्तरस्यात्रानुपलम्भः। सावित्रप्रकाशतदवयवानामेव सत्वादिति भावः। एतच्च परमीत्योक्तम्। वस्तुतस्तु गगनस्य निरवयवत्वमेवासम्मतं पञ्चीकृतत्वेन सावयवत्वादिति द्रष्टव्यम् ॥ १५४ ॥

एवमेकत्रैकस्य वस्तुनो भावाभावावनुपपन्नाविति ब्रह्मण्यज्ञान-

तदभावौ न सम्भवत इत्युक्तमिदानीं प्रमाणाभावाच्च नाज्ञानतदभावौ ब्रह्मणि सिध्यत इत्यभिप्रेत्याह—

किञ्चाज्ञानं ब्रह्मणोऽप्यस्ति नास्ती
त्येतत्कस्मात्त्वं विजानासि हेतोः।
मूढोऽस्मीति प्रत्ययादस्ति बुद्धि-
र्मुक्ते दाहान्मोहनास्तित्वबुद्धिः ॥ १५५ ॥

किञ्चेति। कस्माद्धेतोः साधकान्न कस्मादपीत्यर्थः। पृष्टं मत्वोत्तरमाह—मूढ इति। अस्तिबुद्धिः अस्तितावुद्धिः दाहान्निवृत्तेः शुकादिमुक्त्यनन्तरमपि ब्रह्मविषयाज्ञानस्यामुक्तेन मूढोहमित्यनुभवात् मुक्तेन चाज्ञानस्य निवृत्ततया तदभावानुभावात् न विद्वदविद्वत्प्रत्यक्षमेव तत्र प्रमाणमित्यर्थः॥ १५५ ॥

मुक्तामुक्तभेदस्यैवाद्याप्यसिद्धत्वात् न तदनुभवाभ्यामज्ञानस्य भावाभावौ सिद्ध्यत इत्यभिप्रेत्य मुक्तामुक्तभेदाङ्गीकारेप्यमुक्तत्वेन त्वया मूढोहमित्यज्ञानस्यानुभूयमानत्वात् तत्सद्भावोस्तु मुक्तेऽज्ञानं नष्टमित्येतत्कथं त्वया ऽवगतमिति पृच्छति—

मुक्तेऽज्ञानं दग्धमित्येतदेवं
कस्माद्धेतोर्वेत्सि तत्कथ्यतां नः।
मिथ्याज्ञानात्स्वप्रकाशात्प्रमाणा-
न्मुक्तेऽज्ञानं दग्धमित्यस्य सिद्धिः ॥ १५६ ॥

मुक्तेऽज्ञानमिति। अज्ञानमिति च्छेदः। किं शब्दसूचितान् विकल्पान्दर्शयति—मिथ्याज्ञानादिति। मुक्तेऽज्ञानं नष्टमित्यस्य ज्ञानं किं प्रमाणात् भवति। उत मिथ्याज्ञानात्। उत स्वप्रकाशादिति विकल्पक्रमो द्रष्टव्यः॥ १५६ ॥

त्रिष्वपि क्रमेण दूषणमाह—

सम्यग्ज्ञानान्मुक्तिसिद्धिर्यदीष्टा
नूनं मुक्तः कुड्यवत्ते जडः स्यात् ।
मिथ्याज्ञानान्मुक्तिसिद्धिर्यदीष्टा
स्रक्सर्पादिर्मुख्य एवैष मुक्तः ॥ १५७ ॥

मुक्तो मर्त्यः स्वप्रकाशश्चकास्ती-
त्येषा वाणी स्वानुभूत्या विरुद्धा ।
न ह्यश्रुत्वा शास्त्रमेतन्मनुष्यः
कश्चिज्जानात्येष मुक्तः शुकादिः ॥ १५८ ॥

सम्यग्ज्ञानादित्यादिना विरुद्धेत्यन्तेन । मुक्तेऽज्ञानं नष्टमित्यस्य प्रमाणादिगम्यत्वे विशेषणीभूतमुक्तस्यापि प्रमाणादिगम्यत्वं वक्तव्यम् । तथा च तस्य प्रमाणागम्यत्वे जाड्यं भ्रान्तिगम्यत्वे स्रक्सर्पतुल्यत्वं स्वप्रकाशगम्यत्वे स्वानुभवविरोधः । अन्यस्यान्यं प्रति स्वप्रकाशत्वानुपपत्तेरित्यर्थः । अनुभवविरोधमेव स्पष्टयति—नह्यश्रुत्वेति । शुकादिर्मुक्त इत्येतच्छास्त्रं शुकादिमुक्तिप्रतिपादकशास्त्रमश्रुत्वा कश्चिज्जानाति न हीति सम्बन्धः । तथा च मुक्तः स्वप्रकाश इत्येतदनुभवविरुद्धमित्यर्थः । तस्मात्तृतीयपक्षोपि न साधुरिति सिद्धम् ॥ १५७ ॥ ॥ १५८ ॥

यत्पुनरन्यन्मतमन्तः करणोपाधिद्वारा ब्रह्मण्यज्ञानमन्तः करणानां चानेकत्वात् बन्धमुक्तिव्यवस्थेति तद्दूषयितुमनुभाषते—

ताटस्थ्येनोपाधिमादाय मोह-
श्चैतन्येऽस्मिन्स्वप्रकाशे प्रविष्टः ।

तेनेह स्याद्बन्धमोक्षव्यवस्थे
त्युक्तं यत्प्राग्दूषणं तस्य विद्धि ॥ १५९ ॥

ताटस्थ्येनेति । ताटस्थ्येनाश्रयस्वरूपाननुप्रविष्टतयोपाधिमन्तः करण-लक्षणम्,एतेनोपाधिभेदेन। इह अस्मिन्पक्षे जीवेष्विति वा तन्मतमनूद्य तत्र दूषणं प्रतिजानीते दूषणमिति ॥ १५९ ॥

तस्य मतस्य दूषणमेवाह—

ताटस्थ्येनोपाधिरङ्गं यदि स्या-
न्मोहाविष्टे ब्रह्मणि स्वप्रकाशे ।
अग्निक्षेपस्योल्मुकं यद्वदेवं
मोहस्य स्यान्न प्रदेशस्थितत्वम् ॥ १६० ॥

ताटस्थ्येनोपाधिरङ्गमिति । अङ्गं द्वारं मोहाविष्टे मोहप्रवेशेऽग्निक्षेपस्य ग्रहादावग्निप्रवेशस्य यद्वदग्निक्षेपस्योल्मुकं ताटस्थ्येनाङ्गमेवं स्वप्रकाशे ब्रह्मणि मोहाविष्टे उपाधिस्ताटस्थ्येनाङ्गं यदि स्यादिति सम्बन्धः। अन्तः करणद्वारा ब्रह्मण्यज्ञानमिति कोऽर्थः—किमन्तः करणोपहित इति किंवान्तः करणसम्बन्धिनीति । नाद्यः । अन्तःकरणस्याल्पत्वेन तदुपहितचैतन्यस्यापि परिच्छिन्नतया तन्मात्राश्रितादेकस्मादज्ञाना-त्सर्वेषां संसारानुपपत्तेः। द्वितीये तु न देशवृत्तित्वं तथा चैकस्मिन्नेव भावाभावौ स्यातामित्यर्थः ॥ १६० ॥

प्रवेशद्वारीभूतस्याश्रयप्रदेशनियामकत्वाभावे दृष्टान्तमाह—

अग्निः क्षिप्तो ह्युल्मुकेन प्रदेश-
मात्रव्याप्तिं वर्जयित्वा समस्तम् ।

**वेश्म व्याप्नोत्येवमेवेह कृत्स्नं**

**ब्रह्म व्याप्नोत्याधिनाऽस्तं तमोऽपि ॥ १६१ ॥**

अग्निरिति । आधिना- उपाधिना क्षिप्तः अस्तः प्रवेशित इति यावत् । यथा वेश्मादावुल्मकेन प्रक्षिप्तोऽग्निर्नोल्मुकसम्बन्धप्रवेशमात्रं व्याप्नोति किन्तु सर्वमेव वेश्म तद्वदन्तः करणोपाधिना ब्रह्मणि प्रविष्टो मोहः तत्सम्बन्धप्रदेशमेव न व्याप्नोति किन्तु समस्तमपि ब्रह्म तथा चैकत्रैव भावाभावयोर्वक्तव्यत्वात् । तयोश्च निर्द्धारमयोगात् ? चतुर्थोप्यनुपपन्न इत्यर्थः ॥ १६१ ॥

यः पञ्चमः पक्षः अज्ञानस्यैकस्यैवांशभेदेन नाशानाशाविति सोपि नाज्ञानस्यांशभेदाभावात् "मुक्तेऽज्ञानं नष्टम्" इत्यत्र साधकानिरूपणेन तृतीयपक्षोक्तदोषानुषङ्गाच्चेत्युपेक्षितं तन्मतम् । तस्मान्मुक्तादिभेदस्य प्रमाणिकत्वासंभवात् सत्यज्ञानानन्दानन्तात्मकं ब्रह्मैव स्वाश्रयानाद्यनिर्वचनीयया विद्यैकधाजीवभावमापद्य त्वद्रूपेण स्थित्वा स्वाज्ञानकल्पितान्मुक्तादिजीवभेदान् स्वप्न इव पश्यति । अतो न त्वत्तोऽन्यः कश्चिज्जीवोस्ति तथा च न वन्धमुक्तिव्यवस्थानिरूपणायासेन मनः खेदनीयमित्यभिप्रेत्योपसंहरति—

**तस्माद्ब्रह्माविद्यया जीवभावं**

**प्राप्याऽऽसित्वा तावके तु स्वरूपे ।**

**त्वच्चित्तेन स्पन्दितं जीवजात-**

**माकाशादि क्ष्मावसानं च पश्येत् ॥ १६२ ॥**

तस्माद्ब्रह्मेति । तस्मान्मुक्तामुक्तादिभेदस्य प्रामाणिकस्य वक्तुमशक्यत्वात् तावके त्वदीये स्वरूपे आसित्वा स्थित्वा त्वद्रूपेण

स्थित्वेत्यर्थः । त्वच्चित्तेन त्वदज्ञानेन चेत्यपि द्रष्टव्यम् । त्वंपदं शिष्यवाचि । स्पन्दितं कल्पितं पश्येत् पश्य ॥ १६२ ॥

ननु सर्वस्यापि जीवजातस्य शिष्याविद्याकल्पितत्वे आचार्याभावाद्विद्यायाश्चाचार्यवानित्यादिनाचार्यहेतुकत्वश्रवणाद्विद्याप्राप्तिः शिष्यस्य न स्यादित्याशङ्क्य विद्यायामाचार्यमात्रस्यैवापेक्षितत्वात्कल्पिताचार्यस्य च तत्रापि सत्त्वात् तस्यापि वेदादिवद्विद्याहेतुत्वसंभवाच्छिष्यस्य विद्यावाप्तिर्भवत्येवेत्याह—

स्वीयाविद्याकल्पिताचार्यवेद-
न्यायादिभ्यो जायते तस्य विद्या ।
विद्याजन्मध्वस्तमोहस्य तस्य
स्वीये रूपेऽवस्थितिः स्वप्रकाशे ॥ १६३ ॥

स्वीयेति । वेदादयस्तु दृष्टान्ततयोपात्ताः न्यायो युक्तिः आदिपदेन निदिध्यासनादिकं गृह्यते । ननु विद्या जायतां न हि तावता पुरुषार्थः तस्याः सुखदुःखावाप्तिपरिहारयोरन्यतरत्वाभावादित्यत्राह-विद्याजन्मेति । विद्योत्पत्तिमात्रेण ध्वस्तो मोहो यस्य शिष्यस्य स तथोक्तः ॥ १६३ ॥

एवं सत्यादिस्वरूपब्रह्माश्रयविषयमेवाज्ञानं तच्चैकमेव तद्विलास एव सर्वोपि प्रपञ्च इत्युक्तम् । इदानीमाचार्यग्रन्थेषु क्वचित् कस्याविद्या यस्त्वं पृच्छसि तस्य तवेति वदाम इत्यादिना जीवाश्रितमज्ञानमिति प्रतीयते । तद्विरुद्धमिदमज्ञानस्य ब्रह्माश्रयत्वकथनमित्याशङ्क्याचार्यवचनस्याभिप्रायं दर्शयति—

अज्ञानि ब्रह्म जीवो भवति भवति च स्पष्टमज्ञानमस्य
प्रागस्पष्टं सदन्तःकरणनिपतितज्योतिराभासयोगात् ।

चैतन्यैकप्रतिष्ठं स्फुरति न हि तमस्तादृशं यादृशं त-
द्बुद्धिस्थाभासनिष्ठं स्फुरति तदुचितं जीवमौढ्याभिधानम्
॥ १६४ ॥

अज्ञानि महोति । अज्ञान्यज्ञानाश्रयः अस्य जीवस्य प्रागन्तःकरण-सम्बन्धात्प्राक्सुषुप्त्यादौ अस्पष्टमहमज्ञ इति व्यवहारानर्हेऽन्तःकरणनिपतितज्योतिराभासयोगात् अन्तः करणे प्रतिबिम्बितं यत्-ज्योतिश्चैतन्यं तस्य य आभासो व्याप्तिः तद्योगादन्तः करणगतो यो ज्योतिराभासः चैतन्याभासः तत्सम्बन्धादिति वा ब्रह्मैव ह्यज्ञाना-श्रयः स्वाज्ञानोपाधिना जीवो भवति । तस्यैव चान्तः करणमपि स्पष्टव्यवहारहेतुत्वात् जीवत्वोपाधिरुच्यते । अज्ञानं च निर्विकल्पक-चैतन्याश्रितं सुषुप्तिमूर्छादौ स्पष्टमनवभासमानं स्वावभाससाक्षिणः सविकल्पकान्तःकरणप्रतिफलने सति तेन चैतन्याभासेनाहमज्ञ इत्येव-मादिरूपेण स्पष्टमभासत इति लोकप्रतीत्यनुरोधेनैव भाष्यकारो जीवाश्रितमज्ञानमित्यूचे न तु ब्रह्माश्रयत्वनिराकरणाभिप्रायेणेत्यर्थः । अज्ञानाश्रयस्य ब्रह्मण एवाज्ञानद्वारा जीवत्वात्तस्यैवान्तः करणे प्रतिबिम्बितत्वात् तवेत्युक्तिरपि संगच्छते इत्यभिप्रेत्योक्तमज्ञानि ब्रह्म जीवो भवतीति । अज्ञानस्यान्तः करणसन्निधाने सत्येव स्पष्टतां व्यतिरेकमुखेन द्रढयति—चैतन्येति । चैतन्यैकप्रतिष्ठं चैतन्यमात्राश्रितं तत्तमः बुद्धिस्थाभासनिष्ठं बुद्धिप्रतिफलितचैन्याभाससम्बद्धं सत् स्फुरति न तथाचैतन्यमात्रनिष्ठं तस्माज्जीवमौढ्याभिधानं जीवस्या-ज्ञानित्वाभिधानं भाष्यकारस्योचितमेवेत्यर्थः ॥ १६४ ॥

ननु यद्यज्ञानं निर्विकल्पकचैतन्यमात्रनिष्ठतयाऽस्पष्टं सत् सविकल्पान्तः करणकार्यसम्बन्धात् स्पष्टं प्रतीयते तर्हि घटा देरपि सविकल्पकत्वात्तदवच्छिन्नप्रदेशेप्यन्तःकरणचैतन्याभासोपरागं

विनाऽज्ञानानुभवः किं न स्याद‍तो नूनमेवं ज्ञायते भाष्यकृद्वचनस्य जीवाश्रयत्वमेवेति चेत्तत्राह—

**अज्ञानं जडशक्तिमात्रवपुषा जीवाद्बहिः सिद्ध्यति**
**जीवारूढमहं न जान इति तु ज्ञानापनोद्यात्मना ।**
**संसिद्धिं प्रतिपद्यते तदुचितं जीवाज्ञताभाषितं**
**द्वैरूप्ये सति रूप्यमेकमनिशं भात्येवमन्यत्र हि ॥ १६५ ॥**

अज्ञानमिति । जडशक्तिमात्रवपुषा जाड्याकारेणेत्यर्थः । जीवाद्बहिर्घटादौ जीवारूढं जीवस्य स्पष्टव्यवहारोपाध्यन्तःकरणगतचैतन्याभाससम्बद्धं तदज्ञानं ज्ञानापनोद्यात्मना ज्ञानविरुद्धाकारेणाऽज्ञानस्य ह्याकारद्वयमेको जडशक्त्यात्माऽपरोक्षाज्ञानविरुद्धत्वलक्षणः तत्र ज्ञानविरुद्धत्वलक्षणस्य न घटादौ प्रतीते प्रसङ्गः ज्ञानसमानाश्रयत्वेनैवाज्ञानस्य ज्ञानविरुद्धत्वाद्घटादीनां च ज्ञानाश्रयत्वाभावादितरस्त्वाकारो घटादावपि प्रतीयत एव घटादिनिष्ठजाड्यानुभवस्य तदुपादानाज्ञानविषयत्वात् सकलकार्यानुयायि जाड्यस्याज्ञानव्यतिरिक्तत्वे प्रमाणाभावात् । तथा च घटादावप्यज्ञानानुभवसद्भावान्नानुपपत्तिरित्यर्थः । ननु जीवस्यैवाज्ञत्वं वक्तुमयुक्तं घटादेरप्यज्ञानवत्त्वादित्याशङ्क्योभयत्राप्यज्ञानसम्बन्धविशेषेऽप्यहमज्ञ इत्येवं ज्ञानापनोद्यात्मना जीव एवाज्ञानस्य स्पष्टं प्रतीयमानत्वात् । घटादेश्च ज्ञानाश्रयत्वाभावेन तेन रूपेण तत्राप्रतीयमानत्वात् । जाड्याकारस्य च विलम्बेनैवाज्ञानरूपत्वस्य प्रतीयमानत्वात् । लौकिकानुभवविरोधेन युक्तैव जीवस्याज्ञताभाषितुमित्याह—तदुचितमिति । तत्तस्मात्तच्छब्दार्थमेवाह-द्वैरूप्ये सति ज्ञानविरुद्धत्वजाड्यलक्षणद्वैरूप्ये सत्येकरूपं ज्ञानविरुद्धत्वलक्षणं जीवे भाति । अविलम्बेन भाति । अन्यज्जाड्यलक्षणं रूपम् । एवं ज्ञानापनोदनरूपवदविलम्बेन न भाति । जाड्यस्य

प्रथमं घटादिधर्मत्वेनैव प्रतीयमानत्वादनन्तरमेवानुगतकारणाज्ञानजाड्यरूपत्वानुसधानादित्यर्थः । हि यतः ॥ १६५ ॥

अज्ञानस्योक्तरूपद्वये प्रमाणमप्यस्तीति दर्शयितुमादौ जडशक्तिरूपे प्रमाणमाह—

**जडशक्तिमात्रवपुषा गगन-**
**श्वसनादिकार्यजननी भवति ।**
**पुरुषोत्तमस्य वशवर्तितया**
**प्रकृतिः परस्य जगदेकगुरोः ॥ १६६ ॥**

जडशक्तिमात्रेति । जडशक्तिप्राधान्येनेत्यर्थः । श्वसनो वायुः आदिपदेन तेज आदिकं गृह्यते । कार्यजननीत्युक्तं निमित्तकारणमिति शङ्का स्यात् तदर्थमाह—प्रकृतिरिति । गगनादीनामुपादानभूता माया तथा च माया कार्यगगनादिव्यक्तेर्जडरूपत्वात्तत्कारणमपि जडं भवतीत्यनुमीयत इत्यर्थः । एतादृशमायायाः पराभिमतप्रधानत्वं वारयति जगदेकगुरोः परस्य पुरुषोत्तमस्य वशवर्तितयेति । जगतः सूत्रादिपुत्तिकान्तस्यानित्यप्रपञ्चस्यैकगुरुः एककारणं तस्याव्याकृतमप्येतादृशमिति विशिनष्टि—परस्येति । कार्यकारणाभ्यां परस्येत्यर्थः । तथा चाविद्यायाः परमाधीनतयैव जगत्प्रकृतित्वात् न पराभितप्रधानत्वमित्यर्थः ॥ १६६ ॥

इदानीं ज्ञानपर्युदासात्मकरूपवत्वे प्रमाणमाह—

**इयमेव सर्वजननी प्रकृति-**
**र्वशिनी शरीरिणमिमं पुरुषम् ।**

अधिरुह्य जीवमहमज्ञ इति

स्फुरणैकगोचरवपुः स्फुरति ॥ १६७ ॥

इयमेवेति । इयं जडात्मिका वशिनी जीववशीकरिणी इदं च मायाया जीवस्य स्वरूपावारकत्वे हेतुः । शरीरिणं स्थूलदेहावच्छिन्नं पुरुषं पुरि शेत इति व्युत्पत्त्या लिङ्गशरीरावच्छिन्नमिमं जीवमधिरुह्याश्रित्य परमात्मैवाज्ञाने प्रतिफलितः जीवभावमापन्नः पुनः स्पष्टोपाधिभूतेऽन्तःकरणे प्रतिफलति पुनः स्पष्टतमोपाधिभूते स्थूलशरीर इति कृत्वा जीवाश्रितत्वमज्ञानस्य स्फुरणैकगोचरवपुः जीवस्य स्वरूपभूतं यत्स्फुरणं साक्षि तदेकगोचरः तन्मात्रविषयः वपुःस्वरूपं यस्याः सा तथोक्ता । तथा चाज्ञानस्य प्रमातरि जीवे तत्स्वरूपब्रह्माच्छादकतया अहं न जानामीति स्पष्टमेवानुभूयमानत्वात् ज्ञानापनोद्यत्वलक्षणं रूपमपि सिद्ध्यतीत्यर्थः ॥ १६७ ॥

ननु चैतन्यमेकमज्ञानमप्येकं तथा च कथमेकस्यैवाज्ञानस्यैकमेव चैतन्यं प्रति स्वातन्त्र्यास्वातन्त्र्ये इत्याशङ्क्याह—

चितिशक्तिबाधितवपुः परमं

पुरुषं प्रति स्फुरति सा प्रकृतिः ।

चितिशक्तिबाधकवपुः पुरुषं

पुरवर्तिनं प्रति पुनः स्फुरति ॥ १६८ ॥

चितिशक्तीति । चितेः स्वरूपचैतन्यस्य या शक्तिर्महिमा तया बाधितं मिथ्यात्वेन निश्चितं वपुः स्वरूपं यस्याः सा तथोक्ता परमं पुरुषमुपाध्यनन्तर्भूतमीश्वरं चितिशक्तिबाधकवपुः स्वरूपमहिमावारकस्वरूपा पुरुषं जीवं पुरवर्तिनं शरीरत्रयमध्यवर्तिनं यद्यप्यज्ञान-

मेकं चैतन्यमपि वस्तुत एकं तथापि सत्त्वगुणप्रधानाज्ञानप्रतिबिम्बत्वेनेश्वरस्यानावृतज्ञानत्वात् जीवस्य च तद्विपरीतरूपत्वात् एकस्यैवाज्ञानस्यौपाधिकभेदभिन्नौ तौ प्रत्यग्ज्ञानस्य पारतन्त्र्यापारतन्त्र्ये युज्येते इत्यर्थः ॥ १६८ ॥

नन्वज्ञानस्यैव चैतन्यं प्रति स्वातन्त्र्यास्वातन्त्र्ये इत्यनुपपन्नं स्वाश्रयाव्यामोहकत्वलक्षणमायायाः स्वाश्रयव्यामोहकत्वलक्षणाविद्यायाश्च भेदेनैव तदुपपत्तेरित्याशङ्क्य मायाविद्ययोरभेदस्य प्रमाणसिद्धत्वान्मैवमित्यभिप्रेत्यानुमानं प्रमाणमाह—

दृश्यत्वजाड्यपरतन्त्रचिदाश्रयत्वै-
र्मायेश्वरस्य तम आत्मतयानुमेया।
स्वप्नप्रपञ्चरजतभ्रमलिङ्गदेह-
दिक्चन्द्रविभ्रममरीचिजलोपमानैः ॥ १६९ ॥

दृश्यत्वेति। स्वव्यवहारे स्वातिरिक्तदर्शनापेक्षत्वं दृश्यत्वमनात्मप्रकाशत्वं जडत्वं नियमेन परप्रयोज्यतया व्यवहारजनकत्वं परतन्त्रत्वं चैतन्याश्रितत्वं चिदाश्रयत्वं तैः। अनेन हेतुनिर्देशः। तम आत्मतयाऽविद्यात्मतयाऽविद्याऽभिन्नत्वेनेति यावत्। अनेन साध्यं द्योतितं स्वप्नप्रपञ्चेत्यादिना दृष्टान्तनिर्देशः। लिङ्गदेहोऽन्तःकरणं दिग्भ्रमश्चन्द्रभ्रमश्चेति भ्रमपदमुभयत्रापि सम्बध्यते। चन्द्रद्वित्वभ्रम इत्यर्थः। उपमानशब्दो दृष्टान्तपरः। अत्रायं प्रयोगः। ईश्वराश्रिता माया अज्ञानाभिन्ना दृश्यत्वाज्जडत्वात् परतन्त्रत्वात् चिदाश्रयत्वाद्वा स्वप्नप्रपञ्चादिवत्। न च दृष्टान्ताः साध्यविकलाः कार्यकारणयोरभेदेनाविद्याभिन्नत्वोपपत्तेः। नच घटादौ व्यभिचारः तस्यापि माया कार्यत्वे पक्षतुल्यत्वात्। अविद्याकार्यत्वे च साध्यसंभवात् माया-

याश्चाविद्याकार्यत्वासंभवात् अविद्यात्मत्वेनैव साध्यं पर्यवस्यतीति। अथवा अनादिकारणत्वे सत्यज्ञानभिन्नत्वाभावः साध्यत्वेन विवक्षितः हेतूदाहरणे पूर्ववदेव। दृष्टान्तेऽनादिकारणत्वलक्षणविशेषणाभावात् साध्यवैकल्याभावः। पक्षे त्वज्ञानभिन्नत्वलक्षणविशेष्याभावमादायैव साध्यं पर्यवस्यति। न च तत्त्वादौ व्यभिचारः। तस्यानादित्वाभावेन विशेषणाभावसंभवात् विशिष्टाभावोपपत्तेः। न च जीवत्वादौ व्यभिचारः। तस्य कारणत्वाभावेन विशेषणाभावसंभवाद्विशिष्टाभावोपपत्तेरिति। न च दृश्यत्वहेतुर्ब्रह्मणि व्यभिचरति तस्यापि ब्रह्मेत्यादिव्यवहारे स्वातिरिक्तवृत्त्यपेक्षत्वादिति शङ्क्यं वृत्तेरदर्शनत्वात्। नचाद्यहेतुद्वयं स्वरूपासिद्धं मायाया ईश्वरेच्छारूपत्वेनेच्छायाश्च स्वसत्तायामप्रकाशविधुरतया स्वप्रकाशत्वेन दृश्यत्वादेरभावादिति वाच्यम्। न हि स्वसत्तायामप्रकाशविधुरत्वमात्रेण स्वप्रकाशत्वं तथात्वे दुःखादेरपि तत्प्रसङ्गात्। अस्त्विति चेत्तत्र किं दुःखादेः स्वसत्तायामप्रकाशविधुरत्वं स्वातिरिक्तप्रकाशाधीनमुत स्वरूपाधीनम्। आद्ये स्वप्रकाशत्वं परिभाषिकमेव स्यात्। न द्वितीयः। तस्य प्रकाशस्वरूपज्ञानाद्भिन्नत्वात्। तत्स्वरूपमपि प्रकाशात्मकमिति चेन्न। अनुभवं विनाऽस्माकं तदनुभवात्। प्रकाशस्वरूपमेवानुभवेनानुभूयत इति चेन्न। अनुभवातिरिक्तप्रकाशकल्पनावैयर्थ्यप्रसङ्गात्। घटादेरपि तत्त्वापाताच्च। तस्मान्मायायां स्वव्यवहारे स्वातिरिक्तदर्शनापेक्षत्वानात्मप्रकाशत्वयोर्नासिद्धिरितिभावः॥ १६६॥

नन्वज्ञानस्यानेकत्वात् मायायाश्चैकत्वात् कथं तयोर्विरुद्धधर्मिणोरैक्यमित्याशङ्क्याज्ञानस्याप्येकत्वान्मैवमित्यभिप्रेत्य सकलस्यापि जगत एकाज्ञानकार्यत्वं साधयति—

**एकाज्ञानविकल्पितं सकलमेवाऽऽकाशपूर्वं जग-**
**द्बाध्यत्वादिह यद्यदीदृशमदस्तादृङ्मतं स्वप्नवत्।**

**बाध्यं चेदमभीप्सितं भवति वस्तस्मादिदं तादृशं**
**शुद्धं धूमवदेव साधनमिदं तत्पाञ्चरूप्यान्वयात् ॥१७०॥**

एकाज्ञानेति । सकलमाकाशपूर्वकं जगदिति पक्षनिर्देशः । भूतभौतिकसकलकार्यप्रपञ्च इत्यर्थः । एकाज्ञानविकल्पितमिति साध्यनिर्देशः एकपदमर्थान्तरतानिराकरणार्थं बाध्यत्वात् स्वविपरीताकारज्ञाननिवर्त्यत्वादिति हेतुनिर्देशः इह लोके यद्यदीदृशं बाध्यमदः तत्तादृगेकाज्ञानविकल्पितं स्वप्नवदेकपुरुषदृश्यमानस्वप्नवदिति दृष्टान्तनिर्देशः । न च हेतोरपक्षधर्मता तथा विद्वान्नामरूपाद्विमुक्त इत्यादिना प्रपञ्चस्य ज्ञानबाध्यत्वसिद्धेरित्यभिप्रेत्याह—बाध्यं चेदमिति । इदं जागद्बाध्यं ज्ञाननिवर्त्यमिति वानेकाज्ञानवादिनां च संमतमिति सम्बन्धः । अनेनोपनयनिर्देशः । तस्माद्बाध्यत्वादिदं जगत्तादृशमेकाज्ञानविकल्पितमिति निगमनिर्देशः । नचायं हेतुराभासः धूमादिवत्पञ्चरूपोपपन्नत्वादित्याह—शुद्धमिति । इदं बाध्यत्वलक्षणं साधनं धूमवत् शुद्धमसिद्ध्यादिदोषपञ्चकरहितमेव तत्पाञ्चरूप्यान्वयात् धूमस्येव तस्य हेतोः पक्षधर्मत्वादिसद्भावात् । न चाप्रयोजकः । अज्ञानभेदे प्रमाणाभावगौरवलक्षणस्य तदेकत्वे लाघवलक्षणस्य च तर्कस्य विद्यमानत्वात् । तथा हि न तावदज्ञानभेदेऽनुभवः प्रमाणं तदभावात् । नन्वनुभूयते प्रतिजीवमज्ञ इत्यज्ञानभेद इतिचेन्न । अनेकव्यक्तिवृत्तिसामान्यवत्तदेकत्वेपि तदुपपत्तेः । ननु घटादिज्ञानेन तदज्ञाननिवृत्तावपि पटादिविषयाज्ञानं कालान्तरे तद्घटादिविषयं चाज्ञानमनुभूयते । न च तदज्ञानैकत्वे सम्भवति । न च घटादिज्ञानेन तदज्ञानं न निवृत्तमेवेति वाच्यम् । ज्ञानाज्ञानयोर्विरोधेन तन्निवृत्त्यवश्यम्भावात् । अन्यथा—ब्रह्मज्ञानादपि तदनिवृत्तिप्रसङ्गात् । अतो ज्ञाननाशान्यथानुपपत्तिरेव तद्भेदे प्रमाणमिति चेन्न । विरोधो हि ज्ञानाज्ञानयोः समानाश्रयसमानविषययोरेव वक्तव्यः । अन्यथाऽतिप्रसङ्गात् ।

नचाज्ञानस्य घटाश्रयविषयत्वं तदवच्छिन्नचैतन्याश्रयविषयत्वं वैकाज्ञानवादिनाभ्युपगम्यते। येन तद्विषयज्ञानेन विरुध्येत। किन्तु-प्रत्यङ्मात्राश्रयविषयत्वमेव। नचैवं सत्यज्ञानकार्यरजतादेः शुक्ति-संसर्गावगमो न स्यात् तत्राज्ञानाभावादिति वाच्यम्। सर्वविभ्रमाणां चैतन्यमात्राश्रितत्वेन तत्संसर्गावभासस्यापि विभ्रमत्वात्। नचैवं सति घटादिनिष्ठत्वेनापि रजतादिप्रत्ययः स्यात्। घटादेरपि शुक्तीदंत्वादिवद्रजतादिना सहैकचैतन्याधिकरणत्वादिति वाच्यम्। सादृश्यस्यैव रजताद्याकारप्रतीतिनियामकत्वात्। न च सादृश्यस्य रजताद्युत्पत्तिमात्रे एवापेक्षितत्वादसार्वत्रिकत्वाच्च नाधारविशेष-निष्ठतया प्रतीतिनियामकत्वमिति वाच्यम्। शुक्त्याद्यग्रहणं हि रजताद्युत्पत्तौ ज्ञप्तौ चान्वयव्यतिरेकसिद्धतयापेक्ष्यते। ततश्च यदग्रहणाधीनोत्पत्तिज्ञप्तिकं यत्तत्तन्निष्ठत्वेन प्रत्येतव्यमित्यनुभवानुगुण्येनाग्रहणन्नियामकत्वस्येव। नचैवं सति घटादीनां नियमेन मृन्निष्ठतावगमो न स्यात्। तेषां मृदाद्यग्रहणाधीनज्ञप्त्युत्पत्तिकत्वाभावादिति वाच्यम् तेषामपि वास्तवनिर्विकारमृद्ग्रहणाधीनोत्पत्तिज्ञप्तिकत्वात् वाचारम्भणमित्यादिना घटादेः रजतस्य शुक्तिमात्रस्वरूपवन्निर्विकार-मृन्मात्रस्वरूपत्वप्रतिपादनात् रजतस्यैव घटाद्याकारस्यानिर्वचनीयत्वप्रतिपादनाच्च। नन्वेवमपि घटाद्यवच्छिन्नचैतन्यस्याज्ञानानावृतत्वेन तद्बलाद्घटादेर्नित्यवत्प्रकाशः स्यादिति चेत्किं ब्रह्मणो घटादिप्रकाशो नित्यवत् स्यादित्यापाद्यते। उत जीवस्य। नाद्यः। इष्टत्वात्। न हि सर्वज्ञस्य ब्रह्मणः तदापादनीयम्। न द्वितीयः। जीवस्य तेन सम्बन्धाभावात्। ननु जीवस्य स्वप्रकाशचैतन्यरूपस्य सर्वव्यापिनः कथं न तेन सम्बन्धः न हि सम्भवति गगनेनासंसृष्टो घट इति चेन्न। आत्मा हि स्वतोऽसङ्गस्वभावतया न केनचित्संयुज्यते। किन्त्व-विद्याविषयत्वमापन्न एव तत्तदाकारेण विवर्त्तमानस्तेन तेन सम्बध्यते। जगद्विवर्त्तनं चात्मनो ब्रह्माकारेणैव न जीवाकारेणेति न तस्य

स्वतो नात्मसम्बन्धः कथं तर्हि सम्बध्नातीति चेत् । तत्तदाकारान्तःकरणवृत्तिद्वारेणेति गृहाण । न चासङ्ग आत्मा कथमन्तःकरणेनापि सम्बध्यत इति वाच्यम् । अविद्याया इवान्तःकरणस्याप्यतीव स्वच्छतया विषयस्वभावात्तेन सम्बन्धोपपत्तेः । दृश्यते हि सर्वगताया अपि जातेर्व्यक्तिमात्रसम्बन्धित्वम् । न चैवं सति ब्रह्मज्ञानादज्ञाननिवृत्तिर्दृष्टिवलान्न कल्प्येतेति वाच्यम् । ज्ञानस्य स्वविरोधिसंशयादिनिवर्त्तकत्वदर्शनेन ज्ञानस्यापि ज्ञानविरुद्धत्वेन तन्निवर्त्यत्वकल्पनोपपत्तेः । सन्तु वाऽनाद्यनन्ता अविद्यावस्थाः ताश्चाविद्यावच्छिन्नचैतन्यनिष्ठास्तत्कार्यघटादिनापि मृदाद्यवच्छिन्न इवाकाशो घटादिनावच्छिद्यन्ते ततः सर्वोपि व्यवहारः सङ्गच्छते । नचैवमनेकाज्ञानवादादविशेषापत्तिः स्वतन्त्रानेकाज्ञानानङ्गीकारात् । तेह्यात्ममात्राध्यस्तानि स्वतन्त्राण्यनेकाज्ञानानि स्वीकुर्वते । अस्माभिस्तु मूलाज्ञानावच्छिन्नचैतान्याध्यस्ततया तत्परतन्त्रा एवावस्थाः स्वीक्रियन्त इति विशेषः । तस्माल्लाघवानुगृहीताज्ञानानुभवबलेनाज्ञानस्यैकत्वात् मायायाश्चैकत्वादुभयोरेकत्वमविरुद्धमित्यर्थः ॥ १७० ॥

ननु "माया चाविद्या च स्वयमेव भवति" "इन्द्रो मायाभिः पुरुरूप ईयत" इत्यादौ मायाज्ञानयोर्भेदेन निर्देशादज्ञानबहुत्वस्याप्यवगमात् । अनुमानान्यागमबाधितविषयाणीत्याशङ्कते—

अनुमानमागमविरुद्धमिदं
प्रतिवादिनो यदि मतं तदसत् ।
न तमोऽतिरिच्य जगतो जनक-
प्रतिपादकं वचनमस्ति यतः ॥ १७१ ॥

अनुमानमिति । मायाविद्यैकत्वानुमानमविद्यैकत्वानुमानं चागमः

माया चाविद्येत्यादिभिः पूर्वोक्तं दूषयति—तदसदिति । तत्र हेतुमाह—न तम इति । यस्मात्कारणादज्ञानस्यैकस्य जगत्कारणत्वप्रतिपादकवचनं विहायान्यस्य तत्प्रतिवादकं वचनं नास्ति । ततो नागमविरोध इत्यर्थः । न चैकत्वे भेदेन निर्देशानुपपत्तिः । एकस्यैव देवदत्तस्य पितृपुत्रादिभावेनेव विक्षेपावरणलक्षणाकारभेदेन पृथग्निर्देशोपपत्तेः न च बहुवचनानुपपत्तिः । कार्यापेक्षयावस्थापेक्षया वोपपत्तेरिति भावः ॥ १७१ ॥

नन्वज्ञानं करणादिदोषक्षुब्धमेव रूप्यादिविभ्रमकारणं दृष्टम् तथा चाज्ञानस्य जगत्कारणत्वे क्षोभकदोषो वक्तव्यः। न च स प्रेक्ष्यते। अतो मायैव जगद्धेतुर्नाज्ञानमिति तयोरस्ति भेद इत्याशङ्क्य क्वचिदृष्टबलादन्यत्रापि तदापादने मायापि लोके मन्त्रौषधादिक्षोभकमपेक्ष्यैव गजादिभ्रमोपादानमिति जगन्मूलमायायामपि तत्प्रसज्ज्येत । लौकिकमायायां क्षोभकान्तरापेक्षायामपि जगन्निदानमायायां न तदपेक्षा तस्या अदृष्टेश्वरमात्र संक्षोभ्यत्वादित्येतदज्ञानेऽपि तुल्यं न वा लौकिक्यज्ञानस्या सर्वत्र क्षोभककरणदोषाद्यपेक्षा संविद्यनित्यत्वादिभ्रमे तदभावादिति पूर्वोक्तं स्मारयति—

विषयकरणदोषान्न भ्रमः संविदि स्या
दपि तु भवति मोहात्केवलादेवमेव।
भगवति परमात्मन्यद्वितीये समस्त
द्वयमतिरियमस्तु भ्रान्तिरज्ञानहेतुः ॥ १७२॥

विषयेति । उक्तार्थः श्लोकः ॥ १७२ ॥

एवमज्ञानस्यैकत्वं मायायाश्च तदभिन्नत्वं तत्प्रतिबिम्बलक्षणश्च जीवभावो ब्रह्मणः गुरुशिष्यादिभेदश्चाविद्याकल्पितः न परमार्थिक

इत्येवमाद्युक्तमिदानीं ब्रह्मण एव जीवत्वे तस्य नित्यमुक्ततयाऽहं कर्त्ता दुःखीत्यादिप्रतीयमानसांसारिकधर्माश्रयत्वन्न स्यादित्याशङ्क्य किं जीवस्य तदाश्रयत्वे तदभिन्नब्रह्मणोपि तत्प्रसङ्गात्तन्न स्यादित्युच्यते। किं वा ब्रह्मणः सर्वज्ञनित्यमुक्तत्वात्तदात्मकजीवस्यापि तत्त्वमिति तत्प्रतीतिर्न स्यादित्युच्यते। नोभयथापि वस्तुतोऽभेदेपि शुद्धाशुद्धोपाधिभेदेन भेदात्। बिम्बप्रतिबिम्बभावेनापि प्रतिबिम्बबिम्बधर्माणामन्यत्रापि कल्पितभेदेनावदातत्वश्यामत्वादीनामसांकर्येण स्थितत्वेनात्रापि सर्वज्ञत्वदुःखित्वादीनां व्यवस्थोपपत्तेरित्यभिप्रेत्य परिहरति—

अज्ञानिनो भवति दुखमनेन क्लृप्तं
सर्वेश्वरस्य न खलु प्रतिभासतोऽपि।
सर्वज्ञतादिगुणजातममुष्य नास्य
संसारिणः स्फुरति मोहसमन्वितस्य॥ १७३॥

अज्ञानिन इति। तमसाज्ञानप्रतिबिम्बस्य जीवस्यानेनोपाधिभूताज्ञानेन सर्वेश्वरस्य विशुद्धसत्वोपाधिकस्य दुःखं प्रतिभासतोपि नेत्यनेन जीवस्यापि दुःखं प्रतीतित एव न वस्तुत इति सूचितम्। सर्वज्ञतादीत्यादिपदेन सर्वशक्तिमत्वसर्वनियन्तृत्वानन्तकल्याणगुणवत्वादिकं गृह्यते। अमुष्येश्वरस्यास्य जीवस्य सर्वज्ञत्वादिकं नेत्यत्र हेतुमाह—मोहेति। तामसाज्ञानावृतस्येत्यर्थः॥ १७३॥

पूर्वं चैतन्यमात्राश्रयविषयमज्ञानमित्यत्र भाष्यकारवचनविरोधः परिहृतः। इदानीमन्येषामपि सिद्धान्तकर्तॄणां प्राचामाचार्याणां वचनस्याज्ञानस्य जीवाश्रयत्वविषयस्योक्तरीत्यैव तात्पर्यं कल्पयित्वा विरोधः परिहरणीय इत्याह—

जीवन्मुक्तिगतो यदाह भगवान्सत्संप्रदायप्रभु-
र्जीवाज्ञानवचस्तदीदृगुचितं पूर्वापरालोचनात् ।
अन्यत्रापि तथा बहुश्रुतवचः पूर्वापरालोचना-
न्नेतव्यं परिहृत्य मण्डनवचस्तद्ध्यन्यथा प्रस्थितम् ॥१७४॥

जीवन्मुक्तिगत इति । जीवन्मुक्तिप्रकरणे प्रवृत्तः यज्जीवाज्ञानवच आहेति सम्बन्धः तदीयवचनस्याविरोधनयने बीजमाह—सत्संप्रदायेति । तज्जीवाश्रिताज्ञानप्रतिपादकवचः ईदृक्स्पष्टप्रतीत्यपेक्षयेत्यस्मदुक्तप्रकारमन्यत्रापि ग्रन्थान्तरेऽपि तथा यथा जीवन्मुक्तिकारवचनमीदृगुचितम् । तथाऽन्येषां बहुश्रुतानां वचोपि पूर्वापरपर्य्यालोचनयेदृक् नेतव्यम् । तत्किं मण्डनस्य जीवाज्ञानवचनमप्येवन्नेतव्यं नेत्याह—परिहृत्येति । तत्र हेतुमाह—तद्धीति । तन्मण्डनवचः हि यतः अन्यथा प्राकारान्तरेण प्रस्तुतं प्रस्थितं भिन्नप्रस्थाननिष्ठमिति यावत् । न हि भिन्नप्रस्थानान्तरवचनविरोधः परिहरणीय इति भावः ॥ १७४॥

एवं बृहदारण्यकभाष्यगतमपि जीवाज्ञानविषयं वचनमुक्तरीत्या योज्यमित्याह—

जीवस्य कार्यकारणाधिपतेरविद्या-
दोषान्वितस्य तमसाऽऽवृतमन्धदृष्टेः ।
ज्ञानं निरावरणमैश्वरमित्यपीदं
भाष्याक्षरं कथितनीतिवशेन योज्यम् ॥१७५॥

जीवस्येति । कार्यकरणाधिपतेः कार्यं स्थूलदेहः करणानीन्द्रियाणि लिङ्गदेह इति यावत् । तयोरधिपतिः तन्नियन्ता दोषान्वितस्य रागा-

दियुक्तस्य तमसावृतमूढदृष्टेः तमसाज्ञानेनावृता अत एव मूढा स्वस्वरूपविषया दृष्टिर्ज्ञानं यस्य स तथोक्तः । अनेन जीवस्याविद्यावत्त्वे प्रत्यक्षं प्रमाणमुक्तम् । कार्यकारणाधिपतेरिति स्पष्टजीवोपाधिकीर्तनम् । अविद्याविशिष्टः कार्यकरणोपाधिरात्मा जीव इति बृहदारण्यकभाष्यवचनमविद्याशब्दस्य कार्याविद्यापरत्वमादाय वा स्पष्टप्रतीत्यपेक्षया वा अविरोधेन नेयमित्यर्थः । यत्पुनर्भाष्यकारीयमेव वचनान्तरं नित्यनिरतिशयज्ञानशक्त्यात्मेश्वर इत्यादिकमीश्वरस्याविद्यावरणशून्यज्ञानस्वरूपत्वप्रतिपादकं तदपीश्वरस्याविद्याबाधकसत्त्वात् स्पष्टप्रतीत्यभावाद्वा कार्याविद्याभावाद्वाविरोधेन नेयमित्याह—ज्ञानमिति । निरावरणमविद्याख्यावरणशून्यं ऐश्वरं ईश्वरसम्बन्धयुक्तविशेषणविशिष्टं जीवस्याविद्येतीदं भाष्याक्षरं मैश्वरं ज्ञानं निरावरणमितीदमपि भाष्याक्षरमिति सम्बन्ध इदञ्चार्थतोऽनुकरणं नीतिर्न्यायः ॥ १७५ ॥

उक्तन्यायमेव दर्शयन् प्रसङ्गादीश्वरस्वरूपमपि दर्शयति—

**स्पष्टं तमः स्फुरणमत्र न तत्र तद्व-**
**त्सर्वेश्वरे तदिति तत्र निषिध्यते तत् ।**
**बिम्बे तमोनिपतिते प्रतिबिम्बके वा**
**देहद्वयावरणवर्जितचित्स्वरूपे ॥ १७६ ॥**

स्पष्टं तम इति । अत्र जीवे तत्र सर्वेश्वर इति सम्बन्धः । तद्वज्जीव इव तत्तमः स्फुरणं तत्रेश्वरे तत्तमः स्फुरणम्, ईश्वरस्वरूपमेवाह—बिम्ब इति । निखिलोपाधिविवर्जिते परमात्मस्वरूपे, व्यावहारिकेश्वरस्वरूपमाह—तमो निपतित इति । तमसि विशुद्धसत्त्वप्रधानेऽज्ञाने निपतितेऽनुप्रविष्टतया प्रतीयमाने बिम्बभूतचैतन्यं वेश्वरः सत्त्वप्रधा-

नायां मायायां प्रतिबिम्बतचैतन्यं वोभयत्रापि जीव इव स्पष्टं तमः स्फुरणाभावात्तमो नास्तीति निषिध्यत इत्यर्थः। तत्र हेतुः देहद्वयावरणवर्जितचित्स्वरूप इति। स्थूलसूक्ष्मदेहद्वयस्याज्ञानप्रयुक्तावरणस्य चेश्वरेऽभावान्न स्पष्टमज्ञानस्फुरणमित्यर्थः॥ १७६॥

यत्पुनर्जीवस्य किञ्चिज्ज्ञत्वमीश्वरस्य सर्वज्ञत्वं चेत्येवंरूपार्थप्रतिपादकं भाष्यवचनं तदज्ञानस्य चैतन्यमात्राश्रयविषयत्व एव संगच्छते। जीवाश्रयत्वपक्षे त्वीश्वरस्य सर्वाकारज्ञानपरिणामासंभवात् सर्वज्ञत्वं न स्यादित्यभिप्रेत्याह—

**किंश्चिज्ज्ञताऽस्य तमसावृतनित्यदृष्टेः**
**सर्वज्ञता पुनरमुष्य परस्य पुंसः।**
**अज्ञानतज्जकरणादिविवर्जितत्वा-**
**दित्येतदेवमुपपन्नतरं हि भाष्यम्॥ १७७॥**

किञ्चिज्ज्ञतेति। अस्य जीवस्य तमसावृतनित्यदृष्टेः अज्ञानेनावृतनित्यस्वरूपचैतन्यस्य, इदं च किञ्चिज्ज्ञत्वे हेतुः। परमपुरुषस्य भगवतः सर्वज्ञत्वे हेतुमाह—अज्ञानेति। आवारकाज्ञानविवर्जितत्वात् अज्ञानानावृतस्वरूपत्वादित्यर्थः। हेत्वन्तरमप्याह—तज्जकरणादिविवर्जितत्वादिति। ईश्वरस्य हि विषयप्रकाशने व्यवधायकदेहाद्यभावेन करणसंप्रयोगादेरनपेक्षितत्वान्न तत्क्रमप्रयुक्तो ज्ञानक्रमः। अतो युगपत्सर्वविषयज्ञातृत्वलक्षणं सर्वज्ञत्वं सम्भवतीत्यर्थः। उक्तविशेषणविशिष्टस्य जीवस्य किञ्चिज्ज्ञतापरस्योक्तहेतोः सर्वज्ञतेत्येतद्भाष्यमेवास्मदुक्तप्रकारेणावृतत्वानावृतत्वादिव्यवस्थयोपपन्नतरमित्यर्थः॥ १७७॥

ननु चैतन्यमात्रस्याज्ञानाश्रयत्वे जीववदीश्वरस्याप्यहमज्ञ इति प्रतीतिः किं न स्यादित्याशङ्क्य तादृशप्रतीतेरन्तःकरणसम्बन्धनिमि-

त्तकत्वादीश्वरस्य च तदभावात् सर्वज्ञत्वकिञ्चिज्ज्ञत्वादिवद्व्यवस्थोपपत्तेर्मैवमित्यभिप्रेत्याह—

अज्ञोऽहमित्यवगतिर्न परस्य पुंसः
सर्वज्ञतावगतिरात्मनि नास्य पुंसः ।
अत्रापि कारणमहंकृतिवर्जितत्वं
तद्वत्तया च परमेऽल्पतरे च पुंसि ॥ १७८ ॥

अज्ञोऽहमिति । सर्वज्ञतावगतिरिति दृष्टान्तार्थम् । आत्मनि–स्वस्मिन् अस्य-जीवस्योभयत्रापि बीजमाह–अत्रापीति । ईश्वरस्याहमज्ञ इत्यवगत्यभावे जीवस्य च सर्वज्ञत्वाभावे चाहंकृतिवर्जितत्वमन्तःकरणासम्बद्धत्वं तद्वद्धताहंकृतिसम्बन्धता परमे पुंसि ईश्वरेऽल्पतरे पुंसि जीवे ईश्वरेऽहंकृतिविवर्जितत्वमज्ञोऽहमित्यभिमानाभावे हेतुः यथा जीवे तत्सम्बद्धत्वं सर्वज्ञत्वाभावे हेतुरिति भावः । यथा जीवस्याहंकारतादात्म्यापन्नत्वात्सर्वज्ञत्वाभावादहंकारस्याल्पत्वेन तदुपाधिकस्य स्वस्याप्यल्पतया सर्वसम्बन्धाभावात् तथेश्वरस्यापिपरिच्छिन्नान्तः करणतादात्म्याभावान्नाहमज्ञ इति परिच्छेदाभिमान इत्यर्थः ॥ १७८ ॥

नन्वीश्वरस्याप्यवतारेष्वहमज्ञो बद्धो दुःखीत्याद्यभिमानः स्मर्यत इति चेत्सत्यम् । न हि सोऽभिमानो जीवस्येवाहंकारपारतन्त्र्यनिमितः ईश्वरेण विभूत्यध्याये स्वस्य सर्वात्मतयाविष्करणात् स्वातन्त्र्याविष्करणाच्च किन्तु स्वेच्छोपात्तशरीरसम्बन्धित्वाभिनयप्रयुक्त एव अतः पारतन्त्र्यापादकाहंकृतिसम्बन्धो भगवतो नास्तीत्याह–

बिम्बस्य नापि तमसि प्रतिबिम्बकस्य
संघट्टनं क्वचिदहंकरणेन शक्यम् ।

वक्तुं प्रभोः सकललोकहितावतार-
स्वेच्छाविनिर्मितवपुर्वरमन्तरेण ॥ १७९ ॥

बिम्बस्येति । बिम्बभूतस्यापि सत्त्वप्रधानाज्ञाने प्रतिबिम्बभूतस्यापि प्रभोरीश्वरस्य सकललोकहितावतारस्वेच्छाविनिर्मितवपुर्वरमन्तरेण सकललोकहिताय योऽवतारः स्पष्टाविर्भावस्तदर्थं यत्स्वेच्छाविनिर्मितवपुस्तद्विषयो यो वरस्तं विना ब्रह्मादिप्रार्थनात्तवपुर्वरः वपुः श्रेष्ठस्तं विनेति वा । अहंकरणेन पारतन्त्र्यापादकाहंकारेण संघट्टनं सम्बन्धो वक्तुं न शक्यत इत्यर्थः ॥ १७९ ॥

ननु माभूदीश्वरस्याहंकृतियोगः अज्ञानावृतिस्तु किन्न स्यात् न हि कार्याभावः कारणाभावप्रयोजक इति चेत् तत्र किमीश्वरस्याज्ञानावृतत्वं तदनुभवात्कल्प्यते, उताहमभिमानाख्यकार्येण, अथवा पुण्यापुण्यलक्षणकर्मणा, अथवा शरीरसम्बन्धेन, नाद्यः, जीवस्येव परस्यान्तःकरणसम्बन्धाभावेनाहमज्ञ इत्यनुभवाभावात् । न द्वितीय इत्याह—

नाहंकृतिं च परिहृत्य तमस्विताधीः
सम्भाव्यतेऽपहतपाप्मनि नित्यमुक्ते ।
तामन्तरेण घटते न च मूढभाव-
सम्भावनाऽपि परमेशितरि प्रसन्ने ॥ १८० ॥

नाहंकृतिमिति । अहमभिमानं परिहृत्य विहाय तमस्विताधीः अज्ञानित्वबुद्धिरहमज्ञ इत्यहमभिमानपूर्वको ह्यज्ञानित्वाभिमानो वक्तव्यः । तत्र यद्यहंकृतिसम्बन्धो न स्यात्कथं तत्पूर्वकाज्ञानित्वाभिमानः स्यादित्यर्थः । तृतीयं दूषयति—अपहतपाप्मनीति । पाप्मशब्देनानर्थहेतुत्वेन

पुण्यमपि लक्ष्यते। तदुक्तम् "ब्रह्मादीनां शरीराणि श्वसूकरशरीरवत्। यतो जिहासितान्येव तस्माद्धर्मेऽपि पाप्मधीरि"ति। अपहतो निराकृतः पाप्मा यस्य स तथोक्तः पुण्यपापरहित इति यावत्। तत्र हेतुः—नित्यमुक्त इति। सदाकर्तृत्वादिरहिते कर्तुरेव हि कर्म भवति। तथाचेश्वरस्याकर्तृतया कर्मसम्बन्धाभावान्न तेनाप्यज्ञानावृतत्वं सम्भवतीत्यर्थः। अज्ञानावृतत्वाभावादेव मिथ्याज्ञानलक्षणमोहोपि नास्तीत्याह—तामन्तरेणेति। तामतमस्वितां प्रसन्ने निर्मूले "अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तव" इतीश्वरवचनादज्ञानावृतत्वाभावे तत्कार्यमोहोपीश्वरस्य न सम्भवतीत्यर्थः॥ १८०॥

चतुर्थं दूषयति—

स्वेच्छाविनिर्मितवपुर्भजतोऽपि तस्य
नाज्ञानिताघगतिरस्ति वशित्वहेतोः।
वश्यत्वहेतुकमिदं स्फुरणं नराणां
नाहं विजान इति नास्ति तदीश्वरस्य॥१८१॥

स्वेच्छेति। स्वेच्छासृष्टशरीरसम्बन्धेपि तस्य भगवतः नाज्ञानिता भवति। नाज्ञानावृतत्वबुद्धिरित्यर्थः। तत्र हेतुः—वशित्वहेतोरिति। सर्वस्य वशीत्यादिनेश्वरस्य सर्ववशित्वेन सिद्धत्वान्नाज्ञानावृतत्वमित्यर्थः। ईश्वरः अज्ञानावृतो न भवति तद्वशित्वात्प्रसिद्धमायाविवह्व्यतिरेकेण जीववद्वेत्यनुमानमिह विवक्षितम्। अस्यानुमानस्याप्रयोजकत्वमुद्धरति—वश्यत्वहेतुकमिति। नराणां जीवानां नाहं जान इत्यज्ञानावृतत्वस्फुरणं वश्यत्वहेतुकमज्ञानादिपरवशत्वहेतुकं न शरीरसम्बन्धमात्रहेतुकं तस्यान्यथापि सिद्धत्वात्। तच्चाज्ञानादपि परवशत्वमीश्वरस्य नास्ति ततस्तस्य न शरीरसम्बन्धमात्रेणाज्ञानित्वमित्यर्थः॥ १८१॥

नन्वीश्वरेपि श्रीरघुनायके अहमज्ञ इति अज्ञानावृतत्वानुभवोनुस्मर्यत इत्याशङ्क्य सकललोकहितावतारेत्युक्तार्थं प्रपञ्चयति—

संकल्पपूर्वकमभूद्रघुनन्दनस्य
नाहं विजान इति कञ्चनकालमेतत् ।
ब्रह्मोपदेशमुपलभ्य निमित्तमात्रं
तच्चोत्ससर्ज स कृते सति देवकार्ये ॥१८२॥

संकल्पपूर्वकमिति । एतदज्ञानावृतत्वं भक्तवत्सलस्य भगवतो भक्तभृगुशापपरिपालनाय संकल्पपूर्वकमेव कञ्चित्कालमहन्न जाने इत्यज्ञानावृतत्वाभिमानोऽभूत् न तु जीववदज्ञानपारतन्त्र्यात् न च संकल्पपूर्वं कृतस्य स्वातन्त्र्यविघातकत्वं सम्भवति मायिकव्याघ्रादावदर्शनादित्यर्थः । ननु प्रसिद्धजीवाज्ञानवत्तन्निष्ठाज्ञानस्याप्यौपदेशिकविद्यानिवर्त्यत्वस्मरणात्कथं न तत्पराधीनत्वं तस्येत्याशङ्क्याह—ब्रह्मोपदेशमिति । ब्रह्मणा चतुर्मुखेन कृत उपदेशः ब्रह्मोपदेशः स्वस्य ब्रह्मत्वोपदेशो वा तदज्ञानावृतत्वं सः श्रीरघुनायकः ब्रह्मोपदेशो हि लोके नटनामनुसरतो भगवतोऽज्ञानविसर्जने निमित्तमात्रं स्वतन्त्र एव सन् स्वशरीरमिव निर्वृत्ते देवकार्ये अज्ञानं विससर्ज ततो न तत् पराधीनत्वं तस्येत्यर्थः ॥ १८२ ॥

तस्माच्चैतन्यमात्राश्रयविषयमज्ञानमिति पक्षे ईश्वरस्याज्ञानावृतत्वाभावात् निरावरणज्ञानत्वाच्च जीवस्य च तदावृतत्वात् सावरणज्ञानत्वाच्च सर्वज्ञत्वकिञ्चिज्ज्ञत्वनित्यमुक्तत्वसंसारित्वादीनां व्यवस्था युक्तेत्युक्तोपपादनं स्मारयितुमुपसंहरति—

अज्ञानवर्जिततया परमेश्वरोऽसौ
सर्वज्ञ एव यदहंकृतिबन्धहीनः ।

**ज्ञानं निरावरणमिष्टममुष्य यस्मा-**
**ज्जीवस्य सावरणमेव यतोऽनभिज्ञः ॥ १८३ ॥**

अज्ञानेति । जीववन्नाहं जान इत्यावरणज्ञानवर्जितत्वादित्यर्थः । तत्र हेतुमाह—यदीति । यस्मात्कारणादहंकृतिबन्धहीनः अहंकरण-सम्बन्धवर्जितः तस्मात्कारणान्नाहं जान इत्यज्ञानविवर्जितत्वा-दित्यर्थः । जीवस्य चाहंकरणसम्बद्धतया नाहं जान इत्यावरणाज्ञान-सत्त्वात्किञ्चिज्ज्ञत्वमेवेत्यर्थः । तयोः सर्वज्ञत्वतदभावे हेत्वन्तरमप्याह—ज्ञानमिति । अमुष्येश्वरस्य ज्ञानं निरावरणं विषयव्यवधानशून्यं जीवस्य ज्ञानं सावरणं विषयव्यवधानसहितं यतः अतोपि ईश्वरः सर्वज्ञः जीवोऽनभिज्ञः असर्वज्ञ इत्यर्थः ॥ १८३ ॥

जीवेश्वरज्ञानयोः सावरणत्वनिरावरणत्वे उपपादयति—

**सर्वप्रमाणफलभूतसमस्तसंवि-**
**ज्जातं बिभर्ति परमः पुरुषो न जीवः ।**
**ज्ञानं निरावरणमैश्वरमस्तु तस्मा-**
**ज्जैवं च सावरणमस्य विशेषहेतोः ॥ १८४ ॥**

सर्वप्रमाणेति । सर्वप्रमाणानां फलभूताः समस्तवस्तुविषयाः याः संविदः तासां जातं समूहं बिभर्त्ति भरते अस्य जीवस्य विशेषहेतोः समस्तसंविदज्ञानाश्रयत्वलक्षणविशेषाद्धेतोः ईश्वरो हि सर्वोपादा-नतया सर्वप्रमाणफलसर्वविषयज्ञानानामप्युपादानभूतस्तदाश्रयो भवति ततस्तज्ज्ञानं निरावरणमेव जीवस्तु न सर्वोपादान इति न सर्वविषयज्ञानाश्रयः अतोऽस्मादेव विशेषाज्जैवं ज्ञानं विषयव्यवधान-सहितमित्यर्थः ॥ १८४ ॥

निरावरणसावरणत्वे च हेत्वन्तरमाह—

अज्ञानतज्जमखिलं जगदात्मभासा
नित्यं प्रकाशयति सन्निहितः सदात्मा ।
जीवस्तु नैवमिति सावरणं तदीयं
ज्ञानं निरावरणमैश्वरमुच्यते हि ॥ १८५ ॥

अज्ञानेति । आत्मभासा स्वरूपप्रकाशेन सन्निहितः सम्बद्धः नैवमसन्निहितो न प्रकाशयतीत्यर्थः । तदीयं—जैवम्, ईश्वरस्य हि तस्य भासा सर्वमिदं विभातीत्यादिना अज्ञानतत्कार्यलक्षणसमस्तजगदवभासकत्वं श्रूयते न च तत्तस्य समस्तसम्बन्धं विना सम्भवति । अतस्तस्य चैतन्यरूपस्य सर्वोपादानतया सर्वान्तर्यामितया च सर्वसन्निहितत्वात् जीवस्य च सर्वानुपादानतया तदसन्निहितत्वात् जैवं ज्ञानं सावरणं ऐश्वरं च ज्ञानं निरावरणमुच्यत इत्यर्थः ॥ १८६ ॥

ईश्वरस्याज्ञानाश्रयत्वेपि निरावरणज्ञानत्वं सर्वज्ञत्वं चावरणाद्यभावादेव न त्वज्ञानसम्बन्धाभावादित्युक्तेऽर्थे श्रीविष्णुपुराणसम्मतिमाह—

ज्ञानात्मकस्यामलसत्त्वराशे-
रपेतदोषस्य सदा स्फुटस्य ।
किं वा जगत्यत्र समस्तपुंसा-
मज्ञातमस्यास्ति हृदि स्थितस्य ॥ १८६ ॥

ज्ञानात्मकस्येति । अमलसत्त्वराशेरिति । अज्ञानाश्रयस्यैव तस्य तमोगुणप्रयुक्तावरणाभाव उक्तः । अन्यथा सत्वगुणाश्रयत्वस्याप्यनुपपत्तेरि-

त्यर्थः । अपेतदोषस्येति । कर्मादिलक्षणावरणाभाव उक्तः । समस्तपुंसां हृदि स्थितस्येति भूरादिव्यवधानप्रयुक्तावरणाभाव उक्तः । अत्र जगति किमज्ञातमस्ति सर्वं विज्ञातमेवेत्यर्थः ॥ १८६ ॥

ईश्वरस्य मायावित्वप्रतिपादकवचनमपि मायाभिन्नाज्ञानाश्रयस्यैव सतोऽनावरणज्ञानत्वं दर्शयतीत्याह—

मायाममसौ वितनुते विभुरेवमेनां
सर्वेश्वरः सततमेव वशीकरोति ।
इत्यादिवाक्यमुपपन्नतरं पुराणे
स्वाज्ञानमस्य च वशे विदधीत भावात् ॥१८७॥

मायामिति । एवं प्रपञ्चाकारेण वितनुते विस्तारयति । तत्र हेतुमाह—सर्वेश्वर इति । यतोऽसौ सर्वनियन्तृत्वेन मायामपि स्ववशे करोति अतो मायां वितनुत इत्यर्थः । नन्वनेन वाक्येन मायावित्वमेवोच्यते नाज्ञानाश्रयत्वमित्याशङ्क्याज्ञानस्यैव वश्यत्वेन मायाशब्दवाच्यत्वान्नानुपपत्तिरित्याह—स्वाज्ञानमिति । अस्येश्वरस्याज्ञानमीश्वरस्य वशवर्ति यतः अतो मायेत्यर्थः । अज्ञानस्येश्वरवश्यत्वे हेतुमाह—चिदधीनभावादिति । स्वसत्तास्फूर्तिप्रदचैतन्येश्वराधीनत्वादित्यर्थः ॥ १८७ ॥

एवं जीवेश्वरयोः किञ्चिज्ज्ञत्वसर्वज्ञत्वादिधर्मव्यवस्थाभिधायिसिद्धान्तग्रन्थगतिमीश्वरस्याज्ञानाश्रयत्वेपि संभवतीत्युपपादितामुपसंहरति—

जीवाज्ञतावचनमेवमिदं समस्तं
सर्वत्र योज्यमितरत्र च तन्निषेधः ।

तस्मात्समञ्जसमिदं मतमस्मदीय-
माचार्यवाक्यमुपपन्नतरं हि तत्र ॥ १८८ ॥

जीवेति। जीवस्य नाहं जान इत्यज्ञानाश्रयत्ववचनमितरत्र ईश्वरे तन्निषेधः अज्ञानाश्रयत्वनिषेधश्च एवमस्मदुक्तप्रकारेण स्पष्टास्पष्ट-प्रतीत्यपेक्षया योज्यम्। फलितं दर्शयति—तस्मादिति। अज्ञानस्य चैतन्य-मात्राश्रयविषयत्वादिलक्षणमस्मदीयमतं तत्रास्मदीये मते ॥ १८८ ॥

न केवलमाचार्यवाक्यमेवास्मन्मतानुसारि किन्तु सकल-वेदान्तवाक्यप्रवृत्तिरप्यस्मन्मतानुसारिणीत्याह—

चैतन्यमेव तु तमस्वि तदप्रबुद्धं
सर्वज्ञमेतदिह विश्वमिमं विभागम्।
जीवेश्वरौ च जगदित्यपि निर्मिमीत
इत्येव वेदशिरसः प्रथितः प्रचारः ॥ १८९ ॥

चैतन्यमेवेति। अखण्डचैतन्यमेवेत्यर्थः। तमस्वि अज्ञानाश्रयः तच्चैतन्यमेवाप्रबुद्धमज्ञानविषयः सर्वज्ञं च तत् अज्ञानाश्रयविषयसर्वज्ञ-चैतन्यम् 'इह स्वस्मिन् विश्वं प्रपञ्चं विभागं विभक्तं निर्मिमीते। विश्वपदार्थं विविच्य दर्शयति—जीवेश्वराविति। जीवेश्वरौ जगदित्यपि विभक्तं विश्वमिति सम्बन्धः। जीवः ईश्वरो जगदित्येवंरूपेण विभक्तं जगन्निर्मिमीत इत्यर्थः। अत्रेश्वरत्वं जीवत्वमेव च निर्मातव्य-त्वेन विवक्षितं न तु जगद्वद्धर्मिद्वयस्वरूपमपि। प्रचारः प्रवृत्तिः। तद्धेदं तर्ह्यव्याकृतमासीत् यस्सर्वज्ञस्सर्ववित् यस्य ज्ञानमयं तपः तस्मा-देतद्ब्रह्मनामरूपमन्नं च जायते इत्यादिवेदान्तवाक्यं परमात्मैवाज्ञाना-श्रयविषयोऽव्याकृतसंज्ञः सैव सर्वज्ञः स एव च जीवेश्वरघटादिरूपेण·

विभक्तं विश्वं निर्मिमीत इत्येवंरूपार्थप्रतिपादकत्वेन प्रवृत्तं तथा च तत्सर्वमस्मन्मत एवोपपद्यत इत्यर्थः ॥ १८६ ॥

नन्वीश्वरस्याप्यज्ञानसम्बन्धित्वे किमिति श्रुतौ स्मृतौ वा न तस्याज्ञानीति व्यपदेशः किमिति वा नियमेन मायावीति व्यपदेशः । तदभेदान्न दोष इति चेत्तर्हि जीवेपि किमिति न मायावित्वव्यपदेशः । ततो नूनं मायाविद्ययोर्भेदो मायैवेश्वराश्रया नाज्ञानमिति च गम्यते । तयैव सर्वज्ञत्वाद्युपपत्तिश्चेत्याशङ्कामपाकरोति—

**जीवेशानजगद्विभागजननी शक्तिर्जडा वैष्णवी**
**मायेशानगता सती भवति सा जीवावधिर्मोहगीः ।**
**जीवानीश्वर एव मोहयति ते जीवा विमुह्यन्त्यतः**
**शश्वद्विश्वदृगीश्वरो भवति ते जीवा विमूढा मुहुः ॥१९०॥**

जीवेशानेति । जीवेश्वरजगद्विभागप्रयोजिका शक्तिः आत्मपरतन्त्रत्वात् वैष्णवी पूर्णचैतन्याश्रयेशानगता सती ईश्वरसम्बन्धिनी सती माया भवति । जीवावधिः जीवसम्बन्धिनी सती मोहगीः मोहशब्दवाच्या यत्तूक्तमज्ञानमाययोर्भेद इति तन्न तस्य निराकृतत्वान्निराकरिष्यमाणत्वाच्च । नचैवं सति नियतव्यपदेशानुपपत्तिः । एकस्याप्यज्ञानस्य स्वतन्त्रपरतन्त्रचैतन्यसम्बन्धेन मायाविद्यालक्षणभेदव्यवदेशोपपत्तेः एकस्मिन्नेव देवदत्ते पितृपुत्रसम्बन्धेन पुत्रत्वपितृत्वलक्षणभेदव्यपदेशवदित्यभिप्रेत्याह—जीवानिति । एष मायावी तथा च मायाविनो मोहयितृत्वे मायया अपि मोहहेतुत्वमिति मायापरतन्त्रत्वात् जीवस्याज्ञानित्वव्यपदेशः । तां प्रति स्वातन्त्र्यादीश्वरस्य मायावित्व व्यपदेश इत्यर्थः । फलितमाह—अत इति । यतो जीवा एव मुह्यन्ति नेश्वरः अतो विश्वदृक् सर्वज्ञः विमूढाः भ्रान्तिसंकुलाः असर्वज्ञा इति ॥ १९० ॥

इदानीमेकस्यैवाज्ञानस्य साधारणासाधारणभ्रान्तिकारणत्वेनापि भेदप्रसिद्धिमुपपादयति—

अज्ञानिनो भवति मोहविजृम्भितं तु-
दुःखं जगज्जनकता परमेश्वरस्य ।
मायामयी भवति तेन विलक्षणत्व-
मेकान्ततः श्रुतिशिरस्सु तयोः प्रसिद्धम् ॥१९१॥

अज्ञानिन इति । अज्ञानावृतस्य जीवस्य मोहविजृम्भितमावारकदुःखात्मकाज्ञानविजृम्भितमज्ञानिनो दुःखमित्यनेनासाधारणभ्रमकारणत्वेनाज्ञानत्वव्यपदेशः समर्थितः जगज्जनकता परमेश्वरस्य मायामयीत्यनेन साधारणभ्रमकारणत्वेन मायावित्वव्यपदेशः समर्थितः जगज्जनकता जगत्कारणत्वं परमेश्वरस्य मायावशकस्य सर्वज्ञस्य मायामयी विक्षेपशक्तिमदज्ञानाधीना जगत्कारणत्वदुःखित्वादिकारणत्वसाधनफलमाह—तेनेति । येन जीवेश्वराश्रितसाधारणासाधारणकार्यहेतुरज्ञानं तेन विलक्षणत्वं भिन्नत्वम् एकान्ततः नियमेनेदं प्रसिद्धमित्यनेनान्वीयते तयोर्जीवेश्वरयोः ॥ १९१ ॥

तस्मादज्ञानस्य चैतन्यमात्राश्रयत्वेपि मायावित्वविमूढत्वादीनां व्यवस्थोपपत्तेराचार्याणां जीवाज्ञत्ववचनमुक्तरीत्या स्पष्टतत्प्रतीत्यभिप्रायेण च वक्तव्यमित्युपसंहरति—

चैतन्यस्याज्ञानशक्तेरनादे-
र्जीवत्वं तु व्यञ्जकं कल्पयन्तः ।
जीवारूढं व्यक्तमज्ञानमाहु-
र्जीवो मूढः कथ्यतेऽतो बहुज्ञैः ॥ १९२ ॥

चैतन्यस्येति । चैतन्यस्य याऽज्ञानरूपा शक्तिः तस्याः जीवत्वं जीवस्वरूपं व्यञ्जकमभिव्यञ्जकमहमज्ञ इत्येवाज्ञानस्य प्रतीतेः । अन्यथा चाप्रतीतेः । जीवत्वमेवाज्ञानाभिव्यञ्जकमिति कल्पयन्तोऽज्ञानं जीवाश्रयमिति वदन्ति लौकिकाः अतः तदनुरोधेनैवाज्ञानं जीवाश्रयमित्याचार्यैरुच्यत इत्यर्थः । तस्मात् चिन्मात्राश्रिताज्ञानादेन जीवेश्वरभेदस्तदाश्रितसर्वज्ञत्वादिकल्पना च न परमार्थत इति सिद्धम् ॥ १६२ ॥

नन्विदं सूत्रविरुद्धं सूत्रकारो हि नेतरोनुपपत्तेः अधिकं तु भेदनिर्देशादित्यादिसूत्रवाक्यैर्जीवपरभेदमेव विवक्षतीत्याशङ्क्य सूत्रकारस्यायं प्रौढिवाद एव वस्तुतस्तस्यापि प्रत्यक्ब्रह्मैक्य एव दृष्टिरित्याह—

अत्रैव वस्तुनि दृढं व्यवतिष्ठमानः
प्रौढिप्रदर्शनपरः पुनरन्यदन्यत् ।
भाषापदं किमपि निक्षिपति स्फुटं त-
दस्माभिरेवमुपपादितमञ्जसैव ॥ १६३ ॥

अत्रैवेति । अस्मदुक्तार्थ एव जीवपरैक्ये दृढं तात्पर्येण व्यवतिष्ठमानः विशेषेण वर्त्तमानः अतिशयेन तात्पर्यवानित्यर्थः । उत्तरश्लोकस्थसूत्रकृत्पदस्यात्रानुषङ्गः अन्यदन्यत् नेतरोऽनुपपत्तेरित्यादिकं भाषापदमुच्चारणविषयं वाक्यं निक्षिपति करोति वदतीत्यर्थः । तदपि सूत्रमस्माभिरुक्तप्रकारेणार्थात् सम्यगुपपादितं भवतीत्याह—स्फुटमिति । तद्भाषापदम् ॥ १६३ ॥

कुत एवं सूत्रकारस्याभिप्रायवर्णनमित्याशङ्क्य तद्वचनबलादेवेत्याह—

विस्पष्टमात्ममतमेव हि सर्वधर्म-
सूत्रेण सूत्रकृदिदं दृढमाचचक्षे ।
सर्वज्ञतादिपरिपालनतत्परः सं-
स्तत्रैव भाष्यकृदपीदमुवाच यत्नात् ॥ १९४ ॥

विस्पष्टमिति । आत्ममतं स्वमतं सर्वधर्मसूत्रेण सर्वधर्मोपपत्तेश्चेति सूत्रेणेदं ब्रह्मात्मैक्यं सर्वज्ञतादिपरिपालनतत्परः सन् सर्वज्ञत्वजगत्कारणत्वादीनामुपपादने तात्पर्यवान् सन् सूत्रकारो हि सर्वधर्मोपपत्तेश्चेति सूत्रेण परमेश्वरस्य जगद्रचनानुकूलान् सर्वज्ञत्वादीन् धर्मान् माययैवोपपादयति । अतस्तस्यास्मदुक्त एवाभिप्राय इत्यर्थः । ननु सूत्रे मायादिपदं न प्रतीमः सत्यं सूचितं हि तत् कथमेवं त्वया ज्ञायते तद्धृदयवेदिसर्वज्ञाचार्यवचनबलादित्याह—अत्रैवेति । अस्मिन्सूत्रे इदं जीवेश्वरविभागसर्वज्ञत्वादेर्मायामयत्वं भाष्यकारो हि वैशिषिकाद्यभिमतजगत्कारणे सर्वज्ञत्वाद्यनुपपत्तिमनुपन्यस्य ब्रह्मणि तत्कारणे परिगृह्यमाणे सर्वज्ञत्वादिकमुपपद्यते । सर्वज्ञं सर्वशक्ति महामायं च ब्रह्मेति वदन् मायाधीनमेव ब्रह्मणः सर्वज्ञत्वं जगद्व्यापत्यादिकं दर्शयति । तथा च परमात्माश्रयविषयाज्ञानादेव निखिलजगज्जीवेश्वरविभ्रमस्तज्ज्ञानादेव तद्भ्रमोपादानाविद्यानिवृत्तिरित्यर्थः ॥ १९४ ॥

ननु परमात्मन एवाज्ञानाश्रयत्वे तस्य जीवत्वं स्यात् । न च तद्युज्यते सर्वज्ञत्वाद्यनुपपत्तिप्रसङ्गात् अतो जीवस्यैवाज्ञानाश्रयत्वं वक्तव्यमित्यभिप्रायेण शङ्कते—

अज्ञानित्वं ब्रह्मणो जीवता चे-
दाज्ञानित्वं तत्र जीवस्य युक्तम् ।

अज्ञानित्वे चान्यदप्यभ्युपेत-

मज्ञानित्वं यत्त्वहो कष्टपिष्टिः ॥ १९५ ॥

अज्ञानित्वमिति। यदि ब्रह्मणो अज्ञानाश्रयत्वं तर्हि तस्य जीवता स्यादिति चेदित्यर्थः। अज्ञानं जीवचैतन्याश्रितमिति वदन् प्रष्टव्यः। किं चैतन्यस्य जीवत्वं स्वाभाविकमुतौपाधिकम् नाद्यः। ब्रह्मतादात्म्योपदेशवैयर्थ्यप्रसङ्गात्। द्वितीये किमज्ञानाश्रयत्वं जीवत्वप्रयोजकमित्याश्रित्य ब्रह्मणस्तत्त्वे जीवत्वमापाद्यते। उतान्यदेव जीवत्व प्रयोजकमित्याश्रित्य। नान्त्यः। ब्रह्मणो ज्ञानाश्रयत्वेन जीवत्वापादनानुपपत्तेः। प्रथमेपि किमज्ञानमेकमेव उतानेकं नाद्य इत्याह— नाज्ञानित्वमिति। तत्रैकमेवाज्ञानं तदाश्रयत्वमेव जीवत्वमिति पक्षे जीवस्याप्यज्ञानित्वं न युक्तम्। स्वविशिष्टे स्वस्यासंभवादित्यर्थः। द्वितीयमनूद्य गौरवादिना दूषयति—अज्ञानित्वे चेति। एकाज्ञानेनैव निखिलव्यवहारोपपत्तावनेकाज्ञानकल्पनं कष्टमित्यर्थः॥ १९५॥

किञ्चाज्ञानाश्रयताप्रयोजकजीवत्वोपाधिभूतमज्ञानं कुत्र विद्यत इति विवेचनीयम्। किं जीवे। उत चैतन्यमात्रे। नाद्यः आत्माश्रयात् द्वितीये ब्रह्मण एवाज्ञानित्वमित्यागतमित्याह—

अज्ञानित्वं ब्रह्मणश्चानभीष्ट-

मस्मिन्पक्षे दुर्निवारं प्रसक्तम्।

अज्ञानित्वं ब्रह्मणश्चेदभीष्ट-

मस्मत्पक्षस्त्यज्यते कस्य हेतोः॥ १९६॥

अज्ञानित्वमिति। अनभीष्टं तवासम्मतमस्मिञ्जीवाश्रितमज्ञानमिति पक्षेपीत्यर्थः। अस्मिन्कल्प इति वा। तथा च त्वपक्षेपि ब्रह्मणोऽज्ञानित्वप्राप्तेर्न मत्पक्षपरित्यागे आग्रहः कर्त्तव्य इत्याह—अज्ञानित्वमिति।

कस्य हेतोः कस्माद्धेतोरित्यर्थः ॥ १९६ ॥

नन्वज्ञानि तत्प्रतिबिम्बतचैतन्यमेव जीव इत्युच्यते । तत्र चाज्ञानमुपाधिरेव न विशेषणं येन स्वविशिष्टे स्वस्य वृत्तिप्रसङ्गः। तथाचाज्ञानस्य जीवाश्रयत्वेन ब्रह्माश्रयत्वप्रसङ्गः । नचाज्ञाने सति प्रतिबिम्बतत्वं तस्मिँश्च सति तत्राज्ञानमित्यन्योन्याश्रय इति वाच्यम् । अज्ञानप्रतिबिम्बयोरनादित्वेन तदभावात् । एवञ्च सति ब्रह्मणः शुद्धत्वमपि संरक्षितं भवति । अन्यथा ब्रह्मण एवाज्ञानाश्रयत्वेऽज्ञानदोषेण दूषितत्वात् शुद्धत्वं न स्यादतो ब्रह्मणः शुद्धत्वार्थमेवाज्ञानाश्रयत्वं त्यज्यत इत्याशङ्कामनूद्य दूषयति—

शुद्धत्वार्थं ब्रह्मणस्त्यज्यते चे-<br>दस्मत्पक्षेऽप्यस्ति शुद्धत्वमस्य ।<br>अस्मत्पक्षे शुद्धता वास्तवी चे-<br>द्युष्मत्पक्षे कल्पिता शुद्धता किम् ॥१९७॥

शुद्धत्वार्थमिति । त्यज्यतेऽज्ञानाश्रयत्वं ब्रह्मण इति त्वत्पक्ष इति शेषः । अस्याज्ञानाश्रयस्य ब्रह्मणः अज्ञानलक्षणदोषस्य कल्पितत्वेन वास्तवशुद्धत्वाविरोधित्वान्न शुद्धत्वार्थमस्मत्पक्षत्यागो युक्त इत्यर्थः नन्वेवमपि भवत्पक्षे वस्तुत एव शुद्धिः स्यात् । न प्रतीत्यापीत्यभिप्रायेण शङ्कते—अस्मत्पक्ष इति । ब्रह्मणोऽज्ञानाश्रयत्वमित्यस्मत्पक्षे यथाश्रुतमालम्ब्य गूढाभिसन्धिः परिहरति—युस्मत्पक्ष इति । यदि ब्रह्मणोऽज्ञानाश्रयत्वे प्रातीतिकाशुद्धिः स्यादित्याशङ्क्यते तर्हि त्वत्पक्षेपि ब्रह्मणो जगदुपादानतया तत्प्रयुक्ताशुद्धिः समापाद्याऽऽरोपितस्योपादानत्वस्य वास्तवः शुद्ध्यव्याहन्तृत्वमित्युच्यते तर्ह्यस्मत्पक्षेपि तुल्यमिति गूढोऽभिसन्धिः । न चाज्ञानप्रतिबिम्बस्य जीवस्याज्ञाना-

श्रयत्वं सम्भवति । उपाधिपरामर्शाधीनस्य प्रतिबिम्बस्य तदाश्रयतया तं प्रति स्वातन्त्र्यानुपपत्तेः प्रतिबिम्बस्य वस्त्वाभासत्वाच्च ॥ १६७ ॥

तस्मादज्ञानोपाधिकजीवाश्रयत्वमज्ञानस्य वदतो वादिनः पक्षोऽत्यन्तक्लिष्टकल्पनत्वात्परित्याज्य एवेत्युपसंहरति—

**कष्टः कष्टः कल्पितब्रह्मवादः**
**श्रेयो मार्गाद् भ्रश्यतो भ्रान्तबुद्धेः ।**
**त्यक्तव्यस्ते सज्जनैरस्मदीयः**
**श्रेयोमार्गः श्रेयसे चाभ्युपेयः ॥ १६८ ॥**

कष्ट इति । भ्रान्तबुद्धेः अत एव श्रेयोमार्गात् भ्रश्यतः पुरुषार्थमार्गात् प्रच्युतस्य ते त्वया कल्पितब्रह्मवादः स्वकपोलकल्पितब्रह्मवाद इति सम्बन्धः । कष्टः कष्ट इति वीप्सयाऽतिकष्टत्वमुक्तम् । अत एव स पक्षः सज्जनैर्विवेकिभिस्त्यक्तव्यः । किञ्चास्मदीयश्रेयोमार्गश्चोपादेयः । किमर्थं श्रेयसे मोक्षाय । तस्माच्चैतन्यमात्राश्रयमेवाज्ञानं तत्प्रयुक्ते एव जीवत्वेश्वरत्वे इति भावः ॥ १६८ ॥

नन्वस्तु चैतन्यमात्राश्रयमज्ञानं जीवत्वं च तन्मात्रसम्बन्धप्रयुक्तं तथापि नेश्वरत्वमज्ञानसम्बन्धप्रयुक्तं किन्तु तदभावसम्बन्धप्रयुक्तमेव । नन्वज्ञानाभावोपाधिक ईश्वरः किंब्रह्माण्डात् बहिरेव वर्त्तते । उत तदन्तरमपि । नाद्यः । तस्य ब्रह्माण्डान्तर्वर्तिप्राणिसम्बन्धाभावेनान्तर्यामित्वानुपपत्तेः । न द्वितीयः । ब्रह्माण्डान्तर्वर्तिनः चैतन्यस्याज्ञानसम्बन्धित्वेन तदभावसम्बन्धित्वानुपपत्तेरिति चेन्न । आकाशे एकदा पक्षितदभाववत्ब्रह्माण्डान्तर्वर्तिनि चैतन्येऽप्यज्ञानतदभावसम्बन्धोपपत्तेरित्यभिप्रेत्याशङ्कते—

एकोपाधावस्तिता नास्तिता च
मूढत्वस्य स्वीकृता चेत्परस्मिन् ।
व्योम्न्येकस्मिन्नस्तिता नास्तिता च
पक्ष्यादीनां यद्वदिष्टा तथैव ॥ १९९ ॥

एकोपाधाविति । मूढत्वस्याज्ञानाश्रयत्वस्य अस्तितता सद्भावः नास्तितताऽभावश्च परस्मिन्परमात्मनि एकोपाधावेकाश्रये यद्वत् व्योम्नि पक्ष्यादिभावाभावौ तथैव स्वीकृता चेदिति सम्बन्धः । यद्यप्ययं दृष्टान्तः पूर्वं निराकृत एव तथापि पूर्वमेकाज्ञानवादे बन्धमोक्षव्यवस्थाङ्गत्वेन जीवभेदेन एकत्राज्ञानतदभावयोरेनं दृष्टान्तमुपादाय निराचकार । इदानीमज्ञानस्य चिन्मात्राश्रयत्वपक्षेऽज्ञानतदभावाभ्यां जीवब्रह्मविभागेऽयं दृष्टान्त उपादीयत इत्यर्थभेदसत्वाद् दूषणभेदाच्च न पुनरुक्तिरिति द्रष्टव्यम् ॥ १९९ ॥

दूषयति—

नैतत्सारं सख्यमिष्टं यदि स्या-
दस्तित्वादेरिष्टहानिः प्रसक्ता ।
एकोपाधावस्तिता नास्तिता चे-
त्स्यादित्येवं स्वीकृतेऽस्मिन्हि पक्षे ॥ २०० ॥

नैतत्सारमिति । अस्तित्वादेः भावाभावयोः सख्यं साहित्यं यदीष्टं स्यात्तदा वक्ष्यमाणप्रकारेणेष्टहानिः स्यादित्यर्थः । नन्वाकाशादौ दृष्टत्वान्नेष्टहानिरिति चेत्तत्र किं सर्वपदार्थानामेकत्र भावाभावौ स्वीक्रियेते उत कस्यचिदिति विकल्प्याद्यं दूषयन्निष्टहानिमेव विशदयति—एकोपाधाविति । अस्तितता नास्तितता च सर्वेषामिति शेषः ।

अस्तिता वृत्तित्वं नास्तिता तदभावः चशब्दः कालभेदेन तदुभयधर्मवत्तानिरासाय युगपद्धर्मद्वयस्वीकारे किं बाधकं तत्राह—एवमिति। एवं युगपदस्मत्पक्षे धर्मद्वयसमुच्चयपक्षे स्वीकृते वक्ष्यमाणदोषः स्यादित्यर्थः ॥ २०० ॥

तमेव दोषं विशदयति—

धूमे सत्ता स्यादसत्ता च तस्मि-
न्धूमस्यैवं कारणं कल्प्यते किम्।
कादाचित्कं कारणं नान्तरेण
स्यादित्येवं तस्य क्लृप्तिः कुतो वः ॥ २०१ ॥

धूम इति। धूमे सत्ता धूमवत्त्वं तदभावश्च स्यात् एवं एवं सति तस्मिन्पक्षे पर्वतादौ धूमसत्तावत् धूमाभावस्यापि सत्त्वात्। धूमेन तस्य कारणं वह्निः किमिति कल्प्येत न कल्प्येतेत्यर्थः। ननु धूमसत्ताया अपि सत्त्वाद्धूमस्य च कादाचित्ककारणं विना ऽनुपपत्तेः तत्कारणं वह्निरनुमीयत इत्याशङ्क्य निराकरोति—कादाचित्कमिति। कारणमन्तरेण कार्यं न सिद्ध्येदित्यनेन प्रकारेण तस्य कारणस्य कल्पनं वो युष्माकं भावाभावयोः साहित्यवादिनां पक्षे कुतः स्यात् न कुतोपीत्यर्थः ॥ २०१ ॥

तत्र हेतुमाह—

कादाचित्कात्कल्पनां कारणस्य
प्रत्याचक्षीताविरोधं ब्रुवाणः।
एकोपाधावस्तिनास्तित्वयोर्हि
तस्मादेषा कष्टक्लृप्तिर्न कार्या ॥ २०२ ॥

कादचित्कादिति। यत इत्यध्याहार्यम् यस्मादेकत्र भावाभावयोर विरोधं ब्रुवन् भवान् कार्यात् कारणस्य कल्पनां प्रत्याख्यातवान् कार्यदर्शनेन कारणकल्पनादशायां तत्रैव कार्याभावस्याप्यवस्थितत्वेन कारणकल्पनायाः प्रतिबद्धत्वादित्यर्थः। आद्यपक्षनिरासमुपसंहरति—एकोपाधाविति। तस्मादित्यादौ सम्बन्धनीयम् ॥ २०२ ॥

ननु यथैकस्यैव स्वयंप्रकाशब्रह्मात्मनः प्रतीचः एकदा स्फुरणास्फुरणे अन्यत्राहष्टे अपि त्वया कल्प्येते एवमेकत्र युगपदेकस्य भावाभावावन्यत्राहष्टावप्यज्ञाने कल्प्येते इति द्वितीयं पक्षमाशङ्कते—

ननु चैकरूपचितिवस्तुगतं
स्फुरणं तदस्फुरणमेव च वः।
अविरुद्धमभ्युपगतं द्वितयं
तदिवास्ति नास्ति युगलं भवतु ॥ २०३ ॥

ननु चैकरूपेति। एकरूपमेकरसं यच्चितिवस्तु परिपूर्णानन्दाकारेणाभानं तदिवैकस्यैकदा स्फुरणास्फुरणमिवास्ति नास्ति युगलं भावाभावलक्षणद्वयमाज्ञानस्यैकत्रेति शेषः। अविरुद्धमित्यनुषङ्गः ॥ २०३ ॥

वैषम्येण परिहरति—

न तदात्मनः स्फुरणमेव निजं
परतोऽप्रकाशनमबोधवशात्।
न च किञ्चिदन्यदनयोरुभयो-
रविरोधसिद्धिकृदुदाहरणम् ॥ २०४ ॥

न तदात्मन इति। तत् त्वदुक्तं साम्यं न तत्र किमात्मनः स्फुरणा-

स्फुरणे उभे अपि स्वाभाविके एवेति मत्वा तत्साम्यमुच्यते उता-न्यतरत्स्वाभाविकमन्यतरदौपाधिकमिति मत्वा तत्र नाद्य इत्याह— आत्मन् इति । आत्मनः स्फुरणमेव निजं स्वाभाविकमप्रकाशनं तु परतः उपाधिवशादेव तदेवाह—अबोधवशादिति । अज्ञानप्रतिबन्धबलात् । न द्वितीयः । अस्फुरणप्रयोजकाज्ञानवत् चैतन्येऽज्ञानाभावप्रयोजकस्या-न्यस्याभावात् नन्वज्ञानस्याप्येकस्मिन्नेव एकदा प्रातीतिकसत्त्वेन सद्भावः वास्तवासत्त्वेन चाभावः संगच्छते शुक्ताविव रजतस्येति चेत्तर्हि जीवस्यापि वस्तुतस्तदभाववत्त्वादीश्वरत्वमापद्येत । वस्तुतस्तदभाववत्त्वेपि यदि तद्वत्त्वान्नेश्वरत्वं तदेश्वरोपि नेश्वरः स्याद ज्ञानवत्त्वात् तस्य चिन्मात्राश्रयत्वात् । ननु चैतन्यस्याज्ञानवत्तया प्रतीयमानाकरेण जीवत्वं तदभाववत्तया चेश्वरत्वं तत ईश्वरस्य तद्वत्तया प्रतीयमानत्वाभावात न जीवत्वं जीवस्य पुनस्तद्वत्तया प्रतीयमानस्यापि वस्तुतस्तदभाववत्वात तेनाकारेणेश्वरत्वमेव सर्वज्ञत्वादिकं चाकारभेदेन त्वन्मत इवात्रापि व्यवस्थितमिति चेन्न । अज्ञानाभाववत्त्वाकारवत ईश्वरत्वे तस्याज्ञानसम्बन्धाभावेन तत्प्रयुक्त-सर्वज्ञत्वाद्यनुपपत्त्येश्वरत्वस्यैवानुपपत्तेः। तस्मान्न चैतन्यस्फुरणास्फुरणदृष्टान्तेनाज्ञानस्य भावाभावौ वक्तुं शक्याविति भावः । न च दृष्टान्ता-न्तरमस्ति येन तद्बलादज्ञानस्य एकदा भावाभावौ वक्तुं शक्यावित्याह— न किञ्चिदिति अनयोः एकदेशकालावच्छिन्नाज्ञानभावाभावयोः ॥ २०४ ॥

एवमस्फुरणस्य स्फुरणाभावरूपत्वमङ्गीकृत्यैकस्मिन् चैतन्ये स्फुरणास्फुरणयोरविरोध उपपादितः। इदानीं नास्फुरणं स्फुरणाभावः किन्तु भावरूपाविद्यैव । अत एकस्मिन् चैतन्ये स्फुरणास्फुरणयोर्विद्यमानत्वबलात् नाज्ञानस्य भावाभावावेकत्र वक्तुं शक्यावित्यभिप्रायेणाह—

**स्फुरणास्फुरणे च नाऽऽत्मनः**

**सदसद्भावतया मनीषिते ।**

स्फुरणं चितिरात्मवस्तुन-

स्तदविद्यास्फुरणं च कथ्यते ॥ २०५ ॥

स्फुरणेति। सदसदभावतया भावाभावरूपेणेत्यर्थः। न मनीषिते नेष्टे। पुनः कीदृग्भूते ते विवक्षिते तत्राह—स्फुरणमिति। आत्मनश्चितिः स्वरूपचैतन्यं स्फुरणं तदविद्या चैतन्याश्रिताविद्या अनादिभावरूपा अस्फुरणमित्यर्थः। न चास्फुरणमिति। नञोऽभाववाचित्वात्कथं भावरूपत्वमस्फुरणस्येति शङ्क्यमात्मस्फुरणस्याविनाशितया तदभावासंभवेन नञोऽभाववाचित्वानुपपत्तेः। न च तस्याविनाशित्वे प्रमाणाभावः। न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यत इति श्रुतेरेव तत्र प्रमाणत्वात्। तस्माद्वृत्त्युपरक्तस्फुरणविरुद्धं भावरूपाज्ञानमेवास्फुरणमिति भावः ॥ २०५ ॥

तस्माच्चैतन्यमात्राश्रयविषयमेवाज्ञानं तत्प्रयुक्ते एव जीवत्वेश्वरत्वे न तत्सद्भावतदभावप्रयुक्ते। न च चैतन्यस्याज्ञानाश्रयत्वे जीवत्वप्रसङ्गः। अज्ञानाश्रयत्वस्य तदप्रयोजकत्वात् अज्ञानोपाधिगतत्वस्यैव तत्र प्रयोजकत्वादित्युपसंहरति—

अज्ञानित्वं जीवभावो न तस्मा-

ज्जीवत्वादेः कारणं युक्तमेतत्।

प्राणोपाधेर्वाचको जीवशब्द-

श्चैतन्यस्य स्यात्प्रसिद्धो हि तत्र ॥ २०६ ॥

अज्ञानित्वमिति। तस्मादित्यादौ सम्बन्धनीयम्। यद्यज्ञानित्वं स्याज्जीवभावः स्यादिति यदुक्तं तन्नेत्यर्थः। जीवत्वादेर्जीवत्वेश्वरत्वयोः एतदज्ञानसम्बन्धित्वमेव कारणं प्रयोजकं युक्तं नत्वज्ञान-

सद्भावतदसद्भावावित्यर्थः । नन्वज्ञानाश्रयचैतन्यं जीवो न भवति चेत् कस्तर्हि जीव-इत्यत्राह—प्राणोपाधिरिति । विज्ञ नक्रियाशक्तिमदन्तःकरणमत्र प्राणत्वेन विवक्षितं तत एवोपाधेर्निमित्तात् चैतन्यस्य वाचकः अन्तःकरणवासनासहिताज्ञानोपहितं चैतन्यं जीवशब्दवाच्यमित्यर्थः ॥ २०६ ॥

नन्वज्ञानोपहितस्य जीवत्वं वक्तुमनुपपन्नं तथात्वे तदनुपहितेश्वरचैतन्यस्य य आत्मनि तिष्ठन्नात्मानमन्तरो यमयतीति श्रुतिप्रसिद्धाया अन्तर्यामित्वेन जीवेऽनुवृत्तेरनुपपत्तेः न हि घटोपहिताकाशे तदनुपहिताकाशस्यानुवृत्तिरस्ति । नन्वाकाशस्य परममहत्त्वाद्घटोपहितेऽप्यनुवृत्तिरस्तीति चेत् । न । आकाशत्वेन परममहत्त्वेपि घटानुपहितत्वाकारेण परममहत्त्वाभावात् । ईश्वरचैतन्यस्य जीवव्यावृत्तेनाज्ञानानुपहितत्वाकारेणैव तन्नियन्तृत्वादिति चेन्न । नह्यज्ञानोपहितत्वमज्ञानावच्छिन्नत्वं येन त्वदुक्तो दोषो भवेत् किन्त्वज्ञानप्रतिबिम्बितत्वमेव प्रतिबिम्बे च जीवे बिम्बभूतेश्वरचैतन्यस्य नियन्तृत्वेनानुवृत्तिः सम्भवत्येव बिम्बस्याकाशस्य जलाद्युपाधौ प्रतिबिम्बप्रदेशेऽप्यनुवृत्तिदर्शनादित्यभिप्रेत्याह—

अज्ञानजन्यकरणप्रतिबिम्बवाचि
जीवाभिधानमिह वृद्धजनप्रसिद्धम् ।
अत्रैव निर्वचनमस्ति च तस्य तस्मा-
ज्जीवो भवेत्करणपूगवशीकृता चित् ॥ २०७ ॥

अज्ञानेति । अज्ञानं च तज्जन्यं च यत्करणमन्तःकरणं तच्च तयोः प्रतिबिम्बितं यच्चैतन्यं तद्वाचीत्यर्थः । अथवा—अत्र करणमिति ज्ञानकर्मेन्द्रियप्राणपञ्चकबुद्धिमनोलक्षणसप्तदशावयवात्मकलिङ्गशरीरं

विवक्षितम्। तदेव श्लोकान्ते करणयुगेत्युक्तम्। जीवाभिधानंजीवपदम्। नन्वज्ञानप्रतिबिम्बचैतन्यस्य जीवत्वे जीवपरयोरैक्यं श्रुतिसिद्धं न सिद्ध्येत्। लौकिकप्रतिबिम्बस्य बिम्बाद् भिन्नत्वात् तदनुसारेणात्रापि भेदानुमानादनुभूयते हि लोके ग्रीवास्थमुखात् बिम्बाद्भिन्नत्वेन दर्पणस्थप्रतिबिम्बमुखम्। न च ममेदं मुखमिति प्रतिबिम्बमुखस्य ग्रीवास्थमुखाभेदावगमात्तदैक्यमिति वाच्यम्। तस्य व्यक्तिभेदावगाहिप्रत्यक्षविरोधेन स्वमुखसजातीयमुखविषयतयान्यथासिद्धत्वात्। न च भेदप्रत्यय एवैतदबलात् कल्पितविषयः किं न स्यादिति वाच्यम्। उपपत्तिसहकृतत्वेन भेदप्रत्ययस्यैव प्रबलत्वात्। उपपत्तिश्च भेदनियतप्रत्यङ्मुखपराङ्मुखत्वादिलक्षणविरुद्धधर्मवत्त्वानुभवः। ननु विरुद्धधर्मप्रत्ययोऽपि भ्रान्त इति चेत्। न। तद्विषयप्रत्यङ्मुखत्वादेर्बाधकाभावात्। नन्वभेदप्रत्यय एव भेदं बाधमानः प्रत्यङ्मुखत्वादिविरुद्धधर्मप्रत्ययमपि बाधत इति चेदत्र किमभेदप्रत्ययेन युगपदेवोभयबाधः। किं वाभेदप्रत्ययबाधानन्तरं विरुद्धधर्मप्रत्ययबाधः। नाद्यः। अभेदप्रत्ययस्य साक्षात्प्रत्यङ्मुखत्वादिप्रत्ययविरोधाभावात्। व्यापकीभूतभेदप्रत्ययस्य बाधे सति हि तद्व्याप्यविरुद्धधर्मत्वप्रत्ययस्य बाधो भवति। न द्वितीयः। तस्यां दशायां भेदप्रत्ययस्योपपत्तिसहकृतत्वेनाभेदप्रत्ययापेक्षया प्रबलत्वात्। ननु भेदप्रत्ययोऽप्युपपत्तिशून्य एव तद्विषयोत्पत्तिज्ञप्तिकारणाभावात्। तथा हि किं दर्पणे प्रतीयमानमुखं दर्पणपरिणाम उत तदवयवपरिणाम.। नाद्यः। मुखस्य दर्पणव्यापितयोपलम्भप्रसङ्गात् तद्गतरूपवत्। न द्वितीयः। अवयवानां पूर्वपरिणामे विद्यमाने तद्विरुद्धद्रव्यान्तरपरिणामानुपपत्तेः। नापि तज्ज्ञप्तौ कारणं पश्यामः चक्षुरादेर्व्यवहितग्राहित्वाभावादिति चेन्न। दर्पणावयवसंयुक्तपार्थिवावयवानामेव तदाकारेण परिणामोपपत्तेः। न च सर्वदा परिणामप्रसङ्गः। बिम्बसन्निधानस्याप्यन्वयव्यतिरेकाभ्यां कारणत्वात्। न च बिम्बापगमेपि तदुपगमप्रसङ्गः।

विम्बापगमे प्रतिविम्बस्याप्यपगतत्वात्। न च निमित्तापगमे नैमित्तिकापगमानुपपत्तिः ज्वरापगमे दुःखापगमवदुपपत्तेः। न च द्रव्यस्यैतदनुपपन्नमिति वाच्यम्। काष्ठादिनाशे वह्नेरपि नाशदर्शनात्। न च स्वतन्त्रत्वे प्रतिविम्बस्य विम्बाधीनचलनादिमत्वं न स्यादिति वाच्यम्। वह्नेः काष्ठाधीनत्ववदुपपत्तेः। न च प्रतीत्यनुपपत्तिः। चक्षुरादिनैव तदुपपत्तेः। न च दर्पणावयवव्यवहितत्वात् तेन तत्प्रतीत्यनुपपत्तिः। तस्य स्वच्छतया चक्षुर्व्यवधायकत्वाभावात्। तस्माद्भेदप्रत्ययः सोपपत्तिक एव। किञ्च विम्वप्रतिविम्वयोरभेदे विम्वमेव दर्पणादिद्रव्यनिष्ठतयारोपितमिति वाच्यम् अन्यथा विम्बैक्यानुपपत्तेः। तथा चान्यथाख्यात्यापत्तिः। ननु दर्पणस्थत्वादिधर्मा एवारोप्यन्ते न मुखम्। नचैवमप्यन्यथाख्यातिः तेषां रजतवदज्ञानविजृम्भितत्वादिति चेत् तत्र किं मुखाज्ञानात् तदारोपः। किं वा तस्य ग्रीवास्थत्वाद्यपरिज्ञानात्। किं वा तदेकत्वापरिज्ञानात् न सर्वथापि मुखत्वेन ग्रीवास्थत्वेनैकत्वेन च प्रतीयमान एव मुखे प्रतिविम्वदर्शनात्। किं च तयोरभेदे कस्तूरिकाप्रतिविम्वे गन्धोपलम्भः गुणप्रतिविम्बे रसोपलम्भश्च स्यात् तस्मान्न विम्वप्रतिविम्बयोरेकत्वमिति चेत्। उच्यते। भेदाभेदप्रत्यययोरभेदप्रत्ययो बलवानित्युत्सर्ग इति स्थायिवादिभिः सर्वैरप्यङ्गीक्रियते। तस्य क्वचिदन्यथात्वं बलवद्बाधकबलात्। न चात्र बलवद्बाधकं पश्यामः। ननु विरुद्धधर्मवत्त्वमेव बाधकमिति चेन्न। तस्यान्यथासिद्धत्वात्। न च बाधकाभावान्न तदन्यथासिद्धिरिति वाच्यम्। एकोपि प्रबलः सहस्रमपि बाधत इति न्यायेनाभेदप्रत्यभिज्ञाया एव तद्बाधकत्वात्। न च प्रत्यभिज्ञा साक्षाद्विरुद्धधर्मप्रतिभासं न बाधते किन्तु भेदबाधद्वारा तस्यां च दशायां विरुद्धधर्मप्रतिभासोपपत्तिसहकृतत्वेन भेदप्रत्यय एव बलवानिति वाच्यम्। विरुद्धधर्मप्रतिभासो हि भिन्नाश्रयत्वव्याप्ततया विरुद्धधर्मं विषयीकुर्वन् भेदप्रत्ययं उपकरोति न तु साक्षाद् भिन्नवि-

षयत्वात् । तथा चाभेदप्रत्यभिज्ञया भेदप्रत्ययबाधदशायां विरुद्ध-धर्मस्य भिन्नाश्रयत्वव्याप्यत्वप्रतिसन्धाननियमाभावात् व्याप्यत्वा-भिमतस्याश्रये व्यापकत्वाभिमतबाधदशायां तस्य तद्व्याप्यत्व-प्रतिसन्धानानुपपत्तेश्च न भेदप्रत्ययस्योपपत्तिसहकृतत्वमित्यौत्सर्गि-कप्राबल्यवता प्रत्यभिज्ञानेन भेदप्रत्ययस्यैव बाधः । तदुत्पत्तिकारणा-निरूपणादपि भेदप्रत्ययो निरुपपत्तिक एव । न च दर्पणावयवसंयुक्ता-वयवान्तराण्येव तदाकारेण परिणमन्त इति वाच्यम् । तत्र तादृशा-वयवान्तरसत्त्वे प्रमाणाभावात् । न च कार्यबलात् तदनुमीयत इति वाच्यम् । तत्कार्यत्वस्यैवाद्याप्यनिश्चयात् । ननु कारणान्तराभावात्का-र्यस्य च सकारणत्वनियमात् कल्प्यमानं कारणं दर्पणादि द्रव्यबाधात् द्रव्यान्तरमेव पर्यवस्यतीति चेन्न । एवमप्यन्यत्र क्लृप्त-कारणभावस्याज्ञानस्यैव प्रतिबिम्बमुखं प्रत्यपि कारणत्वकल्पनौ-चित्यात् । अवयवान्तरकारणत्वे हि धर्मी धर्मश्चोभयमपि कल्पनी-यम् । किञ्चैकदा पञ्चभिः पुरुषैर्दृश्यमाने दर्पणेऽनेकमुखानां सत्त्वेन दर्पण-स्योच्छूनत्वं विदारणं दुर्वहत्वं च स्यात् । अपि चास्मिन्पक्षे बिम्बापगमेपि प्रतिबिम्बोपलम्भप्रसङ्गः । न च काष्ठापगमे वह्न्यपग-मवन्निमित्तबिम्बापगमे प्रतिबिम्बापगम इति वाच्यम् । दृष्टान्त-वैषम्यात् । अग्नेर्हि काष्ठाश्रितत्वात् । तन्नाशे अग्न्यारम्भकसंयोग-विनाशेन तन्नाशो भवति । न च प्रतिबिम्बं बिम्बाश्रितं तस्मान्न प्रति-बिम्बस्योत्पत्तिकारणं निरूपयितुं शक्यन्नापि प्रतीतिकारणं निरूप-यितुं शक्यम् । न च चक्षुषा तत्सम्भवति दर्पणावयवव्यवहितत्वात् । न च तस्य स्वच्छत्वेनाव्यवधायकत्वं तथात्वे दर्पणपृष्ठलग्नहस्ता-देरपि ग्रहणप्रसङ्गात् । अत एव प्रदीपप्रत्यभिज्ञातौल्यं निरस्तं वेदितव्यम् । ननु मुखलाञ्छितप्रतिमुद्रैव दर्पणादौ मुखप्रतीतिविषयः । तथा च नोत्पत्तिकारणाद्यनुपपत्तिरिति चेन्न । बिम्बसंश्लेषाभावा-द्बिम्बविरुद्धपरिणामत्वात् । बिम्बचेष्टाधीनचेष्टावत्त्वदर्शनाच्च । ननु

मुखच्छायैव प्रतिविम्बम् । न च तत्र त्वदुक्तदूषणानि सन्ति छायाया विम्बसंश्लेषं विनापि सम्भवात् । तद्विरुद्धपरिमाणतदधीनत्वादेश्च सम्भवात् प्रत्यङ्मुखत्वादिकं च सङ्गच्छते । प्रसिद्धच्छायायां दर्शनादिति चेन्न । अनुभवविरोधात् । न हि मन्मुखच्छाया दर्पण इति कश्चिदनुभवति । किन्तु मदीयमुखं दर्पणे पश्यामीति तटस्थमपि बोधयति । दर्पणे सुन्दरं मुखं पश्येति दर्पणे मुखसंसर्गबाधानुभवविरोधाच्च । अप्रसक्तस्य मुखस्य तत्र बाधायोगात् । प्रसक्तच्छायायाश्च परमार्थत्वेन बाधानुपपत्तेः । प्रसिद्धच्छायाविलक्षणत्वाच्च । लौकिकी हि छाया नियमेन श्यामैवानुभूयते । न च दर्पणमुखं श्याममनुभूयते । नन्वायसदर्पणे श्यामत्वेनाप्यनुभूयत इति चेन्न । तस्योपाधिश्यामताप्रयुक्तत्वात् । प्रतिविम्बत्वप्रयुक्तत्वे रजतदर्पणप्रतिविम्बेपि तदनुभव प्रसङ्गात् । किञ्च वृद्धिह्रासादिमती प्रसिद्धच्छायानुभूयते । न च प्रतिविम्बमेकस्मिन्नुपाधावेकरूपबिम्बस्य कदाचिद्वर्द्धते ह्रसति वा । ननु छायायामपि नायं नियमः प्रदीपादिष्वेकत्र सत्सु स्तम्भादिच्छायायां तददर्शनादिति चेन्न । तत्रापि प्रदीपस्य दूरसमीपोत्सर्पणादिना वृद्धिह्रासानुभवदर्शनात् । किं च प्रकाश एव छायाया निमित्तं वक्तव्यः सचादित्यादिप्रकाशः । किं वा भास्वरद्रव्यदर्पणप्रकाश एव । नाद्यः । छायान्तरशून्यगृहान्तर्वर्तमानस्यापि पुंसो दर्पणादिप्रतिविम्बदर्शनात् । किं च यत्प्रकाशकृता या छाया सा तद्विपरीतदेशैव तथैव लोकेनुभवात् । प्रतिविम्बे तु प्रातःकाले प्राङ्मुखमुपविष्टस्य पुंसः पूर्वस्यां दिश्येवानुभूयते । अत एव न द्वितीयोपि । किं च प्रतिविम्बस्य छायात्वे तुल्यवत्प्रचुरप्रकाशानेकदीपमध्यगतस्य पुंसः छायानुपलम्भवदनेकप्रकाशमध्यस्थस्य पुंसो दर्पणादिषु प्रतिविम्बानुपलम्भप्रसङ्गः । तस्मात्प्रतिविम्ब स्यावयवान्तरारब्धत्वप्रतिमुद्रात्वच्छायात्वाभावात् भेदप्रत्ययस्य निरुपपत्तिकत्वादभेदप्रत्ययेन तद्बाधः । नन्वभेदोप्यनुपपन्नः । अभेदे हि प्रत्यङ्मुखत्वाधोग्रत्वदर्पणजलनिष्ठत्वप्रतीतिरज्ञानकल्पितैवेति वक्त-

व्यम् । तच्चानुपपन्नम् । प्राङ्मुखत्वेन ग्रीवास्थत्वेनोर्ध्वाग्रत्वेन भूनिष्ठत्वेन प्रतीयमानेष्वेव मुखवृक्षादिषु तद्विपरीतप्रत्यङ्मुखत्वादिप्रतीतेरित्युक्तत्वात् । न च तत्तद्रूपेण तत्तज्ज्ञानेपि तत्तदज्ञानं न निवृत्तमिति शङ्क्यम् । ज्ञानाज्ञानयोरविरोधप्रसङ्गात् । अनुभवविरोधाच्च । न हि तत्र कश्चित्तदज्ञानं विषयव्यावृत्तमनुभवतीति चेत् तत्र किं मुखवृक्षादावावारकमज्ञानमेव नेति ब्रूषे । उताज्ञानमात्रम् आद्योङ्गीक्रियते । न द्वितीयः । अनावारकानन्ताविद्यावस्थायास्तत्र सत्त्वात् । मूलाज्ञानस्य वा तत्र सत्त्वात् । न च मूलाज्ञानं तद्ज्ञाने नश्यति । तस्यानधिष्ठानज्ञानत्वात् । न च तासामप्यवस्थानां ज्ञानेन निवृत्तिः । आवारकाज्ञानेनैव तद्विरोधात् । न च सर्वा अप्यवस्था एकदैव विषयमावृण्वन्तीति वाच्यम् । एकयाप्यावरणसिद्धौ तदन्यस्यास्तत्कल्पने प्रमाणफलयोरभावात् । न चानावारकतत्सत्त्वे मानाभावः । उत्तरकालीनभ्रमादेरेव तत्र मानत्वात् । तस्मादनावारकाज्ञानकल्पित एव प्रतिबिम्बभ्रमः । अत एवावस्थास्वीकारपक्षेऽवस्थानादिरित्येवाङ्गीक्रियते । अन्यथा विरोधिप्रमाणस्य सन्निधाने तदुत्पत्त्यसंभवात् । प्रतिबिम्बभ्रमानुपपत्तेः । नन्वेवमपि प्रतिबिम्बभ्रमो न भवति विशेषज्ञानसत्त्वात् न हि शुक्तिकात्वज्ञाने तत्र भ्रमो दृश्यते । ननु निरूपाधिकभ्रम एवाधिष्ठानविशेषदर्शनविरोधि न सोपाधिकभ्रम इति चेन्न । अधिष्ठानविशेषसाक्षात्कारे सति पीतशङ्खादिसोपाधिकभ्रमाणामप्यदर्शनात् । न च तत्रोपाध्यभावादेव भ्रमाभावः न त्वधिष्ठानविशेषदर्शनसत्त्वादिति वाच्यम् । विभ्रमाणां तत्त्वज्ञानैकविरोधित्वेनोपाध्यभावे तदभावानुपपत्तिरिति चेन्न । अप्रतिबन्धाधिष्ठानविशेषदर्शनं हि विभ्रमविरोधि प्रतिबन्धकाभावस्य कार्यमात्रेऽपेक्षितत्वात् । प्रतिबन्धकं च क्वचित्किञ्चिदित्यन्वयव्यतिरेकाभ्यां सोपाधिकभ्रमे उपाधिरेव प्रतिबन्धक इति कल्प्यते । ततश्चोपाधौ सति तत्प्रतिबद्धमधिष्ठानविशेषदर्शनं न भ्रमं-

विरुणद्धि किन्तूपाधिविगमे सत्येव। ननु प्रतिविम्बभ्रमः किमपरोक्ष उत परोक्षः। नाद्यः। अधिष्ठानापरोक्षं विना तदनुपपत्तेः। अधिष्ठानस्य च मुखादेः इन्द्रियसंयुक्तत्वाभावेनापरोक्षत्वानुपपत्तेः। ननु स्वमुखैकदेशेन्द्रियसन्निकर्षात्तस्यापरोक्षत्वमिति चेन्न। एवमपि चक्षुर्गोलकादिप्रतिविम्बस्याचाक्षुषत्वप्रसङ्गात्। न द्वितीयः। अपरोक्षत्वेनानुभवात् लिङ्गादेरभावाच्चेति चेन्न। बिम्बभ्रमे उपाध्यापारोक्ष्यस्यैव तत्र प्रयोजकत्वात्। अध्यासो हि नियमेन यत्संप्रयोगमपेक्षते तदापरोक्ष्येणैव स्वयमपरोक्षो भवति। प्रतिविम्बाध्यासश्च नियमेनोपाधिसंप्रयोगमपेक्षत इति तदापरोक्ष्यादेव स्वयमपरोक्षो भवति। नन्वधिष्ठानसम्प्रयोगोपि विभ्रमे कारणमिति चेन्न। अन्यत्र तथात्वेप्यन्वयव्यतिरेकाभ्यामुपाधिसंप्रयोगस्यैव भ्रमविशेषे कारणत्वात्। नचाननुगमो दोषाय क्लृप्ताध्यासविलक्षणे कार्ये विलक्षणसंप्रयोगस्यैव कारणत्वौचित्यात्। अथवा—स्वच्छद्रव्यादर्शादिना संप्रयुक्ता नायनरश्मयस्ततः प्रतिहताः सन्तस्तत्तद्बिम्बेन संयुज्य तत्तद्बिम्बमपरोक्षतया गृह्णन्तोप्युपाधिसन्निधानदोषात् स्वाश्रयनिष्ठतया बिम्बं विपर्यीकुर्वाणास्तत्रोपाधिनिष्ठत्वादिकमारोप्य गृह्णन्तीति न गोलकादिप्रदेशस्यापारोक्ष्यानुपपत्तिः। नन्वेवं किमर्थो कष्टकल्पितः दर्पणस्यैव प्रतिविम्बमुखाधिष्ठानत्वमस्तु शुक्तेरिवाधिष्ठानत्वम्। नचैवं सति बिम्बमुखैक्यप्रत्यानुपपत्तिः शुक्तिरजते मदीयमिदं रजतमिति पारमार्थिकरजताभेदप्रत्ययवदुपपत्तेरिति चेत्तत्र किं शुक्ताविव रजतमनिर्वचनीयं मुखमारोप्यते। अथवा—प्रसिद्धमुखस्यैव तत्रारोपः। नान्त्यः। अन्यथाख्यातिप्रसङ्गात्। आद्ये इदं रजतमितिवत् दर्पणं मुखमिति प्रतीत्यापत्तिः न तु दर्पणे मुखमिति बाधोपि नेदं रजतमितिवत् नेदं मुखमित्येव स्यान्न तु नात्र मुखमिति। ननु दर्पणे मुखत्वं नारोप्यते। किन्तु मुखवत्वं नामाविशक्तो धर्म आरोप्यत इति चेत्तर्हि नियमेन मुखवद्दर्पणमित्येव

प्रतीतिः स्यान्न तु दर्पणे मुखमिति। आरोप्यतावच्छेदकप्रकारकत्व-नियमादारोपस्य तस्मान्मुखमेवाधिष्ठानं तत्र च दर्पणस्थत्वादिधर्म एवारोप्यते न तु मुखमिति वक्तव्यम्। न च बिम्बप्रतिबिम्बयोरभेदे प्रतिबिम्बे कस्तूरिकादिगन्धादेरुपलम्भप्रसङ्गो दोषः। इष्टत्वात्। न च तथा नोपलभ्यत इति वाच्यम्। तत्र बिम्बाभिन्नत्वेन तद्गन्धोपलब्धेरेव तद्गन्धोपलब्धित्वात् स्मृतिरपि बिम्बप्रतिबिम्बयोरेकत्वमेव गमयति। "नेक्षतोद्यन्तमादित्यन्नास्तं यन्तं कदाचन। नोपरक्तं न वारिस्थं न मध्यं नभसो गतमि"ति अत्र हि नभसो मध्यं गतं वारिस्थमिति सामानाधिकरण्येन वारिस्थनभोमध्यगतयोरेकत्व-मुच्यते। न च प्रतिबिम्बस्य जीवत्वे मुखप्रतिबिम्बवत् स्वस्य बिम्ब-भूतब्रह्मात्मतानवगन्तृत्वं बिम्बस्य ब्रह्मण एव देवदत्तवत् भ्रान्ति-निवर्त्तकतत्त्वज्ञानाश्रयत्वं स्यादिति वाच्यम्। न हि प्रतिबिम्ब-मुखस्य बिम्बात्मतानवगमे प्रतिबिम्बत्वं प्रयोजकं बिम्बस्यापि घटादेरनवगन्तृत्वात्। किन्तु जडत्वं तच्च न जीवस्य देवदत्तस्यापि तत्त्वज्ञानाश्रयत्वेन बिम्बत्वं प्रयोजकम् किन्तु भ्रान्तत्वं तच्च न ब्रह्मण इत्युक्तम्। तस्मात् बिम्बप्रतिबिम्बयोरेकत्वाज्जीवस्य प्रति-बिम्बत्वे परब्रह्मैक्यं श्रुतिसिद्धं सिद्ध्यत्येवेत्यलमतिप्रसङ्गेन। एवं जीवशब्दस्य सूक्ष्मशरीरप्रतिबिम्बचैतन्येऽविगीततया सकलवृद्धव्यव-हाराद्रूढिरित्युक्तम्। इदानीं योगवृत्त्यापि जीवशब्दः तत्पर इत्याह— अत्रैवेति। आविद्यककरणप्रतिबिम्बे निर्वचनमवयवार्थः। तस्य जीव-शब्दस्य जीवप्राणधारणे इत्यस्माद्धातोर्जीवशब्दस्य निष्पन्नत्वात् जीवति प्राणान् करणानि धत्त इत्यवयवार्थस्य तत्रैव सत्त्वात्। करणपूगवशीकृता करणसमष्टिरूपसूक्ष्मशरीरोपाधिपराधीना तत्प्रति-बिम्बिताधिदेवजीवशब्दवाच्येत्यर्थः॥ २०७॥

ननु माभूज्जीवाश्रयमज्ञानं जीवोपाधिः अन्तःकरणाश्रितं तु तत्तदुपाधिर्भविष्यति एवं च सति ब्रह्मासर्वज्ञत्वादिदोषात् परिहृतं

भवति अहमज्ञ इतिप्रतीतिरप्युपपन्नतरा भवतीत्याशङ्कामुपसंहार-व्याजेनापाकरोति—

**ब्रह्मैवाज्ञानि तस्मादिह भवितुमलं नापरं वस्तु किंचि-त्तस्याज्ञानात्मकत्वान्न च तमसि तमस्तन्निवृत्तेरयोगात् । नाज्ञानोत्थस्य विद्याजनिरिह घटते तां विना तत्र नश्ये-न्न ह्यज्ञानं विनश्येदवगतिजनकज्ञानजन्मान्तरेण ॥२०८॥**

ब्रह्मैवेति । यस्मादपरं किञ्चिद्वस्त्वन्तःकरणं तत्सम्बद्धं चैतन्यं वाऽज्ञानि भवितुं नालं तस्माद्ब्रह्मैवाज्ञान्यज्ञानाश्रय इत्यर्थः । किमन्तः करणं वास्तवमुताविद्यकं नाद्यः तस्य ज्ञाननिवर्त्यत्वप्रतिपादकभिद्यते हृदयग्रन्थिरित्यादिशास्त्रविरोधात् । द्वितीयेपि । किमन्तःकरणमात्रं तदाश्रयः उतान्तःकरणसम्बद्धं चैतन्यं द्वितीयेप्यन्तःकरणसम्बद्धत्वं तद्विशिष्टत्वमुत तदुपहितत्वम् । न द्वितीयः । स्वकार्योपहिते स्ववृत्ति-त्वानुपपत्तेरित्युक्तत्वात् । प्रथमेपि किं विशिष्टं विशेषणविशेष्याभ्या-मनन्यदुतान्यत् । नाद्यः । ब्रह्मणोऽज्ञानित्वानुपपत्तेरित्यभिप्रेत्येतरत्र पक्षद्वये-प्यज्ञानानाश्रयत्वे हेतुमाह—तस्याज्ञानात्मकत्वादिति । तस्य केवलस्यान्तः करणस्य तद्विशिष्टस्य चाज्ञानकार्यत्वेनाज्ञानात्मकत्वादित्यर्थः । नन्व-ज्ञानात्मकत्वमात्रेण कथं तदनाश्रयत्वं तत्राह—नचेति । नह्यज्ञाने ज्ञानं सम्भवति निष्प्रयोजनत्वात् प्रतीत्यनुपपत्तेश्चेत्यर्थः । नचान्तःकर-णाश्रयाज्ञानादात्मनः आवरणं प्रयोजनम् । आत्मचैतन्ये न तत्प्रथेत्यपि शङ्क्यम् । आवारकस्य लौकिकतमोवत्स्वाश्रयमात्रावारकत्वात् । अन्तःकरणस्य चावृतस्वभाववत्वात् तदिदमुक्तम् । तम इति । स्वाश्र-यातिरिक्तचैतन्येन तस्यासम्बन्धान्न तद्बलेन तत्सिद्धिः । सम्बन्धस्या-श्रयस्तु जडरूपाज्ञानकार्यत्वेन जडत्वात् न तत्प्रकाशयितुमर्हति तदि-दमुक्तम्—तमसीति । हेत्वन्तरमप्याह—तन्निवृत्तेरिति । तस्याज्ञानात्मकान्तः करणतद्विशिष्टाश्रयाज्ञानस्य निवृत्तेरसम्भवादपि तमसि तमो नास्ती-

त्यर्थः। किमिति तन्निवृत्तिर्न सम्भवतीति चेत्तत्र वक्तव्यं किं ज्ञानात्तन्निवृत्तिः उत तद्व्यतिरिक्तेन। आद्येपि किं स्वसमानाश्रयज्ञानेन उत भिन्नाश्रयज्ञानेन आद्यमसम्भवेन दूषयति—नाज्ञानेति। अन्तःकरणस्याज्ञानकार्यस्य जडत्वान्न तदाश्रितज्ञानं सम्भवति। तस्य चेतनैकाश्रयत्वात्। न च वृत्तिरूपं ज्ञानमन्तःकरणाश्रितं तदेव चाविद्यानिवर्त्तकं तदुक्तं "वृत्तितत्स्थचिदाभासौ द्वावपि व्याप्नुतो घटम्। तत्राज्ञानं धिया नश्येदाभासेन घटः स्फुरेदि"तीति वाच्यम्। वृत्तेः केवलाया जडतया अविद्यानिवर्त्तकत्वानुपपत्तेः। न हि तमसा तमोनिवृत्ति सम्भवति। न च चैतन्येनापि न तन्निवृत्तिः सम्भवति। तस्य नित्यत्वेन प्रमाणजन्यत्वाभावात् प्रमाणजन्यस्यैव च निवर्त्तकत्वादिति वाच्यम्। तस्य केवलस्य तथात्वेपि वृत्त्युपाधिना जन्यत्वोपपत्तेः। का तर्हि सम्प्रदायविद्वचनस्य गतिः वृत्तिप्राधान्यविवक्षयोपपत्तेः। अन्यथा अविद्यानिवृत्तिव्यतिरिक्तघटादिस्फुरणासम्भवेन तद्व्यतिरिक्तस्याभासकृतस्य वर्णनानुपपत्तेरित्यर्थः। द्वितीयं दूषयति—तामिति। तां स्वसमानाश्रयविद्यां देवदत्तज्ञानेन यज्ञदत्ताज्ञानानाशादित्यर्थः। ननु करणाश्रितमज्ञानं कर्त्राश्रितज्ञानान्निवर्तत इति नियम इति चेन्न। विज्ञानं यज्ञं तनुत इत्यादिना अन्तःकरणस्यैव कर्तृत्वेन सिद्धत्वात्। तस्याज्ञानानाश्रयत्वात्। तदन्यस्य त्वात्मनः कर्तृत्वानुपपत्तेः। ज्ञानादन्येनाज्ञाननिवृत्तिरिति पक्षं दूषयति—नह्यज्ञानमिति। अवगतिः ब्रह्मानुभवः ब्रह्मैकाकारवृत्तावविचालिचैतन्यप्रतिफलकं तज्जनकं यज्ज्ञानं वृत्तिरूपं तदुत्पत्तिं विनेत्यर्थः। तरति शोकमात्मविदित्यादिश्रुत्या लौकिकप्रसिद्ध्या वाज्ञानस्य ज्ञानैकनिवर्त्यत्वप्रसिद्धेरित्यर्थः॥ २०८॥

फलितं दर्शयति—

**अज्ञानात्मकवस्तु नाऽऽश्रयतयाऽज्ञानस्य संभाव्यते**
**नाज्ञानात्मकताबहिः कृतमिदं जीवत्वमङ्गीकृतम्।**

नाज्ञानाश्रयमध्यपाति घटते जीवत्वमेतेन च-
श्चैतन्याश्रयमेतदस्तु घटते तत्रैव हीदं तमः॥२०८॥

अज्ञानात्मकेत्यादिना सम्भाव्यत इत्यन्तेन। तस्मादिति चादौ वक्तव्यम्। नन्वाविद्यकोपाधिभिन्नस्य जीवस्यान्तःकरणस्य वाऽज्ञानाश्रयत्वाभावेपीश्वरात् स्वाभाविकभेदवतोतिरेकवतो वा जीवस्य तदाश्रयत्वं किन्न स्यादिति चेत्। किमेवं तत्त्ववहिर्मुखो जल्पति। उत तत्त्वविदो वदन्ति। आद्यः सम्पत्स्यते यदि तद्भेदोऽसेत्स्यत् तदेव न तत्र प्रमाणाभावात्। ननु किमिति प्रमाणाभावः निर्दुःखादहं भिन्न इति प्रत्यक्षस्य विद्यमानत्वादिति चेत् किमतः नह्यन्यभेदप्रमाणेनान्यभेदः सिद्ध्यति। ननु नेदमन्यविषयं प्रत्यक्षं किन्त्वात्मविषयमेवेति चेन्न—अहंकारानात्मत्वस्य साधितत्वात्। न च जीवेश्वरौ भिन्नौ विरुद्धधर्माधिकरणत्वात् दहनतुहिनवदिति अनुमानेन तयोर्भेद आशङ्कनीयः वास्तवविरुद्धधर्माधिकरणत्वस्यासिद्धेः कल्पितस्य तस्य विम्बप्रतिविम्बयोर्व्यभिचारात्। भेदोपि यदि वास्तवः साध्येत तदा साध्यविकलो दृष्टान्तः भेदवास्तवतायाः सर्वत्र प्रतिषिद्धत्वात्। यदि पुनः कल्पितस्तदा सिद्धसाधनम्। किं च विरुद्धधर्मत्वं यदि परस्पराभावरूपत्वं तदा असिद्धिः सर्वज्ञत्वकिञ्चिज्ज्ञत्वयोस्तदभावात्। यदि परस्पराभावनियतधर्मत्वं तदाप्यसिद्धिः ईश्वरस्य सर्वविभ्रमाधिष्ठानत्वेन किञ्चिज्ज्ञजीवस्याप्यधिष्ठानतया तयोस्तदभात्। यदि पुनर्निवर्त्यनिवर्त्तकत्वं तदा सुतरामसिद्धिरेव। न च द्वा सुपर्णेत्यादिश्रुत्या तद्भेदः सिद्ध्यति। तस्याः प्रत्यक्षसिद्धभेदानुवादेन तन्निषेधपरत्वात्। तस्य पैङ्गिरहस्ये तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वम् अनश्नन्नन्योऽभिचाकशीतीति ज्ञ इति बुद्धिजीवपरत्वेन व्याख्यातत्वाच्च। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यतीति तस्य निषिद्धत्वाच्च। किं च जीवपरयोर्भेदेऽन्यतरस्यात्मान्यत्वेन घटादिवदनात्मरूपत्वं प्रसज्ज्येत।

ननु घटादेरात्मत्वावच्छिन्नप्रतियोगिकान्यत्वादनात्मत्वम् न हि जीवेश्वरयोस्त्वपरमात्मपरमात्मनोस्तथा किन्तु जीवस्येश्वराश्रितभेदप्रतियोगित्वं जीवत्वाकारेणेश्वरस्य जीवनिष्ठभेदप्रतियोगित्वमीश्वरत्वाकारेणेति चेत् किमिदं जीवेश्वरयोर्जीवत्वमीश्वरत्वं च यदवच्छिन्नप्रतियोगिकभेदवत्त्वेन परस्परभेदेऽप्युभयोरात्मत्वं न तावज्जीवत्वं जातिः आत्मा द्रव्यत्वापरजातिमान्न भवति विभुत्वात् आकाशवदिति तदभावस्य सिद्धत्वात् व्यञ्जकाभावाच्च। न चानित्यज्ञानाश्रयत्वं तद्व्यञ्जकमिति वाच्यम्। व्यङ्ग्यस्य व्यञ्जकसमानकालीनत्वनियमेन सुषुप्त्यादौ तदभावप्रसङ्गात्। न च तदत्यन्ताभावानधिकरणत्वं तथा तस्य प्रागेव निरस्तत्वात्। अत एव नोपाधिरपि सम्भवति। नापीश्वरत्वं स्थावरजङ्गमात्मकसर्वपदार्थज्ञातृत्वं सर्वमुक्तिदशायामीश्वरस्येश्वरत्वाभावप्रसङ्गात्। सदा सर्वपदार्थाभावेन सर्वज्ञत्वाभावात्। तस्यान्यघटितत्वेन वास्तवत्वानुपपत्तेश्च। तस्माज्जीवपरयोरन्योन्यभेदे आत्मत्वेनैव तत्प्रतियोगित्वस्य वक्तव्यत्वात्। अन्यतरस्यानात्मत्वमेवापतति ततो न स्वाभाविकभेदवान् जीवः नाप्यतिरेकोपाधिकः तत्र प्रमाणाभावात् स ह्यभेदतावन्मात्रविरोधी सन् भेदाभेदप्रयोजक इत्युच्यते। नचैकस्य वस्तुतो भेदाभेदौ सम्भवतः येन तन्निमित्तमतिरेकः कल्प्येत। किं च तस्य वास्तवत्वे तस्य तत्प्रयुक्तजीवभावस्य च मोक्षदशायामप्यनुवृत्तिप्रसङ्गः। कल्पितत्वे चाविद्यातत्कार्ययोरन्यतरत्वापातः तस्माद्द्वितीयः पक्षः परिशिष्यते। स चानुपपन्नः। तत्त्वदर्शिभिर्वास्तवजीवभेदानङ्गीकारादित्यभिप्रेत्याह---

नाज्ञानेति। अज्ञानोपाधिकत्वादज्ञानात्मकत्वं सतो बहिष्कृतं व्यतिरिक्तं तत्त्वदर्शिभिरज्ञानोपाधिकस्यैव जीवत्वाङ्गीकारात्। स्वाभाविकभेदवत्त्वाङ्गीकारे जीवस्यापसिद्धान्तः स्यादित्यर्थः। फलितमाह—

नाज्ञानाश्रयेति। जीवत्वमज्ञानाश्रयमध्यपात्यज्ञानाश्रयकोटिनिविष्टं घटते। परमप्रकृतमुपसंहरति—एतेनेति। उक्तहेतुनेत्यर्थः। एतदज्ञानं चैतन्या-

श्रयमज्ञानमित्यत्र पूर्वोक्तोपपत्तिं स्मारयति—घटत इति । तत्रैवाद्वितीयपरिपूर्णचैतन्य एव तमः सम्भवति यतः अतः अद्वितीयात्माश्रयविषयमेवाज्ञानं न जीवाश्रयमिति सिद्धम् ॥ २०६ ॥

नन्वज्ञानस्याद्वितीयात्माश्रयत्वे तादृशात्मस्फुरणं विना तत्स्फुरणन्न स्यात् । कस्य कुत्राज्ञानमिति तत्स्फुरणस्याश्रयविषयस्फुरणसापेक्षत्वात् । न हि सर्वो लोकस्तादृशमात्मानं प्रत्येति तथा सत्यज्ञानाभावप्रसङ्गादित्युभयतः पाशारज्जुरित्यभिप्रेत्य चोदयति—

ननु चाद्वयाश्रयतमःस्फुरणं
न कथं चिदत्र न हि तत्स्फुरति ।
स्फुरदाश्रयस्य तमसः स्फुरणं
घटते नचाद्वयमिह स्फुरति ॥ २१० ॥

ननु चाद्वयेति । अत्र ब्रह्माश्रयमज्ञानमिति पक्षेऽद्वितीयात्माश्रयविषयतमःस्फुरणं कथं चिदपि न सम्भवतीत्यर्थः । तत्र हेतुमाह—नहीति । हि यतः तदद्वयात्मरूपमद्वयात्मस्फुरणं विनापि तत्स्फुरणं किन्न स्यात् तत्राह—स्फुरदेति । स्फुरन्नाश्रयो यस्येति बहुव्रीहिः । अस्तु तर्ह्यद्वयवस्तुनोपि स्फुरणं तत्राह-नचेति । यद्यद्वयवस्तु स्फुरेत्तदाऽज्ञानन्न स्यादित्यर्थः । तस्मादद्वयब्रह्माश्रयविषयमज्ञानमित्येतदनुपपन्नमित्यर्थः ॥ २०१ ॥

तत्र किमद्वितीयानन्दब्रह्मणोऽद्वितीयत्वाकारेणाज्ञानाश्रयविषयत्वन्निराक्रियते तदाकारस्याप्रतीतेरप्रतीयमानस्य चाज्ञानव्यावर्त्तकत्वायोगादिति । किं वा प्रत्यक्त्वाकारेण । आद्योऽनङ्गीकारपराहत इत्याह—

नाज्ञानमद्वयसमाश्रयमिष्टमेवं
नाद्वैतवस्तुविषयं निशितेक्षणानाम् ।
नाऽऽनन्दनित्यविषयाश्रयमिष्टमेत-
त्प्रत्यक्त्वमात्रविषयाश्रयतानुभूतेः ॥ २११ ॥

नाज्ञानमिति । अद्वयसमाश्रयेऽद्वयत्वाकारेण चैतन्याश्रये एवमन्यत्रापि द्रष्टव्यम् । निशितेक्षणानां सूक्ष्मबुद्धीनामेतदज्ञानमद्वितीयत्वाद्याकारस्यास्फुरणान्न तेनाकारेणाज्ञानाश्रयविषयत्वमित्यर्थः । न द्वितीय इत्याह—प्रत्यक्त्वेति । प्रत्यक्त्वं चैतन्यमज्ञानस्य प्रत्यङ्मात्रविषयाश्रयताया अनुभवसिद्धत्वात् प्रत्यक्त्वाकारेणैवात्मा मोहस्याश्रयो विषयश्च भवति ॥ २११ ॥

नन्वानन्दादेरपि चैतन्यमात्रत्वात् तस्य चानावृतत्वात्कथं तस्याविद्याविषयत्वमित्याशङ्क्य "ज्ञातेपि तावदि" [१।४४] त्यादिप्रथमाध्यायोक्तं स्मारयति—

प्रत्यक्त्वमात्रविषयाश्रयमोहहेतोः
प्रत्यक्तिरोहित इति प्रतिपादयामः ।
प्रत्यञ्चमेव खलु वेद्मि न वेद्मि चेति
प्रत्यक्षमस्ति ननु वेदनमस्य पुंसः ॥ २१२ ॥

प्रत्यक्त्वेति । प्रत्यक्त्वमात्राश्रयविषयमोहाद्धेतोः प्रत्यङ् प्रत्यगात्मा तिरोहितः आवृत इति प्रतिपादयाम इत्यर्थः । अज्ञानस्य प्रत्यङ्मात्रविषयाश्रयत्वानुभवमेव स्पष्टयति—प्रत्यञ्चमिति । अथवा प्रतीयमाने प्रतीचि कथं तद्विषयाज्ञानमित्याशङ्क्य प्रतीयमान एवाज्ञानं वक्तव्यम् । अन्यथा निरूपकाकाराग्रहणे निरूप्याज्ञानस्फुरणा-

नुपपत्तेरित्यभिप्रेत्याह—प्रत्यक्त्वेति । स्वरूपज्ञानस्याज्ञानविरोधित्वात्प्रत्यक्त्वं प्रत्यक्त्वाकारं विषयीकृत्य वेद्मि न वेद्मीति च प्रत्यक्षं वेदनमनुभवोऽस्ति । तथा च प्रत्यक्त्वाकारस्याज्ञानव्यावर्त्तकतया प्रयोजकस्फुरणसंभवात् । मामहं न जानामीत्यज्ञानाश्रयविषयत्वस्य चानुभूयमानत्वात् प्रत्यक्त्वाकारेणैवात्माज्ञानाश्रयो विषयश्चेत्यर्थः ॥ २१२ ॥

ननु प्रत्यक्त्वाकारेणात्मनोऽज्ञानाश्रयत्वेप्यज्ञानविषयत्वमनुपपन्नम् । अज्ञानविषयत्वं ह्यज्ञानावृतत्वं भवति । आवृतत्वं च विपरीतव्यवहारविषयतायोग्यत्वम् । तथा च प्रत्यक्त्वाकारेणात्मनोऽज्ञानविषयत्वे प्रतीचि नाहमस्मीत्यादिविपरीतव्यवहारः स्यात् । न च तथास्ति । किं च प्रत्यक्त्वाकारस्याज्ञानसाक्षितया स्पष्टं प्रतीयमानत्वाच्च तस्याज्ञानावृतत्वविरोधः । ननु प्रतीयमानस्याज्ञानव्यावर्त्तकत्वान्न विरोध इति चेत् सत्यम् । तदा खलु न जानामीत्येव प्रतीयेत नाहमिति स्पष्टम् । न च मामहं न जानामीति प्रतीचोप्यज्ञानविषयत्वप्रतीतेर्न विरोध इति वाच्यम् । इयं हि प्रतीतिः प्रतीचो ब्रह्मत्वाकारेणैवाज्ञानविषयत्वं साधयति न प्रत्यक्त्वाकारेणेत्येव वक्तव्यम् । अन्यथा अहमिति स्पष्टं प्रतीयमाने प्रत्यक्त्वाकारे तद्विषयाज्ञानानुपपत्तेः । न च मामित्युल्लेखानुपपत्तिः । ब्रह्मणोपि प्रत्यग्रूपत्वेन तथोल्लेखोपपत्तेः । नन्वद्वितीयत्वाकारेणाप्यज्ञानविषयत्वमनुपपन्नं तस्याप्रतीयमानत्वादिति चेन्न । अद्वितीयत्वादिलक्षणब्रह्मणः प्रकाशमानप्रत्यगभिन्नत्वेनाप्रतीयमानत्वासिद्धेः । किं च किं त्वमद्वितीयत्वादिलक्षणं ब्रह्म विद्धीति पृष्टः सन् प्रतिविधत्ते नाहं तद्भगवन्वेद्मीति ईश्वरमहं न वेद्मीति च सर्वानुभवो दृश्यते । अतोऽज्ञाततयानुभवसिद्धत्वादप्यद्वितीयब्रह्मणोऽज्ञानविषयत्वं वक्तव्यम् । अन्यथा स्पष्टं प्रकाशमानप्रत्यगभिन्नतयाऽद्वितीयब्रह्मणोपि स्पष्टं स्फुरणप्रसङ्गश्च । श्रुतिरपि कथं नु भगवः स आदेशो भवति । अधीहि भगवो ब्रह्मेत्यादिनाऽद्वितीयत्वादिलक्षणोपदेष्टव्याकारस्य जिज्ञास्यत्वमज्ञान-

विषयत्वं च दर्शयति। किञ्चाज्ञातमेव तत्त्वमादिवाक्यैरुपदिश्यत इति वक्तव्यमन्यथोपदेशवैयर्थ्यात् । प्रत्यक्त्वाकारस्य च स्पष्टं प्रतीयमानत्वान्नोपदेशार्हता आत्मनोऽद्वितीयत्वाद्याकारस्तूपदेशार्ह इति स एवाज्ञानविषयः। किं च यज्ज्ञानात्संसारभ्रमनिवृत्तिः तद्विषयाज्ञानादेव तद्भ्रमो वक्तव्यः। लोके तथैव भ्रमदर्शनात्संसारभ्रमनिवृत्तिश्च प्रत्यगात्मनोऽद्वितीयत्वब्रह्मत्वपरिज्ञानात् न प्रत्यक्त्वमात्रज्ञानात् । अन्यथा सद्योमुक्तिप्रसङ्गात् । तस्मादद्वितीयत्वाद्याकारेणैवात्मनोऽज्ञानविषयत्वं न प्रत्यक्त्वाकारेण। न चाद्वितीयत्वाद्याकारे प्रतीयमानेऽज्ञानानुपपत्तिः। अप्रतीयमाने च तस्मिन् तद्विषयाज्ञानप्रतीत्यनुपपत्तिरित्युभयतः पाशा रज्जुरिति शङ्क्यं स्वतोज्ञाततया प्रतीयमानेपि वस्तुन्यज्ञानदर्शनादिति पूर्वापरितोषात् सदृष्टान्तं पक्षान्तरमाह—

संवित्परिस्फुरति न स्फुरतीति तस्यां
वैयात्यदूषितधियस्तु विसंवदन्ते ।
अज्ञानतस्तदपि तद्वदिहाद्वयत्वं
भादप्यभादिति विमूढधियो वदन्ति ॥ २१३ ॥

संविदिति । तस्यां संविदि वैयात्यं धाष्ट्यं मद इति यावत् । विसंवदन्ते विप्रतिपद्यन्ते तदस्फुरणं विसंवदनं वा भादपि प्रकाशमानमप्यभादिवाप्रकाशमानमिव विमूढधियः अज्ञानावृतधियः लोके हि संविदि स्वरूपेण प्रकाशमानायामेव स्वप्रकाशत्वादिरूपेण मददूषिताशयानां वादिनां विवादो दृश्यते। न च सोऽज्ञानावृतत्वं विना तस्याः सम्भवति स्पष्टं प्रतीतेर्घटादौ विवादाभावात्। तथा च यथा प्रतीयमानायामेव संविदि विवादान्यथानुपपत्त्या स्वप्रकाशत्वाकारेणाज्ञानविषयत्वमप्युच्यते। एवमद्वयपरिपूर्णपरमानन्दब्रह्मापि स्वयं

प्रकाशप्रत्यगात्माभिन्नतया प्रकाशमानमेव न प्रकाशत इत्यादिविपरीतव्यवहारदर्शनात्तेनाकारेणाज्ञानविषय इति भ्रान्तैः कल्प्यत इत्यर्थः ॥ २१३ ॥

तदेव स्पष्टयति—

अव्युत्पत्तिं बिभ्रती भाति संवि-
त्तद्वद्ब्रह्माप्यद्वितीयस्वरूपम् ।
अव्युत्पत्तिं नाशयद्भाति वेद्यं
तस्मादेतच्चोद्यमस्मासु नास्ति ॥ २१४ ॥

अव्युत्पत्तिमिति । अव्युत्पत्तिं बिभ्रती—अज्ञानविषया सतीत्यर्थः । तद्वत्प्रकाशमानसंविदिवाद्वितीयस्वरूपं ब्रह्माप्यव्युत्पत्तिं बिभ्रत् भातीत्यर्थः । नन्वद्वितीयत्वादिलक्षणब्रह्मप्रकाशेपि तदज्ञानं चेत्कुतस्तर्हि तन्निवृत्तिस्तत्राह—अव्युत्पत्तिं नाशयदिति । वेद्यं तत्त्वमादिवाक्यसमुपजाताखण्डाकारवृत्त्यभिव्यक्तं सदित्यर्थः । यद्यप्यद्वितीयत्वादिलक्षणमपि ब्रह्म प्रकाश एव तथापि न प्रकाशमात्रेणाज्ञाननिवृत्तिः किन्तु वृत्त्यभिव्यक्तस्पष्टप्रकाशेनैव तथा च यदा श्रवणादिना तत्त्वमादिवाक्यादखण्डाद्वितीयाकारा वृत्तिर्भवति । तदा तदभिव्यक्तं सदखण्डाद्वितीयं ब्रह्माज्ञानं नाशयदेव भातीति नोक्तदोष इत्यर्थः । तस्माद्ब्रह्माश्रयाज्ञानपक्षो निर्दुष्ट इत्युपसंहरति—तस्मादिति । एतदद्वितीयेऽप्रतिपन्ने कथं तस्याज्ञानव्यावर्त्तकत्वं प्रतिपन्ने वा कथं तत्राज्ञानमित्येवमादिचोद्यमस्माकं पक्षे नास्ति उक्तप्रकारेण निरस्तत्वादित्यर्थः ॥ २१४ ॥

तदेवमविद्याद्वितीयपरिपूर्णपरमानन्दादिलक्षणं प्रत्यगभिन्नं परमात्मानमेव प्रत्यक्त्वाकारेणाश्रयतं अद्वितीयत्वाद्याकारेण

विषयीकरोति । तादृशाविद्यानिमित्त एव जीवभावः । स चैक एव । तस्य यदा तत्त्वज्ञानं तदा संसारः समूलं नश्यति । न च तदा प्रपञ्चोऽमुक्तो वा कश्चिद्भविष्यतीत्युक्तम् । तत्रैकजीववादे विदुषां वामदेवादीनां मुक्तिः अविदुषां च संसार इति बन्धमोक्षव्यवस्था-प्रतिपादकशास्त्रं विरुध्येतेति चोदयति—

**नन्वेवं चेद्बन्धमोक्षव्यवस्था**

**शास्त्रं कुप्येन्नाऽऽप्रबोधात्प्रवृत्तेः ।**

**बद्धो मुक्तोज्ञानवानज्ञ इत्य-**

**प्येतत्सर्वं यावदज्ञानमिष्टम् ॥ २१५ ॥**

नन्वेवं चेदिति । यद्यज्ञानेनैव जीवभावः स च एक इत्यङ्गीक्रियत इत्यर्थः । यदीदानीमुपलभ्यमानसंसारानुरोधेनेतः पूर्वं कस्याप्य-मुक्तिरुच्यते तदा शुकादिमुक्तिप्रतिपादकशास्त्रं पीड्येत । यदि मुक्ति-शास्त्रप्रामाण्यमङ्गीक्रियते । तदा ससारविषयं शास्त्रं तद्दर्शनं च पीड्येतेत्यर्थः । किमज्ञानदशायां बन्धमोक्षव्यवस्थाप्रतिपादकशास्त्र-स्यानुपपत्तिश्चोद्यते । उत ज्ञानदशायाम् । नान्त्यः । इष्टत्वात् । न प्रथमः । अज्ञानेनैव तदुपपत्तेरित्याह—नाप्रबोधादिति । आप्रबोधात् ब्रह्मात्म-बोधपर्यन्तमित्यर्थः । प्रवृत्तेः शास्त्रस्येति शेषः । बन्धमोक्षविषयशास्त्र-प्रवृत्तिवत् बन्धमोक्षादिरूपार्थव्यवस्थाप्रतीतिरप्यविवेकदशायामेवे-त्याह—बद्ध इति ॥ २१५ ॥

नन्वेवमपि मुक्तिशास्त्राप्रमाण्यं तदवस्थं प्रमेयाभावादित्याशङ्क्य तच्छास्त्रस्य मुक्तिपरत्वाभावात्तदंशेऽप्रमाण्यमिष्टमेति वक्तुं विक-ल्पयति—

किञ्चैतत्किं बन्धमोक्षव्यवस्था-
शास्त्रं यत्नात्तत्परं सत्प्रवृत्तम्।
किञ्चान्यस्मात्प्राप्तमेवानुभाष्य
तस्या रूपं ब्रह्मतत्त्वं विदध्यात् ॥ २१६ ॥

किञ्चैतदिति। एतत् तद्धैतत् अपश्यदित्यादिव्यवस्थितमुक्त्यादिप्रतिपादकं प्रकरणोल्लङ्घनेनापि शास्त्रं यत्नात् तत्परं मुक्त्यादिपरं प्रवृत्तं किं वा अन्यस्मात्प्राप्तमनादिलोकप्रतीतिप्रसिद्धमुक्त्यादिस्वरूपमनुभाष्यानूद्य प्रकरणिना चैकवाक्यत्वमापद्य तस्या व्यवस्थायाः व्यवस्थितमुक्त्यादेरिति यावत्। रूपं स्वरूपं ब्रह्मतत्त्वं विदध्यात् तात्पर्येण प्रतिपादयेदिति विकल्पार्थः ॥ २१६ ॥

तत्र प्रथमं दूषयति—

शास्त्रं यावत्तत्परं नेष्यते त-
दानर्थक्यात्तत्स्वरूपप्रतीतेः।
ब्रह्मात्मैक्यप्रत्ययेनार्थवत्त्वं
वक्तुं युक्तं तच्च नोऽभीष्टमेव ॥ २१७ ॥

शास्त्रमिति। तदानर्थक्यादित्यत्र तदिति च्छेदः। तच्छास्त्रमिति सम्बन्धः। तद्वामदेवादिमुक्तिपरन्नेष्यते। तत्र हेतुमाह—आनर्थक्यादिति। निष्प्रयोजनत्वादित्यर्थः। तत्स्वरूपप्रतीतेः—वामदेवादिमुक्तिस्वरूपप्रतीतेः। न हि वामदेवादिर्मुक्त इति ज्ञानादध्येतुः कश्चित्पुरुषार्थोऽस्ति। न चापुरुषार्थपरत्वं वेदस्य सम्भवति। अध्ययनविधिव्याकोपप्रसङ्गात्। प्रयोजनस्य तात्पर्यलिङ्गत्वाच्चेत्यर्थः। मुक्तिस्वरूपात्मैक्यप्रतिपादकतत्त्वमादिवाक्यशेषत्वे तु ज्ञानी वामदेवो मुक्त इति

ज्ञानं ज्ञानमात्रेण ब्रह्मात्मैक्यलक्षणमुक्ताचाश्वासं सम्पादयत् मुक्त्य-नुकूलप्रवृत्तिद्वारा आत्मैक्यधियार्थवद् भवति । अतो द्वितीयपक्ष एव वक्तव्यः । स चास्माकमिष्ट एवेत्याह—ब्रह्मात्मैक्येति । अर्थवत्त्वं शास्त्रस्य तथा च वामदेवादिमुक्तिप्रतिपादकशास्त्रस्यादित्यो यूप इत्यादिवत् गुणार्थवादत्वान्मुक्तिपरत्वाभावात्प्रत्युत ब्रह्मात्मैक्यपरत्वा-त्तदंशेऽप्रामाण्यमिष्टमेवेति नातत्परमुक्तिशास्त्रपीडा दोषायेत्यर्थः । तस्मादद्वितीयपरिपूर्णब्रह्माभिन्नस्त्वमेव जीवः न त्वदन्यो जीवो मुक्ति-भागासीदस्ति भविष्यतीति सिद्धम् ॥ २१७ ॥

एवमाचार्येण जीवैकत्वे प्रतिपादिते स्वानुभवविरोधान्न जीवै-कत्वमुररीकर्त्तुं शक्यमिति शिष्यश्चोदयति—

नन्वन्यो मद्बन्धमोक्षादिभागी
भूतो भावी वर्तते वा न कश्चित् ।
इत्युक्तार्थं स्वानुभूत्या विरोधा-
न्नाहं जातु प्रोत्सहे संग्रहीतुम् ॥ २१८ ॥

नन्वन्य इति । मत्-मत्तः आदिपदेन सुखदुःखादिकं गृह्यते । भूतः अतीतः भावी भविष्यन् न जातु स्वप्नेपीत्यर्थः । संग्रहीतुं अङ्गीकर्त्तुं यद्यपि स्वप्नदृष्टान्तेन प्रागेवानुभवविरोधः परिहृतः। तथाप्येतस्यार्थस्या-परिपक्वाशयानां दुरवगाहतां दर्शयितुं पुनरपि प्रकारान्तरेण परिहर्त्तुं चोद्यमुद्भावितमिति द्रष्टव्यम् ॥ २१८ ॥

विकल्पासहत्वान्न जीवैकत्वे स्वानुभवविरोधगन्धोप्यस्तीति वक्तुं विकल्पयति—

किं द्वैतानुभवो विरोधपदभाक्किं वा परोऽस्मीत्ययं
यद्वा कश्चिदिहापरोऽस्त्यनुभवो यस्ते विरोधावहः ।

**नाद्वैतानुभवः क्षतिं वितनुते तस्येति युक्तं वचो**
**नापि द्वैतमुपोल्लिखन्ननुभवस्तेनास्य बाधा यतः ॥ २१६ ॥**

किं द्वैतानुभव इति । त्वमहमयमिति भेदानुभवः विरोधपदभाक् विरुद्ध इत्यर्थः । परः परमात्मास्मीत्ययमनुभवः इह जीवैकत्वे अपरः द्वैताद्वैतविषयः किं जीवैकत्वे ब्रह्माहमस्मीति ब्रह्मैक्यानुभवो विरुद्ध. । किं वा त्वमहमयमिति भेदानुभवः किं वाऽन्यो द्वैताद्वैत-विषयोनुभवोस्ति योऽस्मिन्विरोधावह इति विकल्पक्रमो द्रष्टव्यः । आद्यं दूषयति—नाद्वैतेति । अद्वैतानुभवः ब्रह्माहमस्मीति ब्रह्मात्मैक्या-नुभवः तस्य जीवैकत्वस्य क्षतिमनुपपत्तिं वितनुते करोतीति वचो न युक्तमिति सम्बन्धः । अद्वैतानुभवस्य जीवैकत्वानुकूलत्वात् तस्य तद्विरुद्धत्ववचो न युक्तिमदित्यर्थः । द्वितीयं दूषयति—नापीति । द्वैतमुपोल्लिखन् त्वमहमयमितिभेदं विषयीकुर्वन् अनुभवः तस्य क्षतिन्न-वितनुत इत्यनुषङ्गः । तत्र हेतुमाह—तेनेति । तेन जीवैकत्वानुभवेनास्य त्वमयमितिभेदप्रत्ययस्य त्वमहमित्यादिभेदप्रत्ययो हि शरीरावच्छि-न्नात्मानमेव विषयीकरोति । स च जीवाभासः न पारमार्थिकजीवः न ह्यपारमार्थिकविषयज्ञानं बाधितुमीष्टे तथा च पारमार्थिकजीवैक-त्वप्रत्ययेनापारमार्थिकतद्भेदप्रत्ययस्य चन्द्रैकत्वज्ञानेन तद्भेदज्ञानवत् बाधितत्वान्न तेनापि तद्बाध इत्यर्थः ॥ २१६ ॥

तृतीयमनुवदति—

**द्वैताद्वैतनिवेशिनोऽनुभवनाद्बाधोद्भवोऽस्येति चे-**
**त्तादृङ्नानुभवोऽस्ति कस्यचिदपि स्थानत्रये जीवतः ।**
**भास्वच्छार्वरगोचरं ह्यनुभवं विभ्रज्जनो दृश्यते**
**नास्मिन्संसृतिमण्डले स न भवेत्कस्मादयं चेद्भवेत् ॥२२०॥**

द्वैतेति। द्वैताद्वैतनिवेशिनः भेदाभेदविषयत्वादेकत्वानेकत्वविषयादित्यर्थः। अनुभवनादनुभवात्। अस्य जीवैकत्वानुभवस्यैतादृशानुभव एव नास्ति विरोधात् बाधकत्वन्तु दूरनिरस्तमित्यभिप्रायेण परिहरति—तादृगिति। जीवभेदाभेदविषय इत्यर्थः। कस्य चिदपि पुरुषस्य स्थानत्रये जाग्रदादिलक्षणे लोकत्रये वा जीवतः वर्त्तमानस्य विरुद्धधर्मद्वयसंसर्गगोचरानुभवाभावे दृष्टान्तमाह—भास्वदिति। भास्वान्सूर्यः शार्वरं तमः तदुभयसंसर्गगोचरं नह्यस्मिन्संसारमण्डले प्रचुरप्रकाशसवितृतमः संसर्गानुभववान् कश्चिदस्ति। तथा च जीवभेदाभेदानुभवे तमः प्रकाशसंसर्गोऽप्यनुभूयेतेत्यर्थः। ननु नायमस्ति नियमः यदि भेदाभेदविषयप्रत्ययः स्यात्तमः प्रकाशसंसर्गानुभवः स्यादिति न हि नियमेनापाद्यते किन्तु विरुद्धधर्मद्वयसंसर्गविषयानुभवाङ्गीकारे विनिगमकाभावात् तमः प्रकाशसंसर्गोऽपि स्यादित्येवापाद्यत इत्याह—स न भवेदिति। अयमेकस्य भेदाभेदविषयानुभवः भवेच्चेत्स तमः प्रकाशसंसर्गानुभवः कस्मान्न भवेत् भवेदेवेत्यर्थः॥ २२०॥

तस्माज्जीवैकत्वाङ्गीकारे कस्याप्यनुभवस्य विरोधाभावादयं पक्ष एवाङ्गीकार्य इत्युपसंहरति—

यत एवमत्र न विरोधलवोऽ-
प्युपढौकते कथितनीतिवशात्।
उपगृह्यतां मतमिदं सुदृढं
गुरुसम्प्रदायवचनानुगतम्॥ २२१॥

यत एवमिति। एवंशब्दार्थमेव दर्शयति कथितेति। अत्र जीवैकत्वाङ्गीकारे विरोधलवोपि नोपढौकते न प्राप्नोति अतः इदं वक्ष्यमाणं सुदृढं निःसंदिग्धमुपगृह्यतामङ्गीक्रियतामिति सम्बन्धः। न केवलमस्य

युक्तियुक्तत्वं किन्तु सम्प्रदायपरम्पराप्राप्तत्वमपीत्याह—गुर्विति । गुरूपदिष्टवचनप्राप्तमित्यर्थः ॥ २२१ ॥

इदं शब्दार्थमेव दर्शयति—

**तव गाढमूढतमसा रचितं**
**जगदीशजीववपुषा सकलम् ।**
**प्रतिभाति तावददृढं दृढव-**
**त्समुदेति यावदवबोधरविः ॥ २२२ ॥**

तवेति । तव स्वप्रकाशचैतन्यस्वरूपस्य गाढं यथा भवति तथा मूढेन तादात्म्याध्यासप्राप्तेन तमसाऽज्ञानेन स्वप्रकाशचैतन्यस्वरूपत्वदाश्रयविषयत्वात्तादात्म्याध्यासप्राप्तानाद्यविद्ययेत्यर्थः । रचितं कल्पितं जगदीशजीववपुषा जगज्जडप्रपञ्चः जगज्जीवेश्वररूपेण कल्पितमिति सम्बन्धः । सकलं जडचेतनलक्षणसकलविश्वं जीवेश्वरजगद्रूपेण भिन्नं जगदाविद्यकमेव न पारमार्थिकं तथा च जीवभेदप्रतीतिरपि भ्रान्त्यैव वस्तुतस्त्वेक एव जीव इत्युक्तं भवति । ननु प्रतीतिदशायामात्मवत्प्रपञ्चस्यापि सत्त्वावभासनात् कथमाविद्यकत्वं तत्राह—अदृढमिति । अपारमार्थिकमेव पारमार्थिकमिव प्रतीयते शुक्तिरूप्यमिव अतस्तस्याविद्यकत्वं युक्तमित्यर्थः । ननु तत्राधिष्ठानशुक्तिसाक्षात्कारानन्तरं रजतबाधात्पूर्वं पारमार्थिकमिव प्रतीतमप्यपारमार्थिकं भवतु तत् अत्र तु यावज्जीवं सर्वदा सत्त्वेनैव प्रतीयमानत्वात्कथं तस्यासत्त्वमित्याशङ्क्याह—समुदेतीति । यावदखण्डात्मैक्याकारसाक्षात्कारलक्षणसहस्रांशुरुदेति तावदेव तामसं जगद्भाति न तदुत्तरम् । यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येदिति श्रुतेरतस्तस्य सद्विलक्षणत्वं युक्तमित्यर्थः ॥ २२२ ॥

नन्वाश्चर्यमिदं यदसन्नेव प्रपञ्चः सच्चिदानन्दैकरसमविद्यया जीवेश्वरजगद्रूपेण प्रतिभातीति न तदविद्यावत आश्चर्यं तस्या अघटितघटनापटीयस्त्वात् यथाहुः 'अहो नु चित्रं यत्सत्यं ब्रह्म तद्विस्मृतं नृणाम् । यदसत्यमविद्याख्यं तत्पुरःपरिवल्गती''त्यभिप्रेत्याह—

प्रभुरेष सर्वविदहं कृपणो
जगदेतदद्भुतवितानमिति ।
प्रतिपत्तयस्तिमिरलुप्तदृशो
यदिहोद्भवन्ति न तदद्भुतकम् ॥ २२३ ॥

प्रभुरेष इति । एषः यः सर्वज्ञ इत्यादिप्रत्यक्षश्रुतिसिद्धः प्रभुरीश्वरः कृपणो दुःखी अद्भुतवितानं विचित्रनिर्माणं तिमिरलुप्तदृशः अविद्यावृतस्वरूपज्ञानस्य पुंसः प्रभुः सर्वज्ञः अहं कृपणः जगदद्भुतवितानमिति प्रतिपत्तयो भवन्तीति यत्तदद्भुतं किमद्भुतं न भवति अविद्याया दुर्घटघटनास्वभावत्वादित्यर्थः ॥ २२३ ॥

विदुषस्तु प्रपञ्चप्रतीत्यभावादेव नाश्चर्यप्राप्तिरित्याह—

अभयं सनातनमनातुरधी-
रवलोकयन्निजमनन्तसुखम् ।
न मुनिः प्रपश्यति किमप्यसुखं
सकलं जिघत्सति जगत्स्वचिता ॥ २२४ ॥

अभयमिति । संसारदुःखरहितं सनातनमनादिनिधनमनातुरधीः स्वस्थधीः निजस्वरूपभूतं मुनिर्मननादिमान् असुखं दुःखात्मकं वस्तु । ननु श्रवणादिसम्पन्नस्य शुद्धान्तःकरणस्य निर्दुःखनित्यानवच्छिन्ना-

नन्दस्वरूपावलोकनमात्रेण तद्विलक्षणप्रपञ्चदर्शनाभावः कथं न हि घटदर्शनमात्रेण पटदर्शनाभाव इत्याशङ्क्य न विद्यमानस्य प्रपञ्चस्यादर्शनं ब्रूमः किन्त्वेतादृशस्वरूपदर्शनस्याधिष्ठानज्ञनत्वेन तेनाध्यस्तप्रपञ्चस्य बाधितत्वादेवेत्याह--सकलमिति । जिघत्सति बाधत इत्यर्थः । स्वचिता स्वस्वरूपसाक्षात्कारेण यतः स्वाकाररूपज्ञानेन सकलं जगद्बाधते ततो जगतोऽभावादेव तन्न पश्यतीत्यर्थः ॥ २२४ ॥

नन्वात्मव्यतिरिक्तस्य सर्वस्याविद्यात्मकत्वे आत्मवस्तुसिद्धिरपि न स्यात् गुर्वादिसाधकाभावात् । न चाविद्यैव तत्साधिका तस्याः विपरीतसिद्धिहेतुत्वात् । न चोभयहेतुत्वं विरोधात् । अतः पारमार्थिकत्वमेव प्रपञ्चस्य वक्तव्यमित्याशङ्क्याविद्यायाः स्वतो विपरीतबुद्धिहेतुत्वेपि स्वकार्यगुर्वादिद्वारा वस्तुसाधकत्वमपि संभवतीति पूर्वोक्तमेवार्थं द्रढयति—

तव चित्तमात्मतमसा जनितं
परिकल्पयत्यखिलमेव जगत् ।
तव कल्पनाविरचितः स गुरु-
स्तव रूपमद्वयमुदाहरति २२५ ॥

तव चित्तमिति । चित्तमन्तःकरणं रूपं स्वरूपमुदाहरति बोधयति ॥ २२५ ॥

नन्वाबालवृद्धं सर्वैः परिदृश्यमानस्य प्रपञ्चस्य कथमाविद्यकत्वं दृश्यत्वादेवेत्याह—

न हि चित्तदृश्यमपि सत्यमिति
प्रतिपन्नमस्ति भुवि किंचिदपि ।

**रशनाभुजङ्गसदृशं सकलं**
**जगदिन्द्रजालमिति सिद्धमतः ॥ २२६ ॥**

नहीति । सर्वस्यापि चक्षुरादिद्वारा अन्तः करणवृत्तिदृश्यत्वात्तद्वृत्तिरूपत्वाद्वा चित्तं दृश्यमित्युक्तं न हि सत्यस्य दृश्यत्वं सम्भवति ब्रह्मणि दृष्टमिति चेत् न तस्य वाङ्मनसगोचरत्वश्रुतेः कथं तर्हि मनोवृत्तिवेद्यत्वं न ह्येतावता तस्य चेतोदृश्यत्वं चेतोऽधीनप्रकाशवत एव चेतोदृश्यत्वादात्मनश्च स्वतः प्रकाशरूपस्य तदभावात् । तथा च पूर्वार्द्धेन प्रपञ्चस्य सत्यत्वे दृश्यत्वं न स्यादिति विपक्षे बाधकतर्क उक्त इति द्रष्टव्यम् । यद्दृश्यं तदसत्यमिति व्याप्तेः रज्जुभुजङ्गादौ दृष्टत्वात् विपक्षे बाधकसत्त्वाच्च जगन्मिथ्येत्यनुमानं रचयति—रशनेति । रशना रज्जुः इन्द्रजालशब्दो मिथ्यापर्यायः अतः शब्दो दृश्यत्वपरः विमतं मिथ्या दृश्यत्वाद्रज्जुसर्पवत् अन्यथा दृश्यत्वन्न स्यादिति गुर्वादिभेदेन भिन्नस्य जगदिन्द्रजालत्वं सिद्धमित्यर्थः ॥ २२६ ॥

ननु गुरोरपि कल्पितत्वे तस्य कथमुपदेष्टृत्वं किमेवं वदतो विवक्षितं कल्पितस्याप्युपदेष्टृत्वेऽविशेषात् घटादेरप्युपदेष्टृत्वं स्यादित्येतावन्मात्रमुत गुरोरुपदेष्टृत्वे सत्यत्वं वक्तव्यमिति नाद्य इत्याह—

**परिकल्पितोऽपि सकलज्ञतया**
**गुरुरेव पूर्णमवबोधयति ।**
**परिकल्पितोऽपि मरणाय भवे-**
**दुरगो यथा न तु नभो मलिनम् ॥ २२७ ॥**

परिकल्पितोऽपीति । पूर्णमद्वितीयपरमात्मानं परिकल्पितत्वाविशेषेपि

गुरोः सर्वज्ञत्वेन कल्पितत्वाद्धटादेश्च जडत्वेन कल्पितत्वादवान्तर-वैषम्यसम्भवान्न घटादेरुपदेष्टृत्वप्रसङ्ग इत्यर्थः। कल्पितत्वाविशेषेऽप्यवान्तरवैलक्षण्येन कार्यवैचित्र्ये दृष्टान्तमाह—परिकल्पितोऽपीति । न तु नभो मलिनं मरणाय भवेदित्यनुषङ्गः ॥ २२७ ॥

द्वितीयं दूषयति—

यदि सत्यमित्यवगतिं कुरुते
घटते पदादपि हुताशनधीः ।
यदि चानृतं न जनयेत्प्रमितिं
ननु चोदनापि जनयेन्न धियम् ॥ २२८ ॥

यदीति । यदि गुर्वादिकं सत्यमिति कृत्वाऽवगतिं जनयतीति विवक्षितं तर्हि सत्यत्वाविशेषात् धूमाद्वह्निज्ञानवद्धटादपि वह्निज्ञानं स्यात् । तस्मात्कार्यवैचित्र्ये सत्यत्वासत्यत्वं न प्रयोजकं किन्तु स्वभाववैलक्षण्यमेवेत्यर्थः । किं च किमसत्यस्य बोधजनकत्वं न सम्भवतीति वदन् मीमांसको वैशिषिको वा नाद्य इत्याह—यदि चेति । चोदना-विधिवाक्यं धियं स्वर्गसाधनत्वप्रमितिम् ॥ २२८ ॥

नन्वसत्यस्य बोधजनकत्वाभावे चोदनायाः कथं तदभावः तस्याः सत्यत्वादित्याशङ्क्य तस्या वर्णात्मना सत्यत्वेपि वाक्यात्मना मृषारूपेणैव धीजनकत्वान्नैवं वक्तुं शक्यमित्याह—

जनयत्यसाविह मृषा वपुषा
करणीयवस्तुनि मतिं सुदृढाम् ।
ध्वनिधर्मभेदघटितोऽपि मृषा
स्वरसेन सन्नपि तु वर्णगणः ॥ २२९ ॥

जनयतीति । असौ चोदनामृषावपुषा कल्पितरूपेण करणीय वस्तुनि कृतिसाध्ययागादौ विषये सुदृढामबाधिताम् । ननु स्वरूपेण सत्यभूतायास्तस्याः कथं वा मृषात्वं कथन्तरां मृषारूपेण बोधकत्व-मित्याशङ्क्याह—ध्वनिधर्मेति । ध्वनिरवर्णात्मकशब्दस्तस्य धर्मभेदा उदात्तादयः तद्घटितस्तद्विशिष्टः स्वरसेन स्वभावतः सन् परमार्थः वर्णगणः वर्णसमूहः । यद्यपि चोदना वर्णसमूहात्मिका स्वरूपेण सती तथापि स्वार्थप्रमितिजनकत्वोपयुक्ताकारेण मृषैव सा हि विशिष्टस्वरादिमत्तया ज्ञायमानचोदनाशब्दादेव भवति न तु शब्द-मात्रात् स्वरादयश्च ध्वनिधर्मा एव न वर्णधर्माः ततोऽन्यदीयोदात्ता-दिविशिष्टत्वाकारेणैव तस्या अर्थप्रमितिजनकत्वात् तस्य च मृषात्वात् मृषारूपेणैव बोधकत्वमित्यर्थः ॥ २२९ ॥

उदात्तादिविशिष्टस्यैव शब्दस्य स्वार्थप्रतीतिजनकत्वं न तु तद्रहितस्य केवलस्येत्यत्र प्रमाणमाह—

मन्त्रो हीनः स्वरतो वर्णतो वा
मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति
यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ २३० ॥

मन्त्रो हीन इति । स्वरतो वर्णतो वा हीनस्तदन्यतररहित इत्यर्थः । तदेवाह—मिथ्येति । उचितस्वरवर्णान्यतरहीनतयोच्चार्यमाणत्वमेव मिथ्याप्रयुक्तत्वं तमर्थं विवक्षितमर्थं न केवलं स्वरादिहीनस्य विवक्षितार्थाप्रतिपादकत्वं किन्त्वनर्थकारित्वमपीत्याह—स इति । वागेव वज्रः यथेन्द्रशत्रुरिति त्वष्टा हीन्द्रनिग्रहसमर्थपुत्रोद्देशेन इन्द्र-शत्रुर्वर्द्धस्वेत्यनेन मन्त्रेणाग्नौ जुहवांचकार मन्त्रश्च स्वार्थप्रत्यायक एवेतिस्थितिः । तत्र हि तत्पुरुषस्वरे ऽन्तोदात्ते प्रयोक्तव्ये बहुव्रीहि-

स्वराद्युदात्तप्रयोगादिन्द्रः शत्रुः शातयिता हिंसको यस्योद्देश्यपुत्रस्ये-त्यर्थलाभेनेन्द्रवध्य एव वृत्रासुरनामा पुत्र उत्पन्न इति प्रसिद्धिः। तथा च केवलशब्दस्यैव विवक्षितार्थप्रमितिजनकत्वे तन्न स्यात् शब्दोच्चारणस्य तत्रापि विद्यमानत्वात्। तस्माद्विशिष्टस्वरविशिष्टस्यैव बोधकत्वमित्यर्थः॥ २३०॥

ननूदात्तादिमतो ध्वनेरेव चोदनात्वमस्तु न वर्णसमूहस्य तथा च नोक्तदोष इत्यत्राह—

न च वर्णपूगमपहाय भवे-
दिह चोदनेत्यभिमतं विदुषाम्।
यदि सत्यमेव गमकं भवति
स्फुटमप्रमाणमियमप्युदिता॥ २३१॥

नचेति। वर्णपूगं वर्णसमूहं न हि वर्णसमूहव्यतिरेकेण चोदना भवेत्। अवर्णात्मकत्वेन वाचकत्वायोगात्। अन्यथा समुद्रघोषादेरपि वाचकत्वप्रसङ्गादित्यर्थः। तथाऽभ्युपगमोऽपि नास्तीत्याह—इत्यभिमतमिति। फलितमाह—यदीति। इयं-चोदना। यदि सत्यस्यैव बोधकत्वमङ्गीक्रियते तर्हि चोदनाया उक्तरीत्याऽसत्यत्वेन बोधकत्वासम्भवादनिच्छतापि त्वयेयमप्रमाणमिति प्रतिपादितं स्यादित्यर्थः॥ २३१॥

एवं मीमांसकमतेऽसत्यस्य वस्तुप्रमितिजनकत्वमित्यत्रोदाहरणमुक्त्वा न्यायवैशेषिकमतेपि तदाह—

श्रवणेन्द्रियं च किल कर्णगतं
परिकल्पनोपचरितं नभसः।

बलयं प्रकाशयति शब्दगणं
परमार्थमित्यपि कणादमतम् ॥ २३२ ॥

श्रवणेन्द्रियमिति। श्रोत्रेन्द्रियं कर्णगतं कर्णशष्कुल्युपहितं परिकल्पितोपचरितं नभसो बलयाकारत्वे उपाधिपरिकल्पितत्वेनोपचरितमेव न मुख्यमित्यर्थः। अपारमार्थिकमिति यावत्। नभसो बलयं बलयाकारं नभ इत्यर्थः। परमार्थमिति। तज्ज्ञानस्य भ्रान्तित्वं नास्तीति सूचितं वैशेषिकैर्हि कर्णशष्कुल्युपाधिबलयितं नभःश्रोत्रमिति श्रोत्रस्याकाशात्मत्वमुच्यते। न च तदाकाशस्य पारमार्थिकं स्वरूपं वस्तुनः स्वरूपद्वयायोगात् तस्यापरिच्छिन्नत्वप्रसङ्गाच्च किन्त्वसत्यमित्येव वक्तव्यम्। तथा चापारमार्थिकस्यापि श्रोत्रस्य पारमार्थिकशब्दबोधजनकत्वमङ्गीक्रियत इति तन्मतेपि सत्यस्यैव बोधकत्वमिति नियमो नास्तीत्यर्थः ॥ २३२ ॥

तस्माद् गुर्वादिप्रपञ्चस्यासत्वेपि संसारनिवर्त्तनक्षमतत्त्वप्रमितिजनकत्वसंभवात् न प्रपञ्चो मायिक इत्यस्मिन्नर्थे विमतिः कार्येत्यभिप्रेत्याह—

त्वमतः स्वमोहरचितं गहनं
भवसागरं तर परावगतेः।
परिकल्पितद्वयनिबन्धनतः
परमार्थसंविदुदये सति भोः ॥ २३३ ॥

त्वमत इति। असत्यस्य तत्त्वप्रमितिजनकत्वमतः शब्दार्थः गहनं दुस्तरं भवसागरं तर संसारं निवर्त्तयेत्यर्थः। तरणे हेतुमाह— परावगतेरिति। परमात्मसाक्षात्कारादित्यर्थः। तत्सिद्धौ हेतुमाह—

परिकल्पितेति । कल्पितगुर्वादिद्वैतप्रपञ्चकारणादित्यर्थः परमार्थो ब्रह्मात्मैक्यम् ॥ २३३ ॥

एवं कल्पितस्य तत्त्वावगतिहेतुत्वं प्रतिबन्द्योक्तम् । इदानीं कैमुतिकन्यायेनाऽपि गुर्वादेस्तत्त्वावगतिहेतुत्वं वक्तुं स्वाभिमतस्य पराभिमताद्विशेषमाह —

**भ्रान्तं तथोपचरितं च यथाविभाग-**

**मङ्गीकृतं कणभुगादिमुनीन्द्रमुख्यैः ।**

**यन्नास्ति तत्फलनिबन्धनमस्मदीये**

**तन्त्रे तमोविरचितं न फलाय कस्मात् ॥२३४॥**

भ्रान्तमिति । उदात्तादिधर्मविशिष्टवर्णस्वरूपमुपचरितमुक्तरूपं श्रोत्रं यथाविभागं विभागो मतभेदः स्वस्वमतानुसारेणेति यावत् । अयथाविभागमिति पाठेऽपारमार्थिकोदात्तादिस्वरपरिच्छेदादियुक्तं तादृशकर्णशष्कुल्यादिपरिच्छेदयुक्तं चेत्यर्थः । कणभुगादीत्यादिपदेन मीमांसको गृह्यते । नास्ति असत्तुच्छमित्यर्थः । फलनिबन्धनमवबोधरूपफलजनकं यन्नास्ति तत्फलनिबन्धनमितिकणभुगादिमुनीन्द्रमुख्यैर्यथाविभागमङ्गीकृतमिति सम्बन्धः । यच्छब्दार्थस्य प्रदर्शनं भ्रान्तं तथोपचरितं चेति द्रष्टव्यम् । एतदुक्तं भवति मीमांसकादिपक्षो वर्णात्मकशब्दस्याकाशात्मकश्रोत्रस्य च यदिदमुदात्तादिविशिष्टत्वं कर्णशष्कुल्युपाधिवलयितत्वं च तन्न तावत्सद्वर्णात्मकशब्दे उदात्तादेरभावादाकाशे च वलयाभावात् नापि सदसद्विलक्षणमनिर्वचनीयम् तैरनङ्गीकारात्तस्मात्तुच्छापरपर्यायमसदित्येव वक्तव्यं तथा चासत एव प्रमितिजनकत्वेनाभिमतस्य गुर्वादेरनिर्वचनीयत्वमेव न तु तुच्छत्वमिति ततो विशेषं सूचयति—तमोविरचितमिति । अनिर्वचनीयाविद्याविजृम्भितमित्यर्थः गुर्वादीतिशेषः ॥ २३५ ॥

इदानीं कैमुतिकन्यायमेव स्पष्टयति—

असदपि फलवत्तामश्नुते युष्मदिच्छा-
मनुसरदथ कस्मान्मायया निर्मितं सत् ।
न भवति फलवत्ताभाजनं चित्रमेत-
द्वयमिह न समर्था यूयमत्यन्तशक्ताः ॥२३५॥

असदपीति । तुच्छमपि श्रोत्रादिकमित्यर्थः । फलमवबोधः तद्वत्तां तज्जनकत्वमित्यर्थः । युष्मादिच्छामनुसरदित्युपहासः नूनं भवदिच्छामात्रेण वन्ध्यापुत्रोपि विचित्रसौभाग्यमनुभवेदित्यर्थः । सत्-असद्विलक्षणमित्यर्थः । फलवत्ताभाजनं फलवत्त्वभाक् निःस्वभावस्य शशविषाणतुल्यस्यापि फलजनकत्वे किमु वक्तव्यम् न्यायसिद्धमनिर्वचनीयस्य तुच्छविलक्षणस्य तत्त्वम् । तथापि गुर्वादिकं बोधजनकं न भवतीत्येतद्भवतामिति साहसवचनमाश्चर्यमित्यर्थः । तस्माद्धाष्ट्यादेवैवं ब्रूध्वे न तु न्यायतः न्यायस्तु विपरीत एवेत्युपसंहरति—
वयमिहेति । इह अतिसाहसोक्तौ ॥ २३५ ॥

एवं गुर्वादेः कल्पितस्याप्यवगतिहेतुत्वेनानुपपत्तिः परैरप्यङ्गीकृतत्वादित्युक्तमिदानीं कल्पितस्य न कुत्रापि कारणत्वं किन्तु सर्वत्र ब्रह्मैव कारणमिति स्वसिद्धान्तमाह—

परमेव तत्त्वमगृहीतमभू-
दखिलस्य कारणमनर्थकरम् ।
परमेव तत्त्वमवबुद्धमलं
परितृप्तये भवति पुष्कलता ॥ २३६॥

परमेवेति । तत्त्वं ब्रह्मात्मवस्त्वगृहीतं यथावदनवगतमविद्यावृतं सदित्यर्थः । अखिलस्य जडचेतनप्रपञ्चस्य कारणमत एवानर्थकरमवबुद्धं यथावदहं ब्रह्मेत्यपरोक्षीकृतं सदित्यर्थः । अतः यस्मादगृहीतं सदनर्थकरमतः पुष्कलतः सर्वात्मना परितृप्तये आनन्दावाप्तये परिमितानन्दावाप्तिलक्षणपरमपुरुषार्थायेत्यर्थः । पुष्कलतोऽवबुद्धमित्यपि सम्बन्धनीयम् । एतदुक्तं भवति । द्विविधं हि कारणत्वमेकमनर्थं प्रत्यपरं पुरुषार्थं प्रति तत्रानर्थं प्रति कारणत्वमविद्यायाः तत्रापि तस्याः न स्वतस्तद्धेतुत्वं निःस्वभावत्वात् किन्त्वधिष्ठानब्रह्मावलम्बनेन तदुक्तं प्रत्यक्त्वमात्रविषयाश्रयतावलेनेति । तथा च ब्रह्मैव तत्रापि कारणं नारोपितमविद्यामात्रं पुरुषार्थसाधनत्वमपि साक्षात्परम्पराभेदेन द्विविधमुभयमपि ब्राह्मण एव तत्र साक्षात्साधनत्वमखण्डाकारवृत्त्यारूढत्वेन परम्परया साधनत्वं तु विद्वत्तया कल्पितगुर्वादिद्वारेण तथा च विद्वत्तया कल्पितदेहद्वारेण ब्रह्मण एवावगतिहेतुत्वान्नानिर्वचनीयस्य बोधकत्वासम्भवाशङ्केति । अथवा-भवतु कल्पितस्य प्रतीतिहेतुत्वं तन्न निराकुर्मः कल्पितस्योपदेष्टृत्वमेव तत्कस्य हेतोः । उपदेशो ह्युपदेष्टव्यज्ञानपूर्वकः । न च कल्पितस्य ज्ञानं सम्भवतीत्याशङ्क्य न कल्पितस्य गुरोरुपदेष्टृत्वं ब्रूमः । किन्तु सर्वकारणत्वात्सर्वनियन्तृत्वाच्च गुर्वादिकारणत्वेनान्तर्यामित्वेन चानुस्यूतसर्वज्ञब्रह्मण एवेत्याह— परमेवेति । अस्मिन्पक्षेऽवबुद्धं सर्वज्ञमित्यर्थः । परितृप्तये भवति तत्साधनब्रह्मोपदेशद्वारेति शेषः । एतदुक्तं भवति । ब्रह्मैव हि स्वाश्रिताविद्यायां प्रतिबिम्बितं सत्तेन रूपेण स्वात्मन्यनर्थमारोपयति । बिम्बरूपेण सत्त्वप्रधानमायाप्रतिबिम्बरूपेण वा सर्वज्ञमन्तर्यामितया गुर्वादिप्रपञ्चान्तर्भूतं च सतस्त्वाभिन्नस्य प्रतिबिम्बलक्षणजीवस्यानर्थनिवृत्तये तेन रूपेण ब्रह्मात्मोपदेष्टृ भवतीति ॥ २३६ ॥

ननु परतत्त्वानवबोधाच्चेत्संसारः तर्हि कदाचिदपि मम स न विवर्त्तेतान्यस्य ततोन्यात्मतासाक्षात्कारासंभवेन मम परतत्त्वा-

भेदसाक्षात्कारासंभवादित्याशङ्क्य न परतत्त्वं त्वत्तोऽतिरिच्यते। किन्तु त्वमेव तत्त्वमादिश्रुतेः तर्हि किमिति मया तन्नानुभूयते। विषयबहिर्मुखचित्तत्वात्। अतो यावद्विषयबहिर्मुखस्थः तावत्तव त्वत्स्वरूपज्ञानाभावादनर्थपरंपरैव स्यात्। यदा तु विषयान्मनो निवर्त्तयेस्तदा तव त्वत्स्वरूपं स्फुरेत् ततः पुरुषार्थो भवेदित्यभिप्रेत्याह—

**तव रूपमेव तव दुःखकरं**

**यदि तन्न पश्यसि बहिर्मुखधीः।**

**तव रूपमेव तव तृप्तिकरं**

**यदि तत्प्रपश्यसि निवर्त्य तमः॥ २३७॥**

तव रूपमिति। रूपमनवच्छिन्नानन्दचैतन्यैकरसलक्षणं तत्तादृशं स्वरूपं बहिर्मुखधीरहंकाराद्यनात्मावहितचित्तः निवर्त्यबाह्यविषयादिति शेषः। मनः अन्तःकरणम्। न चात्मन एवार्थानर्थकरत्वे प्रमाणाभावः इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिरिति श्रुतेः आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मन इति भगवद्वचनस्य च प्रमाणत्वात् तस्यादात्मस्वरूपस्यैवानवबोधद्वारा सर्वानर्थहेतुत्वं बोधद्वारा च पुरुषार्थहेतुत्वमिति सिद्धमिति भावः॥ २३७॥

एवं वर्णितस्य फलमाह—

**तव बोधमात्रमुपनेयमत-**

**स्तव मोहमात्रमपनेयमपि।**

**तव बोधमोहजनिहानिकरं**

**वचनं त्रयीशिरसि तत्त्वमिति॥ २३८॥**

तवेति। अत इत्यादौ सम्बन्धनीयम्। बोधमात्रमखण्डाकार-

ज्ञानमात्रमुपनेयं संपाद्यं तत्र हेतुः मोहमात्रमनिर्वचनीयम्। मिथ्याभूताविद्यामात्रमपनेयं निवर्त्यं न तु वस्तुभूतं किञ्चिदित्यर्थः। बोधमोहोपनयापनयसाधनमाह—तवेति। तत्त्वमितिवचनमिति सम्बन्धः। गुरूपदिष्टं तत्त्वमसीति वाक्यमेव साक्षाद्बोधजन्मकरं ज्ञानद्वारामोहहानिकरमित्यर्थः। तथा च तत्त्वमादिना तत्त्वज्ञानमात्रमेव सम्पादनीयञ्च तु तस्मिन्नानन्दावाप्त्यादिलक्षणातिशय आधेय इत्यर्थः॥ २३८॥

ननु ज्ञानव्यतिरेकेणात्मन्यतिशयाभावे मुक्तिसंसारयोर्विशेषो न स्यात् अत आनन्दावाप्तिलक्षणातिशय आधेय इत्याशङ्क्यानन्दस्यात्मस्वरूपत्वेन नित्याप्तत्वाद्भ्रान्तिमात्रेणैवानवाप्तत्वप्रतिभासात्तस्य च ज्ञानोत्पत्तिमात्रेण निवृत्तेः नात्मनि कालत्रयेपि कश्चिदतिशयोऽस्तीत्याह—

तव बोधजन्मनि पुरा न पुन-
स्तव कश्चिदप्यतिशयो भवति।
तम एव पूर्वमभवन्न भव-
त्यवबोधजन्मनि ततो न परम्॥ १३९।

तव बोधजन्मनीति। पुनः पश्चात्तत्त्वज्ञानोत्पत्तिसमये ततः पुरा॰ संसारावस्थयां ततः पश्चान्मोक्षावस्थायां च नात्मनि कश्चिदतिशयः तव नित्याप्तैकरसानन्दरूपत्वादित्यर्थः। नन्वानन्दावाप्तिलक्षणातिशयाभावेप्यात्मन्यनर्थः पूर्वमभूदिदानीं तन्निवृत्तिरित्येवंरूपातिशयोऽस्त्येवेत्याशङ्क्यानर्थस्य मोहकार्यतया मोहात्मकत्वेन मोहव्यतिरेकेणाभावात् न तत्सहभावाभावाभ्यामात्मन्यतिशय इत्यभिप्रेत्याह—तम एवेति। पूर्वंतत्त्वबोधात् पूर्वं ततः तमसः परं व्यतिरिक्तं नाभवत् न भवति। न च निवर्त्तत इत्यर्थः॥ २३९॥

तर्हि तमसो भावाभावावेवातिशय इत्याशङ्क्याह—

न तमोऽपि पूर्वमभवन्न भव-
त्यवबोधजन्मनि तमोऽभिभवः।
तम एव केवलमिदं सकलं
न तमो विनाऽत्मनि किमप्यभवत् ॥ १४० ॥

न तमोऽपीति। तमोऽभिभवः तमोनिवृत्तिः तमसोऽसङ्गात्मवस्तुसंस्पर्शित्वासंभवान्नात्मनि तमोप्यस्ति। अत एव न तन्निवृत्तिरपीत्यर्थः। तर्हि कथं पूर्वमात्मन्यनर्थकरतमोभूत् इदानीं तन्निवृत्त्या कृतकृत्यतेति तव रूपमित्यत्रोक्तं तत्राह—तम एवेति। इदं सकलमात्मनि पूर्वं तमोभूदिदानीं तन्निवृत्तमित्येतत्सकलं तम एव मोहमात्रमेव तमो विना मोहमात्रं विना किमपि न वस्तुभूतम्। एतदुक्तं भवति। यद्यप्यनर्थकरं तमोस्ति तथापि तस्य कल्पितत्वेन वास्तवत्वाभावात् वास्तवस्यैवातिशयाधायकत्वात् तादृशस्य चात्मन्यभावात् कल्पितनिवृत्तेश्चाधिष्ठानमात्रत्वात् नात्मनि तमस्तन्निवृत्तिप्रयुक्तातिशयः संभवतीति ॥ २४० ॥

ननु तम एवेदमित्यत्र तमोनिवृत्तेरपि तमस्त्वमुक्तमनुपपन्नमभावस्य प्रतियोग्यात्मत्वानुपपत्तेः आत्मस्वरूपत्वाच्चेत्याशङ्क्याह—

न तमः परिहृत्य लभ्यते
तमसो हानिगता निरूपणा।
इति सा तम इत्युदीरिता
न निवृत्तिस्तमसस्तमोमयी ॥ २४१ ॥

न तम इति। हानिगता हानिविषया तमोनिवृत्तिनिरूपणेत्यर्थः। सा तमोनिवृत्तिस्तमोमयी तम आत्मिका। यद्यप्यात्मस्वरूपैव तमोनिवृत्तिः तथापि सा तमोदशायामेव तत्त्वेन निरूप्यते न तु तमः परिहृत्येति-

तमइत्युक्ता । अथवा तमोलक्षणप्रतियोगिनिरूपणाधीननिरूपणत्वात्तम-इत्युक्ता न तु तम आत्मकत्वेनेत्यर्थः ॥ २४१ ॥

तदेवमद्वैतसमन्वयस्य प्रत्यक्षादिविरोधः परिहृतः इदानीं कर्मकाण्डप्रमेयस्य धर्मस्याज्ञातविरोधं परिहरति—

**विधयश्च कर्मविषया स्वतमः-**
**पटलावृत्ते त्वयि बहिर्मनसि ।**
**कुत एव सम्यगवबोधहते**
**तमसि प्रवृत्तिरिति सम्भवति ॥ २४२ ॥**

विधयश्चेति । यद्यपि धर्मेपि तत्त्वमतिरेवेत्यत्रैतद्विरोधोपि परिहृत एव तथापि कर्मकाण्डप्रमेयस्य धर्मस्याज्ञातत्वसंभवात्तत्प्रतिपादकस्य तस्य तात्त्विकप्रामाण्यमित्याशङ्क्य मुख्याज्ञातत्वासंभवेन तत्त्वावेदनप्रामाण्याभावात्तेनाद्वैतसमन्वयस्य विरोधो नास्तीत्युक्तम् । इदानीं प्रकारान्तरेण तद्विरोधः परिह्रियत इति न पौनरुक्त्यम् । कर्मविषयाः कर्मबोधकाः स्वतमःपटलावृते स्वस्य देहादेरविवेकस्तमस्तदेव पटलं तेनावृतेऽविवेकिनीत्यर्थः । बहिर्मनसि क्षुद्रस्वर्गादिफलाभिलाषिणि त्वयि प्रवर्त्तन्त इति शेषः । तमस्यविवेके सम्यगवबोधहते विवेकज्ञानेन निवृत्ते सति इह त्वयि प्रवृत्तिः विधीनामिति शेषः । विधिव्यापारः कुत एव संभवति न कुतोऽपि तत्प्रयोजकाविवेकाद्यभावादित्यर्थः । एतदुक्तं भवति—ब्राह्मणो यजेतेत्यादिविधयो ह्यशुद्धाशयस्य ब्राह्मण्याद्यभिमानिनः स्वर्गाद्यभिलाषिणोऽविवेकदशायां लोकप्रसिद्धकर्त्रादिभेदमादाय कर्म बोधयन्ति । वेदान्तास्तु शुद्धाशयस्य मुमुक्षोर्नित्यानित्यविवेकादिदशायामद्वैतं बोधयन्ति । न च भिन्नाश्रयभिन्नकालप्रमाणद्वयस्य परस्परं प्रतिद्वन्द्वित्वमस्ति । न हि कालभेदेनैकत्र घटतदभावावगाहिप्रमाणद्वयं पुरुषभेदेन शुक्तिर-

जतदभावावगाहिप्रमाणद्वयं च परस्परं स्पर्धते । तथा च काण्डद्वयस्य भिन्नकाले भिन्नाश्रय एव प्रवर्त्तमानत्वान्न विरोध इति ॥ २४२ ॥

ननु विवेकिनोपि ब्रह्मण्याद्यभिमानसत्त्वात् स्वर्गादिकामनया कर्मणि प्रवृत्तिसंभवात् न काण्डद्वयस्य भिन्नकालभिन्नाश्रयप्रवृत्तिः इत्याशङ्क्य विवेकिनः सकृमिकदुर्गन्धश्वमांसवत् परित्यक्तक्षुद्रस्वर्गाद्यभिलाषाभावात्तदभिलाषवत एव कर्मादिविधानान्न तस्य कर्मणि प्रवृत्तिः न वा काण्डद्वयस्य भिन्नकालभिन्नाश्रयत्वाभाव इत्यभिप्रेत्याह—

विदिते पदे भगवतः परमे
परिपुष्कले परमतृप्तिमतः ।
तव तृष्णया विरहितस्य कथं
विधिषु प्रवृत्तिरपवर्गवतः ॥ २४३ ॥

विदित इति । विवेकवतः प्रतिपन्ने पदे स्वरूपे परिपुष्कले पूर्णे परमतृप्तिमतः परमतृप्तिमभिलषतः तृष्णया विरहितस्य कर्मफलरागविहीनस्य तृणीकृतब्रह्मलोकस्येत्यर्थः । अपवर्गवतः अपवर्गसाधनवतः शमादिमतः इत्यर्थः । विधिषु विधीयमानेषु कर्मसु कथं प्रवृत्तिः संभवेदित्यर्थः । तथा च रागिणं प्रत्येव कर्मकाण्डस्य बोधकत्वात् ब्रह्मकाण्डस्य विरक्तं प्रत्येव बोधकत्वान्न परस्परविरोधः । न च वेदस्य पुरुषभेदेन प्रामाण्यमयुक्तं तथा सति सर्वस्यापि वेदस्य सर्वाध्येतृपुरुषार्थपर्यवसायित्वाभावेनाध्ययनविधिव्याकोपप्रसङ्गादिति वाच्यम् । ब्राह्मणाद्यधीतराजसूयादिभागवद्ब्रह्मचर्यावस्थायामग्निहोत्रादिभागवच्च पुरुषभेदेन कालभेदेन प्रामाण्येऽपि नित्याध्ययनादिना फलपरत्वोपपत्तेरित्यर्थः ॥ २४३ ॥

ननु फलरागाभावात् काम्यवाक्यं मैनं प्रति प्रमाणमस्तु

नित्यवाक्यन्तु ब्राह्मण्यादिमात्रनिमित्तकं कथमस्य न प्रमाणं विवेकदशायामपि ब्राह्मण्यादिनिमित्तस्य सत्त्वात्। तथा च कथं भिन्नाश्रयत्वादिना विरोधपरिहार इत्याशङ्क्य एवमपि पशुभार्यादिसाधनानां मिथ्यात्वप्रतिसंधानेन संन्यस्तत्वात् न तस्य तस्मिन् प्रवृत्तिरिति न विरोध इत्यभिप्रेत्य कर्मोपयोगिभाव्यकरणाद्यन्यतमाभावेऽपि तत्राप्रवृत्तौ दृष्टान्तमाह—

अभिचारकर्मविधयो हि यथा
फलभागबाधमनु बाधयुजः।
करणादिभागनिरुपाख्यतया
विधयस्तथैव परमात्ममतेः॥ २४४॥

अभिचारेति। श्येनेनाभिचरन्यजेतेत्यादयः फलभागबाधमनु फलांशस्य बाधं लक्ष्यीकृत्य बाधयुजः बाधभाजः फलबाधेन बाधिता इत्यर्थः। यथा न हिंस्यादिति हिंसानिषेधवाक्यार्थनिश्चयवन्तं पुरुषं प्रति श्येनेनाभिचरन्यजेतेतिवाक्यं प्रमाणं सत् प्रवर्त्तकन्न भवति तत्फलीभूतहिंसाया अभाव्यत्वप्रतीतेः। भाव्याभावे च प्रवृत्त्यनुपपत्तेः। एवं विवेकिनं विरक्तं प्रति नित्यविधिरप्यप्रमाणं प्रवर्त्तकन्न भवति तत्फलीभूतहिंसाया अभाव्यत्वप्रतीतेः भाव्याभावे च प्रवृत्त्यनुपपत्तेः एवं विवेकिनं विरक्तं प्रति नित्यविधिरप्यप्रमाणं प्रवर्त्तकं न भवति पशुभार्यादिसाधनाभावादिति दार्ष्टान्तिकमाह—करणादीति। करणं पश्वादिसाधनमादिपदेन सम्प्रदानादिकं गृह्यते। करणादिभागस्य निरुपाख्यतया अपारमार्थिकत्वेन संन्यस्यत्वात् विधयः नित्यविधयः तथैव बाधयुज इत्यर्थः॥ २४४॥

किं च नित्यविधावपि फलं वक्तव्यमन्यथा तस्य पुरुषार्थपर्यवसायित्वाभावेन प्रामाण्यानुपपत्तेः। न च तत्र प्रमाणाभावः। कर्मणा पितृलोकः यस्यैते चत्वारिंशत्संस्कारा इत्याद्यविशेषश्रुतिस्मृतिसिद्धत्वाद्विध्यनुपपत्तेश्च। विधिर्हि शब्दभावनार्थभावनां निष्पादयति।

सा चांशत्रयमपेक्षमाणा फलभूतमेव भाव्यत्वेनादत्ते । अतादृशस्य तादृत्त्वायोगात् । तथा च हिंसानिषेधवाक्यार्थनिश्चयवतोऽभिचारकर्मणि भाव्यस्यैकस्याभावेपि तदन्वयद्वाराकरणान्वयाभावात् तदभावे च तद्द्वारकेतिकर्त्तव्यान्वयाभावान्नार्थभावना सिद्ध्यति । तदभावे च न शब्दभावनालक्षणविधिसिद्धिरिति श्येनादिवाक्यस्याप्रवर्त्तकत्वे किमु वक्तव्यम् । विवेकिनं विरक्तं प्रति भाव्यकरणेतिकर्त्तव्यानां त्रयाणामभावे नित्यविधेरप्रवर्त्तकत्वमित्याशयेनाह—

**यदि भाव्यभागविलये न भवे-**
**त्फलभावना कथमिहोत्सहते ।**
**करणादिभागविलये भवितुं**
**विधिरन्तरेण घटते न च ताम् ॥ २४५ ॥**

यदि भाव्येति । फलभावनापुरुषप्रयत्नरूपार्थभावना भाव्यभागविलयेऽभिचारकर्मणि फलांशबाधोपि न भवेद्यदि करणादिभागविलये ससाधनकर्मफलस्य संन्यस्तत्वात् करणभाव्येतिकर्त्तव्यबाधे कथमिव भवितुमुत्सहते न कथमपीत्यर्थः । ननु तावता विधेः किमायातं तत्राह—विधिरिति । शब्दभावना तां फलभावनां तस्या अपि भाव्यसाकाङ्क्षत्वादित्यर्थः ॥ २४५ ॥

एवं भावनावाक्यार्थवादिमते कर्मकाण्डस्य विवेकिनं प्रत्यप्रमाणत्वमुक्त्वा नियोगवाक्यार्थवादिमतेपि तदाह—

**अधिकारिणं च विषयं च विना**
**न नियोगबुद्धिरुपपत्तिमती ।**
**न विना तमस्तदुभयं घटते**
**विदितात्मनश्च न तमो घटते ॥ २४६ ॥**

अधिकारिणामिति । फलस्वामिनं विषयं फलकरणं नियोगो हि स्वर्गादिकामिनो यागे नियोग इति नियोज्यविषयघटित एवावगम्यते। नियोज्यश्च फलस्वाम्येव भवति। विषयश्च फलकरणीभूत एव। तथा च भावनावन्नियोगोऽप्यधिकारिविषयाभावे न संभवतीत्यर्थः। नन्वस्तु तदुभयमपीत्याशङ्क्य कारणाभावान्नास्तीत्याह—न विनेति। तमः अविवेकं तदुभयमधिकारो विषयश्च। ननु तमोऽप्यस्तीत्याशङ्क्याह—विदितात्मन इति। विवेकिन इत्यर्थः। विवेकाविवेकयोः परस्परविरुद्धत्वेन विवेकिनो विवेकासम्भवात्तदभावे च फलकामनासम्भावन्नाधिकारसम्भवः। न तावत्करणलक्षणविषयसम्भवः। तथा च नियोगवादेपि कर्मकाण्डस्य भिन्नकालीनत्वं भिन्नाश्रयत्वं चास्तीत्यर्थः ॥ २४६ ॥

तस्मात्कर्मकाण्डस्याविवेकदशायां प्रवृत्तेर्ब्रह्मकाण्डस्य विवेकदशायां प्रवृत्तेर्न तेनास्य विरोध इत्युपसंहरति—

**व्यवहारगोचरमतः सकलं**
**विधिवाक्यमित्यवगतिं मनसि ।**
**उपनीय वेदशिरसो विधिभि-**
**र्न विरोध इत्यपि समाकलय ॥ २४७ ॥**

व्यवहारेति। व्यवहारो विवेकपूर्वकव्यवहारः तद्गोचरं तत्कालप्रवृत्तिकमित्यर्थः। उपनीय निधाय विधिभिरपीति सम्बन्धः। यथा प्रत्यक्षादिभिर्विरोधाभावः। एवं विधिभिरपि वेदशिरसो न विरोध इति समाकलयेत्यर्थः। अथवा—कर्मकाण्डस्य विद्याबाधितविद्वदुपेक्षणीयप्रमेयत्वेन न तत्त्वावेदनप्रामाण्यं किन्तु हिंसानिषेधाज्ञानदशायामिवाभिचारकर्मविधेरविद्यादशायामेव प्रामाण्यमतो न तेन कर्मोपयोगिलोकसिद्धकर्त्रादिभेदानुवादिकर्मकाण्डेन तत्त्वावेदकवेदान्तबाध इति धर्मेपीत्युक्तमेवार्थं प्रपञ्चयति—विधयश्चेत्यादिना। अस्मिन् पक्षे तमो-

वबोधादिशब्दाः प्रसिद्धार्था एव ग्राह्याः । परितृप्तिरानन्दावाप्तिः अपवर्गोऽविद्यानिवृत्तिरिति भेदः ॥ २४७ ॥

एवमद्वैतसमन्वयस्य प्रत्यक्षादिविरोधं परिहृत्य कपिलस्मृत्यादिविरोधपरिहारं च भाष्येणैव सिद्धवत्कृत्याध्यायार्थमुपसंहरति--

**एवं वेदान्तवाक्यैरवगतिपदवीमद्वये नीयमाने**
**प्रत्यक्त्वे समस्तद्वयकृतितमसि क्षीयमाणे च सद्यः ।**
**स्वाराज्यं त्वय्यवाप्ते परमसुखभुजि स्वच्छचैतन्यमात्रे**
**शेषो मानान्तराणामपि दुरवगमस्तत्र दूरे विरोधः ॥२४८॥**

एवमिति । एवमुक्तप्रकारेणाद्वये प्रत्यक्त्वे ब्रह्मात्मैक्ये वेदान्तवाक्यैस्तत्त्वमस्यादिभिरवगतिपदवीन्नीयमाने साक्षात्क्रियमाणे सति सद्यः तदानीमेव समस्तद्वयकृतिसकलप्रपञ्चकारणे तमसि क्षीयमाणे निवृत्ते सति स्वच्छचैतन्यमात्रेऽविद्याविनिर्मुक्तचैतन्यमात्रस्वरूपे त्वयि स्वराज्यमवाप्तेपूर्णानन्दस्वरूपमवाप्तवति सति मानान्तराणां शेषोवशेषः ईषत्सद्भावोपि दुरवगम स्वकारणाविद्यानाशेन नष्टत्वात् तत्र वेदान्तवाक्येषु विरोधो दूरापास्तः । सति धर्मिणि धर्माश्चिन्त्यन्ते इति न्यायात् । तस्माद्व्यावहारिकप्रमाणभूतप्रत्यक्षादिभिस्तत्त्वावेदनवेदान्तविरोधाभावादद्वितीयासङ्गात्मप्रमितिर्निरुपद्रवं सम्भवतीति सिद्धम् ॥ २४८ ॥

इतिश्रीमत्परमहंसपरिव्राजकाचार्यश्रीमज्जगन्नाथाश्रमश्रीचरणचरणपरिचरणप्राप्तविद्यनिखिलविद्वज्जनमनोहरश्रीमन्नृसिंहाश्रमश्रीचरणविरचितायां संक्षेपशारीरकव्याख्यायां तत्त्वबोधनीसमाख्यायामविरोधाख्यो द्वितीयोऽध्यायः समाप्तः ॥

---

# संक्षेपशारीरकम्

श्रीमत्सर्वज्ञमुनिविरचितम्

श्रीमन्नृसिंहाश्रमविरचितया तत्त्वबोधिन्याख्यया

टीकया सहितम्

---

वाराणसेयराजकीयसंस्कृतमहाविद्यालयन्यायशास्त्राध्यापकेन

न्यायव्याकरणाचार्य मीमांसाशिरोमण्युपाधिकेन

श्रीसूर्यनारायणशर्मशुक्लेन संशोधितम्

---

( चतुर्थो भागः )

---

THE

# SAṂKṢEPA ŚĀRĪRAKA

OF SARVAJÑĀTMA MUNI

WITH

# TATTVABODHINĪ

OF NṚSIṂHA ĀŚRAMA

---

EDITED BY

SŪRYA NĀRĀYAṆA ŚUKLA,

NYĀYA VYĀKARAṆĀCHĀRYA,

Professor, Govt. Sanskrit College, Benares.

---

1939

॥ श्रीगणेशायनमः ॥

# सटीके संक्षेपशारीरके

## तृतीयोऽध्यायः ।

—:○०○:—

यदज्ञानात्कर्ता गतितदितराभ्यां परवशो
न कुत्रापि स्वास्थ्यं भजति परिशुद्धो नरहरेः ।
निरस्तद्वैतस्यानवधिसुखचित्सत्यवपुषः
पदं कर्मप्राप्ताशयशुचिरहं नौमि तदिदम् ॥

एवं प्रथमाध्यायोपदर्शिताद्वैतासङ्गब्रह्मात्मसमन्वयः द्वितीयाध्यायेन प्रत्यक्षादिमानान्तरविरोधनिरासमुखेनोपपत्त्या संभावितः सम्प्रति सम्भावितसमन्वयसमुपजातनिरुपसर्गब्रह्मात्मैक्यबुद्धेः फलपर्यन्ततायै अपेक्षितं साधनकलापं बुभुत्सोः शिष्यस्य प्रश्नमवतारयति —

श्रुत्वाऽविरोधमुपपन्नसमन्वयोत्थ-
ब्रह्मात्मतामतिरयं पुनरप्युवाच ।
ब्रह्मात्मताफलशिरस्कमतिं प्रसूते
यत्साधनं तदखिलं प्रतिपित्समानः ॥ १ ॥

श्रुत्वेति । अविरोधं प्रत्यक्षाद्यविरोधमद्वैतसमन्वयस्येति शेषः । उपपन्नसमन्वयोत्थब्रह्मात्मतामतिः उपपन्नो विरोधनिरासेन सम्भाविनो योऽद्वैतसमन्वयः तस्मादुत्थिता ब्रह्मण आत्मत्वेन मतिर्यस्य

स तथोक्तः सम्भाविताद्वैतसमन्वयजन्यब्रह्मात्मतामतिरिति यावत्। अयं शिष्यः पुनरपि समन्वयाविरोधबुद्ध्यनन्तरमपि गुरुमुवाच पृष्टवान्। ननु प्रत्यक्षादिविरोधनिरासेन सम्भाविताद्वैतसमन्वयजन्यब्रह्मात्मतामतेस्तावन्मात्रेण कृतकृत्यत्वात् किमपरं प्रष्टव्यमित्याशङ्क्य न हि संभावनाज्ञानात् कृतकृत्यता तस्य तर्करूपत्वेनाप्रमाणतया अविद्यानिवर्त्तकत्वायोगात् किन्तु ब्रह्मात्मतासाक्षात्प्रमित्या सा च न सम्भावितसमन्वयमात्रादित्यभिप्रेत्याह—

ब्रह्मात्मतेति। ब्रह्मरूपेणावस्थानं ब्रह्मात्मता तदेव फलं शिरस्युपर्यव्यवहितानन्तरक्षणे यस्याः सा ब्रह्मात्मता फलशिरस्का तादृश्या मतेस्तत्त्वसाक्षात्कारस्य प्रसूतिरुत्पत्तिः तस्या इत्यर्थः। स्वोत्पत्त्यव्यवहितानन्तरक्षणभाव्यनर्थनिवृत्त्यानन्दावाप्तिफलवत्तत्त्वसाक्षात्कारजननस्येत्यर्थः। प्रतिपित्समानः जिज्ञासमानः सन् पुनरप्युवाचेति सम्बन्धः॥ १॥

शिष्यः स्वस्य गुरूक्तार्थानवधाने गुरोरण्यरुदितत्वशङ्का स्यादिति तन्निवृत्त्यर्थं गुरूक्तार्थानुवादपूर्वकं प्रष्टव्यमेवार्थमाह—

**ऐदंपर्यमखण्डवस्तुविषयं वेदान्तवाक्यस्य य-**
**त्पूर्वं वर्णितमस्य भूदपहतिर्मा नाम मानान्तरैः।**
**किं त्वस्याः परिनिष्ठितस्वविषयध्वान्तच्छिदो जन्मने**
**विद्याया वचनादृते किमपरं कृत्यं भवेत्साधनम्॥ २॥**

ऐदंपर्यमिति। ऐदंपर्यं तात्पर्यं समन्वय इति यावत्। पूर्वं प्रथमाध्यायेऽस्य ऐदंपर्यस्यापहतिर्बाधः वेदान्तवाक्यस्य यदखण्डवस्तुविषयम् ऐदंपर्यं वर्णितम् अस्य मानान्तरैरपहतिमाभून्नामेत्यध्यायद्वयार्थानुवादः। भूदिति माङ्योगादडागमाभावः। किं तर्हि प्रष्टव्यमित्याकाङ्क्षापूर्वकमाह—किं त्वस्या इति। अस्या विद्याया इति

सम्बन्धः। विद्यां विशिनष्टि—परिनिष्ठितेति। परिनिष्ठितः सिद्धस्वभावः स्वविषय एव विषयो यस्य ध्वान्तस्य तच्छिनत्तीति परिनिष्ठितस्वविषयध्वान्तच्छित्तस्याः सिद्धब्रह्मविषयाविद्यानिवर्तिकाया इति यावत्। स्वविषयेति च सामानविषययोरेव विरोध इति द्योतयितुं वचनात्तत्त्वमस्यादिवाक्याद्दृते किमपरं साधनं कृत्यं सम्पाद्यं भवेत्तद्ब्रूहीत्यर्थः। एतदुक्तं भवति—यः प्रथमाध्याये वेदान्तानामखण्डैकरसे ब्रह्मणि समन्वय उपवर्णितः तस्य मदुद्भावितप्रत्यक्षादिबाधो भवद्भिरुपवर्णितन्यायेन मा भून्नाम तथापि ममाविद्यानिवर्त्तनक्षमतत्त्वसाक्षात्कारो नोपजायते। ततोऽविद्यानिवृतिफलकब्रह्मैकाकारबुद्धिजनने तत्त्वमादिवाक्यादतिरिक्तमपरं किञ्चित्साधनमस्तीत्येव वक्तव्यम्। अन्यथा भवद्भिर्विद्यासाधनत्वेन वर्णितसमन्वयो मृषैव स्यात् फलव्यभिचारिणः सामग्रीत्वाभावात्तच्च साधनं किमिति न ज्ञायते अतस्तदिदमिति विस्पष्टं ब्रूहीति॥ २॥

एवं शिष्येण पृष्ट आचार्यः साधनजातं तृतीयाध्यायपादचतुष्टयप्रतिपाद्यं संगृह्योत्तरमाह—

**वैराग्यस्य दृढत्वमेकमपरं तत्त्वंपदार्थज्ञता**
**वाक्ये निर्गुणनिष्ठिते च सकले न्यायादियत्नामतिः।**
**सम्यग्ज्ञानसमीपदूरभवयोर्हेत्वोर्विवेकज्ञता**
**वाक्यार्थप्रतिपत्तिसाधनमिदं यत्नेन कृत्यं यतेः॥ ३॥**

वैराग्यस्येति। हैरण्यगर्भपर्यन्तसकलवैषयिकभोगतृणीकारो वैराग्यं तस्य च दृढत्वं पुनस्तादृशवैषयिकभोगेच्छानन्तरितत्वम्। एतद्वाक्यार्थज्ञाने एकं साधनं विषयभोगेच्छाक्षिप्तचित्तस्याखण्डवाक्यार्थसाक्षात्कारोदयासंभवात्। यद्यपि वैराग्यं समन्वयविचारात्प्रागेव सिद्धं तस्याप्यधिकारिविशेषणत्वेनाथशब्दोपात्तत्वात् तथापि तृतीयाध्यायप्रथमपादप्रतिपाद्यन्यायप्रतिसन्धानं

षिना तद् दृढं न भवति तदभावे च न विद्या सिद्ध्यतीति तस्यापि प्रश्नोत्तरत्वोपपत्तिः। अत एव दृढत्वमित्युक्तम्। द्वितीयपादप्रतिपाद्यं साधनमाह—अपरं तत्त्वंपदार्थज्ञतेति। तत्त्वंपदलक्ष्यार्थविषयनिर्विचिकित्सपरिज्ञानमप्यपरं वाक्यार्थप्रतिपत्तिसाधनं तादृशपदार्थज्ञानं विना निर्विचिकित्सवाक्यार्थज्ञानानुपपत्तेरित्यर्थः। तृतीयपादप्रतिपाद्यं साधनमाह-वाक्य इति। निर्गुणनिष्ठिते—निर्गुणब्रह्मस्वरूपप्रतिपादके "यो वै भूमा तत्सुखं सत्यं ज्ञानमनन्तं ब्रह्मे"त्यादौ सकले सर्वशाखागते वाक्ये न्यायात्सर्वशाखाप्रत्ययमित्यादिन्यायादियत्तामतिः एतावदिति परिच्छेदमतिः सर्वशाखास्थनिर्गुणवाक्यप्रतिपाद्यनित्यशुद्धसच्चिदानन्दादिरूपेणैव ब्रह्म सर्वैर्ज्ञातव्यमितिमतिरित्यर्थः। इयं च वाक्यार्थप्रतिपत्तावपरं साधनमन्यथा तत्तच्छाखिना तत्तच्छाखास्थभूमादिरूपेणैव वा ब्रह्म ज्ञेयम्। किंवा शाखाऽन्यगतधर्मवत्त्वेनापीति विचिकित्सायां निर्विचिकित्सवाक्यार्थज्ञानानुपपत्तेरित्यर्थः। चतुर्थपादप्रतिपाद्यं साधनमाह—सम्यग्ज्ञानेति। सम्यग्ज्ञानस्य समीपे दूरे च भवौ विद्यमानौ तथोक्तौ तयोरितिविग्रहः। सम्यग्ज्ञानस्यान्तरङ्गवहिरङ्गभूतयोरित्यर्थः। हेत्वोः यज्ञदानादिशान्त्याद्योः विवेकज्ञता यज्ञदानतपोनशनादिकं वाक्यार्थज्ञानस्य वहिरङ्गसाधनं विवेकवैराग्यशान्त्यादिकमन्तरङ्गसाधनमिति विविच्य ज्ञानमपि वाक्यार्थप्रतिपत्तावपरं साधनम्। ननु शान्त्यादिरेव विद्यायामङ्गं न तस्य विवेकज्ञानमपीति चेन्न—शान्त्यादेरन्तरङ्गत्वपरिज्ञानं विना यावद्विद्योदयमनुष्ठानानुपपत्तेः। तद्विना च फलपर्यवसायिविद्यासंभवात्। यज्ञादेश्च वहिरङ्गत्वपरिज्ञानं विना श्रवणाधिकारिणा त्यागानुपपत्तेः। तत्त्यागं विना च विक्षिप्तचित्तस्य तस्य विद्यासंभवात् तस्मादुभयविवेकज्ञानमपि साधनमेव तदिदं साधनचतुष्टयं नियमेन संपाद्यमन्यथाऽधपतः स्यादित्यभिप्रायेणाह— इदं यत्नेन कृत्यमिति। कस्यैतत्कृत्यं तत्राह—यतेरिति।

विवेकादिसाधनचतुष्टयसम्पन्नस्य परमहंसपरिव्राजकस्येत्यर्थः । एतच्चास्यैव विद्यायामधिकार इति द्योतनार्थम् ॥ ३ ॥

ननु दृढं वैराग्यं कथं सम्पाद्यं कथं वा तस्य विद्यासाधनत्वं न हि साक्षात्तत्त्वमादिवाक्यवत्तस्य तत्साधनत्वमित्याशङ्क्याह—

**संसारदोषमवधारयतो यथाव-**
**द्वैराग्यमुद्भवति चेतसि निष्प्रकम्पम् ।**
**वैराग्यजन्मनि दृढे च सति प्रवृत्ति-**
**स्तत्त्वंपदार्थपरिशोधनकर्मणि स्यात् ॥ ४ ॥**

संसारदोषमिति । संसारस्य पुत्तिकादिहिरण्यगर्भान्तभोक्तृभोगभोग्यादिनवविधप्रपञ्चस्य दोषमाध्यात्मिकादितापत्रयानलदह्यमानस्वरूपमवधारयतः निश्चिन्वतः यथावत् सम्यगवधारयत इति सम्बन्धः । निष्प्रकम्पं दृढतरमक्षय्यादिवाक्यप्रामाण्यश्रद्धाजाड्यं विहाय दोषदुष्टत्वेन यथावत्संसारेऽवधृते दृढवैराग्यं भवतीत्यर्थः । विद्यां प्रति तस्य परम्परया साधनत्वमित्याह—वैराग्येति । दृढतरवैराग्योत्पत्तौ तत्त्वंपदार्थविवेके निष्प्रकम्पप्रवृत्तिः स्यात् पदार्थज्ञानाच्च वाक्यार्थज्ञानमिति परम्परया तत्साधनत्वं तस्येत्यर्थः ॥ ४ ॥

ननु संसारे पुत्रादिसम्भूतविचित्रानेकसुखवति कुतो दोषबुद्धिर्भवेत् संसारयाथार्थ्यज्ञानादिति चेत् तद्वा कुतो भवतीत्याकाङ्क्षायां वेदप्रदर्शितोत्क्रान्तिगत्यागतिगर्भवासादिदुःखानुसंधानपूर्वकविचारादित्याह—

**संसाररूपमवगन्तु विविच्यमानं**
**यस्मिञ्श्रुते भवति तद्विषया जुगुप्सा ।**
**वेदः प्रकाशयति संसरणं यथाऽस्य**
**जीवस्य जन्ममरणे व्रजतः क्रमेण ॥**

संसाररूपमिति। संसारस्वरूपं विविच्यमानं विचार्यमाणं कथं विचार्यमाणमित्यत्राह—वेद इति। "पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति स उल्वावृतो गर्भः तं प्रेतं दिष्टं तेऽर्चिषमभिसंभवन्तिः तं देवा भक्षयन्ति तस्मिन्यावत्संपातमुषित्वाथैतमेवाध्वानं पुनर्निवर्त्तन्ते अतो वै खलु दुर्निष्प्रततरं कपूयां योनिमापद्येरन् श्वयोनिं वा" जायस्व म्रियस्व तस्माज्जुगुप्सेत्येवमादिः क्रमेण जन्ममरणे व्रजतोऽस्य जीवस्य यथा येन प्रकारेण जननात्पूर्वं गर्भवासाद्यनेकविधदुःखोपप्लुतत्वेन जननानन्तरं स्थितिकाले आध्यामिकादितापत्रयकालानलकवलितत्वेन मरणकाले च हिक्कोर्ध्वश्वासादिसमुजातानेकविधदुःखनिकरनिविष्टत्वेन मरणानन्तरं च क्षुद्रसुखभोगार्थगमनागमनप्रयुक्तदेवभक्षणसूकरादिकुत्सितयोनिप्रवेशजनितदुःखनिविष्टत्वेन च संसरणं संसारं प्रकाशयति। तथा विविच्यमानं संसारमवगच्छेति सम्बन्धः। संसारयाथात्म्यज्ञानेन किं फलिष्यति तत्राह—यस्मिञ्श्रुत इति। यस्मिन्संसारे श्रुते उक्तश्रुत्यावगते तद्विषया जुगुप्सा वैराग्यं तत्संसाररूपमिति सम्बन्धः। संसाररूपश्रवणमात्रेणापि ततो जुगुप्सा भवति किमु वक्तव्यं विविच्य ज्ञान इत्यभिप्रायेणोक्तं श्रुत इति। न च पुत्रादिसंभूतसुखादिमत्त्वात् तस्मिन्दोषवुद्ध्यनुपपत्तिः। न हि पुत्रादेः सुखादिहेतुत्वं प्रत्युतानर्थकरत्वमेव। तदुक्तम् "अलभ्यमानस्तनयः पितरौ क्लेशयेच्चिरमि" त्यारभ्य "पित्रोर्दुःखस्य नास्त्यन्तो यदि चेद् म्रियते तदे" त्यन्तेन। एवमेव भार्यादेरपि तत्र तत्र "नारीवलिशपिण्डिका" "नार्यो नरविहङ्गानाम्" "अर्थनामर्जने क्लेश" इत्यादावनर्थकरत्वमुक्तम्। कथं तर्हि दुःखसाधनेपि पुत्रादौ लौकिकानां सुखहेतुत्वप्रतीतिरिचेत् सूकरस्येव विष्ठायामविवेकादिति गृहाण। तस्मात्संसारस्य स्वतो दोषवत्त्वादविवेकादेव सुखसाधनत्वज्ञानादि विविच्य तत्स्वरूपज्ञाने तज्जिहासा भवत्येवेति भावः ॥ ५ ॥

नन्वानन्दादिवदात्मनः स्वभावभूतस्य संसारस्य कथं दोषदर्श-

नेनापि जिहासा भवेत् स्वाभाविकस्योपायशतेनापि हानायोगादित्याशङ्क्य स्वाभाविकत्वमसिद्धमित्याह—

शुद्धः परो न खलु वाङ्मनसव्यतीतः
संसारदुःखमतिदुःसहमश्नुवीत।
स्वाविद्यया हि पर एव स जीवभाव-
मागत्य संसरति लिङ्गसमागमने ॥ ६ ॥

शुद्ध इति। शुद्धः रागादिदोषरहितः परः परमात्माऽतिदुःसहं संसारदुःखं स्वभावतो नाश्नुवीतेत्यर्थः। कामो हि कामात् क्वचिदपि स्वास्थ्यमलभमानस्तत्र तत्र दुःसहं संसारदुःखमनुभवन्दृश्यते। श्रूयते च "कामान्यः कामयते मन्यमानः स कामभिर्जायते तत्र तत्रे"त्यात्मा च रागादिहीनः कथं तस्य स्वाभाविकोऽसंसारो भवेदित्यर्थः। नन्वहं कामीत्यात्मनः कामवत्त्वस्य मनसानुभूयमानत्वादिति नु कामयमान इति श्रुत्या च तस्य प्रतिपादनात्कथं रागादिमत्स्वाभाव इत्याशङ्क्यात्मनो मनोवागगोचरत्वेन ताभ्यां कामवत्त्वप्रतिपादनासम्भवात् तयोश्चान्तःकरणविषयत्वात् मैवमित्यभिप्रेत्याह—वाङ्मनसव्यतीत इति। वाङ्मनसागोचर इत्यर्थः। नन्वात्मनो रागाद्यभावेन संसाराभावे संसारी कोपि न स्यात्। न ह्यचेतनस्य संसारो युज्यते। तथा च संसारोच्छेदिनी विद्यापि व्यर्था स्यादित्याशङ्क्यात्मनः स्वाभाविकसंसाराभावेपि स्वाविद्यया काल्पनिकः संसारोऽस्त्येवेत्याह—स्वाविद्ययेति। सः श्रुतिषु नित्यशुद्धमुक्तत्वेन प्रसिद्धः परः परमात्मैव स्वाविद्यया संसरति। उत्क्रान्तिगत्यागतिप्रयुक्तनानाविधदुःखमनुभवति। ननु परस्य विभुत्वाद्विभुनः स्वतस्तावद्गमनादिकं न सम्भवति अविद्ययापि तन्न सम्भवति अविद्याया अपि ब्रह्माण्डव्यापित्वात्। ननु जीवस्यापि स्वतो गमनादिकं न सम्भवतीति चेन्न तस्या-

गुतया स्वतः एव गमनाद्युपपत्तेरित्याशङ्क्याह--लिङ्गसमागमेनेति । लिङ्गशरीरसम्बन्धेन स्वाविद्यया लिङ्गसमागमेन जीवभावं परिच्छिन्नत्वमागत्य प्राप्य संसरतीति सम्बन्धः। तथा चात्मनः स्वतोऽविद्यया वा गमनाद्यसम्भवेपि परिच्छिन्नलिङ्गशरीरसम्बन्धात् गमनाद्युपपत्तेः । तत्सम्बन्धस्य चाविद्याधीनत्वादाविद्यक एव संसार इत्यर्थः। यत्तूक्तं जीवस्याणुत्वात् स्वतोगमनमिति तदसत् तस्याणुत्वे प्रत्यक्षत्वानुपपत्तेः। सर्वदेहव्यापि सुखानुभवाभावप्रसङ्गाच्च। ननु ज्ञानसुखादेः शरीरव्याप्यवृत्तित्वात्तदुपपत्तिरिति चेन्न। तस्य गुणत्वेनाश्रयादन्यत्रोपलम्भानुपपत्तेः। ननु प्रदीपप्रभायां तथा दृष्टमिति चेन्न। प्रभायाः रूपवत्त्वस्पर्शवत्त्वक्रियावत्त्वादिना द्रव्यत्वानुमानात्। ननु रूपादयस्तदाश्रयतेजोनिष्ठा एवानुभूयन्त इति चेन्न। प्रभा दहतीतिप्रतीतेः। तत्र द्रव्यान्तरकल्पनायां प्रभायामाश्रयातिरेकेण स्थितिकल्पनायोगाच्च । ननु तप्ततैलकटाहनिक्षिप्तहरिचन्दनबिन्दोरेकप्रदेशवृत्तित्वेपि तत्समवेतशीतस्पर्शो युगपत्सर्वत्रोपलभ्यत इति चेन्न। तत्र ह्यतिशीतचन्दनद्रव्यसंयोगेन तैलसंयुक्ततेजोऽवयविविशेषे नष्टे स्वाभाविकतैलस्पर्श एवाभिभवाभावादनुभूयते न चन्दनस्पर्शः तैलं शीतमासीदितिप्रतीतेः। ननु स्वाज्ञानादिकमपि द्रव्यमेवेति चेत् तत्किं विभु किं वा परिच्छिन्नम्। नाद्यः। आत्मनस्तद्धर्मकत्वानुपपत्तेः विभुद्रव्यस्यानाश्रितत्वात्। तत्संयोगित्वमात्रेण तद्धर्मकत्वे घटादेरपि तद्धर्मकत्वप्रसङ्गः। किं च तस्य विभुत्वे युगपत्सर्वविषयप्रकाशप्रसङ्गः प्रकाशसम्बन्धित्वात्। ननु प्रकाशवद्द्रव्यसम्बन्धिन एव प्रकाश्यत्वम्। आत्मा च प्रकाशवत् द्रव्यं न युगपत् सर्वेण सम्बध्नात्यणुत्वादिति चेत्तर्हि घटोऽपि न प्रकाशेत तत्सम्बन्धाभावात्। द्वितीये तत्किं मध्यमपरिमाणमुताणुपरिमाणम्। नाद्यः। तदुपादानानिरूपणात् आत्मा तदुपादानमिति चेन्न। अणुद्रव्यस्यैकस्य मध्यमपरिमाणद्रव्योपादानत्वानुपपत्तेः। कार्यद्रव्यस्योपादानमात्रवृत्तित्वेनान्यत्रानुपलम्भ-

प्रसङ्गाच्च । नन्वात्मातिरिक्तमुपादानं कल्प्यत इति चेन्न। तथात्वे तस्यात्मधर्मत्वानुपपत्तेः। न द्वितीयः । अन्यत्रानुपलम्भप्रसङ्गात् । तस्मादात्मनोऽणुत्वमनुपपन्नम् । श्रुतिरपि "स वा एष महानज आत्मा" इति जीवस्य स्वतो महत्त्वमेव दर्शयति । न चाणुत्वश्रुतिविरोधः-तस्या दुर्दर्शत्वाभिप्रायत्वात् । दर्शयति च श्रुतिरणुपरिमाणमात्मन औपाधिकमिति "बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोपि दृष्ट" इत्यवरो जीवः आत्मगुणेनात्मधर्मेण महानपि बुद्धिगुणेन बुद्धिपरिमाणेनाराग्रमात्रो दृष्ट इति श्रुत्यर्थः । सूत्रकारोऽपि "तद्गुणसारत्वादि"त्यादिनाणुत्वादिकमात्मन औपाधिकमेव दर्शयति तस्मल्लिङ्गसम्बन्धादेवात्मनो गमनादिसंसारो न स्वाभाविकः अतो दोषदर्शनेन तज्जिहासा भवतीति ॥ ६ ॥

ननु लिङ्गसम्बन्धिनः संसारित्वे लिङ्गस्यापि मुक्तिभाक्त्वं स्यात् संसारिण एव मुक्तिभाक्त्वात् अतः केवलस्यैवात्मनः संसारो वक्तव्यः तथा च स्वाभाविक एव स्यादित्याशङ्क्य लिङ्गस्यात्मनः संसारित्वे द्वारमात्रत्वन्न तु संसारिवत्तस्यानुप्रवेशः अतो नोक्तदोष इत्यभिप्रेत्याह—

ब्रह्मैव संसरति मुच्यत एतदेव
दौवारिकं भवति संसरणं तु तस्य ।
मुक्तिः पुनर्भवति चिद्वपुषैव तस्य
स्वाज्ञानतः स्वमहिमप्रतिबोधतश्च ॥ ७ ॥

ब्रह्मैवेति । एतद्ब्रह्मैव नित्यशुद्धबुद्धमुक्तं ब्रह्मैव संसरति तदेव मुच्यते। परन्तु तस्य ब्रह्मणः संसरणं दौवारिकं लिङ्गशरीरद्वारा यातं न तु स्वाभाविकं स्फटिकस्येव लौहित्यमित्यर्थः । तर्हि संसारवन्मुक्तिरपि किं दौवारिकी नेत्याह—मुक्तिरिति । चिद्वपुषैव चिदानन्दै-

करसस्वरूपेणैव तस्य ब्रह्मणः । नन्वसङ्गे नित्यमुक्ते ब्रह्मणि कथं लिङ्गसम्बन्धद्वारापि संसारः स्यात् । संसारस्य च दौवारिकत्वे मुक्तिरपि तादृश्येव किं न स्यादित्याशङ्क्य लिङ्गसम्बन्धस्याविद्यकत्वेऽविद्यायाश्च वस्तुस्वभावानपेक्षत्वात् । खरतरदिनकरकिरणनिकर-सम्बन्धसमुपजातसंतापेन स्फुटतरस्फोटोत्पत्तिसमर्थाया अपि भूमेर विद्यया पृथुतरवहललोलकल्लोलमालावलीकलितसलिलावलीभिरार्द्रितत्वभानात् न लिङ्गद्वारा संसारानुपपत्तिः । नापि मुक्तेः स्वाभाविकत्वानुपपत्तिः । औपाधिकसंसारनिवृत्तिस्वरूपाया मुक्तेः स्वाभाविकत्वनियमात् संसारस्याविद्यकत्वेऽविद्यानिवृत्तिमात्रस्यैवापेक्ष्यमाणत्वात् । तन्निवृत्तेश्च विद्ययैव संभवाद्विद्यायाश्च वस्तुस्वरूपानुविधायित्वादित्यभिप्रेत्याह—स्वाज्ञानत इति । स्वाज्ञानतो दौवारिकं संसरणं स्वमहिमप्रतिबोधतश्च चिद्वपुषा मुक्तिरिति सम्बन्धः ॥ ७ ॥

नन्वेवं सति यद्वस्तुस्वरूपानुरोधि न भवति तद्यत् किञ्चिद् द्वारं विना स्वतो वस्तुनि न संभवति यच्च वस्तुस्वरूपानुरोधि तन्न वस्तुस्वरूपातिरिक्तं द्वारमपेक्षत इत्युक्तं भवति तथा चाज्ञानमपि संसारवद्ब्रह्मणि द्वारं विना न स्यात् वस्त्वनुरोधित्वाभावात् ब्रह्मणि साक्षात्कारस्त्वन्तःकरणसम्बन्धं विनापि स्यात् । मुक्तिवद्वस्त्वनुरोधित्वादित्याशङ्क्याह—

स्वाज्ञानान्वयिनी चिदेव भवति स्वाज्ञानमस्याः पुन-
र्नास्त्यन्तःकरणोपरागशबलीभावं विना युक्तितः ।
कूटस्थे न तमस्विता न घटते नो विक्रिया तत्र न-
स्तस्मादेष विशेषः ईषदुचितः स्वीकर्त्तुमेते प्रति ॥ ८ ॥

स्वाज्ञानान्वयिनीति । स्वाज्ञानसम्बन्धिनी चिदेव केवलचैतन्यमेव स्वज्ञानं स्वविषयज्ञानं यस्याः चितः अन्तःकरणोपरागशबली-

भावमन्तःकरणोपरक्तत्वलक्षणशबलत्वमज्ञानाश्रयत्वं हि चैतन्यस्य साक्षादेव नान्तःकरणाद्यवच्छेदेन स्वकार्यवृत्तित्वानुपपत्तेः। स्वविषयज्ञानाश्रयत्वं तु नान्तः करणाद्यवच्छेदं विना संभवति। निरवयवस्य तस्य स्वतोऽज्ञानपरिणामानुपपत्तेरिति युक्तिवशादेष्टव्यमित्यर्थः। ननु कूटस्थात्मनोप्यविद्याश्रयत्वमनुपपन्नं ज्ञानस्य च जडान्तःकरणायत्तत्वमप्यनुपपन्नमित्याशङ्क्याह—कूटस्थ इति। कूटस्थे आत्मनि तमस्विता अज्ञानाश्रयत्वन्न घटत इति न किन्तु घटत एव। कल्पितस्यात्मकौटस्थ्याव्याहन्तृत्वादित्यर्थः। त्विक्रिया अखण्डाकारवृत्तिलक्षणा तत्र कूटस्थे ब्रह्मणि। न च ज्ञानस्य जडान्तःकरणायत्तत्वानुपपत्तिः वृत्तिरूपज्ञानस्यापि जडत्वादिति भावः। यतो वस्तुस्वरूपानधीनतदधीनयोरप्यज्ञानज्ञानयोः कूटस्थाश्रयत्वे शबलाश्रयत्वे च कश्चिद्विशेषो वर्णितः। तस्मात्तयोः संसारमुक्तिभ्यां साम्यं नाशङ्कनीयमित्याह—तस्मादिति। ईषद्विशेषः—कश्चिद्विशेषः। एते—अज्ञानज्ञाने प्रति तस्माच्चिन्मात्रस्यैवाविद्यकोपाधिसम्बन्धात् संसारः स्वतो मुक्तिरिति भावः॥ ८॥

ननु कोसावुपाधिः यद्द्वाराऽसङ्गस्याप्यात्मनः संसार इति तत्राह—

पुर्यष्टकं भवति तस्य परस्य मोहा-
त्तेनान्वितस्य नु नभोमलवद्व्यलीकम्।
दुःखं त्रिधा भवति संसरणाभिधानं
नान्यः परादधिकरूपभृदस्ति जीवः॥ ९॥

पुर्यष्टकमिति। यद्यपि लिङ्गशरीरमुपाधिरित्युक्तमेव तथापि न तन्मात्रमुपाधिरिति संसारनिमित्तत्वेनोपाध्यन्तरवर्णनमत्र क्रियत

इति न विरोधः। ज्ञानकर्मेन्द्रियप्राणभूतपञ्चकान्तः करणचतुष्टयकाम-कर्माविद्यालक्षणवक्ष्यमाणपुर्यष्टकं पुर्यष्टकशब्देनोच्यते। तेन पुर्यष्टकेनान्वितस्यावच्छिन्नस्य नभोमलवदाकाशकात्स्न्र्यवद्व्यलीकं मिथ्याभूतं संसरणाभिधानं संसाराख्यं त्रिधा आध्यात्मिकाधिभौतिकाधिदैविकभेदेन त्रिप्रकारं दुःखं भवति। परमात्मन एव स्वाविद्याविलासिताहंकारप्रमुखप्रपञ्चेषु क्वचित्तादात्म्याभिमानात्क्वचित्स्वाभिभवाभिमानात् मिथ्याभूतादाध्यात्मिकादिभेदेन त्रिप्रकारं संसाराख्यं दुःखं भवति। न ततो भिन्नस्य जीवस्य भेदे प्रमाणाभावादित्यभिप्रेत्याह--नान्य इति। परात्परमात्मनः सकाशादन्योधिकरूपभृत् वस्तुतो रूपान्तर भृत् जीवो नास्तीत्यर्थः ॥ ६ ॥

ननु किमिति जीवस्य परस्माद् भेदाभावः। तस्य श्रुतानुपपत्तिसिद्धत्वात्तथा हि "यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः। तथाक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापि यन्ती" त्यग्निविस्फुलिङ्गदृष्टान्तेन जीवस्य परांशत्वं श्रूयते। "ममैवांशो जीवलोक" इति स्मर्यते च। नचांशांशिनोरभेदः संभवति। तथात्वे त्वंशांशिभावस्यैवानुपपत्तेः। तथा सन्मूलाः सोम्येमाः सर्वाः प्रजा इति जीवस्य परविकारत्वं श्रूयते। न च तदपि तयोर्भेदं विना सम्भवति। द्वा सुपर्णेति श्रुत्या साक्षादेव तयोरत्यन्तं भेदः श्रूयते। अतः सर्वथाप्यस्त्येव भेद इत्याशङ्क्य किं जीवपरयोरंशांशिभावमात्रं विकारविकारिभावमात्रं च श्रुत्यादिनापि प्रतिपिपादयिषितमुत स मुख्य एव। नाद्यः। अङ्गीकृतेः बिम्बप्रतिबिम्बभावेपि तत्सत्त्वात्। न द्वितीयः। निरवयवस्य कूटस्थस्य परस्य वास्तवांशित्वविकारित्वानुपपत्तेः। तथात्वे वा परस्य मृदादिवदनित्यत्वापातात्। जीवस्य च सर्वगतस्य वास्तवांशत्वानुपपत्तेः। वास्तवविकारत्वे च कार्यतया नाशप्रसङ्गेन कृतहानाकृताभ्यागमप्रसङ्गादित्यभिप्रेत्यांशपक्षं विकारपक्षं च दूषयति--

नांशः परस्य न च तस्य विकार एष-
नात्यन्तमेव च विभिन्नवपुः परस्मात् ।
जीवोऽयमभ्युपगतः कुत एतदेवं
ब्रह्मात्मतावचनजातविरोधहेतोः ॥ १० ॥

नांश इति । एष जीवः जीवपरयोरत्यन्तभेद इति मतं दूषयति—नात्यन्तमिति । विभिन्नवपुर्भिन्नस्वरूपः श्रुतिसिद्धो भेदः कथं निराक्रियत इति तत्र हेतुं पृच्छति—कुत एतदिति । जीवः परस्मादत्यन्तभिन्नवपुर्नाभ्युपगत इत्येतत्कुतो हेतोः न कुतोपीत्यर्थः । उत्तरमाह—एवं ब्रह्मात्मतेति । एवमेव सति तयोर्भेदे सति ब्रह्मात्मतावचनजातस्य ब्रह्मात्मैक्यप्रतिपादकतत्त्वमादिवाक्यजातस्य विरोधः स्यात्तस्मात्तयोरभेद एव वक्तव्यः । श्रुतिस्तु लोकसिद्धभेदमनुवदत्येव परं न तु तत्प्रतिपादयति अपुरुषार्थत्वादनर्थकत्वाच्चेत्यर्थः । अंशांशित्वादिपक्षेप्ययं विरोधस्तुल्यः ॥ १० ॥

किंचातत्परप्रवेशादिश्रुत्यविरोधेन जीवपरयोरंशांशित्वाद्यावेदकश्रुतेः बिम्बप्रतिबिम्बभावेनाद्वैतपरत्वोपपत्तौ न तयोर्वास्तवांशांशित्वादिसिद्धिरित्यभिप्रेत्याह—

अपि च विश्वमनुप्रविवेश तत्
परममेव पदं परमात्मनः ।
इति वदत्सु सुहृत्स्विव तत्पर-
श्रुतिवचःसु कथं स ततोऽधिकः ॥ ११ ॥

अपि चेति । तद्यन्स्वाविद्यया विश्वं ससर्ज तत्परमात्मनः परमं पदं स्वरूपमेव विश्वमन्वन्तः प्रविवेश । अनुप्रवेशश्च सूर्यबिम्बस्येव जले

प्रतिबिम्बभावेनैव न तु मूषिकादेरिव विलादावात्मनः सर्वगतत्वादिति। एवं वदत्सु प्रतिपादयत्सु सुहृत्स्विव सुहृत्सादृश्यं चात्रातिशयितहितबोधित्वेनातिशयितहितबोधिष्विवत्यर्थः। तत्परश्रुतिवचःसु तात्पर्येणाभेदं प्रतिपादयत्सु श्रुतिवचःसु "स एष इह प्रविष्टः" "अनेन जीवेनात्मनानुप्रविश्ये"त्यादिषु सत्सु स जीवः कथं ततः परस्मादधिकः अन्यो भवेत् न कथमपि भेदे जीवरूपेणात्मनेत्यभेदश्रुतिविरोधादित्यर्थः ॥ ११ ॥

एवं श्रुतिपर्यालोचनया न वस्तुतो जीवपरयोर्भेद इत्युक्त्वानुमानेनापि तत्साधयितुं स्वप्रकाशब्रह्मस्वरूपव्यतिरिक्तस्य पराधीनप्रकाशत्वं कल्पितत्वं च साधयति—

**प्रच्यावि वस्तु यदिहास्ति निजस्वरूपा-**
**दप्रच्युतैकरससंविदधीनमस्य ।**
**प्रच्यावितास्फुरणमित्यवगत्य तत्र**
**तत्कल्पितं सकलमाकलयानुमानात् ॥ १२ ॥**

प्रच्यावीति । प्रच्योतुं ब्रह्मस्वरूपाद्बहिर्भवितुं शीलमस्येति प्रच्यावि ब्रह्मस्वरूपातिरिक्तमिति यावत् । निजस्वरूपाद् ब्रह्मस्वरूपादप्रच्युतैकरससंविदधीनमप्रच्युता अवहिर्भूतैकरसैकरूपा या संवित् चैतन्यं तदधीनमस्य प्रच्याविवस्तुनः स्फुरणं प्रच्याविजीवं परस्मात्पृथक्कुर्वन् त्वमिति शेषः । तत्र स्फुरणरूपे ब्रह्मणि तद्ब्रह्मस्वरूपप्रकाशाधीन प्रकाशं सकलमनुमानात्परिकल्पितमाकलय यद्ब्रह्मस्वरूपातिरिक्तवस्तु तन्निजस्वरूपाद्बहिर्भूतं ब्रह्मस्वरूपप्रकाशाधीनप्रकाशं यथा घटादीति ब्रह्मस्वरूपातिरिक्तस्य तत्स्वरूपप्रकाशाधीनप्रकाशत्वलक्षणं दृश्यत्वमवगम्य तदनन्तरं यद्दृश्यं तत्कल्पितं यथा शुक्तिरूप्यमिति

तस्य ब्रह्मस्वरूपातिरिक्तवस्तुनः ब्रह्मणि कल्पितत्वं ब्रह्मस्वरूपाज्जीवं पृथक्कुर्वन् त्वमवधारयेत्यर्थः। तथा च जीवस्य ब्रह्मस्वरूपातिरिक्तत्वे तद्दृश्यत्वं वक्तव्यम्। तद्दृश्यत्वे च तत्कल्पितत्वं वक्तव्यं कल्पनां विना दृग्दृश्ययोः सम्बन्धानिरूपणात्। तथा च वक्ष्यति। तथा जीवस्यानात्मत्वमसंसारित्वं च स्यात्। तस्माज्जीवस्य संसारित्वादिकं वदता तस्यावश्यं स्वप्रकाशत्वमेवाङ्गीकर्त्तव्यमिति। परस्माद्वास्तवभेदो वक्तुं न शक्यः। तथा चानुमानं जीवो न परस्माद्भिद्यते अनन्याधीनप्रकाशत्वाद् ब्रह्मवद्व्यतिरेकेण घटवच्चेति। तथा च ब्रह्मण एव संसारित्वाज्ञानित्वादिकमिति भावः॥ १२॥

ननु यस्मिञ्जीवे संसारित्वमज्ञत्वं वानुभूयते न तत्र तत् किन्त्वन्यत्र ब्रह्मणीत्येतदनुभवविरुद्धं ब्रह्मणः संसारित्वाद्यननुभवादिति चेत् किं चैतन्याकारेण ब्रह्मणोऽज्ञानाश्रयत्वं संसारित्वं चानुभवविरुद्धं किंवाद्वितीयत्वाकारेण। नाद्यः। अज्ञानसंसारयोश्चैतन्याश्रयत्वेनैवानुभवात्। न द्वितीयः। तस्यास्माभिरप्यनङ्गीकारादित्याह—

चैतन्यवस्तुविषयाश्रय एव मोहो
नाद्वैतवस्तुविषयाश्रयकोऽप्रतीतेः।
बुध्यादिवेष्टितचितो न तमस्त्विलीति,
ब्रह्माश्रयत्वमुदितं तमसः पुरस्तात्॥ १३॥

चैतन्येति। अत्र विषयपदमविवक्षितं चैतन्याश्रय एव मोहः न जानामीति तथैवानुभवादित्यर्थः। अथवा—चैतन्यवस्तुन एवाद्वितीयत्वाकारेण मोहविषयत्वात्तथोक्तम् नाद्वैतवस्तुविषयाश्रयक अत्रापि विषयपदमविवक्षितं मोहः अद्वैतवस्त्वाश्रयको न भवतीत्यर्थः। अथवा—विषयपदं दृष्टान्तार्थे यथा मोहो ब्रह्माद्वितीयत्वाकारेण विषयीकरोति न तथा तेनाकारेणाश्रयत इत्यर्थः। तत्र हेतुमाह—अप्रतीतेरिति। अद्वैता-

त्मनोऽज्ञानाश्रयत्वेनानुभवाभावादित्यर्थः। अत्र च मोहग्रहणं संसारस्याप्युपलक्षणं संसारोपि चैतन्याश्रय एव तथैव प्रतीतेर्नाद्वैताश्रयः तथाऽप्रतीतेरित्यर्थः। ननु चैतन्याश्रयत्वमपि मोहस्य न प्रतीयते। अहमज्ञ इति बुद्ध्युपाधिकाश्रयत्वस्यैव प्रतीतेरिति चेन्न। तस्य स्पष्टप्रतीत्युपाधित्वात्। अन्यथा कार्यस्य कारणाश्रयत्वानुपपत्तेरित्युक्तत्वादित्याह—बुद्ध्यादीति। आदिपदेन चक्षुरादिकं गृह्यते। सूक्ष्मशरीरोपाधिकचैतन्यस्येत्यर्थः। तमस्त्विताऽज्ञानाश्रयत्वं न सम्भवतीति तमसो ब्रह्माश्रयत्वं स्वप्रकाशचैतन्याश्रयत्वं पुरस्ताद् द्वितीयाध्याये उदितमित्यर्थः॥ १३॥

ब्रह्मणोऽद्वैतत्वाकारेण नाज्ञानाश्रयत्वमप्रतीतेरित्युक्तमेव प्रपञ्चयति—

**ब्रह्माश्रयं न हि तमोऽनुभवेन लभ्यं**
**नाप्यागमान्न च किमप्यपरं प्रमाणम्।**
**ब्रह्माश्रयत्वविषयं तमसस्ततश्च**
**प्रत्यक्प्रकाशविषयाश्रयमेतदस्तु॥ १४॥**

ब्रह्मेति। किं प्रत्यक्षेण ब्रह्मणो ब्रह्मत्वाकारेणाज्ञानाश्रयत्वमुच्यते। किं वा आगमादुत प्रमाणान्तरात्। न सर्वथापि सर्वज्ञत्वादिविरोधादित्यभिप्रेत्याह—ब्रह्माश्रयमिति। ब्रह्मत्वाकारेण ब्रह्माश्रयमित्यर्थः। अनुभवेन प्रत्यक्षेण नाप्यागमादिति। आगमस्याज्ञानाश्रयत्वप्रतिपादकत्वे तस्य शास्त्रप्रमेयत्वान्निवृत्तिरपि न स्यादित्यर्थः। किमप्यपरमनुमानादिकं तमसो ब्रह्माश्रयत्वविषयं प्रमाणं नास्तीति सम्बन्धः। सर्वज्ञत्वाद्यावेदकागमबाधितत्वादित्यर्थः। फलितमाह—ततश्चेति। यतोऽद्वितीयत्वाकारेण ब्रह्मणोऽज्ञानाश्रयत्वे मानं नास्ति यतश्च प्रत्यक्चैतन्याकारेण तदाश्रयत्वेऽनुभवो मानमस्ति तत एतत्तमः॥ १४॥

ननु प्रत्यक्चैतन्याकारो जीवस्याप्यस्तीति जीवोपि किं तदाश्रयो भवत्येव परन्तु जीवत्वाकारेण नाश्रयः किन्तु प्रत्यक्चैतन्याकारेणैव तदाकारश्च ब्रह्मरूपमेवेति न ब्रह्मणोऽज्ञानाश्रयत्वविरोधोपीत्यभिप्रेत्याह—

जीवत्वमेव तु तदाश्रयमध्यपाति
नेच्छन्ति युक्तिकुशला न हि युज्यते तत् ।
अज्ञानमेव खलु तन्न तमस्तमस्वि
चैतन्यवस्तु पुनरस्तु न तद्विरोधः ॥ १५ ॥

जीवत्वमेवेति । तदाश्रयमध्यपात्यज्ञानाश्रयकोटिनिविष्टं जीवस्य जीवत्वमेवाज्ञानाश्रयकोटिनिविष्टं नेच्छन्ति न तु चैतन्याकारमपीत्येवकारार्थः । जीवत्वस्याज्ञानाश्रयकोट्यनिविष्टत्वेऽसंभवमेव हेतुमाह—न हि युज्यते तदिति । तज्जीवत्वस्याज्ञानाश्रयकोटिनिविष्टत्वं हि यतो न युज्यते नोपपद्यते न सम्भाव्यत इत्यर्थः । असम्भवप्रकारमेवाह—अज्ञानमेवेति । तज्जीवत्वमज्ञानमेव खल्वज्ञानप्रयोज्यत्वादज्ञानं भवति खल्वित्यर्थः । ततः किं तत्राह—न तम इति । न हि तमस्तमआश्रयं भवति तत्प्रयोज्यस्य जीवत्वस्य तदनन्तरभावित्वप्रतीतेस्तदाश्रयकोटिनिविष्टत्वं जीवत्वस्य वक्तुमयुक्तमित्यर्थः । चैतन्याश्रयत्वपक्षे एतद्दोषाभावाच्चैतन्यमेव तदाश्रयोस्त्वित्युपसंहरति—चैतन्येति । तत्तत्र चैतन्यवस्तुनोऽज्ञानाश्रयत्वे विरोधः तमसस्तमस्विता न सम्भवतीत्युक्तविरोधो नास्ति यतः अतश्चैतन्यवस्तु तमस्व्यस्त्वित्यर्थः । तस्माद् ब्रह्मणोऽन्यस्य न संसारः किन्तु ब्रह्मण एव स्वाविद्याकल्पितपुर्यष्टकोपाधिद्वारा संसार इति सिद्धम् ॥ १५ ॥

तत्र किं तत्पुर्यष्टकमित्याकाङ्क्षायामाह—

कर्मेन्द्रियाणि खलु पञ्च तथाऽपराणि
बुद्धीन्द्रियाणि मनआदिचतुष्टयं च ।
प्राणादिपञ्चकमथो वियदादिकं च
कामश्च कर्म च तमः पुनरष्टमी पूः ॥ १६ ॥

कर्मेन्द्रियाणीति । वाक्पाणिपादपायूपस्थाख्यानि कर्मेन्द्रियाणि । एतानि च वचनादानगमनविसर्गानन्दैः स्वविषयैः सहितानि वह्नीन्द्रोपेन्द्रमृत्युकैरभिमानिदेवताभिरनुगृहीतानि सन्ति एका पूः । पुरत्वञ्चैतेषां चैतन्यात्मनोऽवच्छेदकत्वेनावासस्थानत्वात्तस्य संसारविहारहेतुत्वाच्च पञ्चानामप्येकत्वमेकधर्मावच्छेदेन स चावच्छेदको धर्मः कर्मेन्द्रियत्वादि एवमेवोपरितनपुर्यपि द्रष्टव्यम् । बुद्धीन्द्रियाणि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यानि तानि च शब्दस्पर्शरूपरसगन्धैः स्वविषयैः सहितानि दिग्वातार्कप्रचेतोऽश्विभिरभिमानिदेवताभिरनुगृहीतानि सन्ति द्वितीया पूः । मनआदिचतुष्टयं मनोबुद्धिरहंकारश्चित्तं चेत्येतन्मनआदिचतुष्टयमेकमेवान्तःकरणं संकल्पविकल्पाध्यवसायाहमभिमानस्मरणाख्यकार्यभेदात् यथाक्रमं मन आदिशब्दैरभिधीयते । तन्मनआदिचतुष्टयं संकल्पविकल्पादिकार्यैः सहितं चन्द्रविष्णुचतुर्वक्त्रशंभुभिरभिमानिदेवताभिरनुगृहीतं सत्तृतीया पूः । प्राणादिपञ्चकं प्राणापानव्यानोदानसमानाख्याः पञ्च प्राणाः उच्छ्वासादिकार्यैः सहिताश्चतुर्थी पूः । वियदादिकमाकाशवायुतेजोवन्नाख्यं पञ्चकं स्थूलशरीराकारेण परिणतभूतपञ्चकमित्यर्थः तत्पञ्चमी पूः । कामस्तत्तद्विषयरागः सा षष्ठी पूः । कर्म विहितप्रतिषिद्धाविहिताप्रतिषिद्धलक्षणं तत्सप्तमी पूः । तम उक्तसकलानर्थनिदानमज्ञानं तदष्टमी पूः । एतासां च पुरां मध्येऽन्यतमाध्यासं विनाप्यात्मनो न संसार इति पुर्यष्टकोपाधिकस्यैव तस्य संसारः न केवलस्येत्यर्थः ॥ १६ ॥

ननु विद्यापूर्वप्रज्ञयोरपि संसारहेतुत्वं श्रूयते ते किमित्यत्रोपेक्षिते इत्याशङ्क्य नोपेक्षिते किन्तु संगृहीते एव कर्मपदेनेत्याह—

**विद्या च विश्वविषयानुभवोत्थपूर्व-**
**प्रज्ञा च कर्मवचसैव तु संगृहीते ।**
**बन्धप्रयोजकतया सदृशत्वहेतो-**
**रेकत्र च श्रुतिवचस्युपसंग्रहेण ॥ १७ ॥**

विद्येति । विद्या वक्ष्यमाणचतुर्विधा विद्या आत्मविद्यां व्यावर्तयति—विश्वविषयेति । अनुभवोत्थपूर्वप्रज्ञानुभवजन्यसंस्काररूपा अत्रापि विश्वविषयेति सम्बध्यते । सकलानात्मपदार्थविषयानुभवजन्य पूर्वपूर्वसंस्कारश्चेत्यर्थः । ते उभे कर्मवचसा पूर्वश्लोकस्थकर्मपदेनैव बन्धप्रयोजकतया संसारहेतुत्वेन संगृहीते । ननु कथं कर्मग्रहणेन विद्यापूर्वप्रज्ञयोर्ग्रहणं कर्मशब्दस्यातदभिधेयत्वात् लक्षणायां च सम्बन्धाभावादित्याशङ्क्य सम्बन्धाभावोऽसिद्धः अभिधेयसम्बन्धस्य विद्यमानत्वात् ततः कर्मशब्देन ते अपि लक्ष्येते इत्याह—सदृशत्वहेतोरिति । सादृश्यमेवाह—एकत्रेति । उपसंग्रहेणोपादानेन विद्यापूर्वप्रज्ञयोः कर्मणश्चैकवाक्योपात्तत्वेन सदृशत्वात् । कर्मशब्देन तयोरपि लक्षणया ग्रहणं भवतीत्यर्थः ॥ १७ ॥

किं तद्वाक्यमिति तदाह—

**तं विद्येति हि वाक्यमेकमिह च स्पष्टं त्रयं कीर्तितं**
**तस्मात्कर्मवचस्तयोरपि भवेत्संग्राहकं कारणात् ।**
**विद्या चात्र चतुर्विधाऽप्यभिमतैवाऽऽरम्भिका कर्मवत्**
**संस्कारोपि तथा चतुर्विध इति ज्ञेयस्तथा संभवात् ॥१८॥**

तं विद्येति । तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चेत्येकं वाक्यमिहास्मिन्वाक्ये च विद्याकर्मपूर्वप्रख्यातं त्रयं स्पष्टं कीर्तितं तस्मादेकवाक्यप्रतिपाद्यत्वलक्षणात् कारणात् कर्मवचः कर्मपदं तयोर्विद्यापूर्वप्रज्ञयोरपि संग्राहकं भवेदित्यर्थः । ननु विद्यादिपदेन कीदृशा विद्यादयो विवक्ष्यन्ते । तत्राह— विद्या चेति । अत्रास्मिन्वाक्ये चतुर्विधा विहितप्रतिषिद्धाऽविहिताऽप्रतिषिद्धलक्षणा तत्र विहिता विद्योपासनादिरूपा प्रतिषिद्धा नग्नस्त्रीनिरीक्षणादिरूपा ऽविहिता-लौकिकेष्टदर्शनादिरूपाऽप्रतिषिद्धाऽनिष्टदर्शनादिरूपा । एवं चतुर्विधापि विद्या आरम्भिका संसारहेतुर्मता । तत्र दृष्टान्तोक्तिव्याजेन कर्मणोपि चातुर्विध्यस्य संसारहेतुत्वमस्तीत्याह — कर्मवदिति । यथा कर्म विहितप्रतिषिद्धाविहिताप्रतिषिद्धलक्षणं चतुर्विधमपि संसारकारणं तद्वत् । तत्र विहितं कर्म सन्ध्योपासनादि प्रतिषिद्धं परस्त्रीगमनाद्यविहितं भोजनादि दृष्टसुखसाधनमप्रतिषिद्धं ग्रामान्तरगमनादि दृष्टदुःखमात्रसाधनमिति विभागः । विद्यायाश्चतुर्विधाया अपि हेतुत्वात् तज्जन्यवासनापि चतुर्विधा संसारकारणमित्याह— संस्कार इति । तथा विद्यादिवत् तथा संभवाच्चातुर्विध्येन संभवादनुभवचातुर्विध्ये तज्जन्यसंस्कारस्यापि चातुर्विध्यसंभवादित्यर्थः ॥१८॥

ननु लिङ्गशरीरमेव संसारोपाधित्वेन तत्र तत्र वर्ण्यते भवद्भिस्त्विदानीं पुर्यष्टकस्य संसारोपाधित्वं वर्ण्यते तत्किं तयोरभेद इत्याशङ्क्य नाभेदः किन्तु पुर्यष्टके लिङ्गशरीरस्यान्तर्भूतत्वात् । समुदायलक्षणया लिङ्गशरीरपदेन पुर्यष्टकमुच्यत इत्याह—

पुर्यष्टकं तदिदमप्यभवद्धि लिङ्गं
तेनोच्यते तदपि लिङ्गगिरा क्वचित्तु ।
पुर्यष्टकं न खलु लिङ्गगिरोऽभिधेयं
मुख्यं तु सप्तदशकं प्रथितं हि लिङ्गम् ॥ १९ ॥

पुर्यष्टकमिति। पुर्यष्टके इदं लिङ्गमभ्यन्तरमभवदन्तर्भूतं हि यतः तेन तस्मात्तदपि पुर्यष्टकमपि क्वचित्स्थले लिङ्गगिरा लिङ्गशब्देनोच्यते लक्ष्यत इत्यर्थः। ननु मुख्यमेवाभिधानं किं न स्यात्तत्राह—पुर्यष्टकमिति। अभिधेयमभिधावृत्त्या प्रतिपाद्यं न भवति लिङ्गशब्दस्यानेकार्थत्वप्रसङ्गादित्यर्थः। किं तर्हि लिङ्गशब्दस्य मुख्यमभिधेयं तत्राह—मुख्यं त्विति। सप्तदशकं सप्तदशकात्मकं प्रथितं प्रसिद्धम् ॥ १९ ॥

ननु के ते सप्तदश यदात्मकं लिङ्गं भवेत्तत्राह—

इह तावदक्षदशकं मनसा
सह बुद्धितत्त्वमथ वायुगणाः।
इति लिङ्गमेतदमुना पुरुषः
खलु सङ्गतो भवति जीव इति ॥ २० ॥

इह तावदिति। इह संसारोपाधिमध्येऽक्षदशकं ज्ञानकर्मेन्द्रियपञ्चकद्वयं मनसा सह बुद्धितत्त्वं मनश्च बुद्धिश्चेत्यर्थः। एकस्यैवान्तःकरणस्य वृत्तिभेदाद् द्वैविध्योक्तिः वायुगणाः प्राणादिपञ्चकमित्येवंरूपेण एतत्सप्तदशात्मकं लिङ्गं लिङ्गपदवाच्यममुना लिङ्गेन संगतः अविच्छिन्नः पुरुषः जीव इति भवति जीवशब्दवाच्यो भवतीत्यर्थः ॥ २० ॥

ननु लिङ्गशरीरोपाधिकस्यैव संसारित्वं न पर्युष्टकोपाधिकस्य तत्र प्रमाणाभावादित्याशङ्क्यान्वयव्यतिरेकयोरन्वयव्यतिरेकश्रुतेः स्मृतेश्च तत्र प्रमाणत्वान्नैवमित्याह—

न पुराष्टकेन रहितस्य तव
क्वचिदस्ति संसरणदुःखयुजा।

न पुराष्टकेन सहितस्य तथा

क्वचिदस्ति दुःखविगमश्च तव ॥ २१ ॥

न पुराष्टकेनेति। रहितस्य विहीनस्य क्वचित्स्वप्ने संसरणदुःखयुजा संसारदुःखविशेषसम्बन्धो नास्तीति सम्बन्धः। क्वचिज्जाग्रदादौ पुर्यष्टके सत्येव जाग्रति संसारदुःखविशेपदर्शनादसति च तस्मिन्सति च लिङ्गे स्वप्ने तथा संसारदुःखादर्शनात्। "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति" "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत" इत्यन्वयव्यतिरेकश्रुत्या सामान्येन शरीरत्रयसम्बन्धतदभावप्रयुक्त-दुःखतदभावयोः प्रतिपादनात् "अधिष्ठानं तथा कर्त्ता करणं च पृथग्विधम्। विविधा च पृथक् चेष्टा दैवं चैवात्र पञ्चमम्। पञ्चैते तस्य हेतव" इति स्मृत्या कर्तृकरणशब्दशब्दितलिङ्गव्यतिरिक्ताधिष्ठानस्थूल-देहादेरपि संसारयात्राकारणत्वेन प्रतिपादनात् पुर्यष्टकस्यैव संसारहेतुत्वं न लिङ्गमात्रस्येत्यर्थः ॥ २१ ॥

नन्वेवमपि तादृशपुरसम्बन्धो यद्यात्मनः स्वाभाविकः स्यात् तदा तत्प्रयुक्तः संसारोपि तथैव भवेत् ततो न कथञ्चित्तदुच्छेद इत्याशङ्क्याह—

तव नित्यमुक्तसुखचिद्वपुषो

न कदाचिदस्ति पुरसङ्गमनम्।

तव मायया विरचितं सकलं

पुरसङ्गति प्रभृतिकं वितथम् ॥ २२ ॥

तव नित्येति। विमुक्तश्च विमुच्यत इत्यादिश्रुतिसिद्धनित्यमुक्त-सत्यज्ञानानन्दात्मकस्य तव कदाचित्संसारदशायामपि न वस्तुतः पुरसंगमनं देहादिसम्बन्धोऽस्तीत्यर्थः। ननु किमिति वास्तव-

सम्बन्धाभाव इति चेत्तत्र किमात्मनः प्रमातृत्वादिसंसारप्रयोजक-देहादिपुरसम्बन्धः संयोगः उत समवायः किं वा स्वेच्छानुविधेयानुविधातृभावः । अथवा—भोक्तृभोग्यभावः । यद्वा स्वेन्द्रियाधिष्ठात्रधिष्ठेयभावः । आहोस्वित्स्वकर्मारब्धारब्धव्यभावः । नाद्यः । निरवयवस्यात्मनस्तदयोगात् । तद्योगेपि विभोरात्मनः सर्वशरीरसंयोगित्वात्सर्वस्मिन्नपि शरीरे प्रमातृत्वादिसंसारप्रसङ्गः । न द्वितीयः । अनवयवावयविद्रव्ययोस्तदयोगात् । न तृतीयः । भृत्यादिदेहेपि प्रमातृत्वादिप्रसङ्गात् । ननु नियमेनेच्छानुविधायित्वं देहादिपुरस्य तेन सम्बन्ध इति चेन्न—अत्यातुरदेहे प्रमातृत्वादिसंसाराभावप्रसङ्गात् । तत्रेच्छानुविधायित्वस्याप्यभावात् । न चतुर्थः । भृत्यादिदेहेपि तत्प्रसङ्गादेव ननु सर्वदा भोग्यत्वं देहादेस्तेन सम्बन्ध इति चेत् । सुषुप्तौ भोगाभावेन स्वशरीरस्यापि सर्वदा भोग्यत्वाभावात्तस्मिन्नपि संसाराभावप्रसङ्गात् । नापि पञ्चमः । अन्योन्याश्रयात् । स्वदेहसंयोगित्वेनेन्द्रियाणां स्वीयत्वं तेषां च स्वीयत्वे देहस्य स्वीयत्वमिति । नापि षष्ठः । अन्योन्याश्रयादेव स्वकर्मारब्धत्वेन देहस्य स्वीयत्वं स्वदेहारब्धत्वेन कर्मणः स्वीयत्वमिति । ननु कर्मशरीरप्रवाहयोरनादित्वात् बीजाङ्कुरप्रवाह इव नान्योन्याश्रय इति चेन्नात्र प्रमाणाभावेन प्रवाहस्यान्धपरम्परात्वात् । भृत्यादिदेहेपि प्रमातृत्वादिसंसारप्रसङ्गाच्च । न च स्वकर्ममात्रारब्ध-देहे स्वस्य प्रमातृत्वमित्यपि शङ्क्यम् । तदसिद्धेः । स्वदेहस्य भृत्याद्यदृष्टेनाप्यारब्धत्वात् । एकेन कर्मणानेकस्वामिभृत्यदेहादेरारम्भोपपत्तेश्च । तस्मात्परिशेषादात्मनो देहादिपुरसम्बन्ध आध्यासिक एव वक्तव्य इत्याह—तव माययेति । पुरसङ्गतिः पुरसम्बन्धः प्रभृतिरादिर्यस्य संसरणस्य तत्तथा संसारप्रयोजकसम्बन्धस्याविद्यकत्वे तत्प्रयोज्यसंसारोपि तथेति, पुरसङ्गतिप्रभृतिकमित्युक्तम् । नचाविद्यकत्वेपि देहादिसम्बन्धस्य किमित्यत्रैव तादात्म्याद्यभिमानोऽन्यत्र

नेति वक्तुं शक्यम्। पूर्वपूर्वतादात्म्याद्यभिमानजन्यसंस्कारजन्यस्यै- वेदानीं तादात्म्याद्यभिमानविषयत्वात्। न चास्माभिरण्यत्र युक्तिर्व- क्तव्या अनिर्वचनीयत्वादित्यभिप्रेत्याह—वितथमिति। मिथ्या सदसद्वि- लक्षणमनिर्वचनीयमित्यर्थः ॥ २२ ॥

नन्वस्तु संसार आविद्यकपुरसम्बन्धनिमित्तः तथाप्यात्मन इदानीं संसारानर्थः विद्यया च संसारानर्थनिवृत्तिर्जायत इति मुक्ते- रागन्तुकत्वेनात्मनो नित्यमुक्तत्वक्षतिरित्याशङ्क्य संसारस्तन्निवृत्ति- जन्माप्यात्मनि नास्तीत्येतत्सदृष्टान्तमाह—

**मलिनं नभो न हि कदाचिदभू-**
**द्विमलं कदाचिदभवन्न नभः।**
**उभयं नभस्यभवदेवमिह-**
**त्वयि नित्यमुक्तचिति संसरणम् ॥ २३ ॥**

मलिनमिति। न हि निरवयवाकाशे कदाचित् कार्स्न्यादिमल- सम्बन्धः सम्भवति। न वा नैर्मल्यं तत्र जायते सर्वदा निर्मलस्वरू- पत्वादाकाशस्य तथात्मन्यपि न संसारसम्बन्धः न तावत्तन्निवृत्ति- र्जायत इत्यर्थः। कथं तर्ह्यात्मनः संसारसम्बन्धो दृश्यते। किमर्थं वा तस्योपाधिकत्वं वर्णितमित्याशङ्क्य नित्यमुक्तेप्यात्मनि मायया संस- रणसम्बन्धो भवतीत्येतत् सदृष्टान्तमाह—उभयमिति। मालिन्यं वैमल्य- जन्म चाभवदभवदिव यथा वस्तुतो निर्मलेप्याकाशे धूमादिसम्ब- न्धाद् भ्रान्त्या मालिन्यं तन्निवृत्तौ च नैर्मल्यं जातमिव प्रतीयते न वस्तुतस्तथा नित्यमुक्तात्मन्यपि भ्रान्त्या संसरणसम्बन्धः तन्निवृत्तौ च संसारत्वमुक्तिर्जातेव प्रतीयते न वस्तुतः। तथा च न मुक्तेरागा- न्तुकत्वं न वा संसारसम्बन्धस्य नित्यमुक्तत्वविघातकत्वमि- त्यर्थः ॥ २३ ॥

पारमार्थिकवस्तुनि भ्रान्तिसिद्धस्य वास्तवसम्बन्धाभावमुपपादयति—

न हि कल्पनाविरचितं वितथं
परमार्थवस्त्ववितथं स्पृशति ।
परमार्थवस्तु च तथा तमसा
परिकल्पितं न किमपि स्पृशति ॥ २४ ॥

न हि कल्पनाविरचितमिति । भ्रान्तिकल्पितमित्यर्थः । अत एव वितथं बाध्यं परमार्थवस्त्वकल्पितमवितथमबाध्यमिति भेदः । न स्पृशति वस्तुतो न सम्बध्नाति । वस्तुनोर्हि सम्बन्धो वास्तवो भवतीत्यर्थः ॥ २४ ॥

कल्पिताकल्पितयोर्वस्तुतः परस्परासम्बन्धे सकलसम्मतं दृष्टान्तमाह—

न हि भूमिरूषरवती मृगतृड्-
जलवाहिनीं सरितमुद्वहति ।
मृगवारिपूरपरिवारवती
न नदी तथोषरभुवं स्पृशति ॥ २५ ॥

न हि भूमिरिति । मृगतृड्जलवाहिनीं मृगतृष्णायां प्रतीयमानं यज्जलं तद्वोढुं शीलमस्या इति तथोक्ता तां सरितं नदीं मृगवारिपूरपरिवारवती-मृगवारिमृगतृष्णायां प्रतीयमानवारि तस्य पूर अतिरेकः प्रवाह इति यावत् स एव परिवारः संपदस्या अस्तीति तथोक्ता ऊषरभुवो मृगतृष्णा जलस्य च वस्तुतः परस्परसम्बन्धे पिपासोपशमनादिकार्योपलब्धिप्रसङ्ग इत्यर्थः । तथा च पुरोपाधिकत्वेन संसारस्य कल्पित-

त्वात् । न तेनात्मनो नित्यमुक्तत्वक्षतिरिति भावः ॥ २५ ॥

इतोऽप्यात्मनो न वास्तवः संसारो निरूपयितुं शक्यः स हि देशान्तरगमनादिप्रयुक्तः गमनादिकं च नात्मनः सम्भवति तस्य विभुत्वात्। नापि संसारप्रयोजकत्वेनाभिमतपुरस्य तस्य जडत्वात् गमनस्य च चेतनकर्तृकत्वान्नाप्युभयात्मकस्यासंभवादित्यभिप्रेत्याह—

न तव क्वचिद्गमनमस्ति विभो-
र्न पुराष्टकस्य जडरूपभृतः ।
न च मध्यवर्तिजडचिद्वपुषो-
र्गमनक्षमं किमपि संभवति ॥ २६ ॥

न तवेति। आत्मनो देहादेश्च गमनाभावे हेतुगर्भितं विशेषणं विभोः जडरूपभृत इति च जडचिद्वपुषोर्मध्यवर्ति जडाजडात्मकमित्यर्थः। गमनक्षमं स्वर्गनरकादिगमनार्हं जडाजडात्मकं किमपि वस्तु न संभवति विरोधादित्यर्थः ॥ २६ ॥

ननु केवलस्यात्मनो विभुतया गमनाद्यसंभवेऽपि पुरावच्छिन्नस्य तस्य गमनादिकं सम्भवतीत्याशङ्क्य न ह्यवच्छिन्नस्यानवच्छिन्नाद्वास्तवभेदोऽस्ति तथा सत्यात्मनो विभुत्वक्षतेः उपहितस्यानात्मत्वापाताच्च। तथा चावच्छिन्नस्यापि सर्वगतात्मचैतन्याभिन्नत्वात् न वस्तुतो गमनादिकं सम्भवतीत्यभिप्रेत्याह—

पुरवेष्टितं न खलु चिद्वलयं
परलोकमार्गमनुसर्तुमलम् ।
घटवेष्टितं न हि नभोवलयं
व्रजति व्रजत्यपि घटेऽवितते ॥ २७ ॥

पुरवेष्टितमिति । पुरावच्छिन्नमित्यर्थः । चिद्वलयं वलयाकारं चैतन्यमित्यर्थः । अनुसर्त्तुमनुगन्तुमलं समर्थं विशोरन्यावच्छेदमात्रेण गमनासंभवे दृष्टान्तमाह—घटवेष्टितमिति । एकं व्रजतिपदं तिङन्तमपरं सप्तम्यन्तं व्रजत्यपि पुरुषेण नीयमानेपीत्यर्थः । वितथे स्थूले । ननु गच्छति घटे तदुपाधिकस्याकाशस्यापि गमनं दृश्यते इति चेन्न तस्य भ्रान्तत्वात् । न च बाधकाभावः । गमनस्य मूर्त्तद्रव्यैकनिष्ठत्वेन सर्वगतस्य गमनानुपपत्तेरेव बाधकत्वात् ॥ २७ ॥

अवच्छिन्नस्यचानवच्छिन्नाद्भेदे आकाशस्य विभुत्वैकत्वादिक्षतेरित्यभिप्रेत्याह—

घट एव गच्छति नभस्त्वचलं
व्रजता घटेन तु ततश्च ततः ।
परिवेष्टनेन घटखं क्रियते
घटखानि तत्र सुबहूनि ततः ॥ २८ ॥

घट एव गच्छतीति । तथा च श्रुतिः घटसंवृतमाकाशं नीयमाने घटे यथा घटो नीयते नाकाशं तद्वज्जीवो नभ उपम इति । ननु घटाद्यवच्छिन्नाकाशस्यागमने यस्मिन्प्रदेशे घटो नीयते तत्र केवल एव घटोऽनुभूयेत न तु तदवच्छिन्नाकाशः । तस्यानातीतत्वात् । यतश्च प्रदेशाद्घटो नीयते तत्र तदाकाशोनुभूयेतेत्याशङ्कयाह—व्रजतेति । ततस्ततः तत्र तत्र प्रदेश इत्यर्थः । परिवेष्टनेन सम्बन्धेन घटखं घटाद्यवच्छिन्नाकाशं न हि यत्र प्रदेशे घट आनीयते तत्राकाशं नास्ति येन केवलघटस्य प्रतीतिरापाद्येत । तथाचाकाशस्य सर्वगतत्वात् तत्र तत्र घटोपाधिसम्बन्धेन तदवच्छिन्नाकाशस्यापि प्रतीतिः सम्भवत्येव । यतश्चानीयते तत्र घटोपाध्यभावादेव घटावच्छिन्नाका-

शप्रत्ययाभाव उपपद्यत इत्यर्थः। न चैकघटसम्बन्धेन तत्र तत्रानेकघटाकाशकल्पनाद्वारमेकस्यैव घटाकाशस्य गमनकल्पनमस्त्विति वाच्यम्। घटस्यैकत्वेपि प्रदेशभेदेन तत्सम्बन्धानामनेकतया तत्र तत्र तथा तथा प्रतीत्युपपत्तेः। अन्यथोक्तदोषानतिवृत्तेरित्यभिप्रेत्याह–घटखानीति। तत्र तस्मिन् तस्मिन्प्रदेशे उपाधिसम्बन्धबहुत्वं ततः शब्दार्थः॥ २८॥

नन्वत्रापि पुरस्यैव गमनमस्तु न तु तदवच्छिन्नचैतन्यस्यापि न च पुरस्यापि तदनुपपत्तिः जडत्वादिति वाच्यम्। स्वतस्तदसंभवेपि घटवददृष्टेश्वराद्यन्यप्रेरितस्य तदुपपत्तेः। न च पुरस्य गमनेपि तस्य जडत्वेन भोक्तृत्वासम्भवादात्मनश्चागतत्वात् परलोकादिभोगासंभव इति शङ्क्यम् परलोकगतपुरावच्छिन्नचैतन्यस्यैव भोक्तृत्वसंभवादित्याशङ्कामनुवदति—

पुरमेव गच्छति चितिस्त्वचला
व्रजता पुरेण यदि साऽपि चितिः।
परिवेष्ट्यते तु सुबहूनि तदा
वलयानि पूर्ववदुपाश्रयसे॥ २९॥

पुरमेवेति। सा सर्वगता चितिरपि व्रजता पुरेण परिवेष्ट्यते अवच्छिद्यते। तदा तत्र तत्र वलयानि चिद्वलयानि पुरावच्छिन्नचैतन्यानि सुबहूनि अपरिमितानि पूर्ववत् पूर्वोक्तवियद्वत्। यद्वा—भूप्रदेशे कर्मानुष्ठानकाले यथा पुरावच्छिन्नचैतन्यं तद्वद्भोगकालेपि तत्रानेकचिद्वलयमित्यर्थः। उपाश्रयसे यदीति सम्बन्धः॥ २९॥

पुरमात्रस्य गमनमङ्गीकृत्याकृताभ्यागमनादिदोषप्रसङ्गेन दूषयति—

अकृतागमश्च कृतनिष्फलता
फलतः समापतति कर्तृगतेः।
अपरस्य भोक्तुरुदयाच्च दिवि
व्यसनस्य सन्ततिरहो विषमा ॥ ३० ॥

अकृतागम इति। अकृतस्य पुण्यादेरागमः प्राप्तिः। ननु कथं पुण्यादेः प्राप्तिः। सुखादेरेव प्राप्तेरित्याशङ्क्योक्तम्—फलत इति। फलतोऽकृतागम इति सम्बन्धः। पुण्याद्यकरणेपि तत्फलस्य परलोके प्राप्तिरित्यर्थः। कृतनिष्फलता भूमौ कृतस्य पुण्यादेः निष्फलता फलराहित्यं च समापतति समापतेदित्यर्थः। कृतनिष्फलतायां हेतुमाह—कर्तृगतेरिति। स्वर्गाद्युद्देशेन भूमौ पुण्यापुण्यकर्त्तुश्चिद्रलयस्य परलोके गमनाद्भूमौ च तत्फलभोगासंभवात् तस्य नैष्फल्यमेव स्यादित्यर्थः। अकृतागमे हेतुमाह—अपरस्येति। पुण्यापुण्यकर्तुरन्यस्यैव चिद्वलयस्य दिवि परलोके भोक्तृत्वेनोदयात्। तस्य च पुण्याद्यकर्तृत्वात् अकृतागमः स्यादित्यर्थः। तथा च पारमार्थिकसंसारपक्षे एकं सन्धित्सोरपरं प्रच्यवत इति सर्वदा दूषणपरम्परैवेत्याह—व्यसनस्येति। दुःखहेतोः दूषणस्येत्यर्थः। विषमा दुष्परिहरा ॥ ३० ॥

ननूपाधिगमने उपहितस्यापि गमनं वक्तव्यमन्यथोपाधौ गतेपि तदवच्छिन्नस्य तत्रोपलम्भप्रसङ्गात्। न चोपाधिगमने तदवच्छिन्नस्य नाशान्न तदुपलभ्यत इति वाच्यम्। अवच्छिन्नस्य विम्वात्माभिन्नतया गमनानुपपत्तिवत् नाशस्याप्यनुपपत्तेरित्याशङ्क्योपाधिगमने तद्विशिष्टनाशस्यान्यत्र दृष्टत्वात्पुरगमने तद्विशिष्टचैतन्यस्य स्वरूपेणाविनाशित्वेपि तद्विशिष्टत्वाकारेण नाशः सम्भवतीति सदृष्टान्तमाह—

चलने ह्युपाध्यभिमतस्य भवे-
ज्जनितस्य तेन विगमः सुदृढम् ।
ननु कुण्डलापसरणे पुरुषा-
दथ न प्रणश्यति न कुण्डलिता ॥ ३१ ॥

चलन इति । उपाध्यभिमतस्योपाधित्वेनाभिमतस्य चलने गमने तेनोपाधिना जनितस्य प्रयुक्तस्य विशिष्टस्येति शेषः । विगमो नाशः सुदृढं निःसंदिग्धं भवेत् पुरुषात् कुण्डलापसरणे तत्प्रयुक्ता कुण्डलिता न प्रणश्यतीति न किन्तु प्रणश्यत्येव ननु खल्वित्यर्थः ॥ ३१ ॥

ननु कथं पुरसङ्गमनस्य वितथत्वं वर्ण्यते वास्तवत्वमेव किन्न स्यादित्याशङ्क्य युक्त्यसहत्वान्नैवमित्याह—

न पुरान्वयश्च तव चिद्वपुषः
परमार्थतो भवति तर्कसहः ।
नभसो यथा घटसमागमनं
न ततोऽपि लिङ्गघटितो व्रजसि ॥ ३२ ॥

न पुरान्वय इति । पुरान्वयः पुरसम्बन्धश्च चिद्वपुषः तव परमार्थतो न भवति । तत्र हेतुः तर्कसह इति । नेत्यनुषज्यते । यतोऽयं तर्कसहो युक्तिसहो न भवत्यतः परमार्थतो न भवतीत्यर्थः । तर्कश्च पूर्वोक्तसंयोगाद्यन्यतमानुपपत्तिरेव निरवयवस्य वस्तुत उपाधिसम्बन्धाभावे दृष्टान्तमाह—नभस इति । घटसमागमनं घटसम्बन्धः नेति सम्बध्यते । संयोगाद्यनुपपत्तेस्तत्रापि समत्वादित्यर्थः । फलितमाह—न ततोऽपीति । वस्तुतः पुरसम्बन्धानुपपत्तिस्तच्छब्दार्थः । अपिशब्देन पूर्वोक्तानुपपत्तिः समुच्चीयते । लिङ्गघटितः पुरविशिष्ट इत्यर्थः ॥ ३२ ॥

ननु नभसः किमिति घटादिसंयोगाद्यनुपपत्तिः येनैतद्दृष्टान्तेनात्मनः पुरसम्बन्धानुपपत्तिर्वर्ण्येतेति चेत्तत्र किं घटो नभोमात्रेण संयुनक्ति उत नभःप्रदेशेन। नाद्यः। घटानवच्छिन्नाकाशाभावप्रसङ्गात् घटसम्बन्धस्यैव घटावच्छेदपदार्थत्वात् सर्वत्र तत्कार्यशब्दाद्युपलम्भप्रसङ्गाच्च। ननु तस्य प्रदेशवृत्तित्वान्न सर्वत्रोपलम्भ इति चेन्न निरवयवस्याकाशस्य प्रदेशाभावात्। न द्वितीयः। निरवयवस्य नभसः घटसम्बन्धात्पूर्वं प्रदेशाभावादित्याह—

**नभसः प्रदेशविरहान्नभसो**
**न घटः प्रदेशपरिवेष्टनकृत्।**
**न नभः समस्तमपि वेष्टयते**
**नभसोऽविशेषविरहापतनात्॥ ३३॥**

नभस इति। परिवेष्टनमवच्छेदः अवशेषविरहापतनात् घटानवच्छिन्नाकाशाभावापातादित्यर्थः॥ ३३॥

दृष्टान्तोक्तिविकल्पमुखेनाप्यात्मनि पुरसम्बन्धाभावमुपपादयति-

**परमात्मभागपरिवेष्टनकृ-**
**न्न पुरं तथानवयवो हि परः।**
**न च कृत्स्नमेव परमं पुरुषं**
**पुरवस्तु वेष्टयितुमुत्सहते॥ ३४॥**

परमात्मेति। तथेत्यादौ योजनीयं यथा घटः आकाशमेकदेशेन कात्स्न्र्येनेन वा परिवेष्टयितुमनलं तथा पुरमपि परमात्मभागपरिवेष्टनकृन्न भवति। भागः एकदेशः तत्र हेतुः—अनवयव इति। हि यतः परः परमात्मा अनवयवः निरवयवः अत उपाधिस्तस्यैकदेशाभावादेव न

तत्परिवेष्टनकृत्त्वं पुरस्येत्यर्थः । नापि कात्स्न्र्येन परमात्मवेष्टकत्वं पुरस्येत्याह—नचेति ॥ ३४ ॥

विपक्षे बाधकमाह—

यदि कृत्स्न एव परमः पुरुषः
पुरवेष्टितो भवति जीवतया ।
न तदेश्वरो भवितुमुत्सहते
न च जीवजातमपरं सकलम् ॥ ३५ ॥

यदि कृत्स्न एवेति । जीवतयेति जीवभावेन पुरवेष्टित इति सम्बन्धः । यदि पुरं परात्मानं कार्त्स्न्येनावच्छिन्द्यात्तदा तदनवच्छिन्नस्यावशिष्टांशस्याभावात् । अवच्छिन्नस्य च जीवत्वान्नेश्वरः सिद्ध्येदित्यर्थः । पुरस्य कात्स्न्र्येन चैतन्यावच्छेदकत्वे दूषणान्तरमाह—न चेति । अपरं त्वत्तोऽन्यत् पुरस्य सर्वात्मना चैतन्यावच्छेदकत्वे पुरान्तरावच्छेद्यांशाभावात् । प्रतीयमानं जीवनानात्वमपि न स्यादित्यर्थः ॥ ३५ ॥

प्रतीयमानजीवनानात्वाङ्गीकारे प्रतीयमानगुरुशिष्यादिभावो न स्यादित्याह—

गुरुशिष्यसंगतिरतो न भवे-
न्न च बन्धमोक्षनियमो घटते ।
विषयं विना सकलमापतति
स्फुटमत्र वेदवचनं च वृथा ॥ ३६ ॥

गुरुशिष्येति । अतः जीवनानात्वप्रतीतिमात्रस्यासंभवादित्यर्थः । बन्धमोक्षनियमः प्रतीयमानबन्धमोक्षव्यवस्था न केवलं गुरुशिष्यादिभावाद्यनुपपत्तिः पुरस्य कात्स्न्र्ये न चैतन्यावच्छेदकत्वे किन्तु ब्राह्म-

णक्षत्रियादिभेदाभावात् तत्तदधिकारितत्तत्कर्माभावेन कर्मकाण्डाप्रामाण्यं कर्माभावे च तदधीनशुद्ध्याद्यभावेनाधिकार्यभावात् ज्ञानकाण्डस्याप्यप्रामाण्यमित्यपि दुष्परिहरानुपपत्तिः स्यादित्याह-- विषयं विनेति । विषयं प्रतिपाद्यम् अधिकारिणोऽप्युपलक्षणम् । अत्र कार्त्स्न्येनावच्छेदपक्षे वृथा पतति वृथा स्यादित्यर्थः ॥ ३६ ॥

अत्र केचित्—जीवनानात्वाभावे गुरुशिष्यभावादिव्यवस्था न स्यादिति वदतां मूलकाराणां व्यावहारिकजीवनानात्वमेवाभिमतम् । अन्यथा कृत्स्नचैतन्यस्य पुरवेष्टनेनैकजीवभावेपि स्वप्न इव भ्रान्त्या जीवनानात्वप्रतीत्युपपत्तेः । क्वचित्त्वेकजीववादवचनं गुर्वादेरपि स्वाप्नपदार्थवत्कल्पितत्वाभिधानं च जाग्रद्बोधेनेव स्वाप्नपदार्थस्य तत्त्वज्ञानेन स्वव्यतिरिक्तसकलस्यापि द्वैतस्य निवृत्तिप्रदर्शनपरं न व्यावहारिकजीवनानात्वनिराकरणपरं तथा च तद्वचनं तत्तद्विद्वद्दृष्ट्यभिप्रायमिति वर्णयन्ति तदपि सम्प्रदायसिद्धत्वादङ्गीकार्यमेव । तस्मादात्मनः पुरसम्बन्धस्य दुर्निरूपत्वात् न स वास्तवः किन्तु कल्पित एवेत्युपसंहरति—

न पुरान्वयोऽत उपपत्तिसहः
परमार्थतोऽस्ति परमात्मदृशेः ।
वियतो घटान्वयवदेव ततः
परिकल्पितं पुरसमागमनम् ॥ ३७ ॥

न पुरान्वय इति । अतः यतः उपपत्तिसहः युक्तिसहो न भवति पुरान्वयः अतः सः अस्य परमात्मदृशेः परमार्थतो न भवति आकाशस्येव घटादिसम्बन्धः । ततः यतः परमार्थतो न सम्भवति ततः समागमनं सम्बन्धः ॥ ३७ ॥

पुरसम्बन्धस्य कल्पितत्वप्रदर्शनफलमात्मनो वस्तुतो गमनाद्य-

भावमुपसंहरति—

यत एवमेतदुपपत्तिपथं
न तव प्रयाति विरहय्य तमः ।
परलोकमार्गगमनं स्वतमः
परिकल्पितं चलनवन्नभसः ॥ ३८ ॥

यत एवमिति । एवमुक्तप्रकारेण तव चिद्वपुषः एतत्पुरसंगमनं तमो विरहय्य उपपत्तिपथं युक्तपदवीं न प्रयाति नोपारोहति यतः अत इति सम्बन्धः । चलनवत्—घटाद्यौपाधिकचलनवत् ॥ ३८ ॥

ननु कथमन्यलिङ्गगमनस्यान्यत्रात्मनि प्रतीतिरित्याशङ्क्य धर्मिणोः परस्परतादात्म्याध्यासात् परस्परधर्माध्यासाच्चेत्याह—

पुरधर्ममात्मनि विकल्प्य तथा
स्वचिदात्मतां च पुरधर्मतया ।
स्वपुरं स्वयं च दृढमेकतया
परिकल्पयन् व्रजसि मूढमतिः ॥ ३९ ॥

पुरधर्ममिति । लिङ्गस्य मूर्त्ततया गमनादिकं तद्धर्मः तमात्मन्यविचलकूटस्थस्वरूपे स्वस्मिन् विकल्प्याध्यस्य तथा स्वचिदात्मतां स्वस्यात्मनश्चिदात्मतां चैतन्यं पुरधर्मतया लिङ्गधर्मत्वेन विकल्प्येत्यनुषज्यते तदेवं धर्माध्यासो दर्शितः धर्माध्यासमाह—स्वपुरमिति । स्वस्योपाधिभूतं लिङ्गं स्वयं स्वात्मानं चैकतयैक्येन परिकल्पयन् त्वं व्रजसीत्यर्थः । उभयविधाध्यासे हेतुमाह—मूढमतिरिति । सपर्यगाच्छुक्रम कायमव्रणम्, कूटस्थमचलं ध्रुवम्, घटोनीयतेनाकाशं तद्वज्जीवोनभोपम इति श्रुतिप्रतिपन्नं स्वस्य शरीरराहित्यं गमनादिराहित्यं चाजानन्नि-

त्यर्थः । स्वस्वरूपाज्ञानादेव गमनादिसंसार इत्यर्थः ॥ ३९ ॥

तस्मात्संसारस्याविद्याकल्पितत्वात्त्वं सर्वदा नित्यमुक्त एवेत्युपसंहरति—

परिपूर्णचिद्रसघनः सततं
स्वमहिम्नि तिष्ठसि निरस्तमले ।
न तथाऽपि तत्त्वमितिवाक्यकृतां
मतिमन्तरेण तव केवलता ॥ ४० ॥

परिपूर्णेति । रसस्वरूपं पूर्णचैतन्यैकस्वरूप इत्यर्थः । सततं संसारदशायामपि स्वमहिम्न्यसङ्गोदासीनसच्चिदानन्दस्वरूपे निरस्तमले वस्तुतो निरस्तकर्तृत्वभोक्तृत्वादिमले । ननु यदि नित्यनिर्मुक्तस्वरूप एवाहं वर्ते तर्हि श्रवणादिवैयर्थ्यं तत्राह—न तथापीति । नञः केवलतेत्यत्र सम्बन्धः । तथापि नित्यमुक्तत्वेपीत्यर्थः । तत्त्वमिति वाक्यकृतां तत्त्वमादिवाक्यजन्यां मतिं ब्रह्मात्मसाक्षात्काररूपान्तःकरणवृत्तिमन्तरेण केवलता प्रतीयमानाविद्यातत्कार्यरहितता न भवति । सर्वदा नित्यमुक्तत्वेपि ब्रह्मात्माकारसाक्षात्कारं विना अनाद्यविद्या तत्कार्यानर्थप्रतिभासस्यानिवृत्तेस्तदर्थं श्रवणादिकमावश्यकमित्यर्थः ॥ ४० ॥

ननु नित्यमुक्तस्वरूपश्चेदहं तर्हि श्रवणादिकं विनापि किमिति तथा स्पष्टन्न प्रतिपद्यत इतिचेत् किं चक्षुरादिना किमिति न प्रतिपद्यते इत्युच्यते किं वा स्वरूपचैतन्येन । नाद्यः । करणानां वहिर्विषयत्वेन प्रत्यगात्माविषयत्वात् । न द्वितीयः । तमसावृतत्वात् । तथा च यावच्छ्रौतात्मसाक्षात्कारं तवाविद्यकपुरोपाधिकप्रयुक्तसंसारप्रतीतिर्भवत्येवेत्याह—

न तव प्रतीचि करणानि बहि-
र्विषयाणि येन करणानि सदा।
सहजं च गाढमतिमूढतमं
तम इत्यतः पुरमनुव्रजसि ॥ ४१ ॥

न तवेति। प्रतीचि सर्वप्रत्यक्तमस्वरूपे करणानीन्द्रियाणि न प्रवर्त्तन्त इति शेषः। तत्र हेतुः—बहिर्विषयाणीति। येन हेतुना करणानि बाह्यविषयाणि तेनेत्यर्थः। सहजमनादिसिद्धं गाढं दृढमतिमूढतममतिशयेन स्वस्वरूपावारकमित्यर्थः। इतिशब्दो हेतौ। यस्मादनादिसिद्धमज्ञानं तत्स्वरूपावारकमतः तत्कल्पितपुरमनुव्रजसि पुरोपाधिकगमनादिसंसारं प्राप्नोषीत्यर्थः ॥ ४१ ॥

एवं नित्यमुक्तस्यात्मन आविद्यकपुरोपाधिक एव संसार इत्युक्तं तत्र श्रुतिमपि प्रमाणयति—

स समान इत्युपनिषद्वचनं
प्रतिपादयत्युदितमर्थमतः।
स्वमनीषिकेति न कदाचिदपि
प्रतिपत्तिरत्र भवतो भवतु ॥ ४२ ॥

स समान इति। स समानः सन्नुभौ लोकावनुसंचरतीत्याद्युपनिषद्वाक्यं सः असङ्ग आत्मासमानः बुध्याद्युपाधिना समानः बुद्ध्यादितादात्म्यापन्नः सन्नित्यर्थः। उभाविहलोकपरलोकौ जाग्रत्स्वप्नौ वा अनुसंचरति बुद्ध्यादौ गच्छति स्वमपि गच्छतीत्यर्थः। उदितमसङ्गस्यात्मनः बुद्ध्याद्युपाधिकमेव कर्तृत्वादिकं न वास्तवमिति मयोक्तमर्थं प्रतिपादयति तथा चास्मदुक्तेऽर्थे स्वबुद्धिपरिकल्पितत्व-

भ्रान्तिर्न कर्त्तव्येत्याह—अत इति। यतः श्रुतिरप्येवमाहातः अत्रास्मदुक्तेऽर्थे स्वमनीषिकेति प्रतिपत्तिः स्वबुद्धिविरचितेति प्रतीतिरित्यर्थः ॥ ४२ ॥

ननूपाधिद्वारापि कथं सर्वगतस्यात्मनो गमनादिकं संभवति तत्र तत्प्रतीतेरप्यभावादिति चेन्न हि सर्वगतस्य परस्य गमनं ब्रूमः किन्तु पुरोपाधिद्वारा तद्गतचिदाभासाविविक्तस्यैवेत्याह—

पुरहेतुकं यदभवच्च विभोः
परिकल्पितं किमपि चित्सदृशम्।
जलपात्रहेतुकमिव द्युमणे-
स्तदसंततं भवति तद्व्रजति ॥ ४३ ॥

पुरहेतुकमिति। विभोः सर्वगतस्यात्मनः पुरहेतुकं पुरोपाधिकमत एव परिकल्पितं किमप्यनिर्वचनीयं चित्सदृशं चिदाभासोऽभवत्तत् चित्सदृशं चिदाभासाविविक्तचैतन्यमित्यर्थः। असंततमव्याप्तं परिच्छिन्नं भवति। तथा च तत्परिच्छिन्नचिदाभासाविविक्तचैतन्यमेव व्रजति न सर्वगतचैतन्यमित्यर्थः। कूटस्थवस्तुरूपस्योपाधिद्वारानिर्वचनीयरूपापत्तौ तद्द्वारागमने च दृष्टान्तमाह—जलपात्रहेतुकमिव द्युमणेरिति। यथा द्युमणेः सूर्यस्य जलपात्रोपाधिकं सूर्याभासाख्यमनिर्वचनीयरूपान्तरं भवति। जलपात्रे च पूर्वस्मिन्देशे नीयमाने तन्निष्ठसूर्याभासाविविक्तपश्चिमदेशगामिसूर्यप्रतिबिम्बमपि गच्छतीव तद्वदित्यर्थः ॥ ४३ ॥

नन्वेवमपि परलोकगमनादिकं न सम्भवति पुरस्य जडत्वेनास्वतन्त्रत्वादत एव न तदुपाधिकचैतन्याभासस्यापि। न चेश्वराधिष्ठितस्य तस्य गमनं सम्भवतीति वाच्यम्। असङ्गोदासीनस्वभावस्य

तस्याधिष्ठातृत्वायोगादित्याशङ्क्य यथाऽसङ्गस्वभावस्यापि तव पुरोपाधिकः संसारः तथा असङ्गोदासीनस्वभावस्यापि परमात्मनो मायोपाधिकमधिष्ठातृत्वादिकमुपपद्यत इति दर्शयितुं परमात्मनि मायासद्भावं साधितं दर्शयति—

जडशक्तिरस्ति च परस्य विभोः
परमात्मनस्तम इति प्रथिता ।
पुरमष्टकं तव यथा भवति
श्रुतितः प्रसिद्धमिदमप्यखिलम् ॥ ४४ ॥

जडशक्तिरिति । साधारणविक्षेपशक्तिमती परतन्त्रा माया न च तत्सद्भावे मानाभावः तस्या अविद्याऽभिन्नत्वात् । अविद्यायाश्चानुभवसिद्धत्वादित्याह—तम इति । प्रथितेति । तत्रासङ्गचैतन्यस्वभावस्य न केवलमनुभवतस्तत्सिद्धिः किन्तु श्रुतितोपीत्याह—श्रुतित इति । इदं परमात्मनो मायावत्त्वं तव पुरवत्त्वं च श्रुतितः अस्मान्मायी सृजते स समानः सन्नित्यादिश्रुतितोपि प्रसिद्धमित्यर्थः ॥ ४४ ॥

ततः किमत्राह—

पुरहेतुकं तव यथा च वपु-
र्भवतीह जीववचसो विषयः ।
जडशक्त्युपाधिकममुष्य तथा
परमेश्वरत्ववपुरुद्भवति ॥ ४५ ॥

पुरहेतुकमिति । यथा असङ्गस्वभावस्य तव पुरोपाधिकं जीववचसो विषयः जीवपदवाच्यमित्यर्थः वपुः स्वरूपं भवति । तथा अमुष्यासङ्गोदासीनस्वभावस्य परमात्मनः जडशक्त्युपाधिकं सत्त्व-

प्रधानया विक्षेपशक्तिमत्या वा माययोपाधिना प्रयुक्तं परमेश्वरत्व-वपुर्नियन्तृत्वादिस्वरूपमुद्भवति भवतीत्यर्थः ॥ ४५ ॥

तस्मात्परमेश्वरपरतन्त्र एव पुरोपाधिके जीवः परलोकादिकं गच्छतीति फलितं दर्शयितुं परमेश्वराधीन एवास्य सर्वोपि संसार इत्यत्र श्रुतिसम्वादमाह—

पुरहेतुरूपघटितस्य दृशो-
र्जडशक्त्युपाधिपरमेश्वरतः ।
भयमुद्भवत्यनवबोधवशा-
दिति च त्रयीशिरसि राजपथः ॥ ४६ ॥

पुरेति । पुरहेतुकं यद्रूपं तद्घटितस्य तद्विशिष्टस्य दृशः चैतन्यस्य पुरोपाधिकचिदाभासाविविक्तस्येत्यर्थः । जडशक्त्युपाधिपरमेश्वरतः मायोपाधिकपरमेश्वरात् । भयं-संसारः । ननु जीवेश्वरयोरुभयोरपि चैतन्यस्वरूपत्वाविशेषात्कथमीश्वरप्रयुक्तः संसारो जीवे भवेदित्या शङ्क्य वस्तुनश्चैतन्यस्वरूपत्वाविशेषेपि स्वाश्रयव्यामोहकावरण-शक्तिमदविद्योपाधिकत्वेन जीवस्य स्वस्वरूपानभिज्ञत्वादीश्वरस्य स्वाश्रयाव्यामोहकसत्त्वप्रधानविक्षेपशक्तिमदविद्योपाधिकत्वेन स्वा-भाविकस्वरूपाभिज्ञत्वात् तत्प्रयुक्तः संसारस्तस्मिन्भवतीत्याह— अनवबोधेति । स्वाभाविकस्वरूपाज्ञानवशादित्यर्थः । इत्येवंरूपेण त्रयीशिरसि एष ह्येव साधु कर्म कारयतीत्यादिवेदान्तेषु राजपथः प्रसिद्ध इत्यर्थः ॥ ४६ ॥

अतः परमेश्वराधीनमेवास्य मरणकाले परलोकादिगमनमिति फलितं दर्शयति—

परमेश्वरेण विभुना रणयन्
परिबृंहितः शकटवद्व्रजसि ।
शकटं हि शाकटिकयोगवशा-
द्व्रजति स्वयं न परतन्त्रतया ॥ ४७ ॥

परमेश्वरेणेति । नियमित इति शेषः । रणयन् हिक्किकोर्ध्वश्वासादिशब्दं कुर्वन् परिबृंहितः कर्मादिसंसारसंभृतः व्रजति परलोकं गच्छति । स्वतन्त्रेश्वराधिष्ठितस्यैव जीवस्य गमनमित्यत्र दृष्टान्तमाह—शकटवदिति । दृष्टान्तं विवृणोति—शकटं हीति । शाकटिकः शकटाधिष्ठाता तद्योगस्तत्सम्बन्धस्तद्वशादेव व्रजति न स्वयमेव तत्र हेतुः—परतन्त्रतयेति । जडत्वेनास्वतन्त्रत्वादित्यर्थः । यथा लोके दध्यादिभाण्डसंभारसंभृतं शकटं केनचित्पुरुषेणाधिष्ठितमेव सदतिभारेण शब्दं कुर्वद् गच्छति न स्वयमेव । एव जीवोपि कर्मसंभारसंभृतः मरणवेदनासमुपजात हिक्किकादि शब्दं कुर्वन् प्राज्ञो परमेश्वरेणाधिष्ठित एव गच्छति न स्वयमेवेत्यर्थः ॥ ४७ ॥

ननु शकटस्याचेतनत्वाद्युक्तं चेतनाधिष्ठानेन गमनं जीवस्तु स्वयं चेतनस्वभावतया स्वतन्त्रः कथं चेतनान्तराधिष्ठितो गच्छेत् तत्राह—

पुरवेष्टितः पुरवशानुगतः
पुरतन्त्रचिन्निभविभिन्नवपुः ।
दिवि यातनाभुवि च कर्मफला-
न्यनुभूय भूय इह संभवति ॥ ४८ ॥

पुरवेष्टित इति । पुरावच्छिन्नः अत एव पुरवशानुगतः पुरपरतन्त्रः यद्यपि जीवः स्वयं चेतनस्वभावतया स्वतन्त्रस्तथापि परतन्त्रपुरता-

दात्म्याध्यासादात्मानमपि परतन्त्रं मन्यते। अतोऽस्य पराधीनत्वे भ्रान्त्याऽन्यप्रेरणेनैव गमनं युक्तमित्यर्थः। अत एव जीवपरयोरेकत्वान्नाधिष्ठानाधिष्ठेयभाव इत्यपि शङ्का न कर्त्तव्येत्याह—पुरतन्त्रेति। पुरोपाधिकं यच्चिन्निभं चित्सदृशं चिदाभासः तेन विभिन्नवद्भिभिन्नं वपुः स्वरूपं यस्य जीवस्य स तथोक्तः। ननु कर्मफलभोगार्थं परलोकं गतस्य भोगेन कर्मक्षयात् देहान्तरापादकाभावात्तत्त्वज्ञानं विनापि तत एव मुक्तिः स्यात्। अतः किमिति तस्माद्वैराग्यमपेक्ष्यत इत्याशङ्क्याह—दिवीति। दिवि स्वर्गे यातनाभुवि-नरकभूमौ कर्मफलानि सुखदुःखात्मकान्यनुभूय भूयः भोगेन तत्कर्मक्षयानन्तरमिह लोके सम्भवति नानायोनौ जायत इत्यर्थः। यद्यपि स्वर्गाद्यारम्भकपुण्यादीनि क्षीणानि तथाप्यनारब्धानामपि कर्मणां बहूनां सत्त्वात्तेभ्यः पुनर्जन्म भवत्येव। इममर्थं श्रुतिरपि दर्शयति "यावत्संपातमुषित्वाथैतमेवाध्वानं पुनर्निवर्त्तन्ते रमणीयचरणा रमणीयां योनिमापद्येरन् कपूयचरणाः कपूयां योनिमापद्येरन्" इत्यादिना तत्र च यावच्छब्देन स्वर्गादिभोगार्थं प्रारब्धकर्माण्येवोच्यन्ते न तु सकलं कर्म रमणीयचरणाः कपूयचरणाः इत्यादिश्रुतिविरोधात्। चरणशब्दस्य कर्मवाचित्वात्सूत्रकारोपि "कृतात्ययेनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च" इति स्वर्गादिभोगक्षयानन्तरमपि कर्मान्तरसद्भावं दर्शयति। अनुशयशब्दस्य कर्मान्तरवाचित्वेन भाष्यकारैर्व्याख्यातत्वात्। तस्मात्स्वर्गादिभोगार्थं प्रारब्धेतरकर्मणस्तत्त्वज्ञानं विना नाशायोगात्। तस्माच्च नानाविधयोनिसम्बन्धसम्भवान्न मुक्तिरिति क्षुद्रफलात्तस्माद्वैराग्यमावश्यकमित्यर्थः॥ ४८॥

नन्वेवमपीश्वरस्य जीवसंसारहेतुत्वमनुपपन्नम् तथात्वे तस्य वैषम्यनैर्घृण्यप्रसङ्गादिति चेन्न। तत्तत्प्राणिसमुपार्जितपुण्यापुण्यानुरोधेन फलदातृत्वात् न चैतावता तस्य स्वातन्त्र्यभङ्गः कर्मणोप्यधि-

ष्ठातृत्वेन स्वातन्त्र्याप्रच्यवात्तथाचेश्वराधिष्ठितकर्मवशाज्जीवस्य याव-त्तत्त्वज्ञानोदयं घटीयन्त्रवत् गतागती भवत एवेत्यभिप्रेत्याह—

सुकृतदुष्कृतकर्मवशादयं
दिवमथो यमसादनमेव वा ।
अनुभवेन समाप्य पुनर्मही-
तलमबोधवशादवरोहति ॥ ४९ ॥

सुकृतेति । अयं पुरोपाधिको जीवः यमसादनं नरकमनुभवेन भोगेनाबोधवशात् स्वस्वरूपाज्ञानात् ॥ ४९ ॥

ननु केवलकर्मफलात्स्वर्गादेः पुनरावृत्तिश्रवणात् ततो वैराग्यं भवतु उपासनासमुच्चितस्य तस्य केवलस्य चोपासनस्य यत्फलं हिरण्यगर्भादिप्राप्तिः सा तु नित्यैव न स पुनरावर्त्तत इति श्रुते-स्ततस्तत्त्वज्ञानं विनापि पुरुषार्थसिद्धेः कथं ततो वैराग्यमित्या-शङ्क्याह—

यदि वा समुच्चयवशात्पुरुषः
कमलासनं व्रजति कामुकधीः ।
पुनरेव मानवमिमं तु विना
परिवर्तमाव्रजति मूढमतिः ॥ ५० ॥

यदि वेति । समुच्चयवशात्कर्मोपासनासमुच्चयवशात्केवलाद्वा उपास-नादित्यभिप्रेत्योक्तं यदि वेति । कमलासनं कार्यब्रह्म कामुकधीः रागी पुनः भोगावसाने मानवं मनुसम्बन्धिनमिमं वर्त्तमानं परिवर्त्तं कल्पं विना आव्रजत्यायाति कल्पान्तरेऽवरोहतीत्यर्थः । कर्मसमुच्चितकेवलोपास-

नस्य यत्फलं हिरण्यगर्भावाप्तिः न सा नित्या कर्मफलत्वेनानित्यत्वानुमानात् । न च "न स पुनरावर्त्तत" इति श्रुतिविरोधः यस्मिन् कल्पे ब्रह्मलोकप्राप्तिः तत्कल्पावृत्तिनिषेधपरत्वात्तस्याः अन्यथेमं मानवमावर्त्तं नावर्तत इति श्रुताविममिति विशेषणवैयर्थ्यप्रसङ्गात्तस्मात्तस्यापुरुषार्थत्वात् पुरुषार्थस्य च तत्त्वज्ञानं विनाऽसम्भवात् ततोपि नरकादिव वैराग्यमावश्यकमेवेत्यर्थः ॥ ५० ॥

ननु ब्रह्मलोकं गतानां पुनरावृत्तिरिति वक्तुं न शक्यम् ब्रह्मणा सह ते सर्व इति स्मृतिविरोधात् अभिमतक्रममुक्त्यभावप्रसङ्गाच्च । ततस्तस्य पुरुषार्थत्वान्न ततो विरक्तिरित्याशङ्क्य कामुकधीपदसूचितं विशेषमाह —

अथ वा स तत्र परमात्ममतिः
परिमुच्यते सकलबन्धनतः ।
क्रमयोगमुक्तिरुदिता श्रुतिषु
प्रतिशाखमेवमुपपन्नतरा ॥ ५१ ॥

अथ वेति । स ब्रह्मलोकं गतः तत्र ब्रह्मलोके परमात्ममतेः परमात्मसाक्षात्कारात्सकलबन्धनतः सकलसंसारात् क्रमयोगमुक्तिः क्रममुक्तिरित्यर्थः । श्रुतिषु न स पुरावर्तत इत्यादिषूदिता प्रतिपादिता यत्र ब्रह्मलोकं गतानां तत एव मुक्तिः श्रूयते तत्रापि विरक्तानां ब्रह्मसाक्षात्कारादेव मुक्तिरभिमता न ब्रह्मलोकगमनमात्रेण कामिनस्तदनुपपत्तेः । स कामभिर्जायते तत्र तत्रेति श्रुतेः । अत एव परस्यान्ते कृतात्मानः प्रविशन्ति परं पदमिति साक्षात्कृतात्मनामेव मुक्तिं श्रावयति । एवं सति क्रममुक्तेरपि नानुपपत्तिः तथा चोपासनाफलस्याप्यपुरुषार्थत्वात्ततो वैराग्यमावश्यकमित्यर्थः ॥ ५१ ॥

एवमिष्टादिकारिणां केवलकर्मिणां धूमादिमार्गेण पितृलोकं गच्छतामुपासनसमुच्चितकर्मिणां केवलोपासकानां वा अर्चिरादिमार्गेणाब्रह्मलोकं गच्छतामविवेकिनां जुगुप्सितां गतिं ततो वैराग्यार्थमुपवर्ण्येदानीं पापिनामतिजुगुप्सितां तिर्यग्भवादिलक्षणां गतिं ततो वैराग्यार्थमाह —

देवयानपितृयानयोः पथो-
र्ज्ञानकर्मरहितत्वकारणात् ।
नैकमप्यनुसरन्ति ये पुनः
क्षुद्रजन्तव इहोद्भवन्ति ते ॥ ५२ ॥

देवयानेति । देवयानपथः अर्चिरादिमार्गः पितृयानपथः धूमादिमार्गस्तयोर्मध्येऽन्यतरमार्गमपि ये पापिनो नानुसरन्ति । तत्र हेतुः ज्ञानेति । ज्ञानमुपास्तिः ते पापिनः इह भूलोके क्षुद्रजन्तवः श्वविड्वराहादयः सन्त उद्भवन्ति जायन्त इत्यर्थः। न च तृतीया गतिरप्रमाणिकीति वाच्यम् । अथैतयोः पथोर्न कतरेण च न तानीमानि क्षुद्राण्यसकृदावर्त्तनीभूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयं स्थानमिति श्रुतेरेव तत्र प्रमाणत्वादित्यर्थः ॥ ५२ ॥

एवं पुरोपाधिकचैतन्यस्य स्वरूपाज्ञानवशात् तत्तत्कामनानुष्ठितपुण्यापुण्योपासनालक्षणकर्मभिर्ब्रह्मादिपिपीलिकान्तामतिजुगुप्सितातिदुःखोपेतनानाविधयोनिगमनागमनलक्षणसंसारगतिमुपवर्णितामुपसंहरति —

इति कामुकस्य तव संसरणं
शतशो बभूव बत मूढमतेः ।

इह विप्रजन्मनि विरक्तमतिः
कुरु साधनं यदपवर्गकरम् ॥ ५३ ॥

इतीति । इत्युक्तप्रकारेण मूढमतेः मोहावृतस्वरूपस्य अत एव कामुकस्य क्षुद्रफलाभिलाषिणः तव पुरोपाधिकस्य शतशः अपरिमितं संसरणं बभूव । यदर्थं संसारगतिः प्रदर्शिता तद्दर्शयति । इहेति । इह मनुष्यजन्मनि तत्रापि विप्रजन्मनि यस्मादितः पूर्वमविवेकिनस्तव कर्मफलरागात् ब्रह्मादिपुत्तिकान्तशरीरेषु घटीयन्त्रवत् गतागतमभूत्। अत इदानीं विवेकी भूत्वा हिरण्यगर्भपर्यन्तात् भोगात् ससाधनाच्छर्दितगृध्रमांसादेरिवातिविरक्तः सन् अपवर्गकरं साधनं कुर्वित्यर्थः। इह विप्रजन्मनीत्यनेन नित्यादिसत्कर्मानुष्ठानेन शुद्ध्यादिद्वारावैराग्यसम्पादनयोग्यतोच्यते यद्यस्मिन्नपि जन्मनि विवेकवैराग्यं न भवेत्कदापि तर्हि न भवेत् मानुष्यादिव्यतिरिक्तजन्मनोऽतितामसत्वेन विवेकादेरसंभवात् । मनुष्यजन्मनः विद्यायोग्यत्वं तदितरस्य तदयोग्यत्वं च श्रीभागवतेऽप्युक्तम् । "सृष्ट्वा पुराणि विविधान्यजयात्मशक्त्या वृक्षान् सरीसृपपशून् खगदंशमत्स्यान् । तैस्तैरतुष्टहृदयः पुरुषं विधाय ब्रह्मावलोकधिषणं मुदमाप देवः" इति ॥ ५३ ॥

किं तदपवर्गसाधनं तदाह—

श्रवणादिकं शमदमादिपरः
परमात्मनः परमभागवतः ।
कुरु तावता परममेव पदं
परमात्मनस्त्वमवलोकयासि ॥ ५४ ॥

श्रवणादिकमिति । श्रवणं नामाद्वैते ब्रह्मणि वेदान्तानां शक्तितात्पर्यावधारणम्;आदिपदेन मननादिकं गृह्यते । ननु किं श्रवणानुष्ठाने विवेक-

वैराग्यमेवाधिकारिणाऽपेक्ष्यते नान्यदप्यस्तीत्याह—शमदमादिपर इति। शमोऽन्तरिन्द्रियनिग्रहः दमो बहिरिन्द्रियनिग्रहः आदिपदेनोपरत्यादिकं मुमुक्षा च गृह्यते परमात्मन इति कर्मणि षष्ठी परमात्मविषयश्रवणादिकमित्यर्थः। साधनान्तरमप्याह—परमभागवत इति। देवतागुरुभक्तिमानित्यर्थः। ननु यदेतन्महता प्रयासेनानुतिष्ठेतेत्युच्यते किं ततोऽप्यन्यत् मोक्षसाधनज्ञानाय कर्त्तव्यमस्ति नेत्याह—तावतेति। उक्ताधिकारिनिर्वर्त्यश्रवणादिमात्रेण ॥ ५४ ॥

एवं संसारमहानलसंतप्तस्य तच्छान्तये दृढवैराग्यादिपूर्वकं श्रवणादिकमनुष्ठेयमित्युक्त्वा विपक्षे बाधकमाह तत्र प्रोत्साहाय—

यदि तन्न पश्यसि हरेः परमं
पदमम्बुशीतलमिवेद्धशिराः।
न खलु प्रदीप्तशिरसोऽस्ति सुखं
तव दुःखपावकशिखाभिरहो ॥ ५५ ॥

यदीति। तच्छ्रुतिप्रसिद्धं हरेः परमं पदं यदि न पश्यसि श्रवणादिनेति शेषः। तदा दुःखपावकशिखाभिः आध्यात्मिकादिदुःखमेव पावकः तज्ज्वालाभिः प्रदीप्तशिरसः संतप्तचित्तस्य तव सुखं नास्तीत्यर्थः। तत्र दृष्टान्तमाह—अम्ब्विति। यदीद्धशिराः ज्वलत्पावकप्रदीप्तशिराः पुमान् तच्छामकं शीतलमम्बु आप्तवाक्यश्रवणादिना न पश्यति तदा दुःखहेतुपावकशिखाभिः प्रदीप्तशिरसस्तस्य यथासुखं नास्ति तद्वदित्यर्थः ॥ ५५ ॥

तदेवं नित्यमुक्तासङ्गात्मनस्तत्राध्यात्मिकादिसंसारदुःखमात्माज्ञानविजृम्भितान्तःकरणाद्युपाधिनिबन्धनं न तु वास्तवं वास्तवं तु नित्यमुक्तसच्चिदानन्दात्मकं त्वत्स्वरूपमेव तादृशसंसारनिवृत्ति-

साधनं च दृढवैराग्यादिपूर्वकमनुष्ठितश्रवणादिसाध्यं त्वत्स्वरूपज्ञानमेव नान्यत् । तदभावे च तव न कदापि संसारानलसंतापान्निवृत्तिरित्युवर्ण्येदानीं त्वमप्यस्मदुक्तप्रकारेण वैराग्यादिपूर्वमनुष्ठितश्रवणादिसाध्यज्ञानं विना मम कदाचिदपि संसाररोगान्निवृत्तिर्न संभवतीति ज्ञात्वा तत्सिध्यर्थं तत्साधनज्ञान एव सम्यगभिलाषं कुरु हिरण्यगर्भपर्यन्तं भोगाच्च ससाधनात् कुम्भीपाकादिव सम्यग्विरक्तो भवेति फलितमुपसंहरति—

**एवं विज्ञाय तापत्रयमतिगहनं मोहमूलं परस्मि-**
**न्नात्मन्यात्मप्रकाशे त्वयि परमसुखे निष्कले निष्कलङ्के।**
**सत्ये नित्यस्वभावे परिहृतसकलद्वैतकूटानुषङ्गे**
**सम्यग्ज्ञानानुरागं कुरु विषयगतं छिन्धि निर्बन्धमेनम् ।५६।**

एवमिति । अस्मदुक्तप्रकारेण तापत्रयमाध्यात्मिकादिलक्षणमतिगहनं दुस्तरं मोहमूलमिति बहुव्रीहिः । आत्मप्रकाशे स्वप्रकाशे परमसुखेऽनवच्छिन्नसुखे परिहृतसकलद्वैतकूटानुषङ्गे वस्तुतो निरस्तबाह्याभ्यन्तरप्रपञ्चसमूहसम्बन्धे एवं भूते त्वयि विषये सम्यग्ज्ञानानुरागं तत्त्वज्ञानाभिलाषं कुरु । विषयगतं विषयो ब्रह्मलोकादि तद्गतं तद्विषयमेतन्निर्बन्धं सुखसाधनत्वाभिनिवेशं छिन्धि त्यज । ब्रह्मलोकादिविषयादत्यन्तं विरक्तो भवेत्यर्थः ॥ ५६ ॥

एवं वैराग्यनिरूपणानन्तरं पदार्थशोधनजिज्ञासाप्रयुक्तशिष्यस्य प्रश्नमवतारयति—

**इत्युक्त्वोपरते गुरौ पुनरयं जिज्ञासया प्रेरित-**
**स्तत्त्वंशब्दनिगद्यलक्ष्यविषयं शिष्यो गुरुं पृच्छति ।**

वैराग्येऽतिदृढीकृते सति यतः प्राज्ञो यतिर्मन्यते
संदीप्तं शिरसीव पावकमिदं संसारदुःखं महत् ॥ ५७ ॥

इत्युक्त्वेति । गुरौ उपरते तूष्णींभूते सति पुनः दृढवैराग्योपयोगिसंसारस्वरूपपरिज्ञानानन्तरमित्यर्थः । जिज्ञासया पदद्वयलक्ष्यार्थविषयजिज्ञासया प्रेरितः प्रयुक्तः सन्नित्यर्थः । तत्त्वंशब्दनिगद्यलक्ष्यविषयं तत्त्वं शब्दाभ्यां निगद्यः प्रतिपाद्यो यो लक्ष्यविषयः—लक्ष्यपदार्थः तं तत्त्वं पदद्वयलक्ष्यार्थमित्यर्थः । सम्यक् संसारस्वरूपपरिज्ञानजन्यवैराग्यपदार्थजिज्ञासयोर्हेतुहेतुमद्भावं दर्शयति—वैराग्य इति । अतिदृढीकृते सति सम्यक्संसारपरिज्ञानेनेति शेषः । प्राज्ञः दृढविवेकी यतिः इदं महत्संसारदुःखं शिरसि प्रदीप्तं पावकमिव मन्यते यतः ततः गुरुं तत्त्वंशब्दनिगद्यलक्ष्यविषयं पृच्छतीत्यन्वयः ॥ ५७ ॥

ननु वैराग्यस्याथशब्दोपात्ताधिकारिविशेषणत्वेन समन्वयविचारात्प्रागेव सिद्धत्वात्कथं तस्य तार्त्तीयप्रथमपादविचारफलतेत्याशङ्क्य सत्यं तत्र हि यत्कृतकं तदनित्यमिति न्यायमात्रेण वैराग्यमुत्पन्नमधिकारिविशेषणं भवति । अत्र तु तस्यैव वैराग्यस्य सम्यक् संसारस्वरूपपरिज्ञानेनातिदार्ढ्यं भवतीत्यभिप्रेत्य पदार्थप्रश्नानुकूलं वैराग्यं तद्दार्ढ्यं स्वस्मिन्निर्वृत्तं सहेतुकं शिष्यो दर्शयतीत्याह—

वैराग्यं विषयेषु पूर्वमपि मे जातं हरेरर्चना—
यज्ञादिक्रियया निरस्तफलया किं त्वद्य दार्ढ्यं गतम् ।
संसारस्य निरूपणेन धिगिदं कर्मादिजन्यं फलं-
विश्वं नश्वरमम्बुबुद्बुदसमं पद्मासनान्तं जगत् ॥ ५८ ॥

वैराग्यमिति । विषयेषु स्वर्गादिविषयेषु पूर्वमपि श्रीमद्भिः । संसारस्वरूपनिरूपणात्पूर्वमपि पूर्वं वैराग्यजननहेतुमाह—हरेरित्यादिना । यज्ञा-

दीत्यादिपदेन वेदानुवचनदानादयो गृह्यन्ते। भक्तिश्रद्धापुरस्सर-विष्णुपूजायज्ञादिना परिपन्थिकल्मषनिवर्हणे सति नित्यानित्य-विवेकेन वैराग्यजन्मेत्यर्थः। ननु यज्ञस्य ज्योतिष्टोमादेः स्वर्गा-दिफलत्वात्कथं कल्मषनिवर्हकत्वमित्याशङ्क्य यद्यपि फलकाम-नयानुष्ठितस्य स्वर्गादिहेतुत्वमेव तथापि फलकामनां विने-श्वरार्पणबुद्ध्यानुष्ठितस्य तस्य कल्मषनिवर्हकत्वमस्त्येवेत्यभिप्रेत्योक्तं निरस्तफलयेति। फलकामनां विनानुष्ठितत्वं निरस्तफलत्वं यदि पूर्वमेव वैराग्यं जातं तर्हि संसारनिरूपणेन कृतेन किं फलितमित्याकाङ्क्षा-पूर्वकमाह—किंत्वित्यादिना। अथेदानीं संसारनिरूपणानन्तरमित्यर्थः। दार्ढ्यं गतं वैराग्यमित्यनुषङ्गः। तद्दार्ढ्यमेवाभिनयति—धिगिदमित्यादिना। कर्मादीत्यादिपदेनोपासना गृह्यते। पितृब्रह्मलोकादिप्राप्तिः फलशब्दार्थः इदं कर्मादिजन्यं ब्रह्मलोकान्तफलं धिक् कुत्सितं तुच्छमित्यर्थः। तत्र हेतुः—विश्वमिति। सकलं चेतनाचेतनात्मकमित्यर्थः। पद्मास-नान्तं हिरण्यगर्भपर्यवसानं जगत् यतो नश्वरम् आशुविनाशि तत इत्यर्थः। आशुविनाशे दृष्टान्तत्वेनोपात्तमम्बुबुद्बुदसममिति जलफेनसममित्यर्थः॥ ५८॥

एवं शिष्यः संसारनिरूपणफलं स्वस्मिन्निर्वृत्तं दृढवैराग्यं प्रदर्श्येदानीं वैराग्यदार्ढ्ये सति किमपरमवशिष्टं वाक्यार्थस्य चादावेवोपदिष्टत्वात् तस्य चाविरुद्धतयोपपादितत्वादित्याशङ्का-पूर्वकपदार्थप्रश्नं दर्शयति—

किन्तु त्वंपदलक्ष्यमर्थमधुना कर्तृत्वभोक्तृत्वयो-
र्जाग्रद्भूगतयोरपोहमुखतो वाञ्छाऽवगन्तुं मम।
कर्तृत्वादिकमस्य किं निजमभूत्स्वाभाविकं जाग्रतः
किं वा तत्परतः कुतश्चिदभवच्चैतन्यधातोरिति॥ ५९॥

किन्त्वित्यादिना। यद्यपि मम ब्रह्मात्मत्वं श्रीमद्भिरुपदिष्टमविरुद्धतयोपपादितं च तथापि तदहमेतावत्कालं बाह्यरागाक्षिप्तत्वान्मत्तमात्तङ्ग इव स्वमस्तकार्पितरत्नमालामनादृत्या ऽसंभावितं मन्यमान आसमिदानीं तु भगवदनुग्रहेणातितरां विषयेभ्यूद्विग्नमनसो भवदुपदिष्टमर्थं च सम्भावितं मन्यमानस्य मम पदार्थज्ञानाभावात्परमपुरुषार्थसाधनवाक्यार्थापरोक्षानुभवो न जायते अतस्तत्कारणपदद्वयलक्ष्यार्थजिज्ञासा वर्त्तते तत्रापि त्वंपदार्थस्य मत्स्वरूपस्यात्यन्तमनर्थव्रातोपेततया प्रतीयमानत्वेन प्रथमं तदेवावगन्तुं वाञ्छा विद्यते इत्यर्थः। अधुना प्रथममित्यर्थः। ननु त्वंपदलक्ष्यार्थोऽपि समन्वयाध्याये पदवृत्तिनिरूपणावसरे "आद्ये सूत्रे त्वंपदस्योदितत्त्वादि"[१५५२] स्यादिना प्रत्यङ्मात्रमेवेति दर्शित इति चेत्सत्यम्। तत्र हि विधिमुखेन तदर्थो दर्शितः। अत्र त्वतद्व्यावृत्तिमुखेन तज्जिज्ञासेत्याह—कर्तृत्वभोक्तृत्वयोरिति। एतच्चानात्मधर्माणां कृशत्वादीनां सर्वेषामुपलक्षणं जाग्रद्भूः जाग्रत्स्थानं स्वप्नाभिप्रायेण जाग्रद्ग्रहणमपोहो व्यावृत्तिः मिथ्यात्वनिश्चयो वापोहमुखतः तद्द्वारा देहादेरात्मत्वनिषेधेन कर्तृत्वादेरात्मधर्मत्वनिषेधद्वारा मत्स्वरूपं ज्ञातुमिच्छामीत्यर्थः। तदर्थं चिन्तामाह—कर्तृत्वादिकमिति। अस्य जाग्रतः चैतन्यधातोरिति सम्बन्धः धातुशब्दः स्वरूपवाची। निजमित्यस्य व्याख्या स्वाभाविकमिति। तत्कर्तृत्वादिकं किं चेतनस्य मम कर्तृत्वादिकं स्वाभाविकम् उताविद्याप्रयुक्तमिति विमर्शार्थः। यद्याद्यः तदा मम कर्त्राद्यपोहासंभवात् न निष्प्रपञ्चब्रह्मात्मैक्यप्राप्तिर्भवति। द्वितीये तु कर्तृत्वाद्यपोहेन मत्स्वरूपज्ञानसंभवात्सा भवतीति विमर्शकस्याभिप्रायः। यद्यपि शास्त्रादौ संसारनिरूपणप्रस्तावे च कर्तृत्वादिकं परोपाधिकमात्मन्यध्यस्तमिति दर्शितं तथापि तदपवादेन त्वंपदलक्ष्यवस्तु तत्र न प्रदर्शितमतः सर्वातद्धर्मापवादेन केवलः प्रत्यगात्मा त्वंपदलक्ष्यार्थो ज्ञातव्य इति पुनर्विमर्शोपपत्तिरिति भावः॥ ५६॥

ननु पदार्थज्ञानमात्रमेव वाक्यार्थज्ञाने कारणं ननु लक्ष्यार्थज्ञानमिति नियमः। त्वंपदवाच्यार्थश्च कर्त्रादिविशिष्टो ज्ञात एवातः किमर्थं कर्तृत्वाद्यपवादेन केवलप्रत्यगात्मज्ञानमित्याशङ्क्य यत्र वाच्यार्थमादाय वाक्यार्थबोधस्तत्र तथा भवतु इह तु लक्ष्यार्थमादायैव वाक्यार्थस्य बोधात् कर्तृत्वाद्यपवादेन तज्ज्ञानमावश्यकमेव। अन्यथा बधिरं प्रति प्रयुक्तशब्दवत् स्वार्थाबोधकमेव स्यात्। अतस्तद्बोधः सम्पादनीय इत्याह—

यावत्त्वंपदलक्ष्यवस्तुविषयो बोधो न मे वर्तते
तावन्मे बधिरेषु गीतमिव तच्छ्रौतं वचोऽनर्थकम्।
तस्मात्त्वंपदलक्ष्यवस्तुविषयः कर्तृत्वभोक्तृत्वयोः
जाग्रद्भूगतयोरपोहमुखतो बोधो ममोत्पाद्यताम् ॥६०॥

यावदिति। श्रौतं वचस्तत्त्वमादिवाक्यमनर्थकं स्वार्थब्रह्मात्मैक्याबोधकमित्यर्थः। उत्पाद्यतां युक्तिभिरिति शेषः॥ ६४॥

तत्र तावदाचार्यः कर्तृत्वाद्यपवादेन केवलस्वरूपं ज्ञापयितुं कर्तृत्वादेरात्मधर्मत्वं निराकरोति।

कर्त्रादेरवभासकत्वमगमः शुद्धः स्वयं भास्वर-
श्चैतन्येन निजेन तेन भवतः कर्त्रादिबुद्धिर्भ्रमः।
कूटस्थस्य चिदात्मनस्तव कुतः कर्तृत्वभोक्तृत्वयोः
शङ्का जागरितेऽपि कारकगणं कर्त्रादिकं पश्यतः॥६१॥

कर्त्रादेरिति। आदिपदेन भोक्त्रादिकं गृह्यते। अवभासकत्वं द्रष्टृत्वम्। अगमः प्राप्तवानसि। अत एव शुद्धः कर्तृत्वादिरहितः। अत्रेदं

विवक्षितम् । आत्मा कर्तृत्वादिरहितः तद्द्रष्टृत्वात् यो यद्द्रष्टा स न तद्वान् यथा रूपादिद्रष्टा देवदत्तो रूपादिमान्न भवतीति। ननु द्रष्टृत्वं दर्शनकर्तृत्वं ततः कथं कर्तृत्वनिषेध इत्याशङ्क्य न हि दर्शनक्रियाश्रयत्वेन द्रष्टृत्वं ब्रूमः किन्तु स्वरूपचैतन्येनैवेत्याह—निजेन चैतन्येनेति । तर्ह्यहं कर्त्तेत्यादिप्रतीतेः का गतिः तत्राह—तेनेति । येन हेतुना स्वप्रकाशस्त्वं कर्तृत्वादिरहितस्तेन भवतः स्वप्रकाशचैतन्यस्वरूपस्य तव कर्त्रादिबुद्धिः कर्तृत्वादिप्रत्ययः भ्रमः बुद्ध्याद्युपाधिपरिकल्पित एव। न च बाधकाभावः। प्रमितिकरणाभावस्यैव बाधकत्वात्। तथा हि कर्तृत्वादिप्रमितौ किमिन्द्रियं करणमुतानुमानादिरेव।नान्त्यः।अपरोक्षत्वावगमात्। आद्येऽपीन्द्रियशब्देन चक्षुरादिकं विवक्षितमुत मनः। नाद्यः। तस्य बाह्यमात्रविषयत्वात्। न द्वितीयः। मनोगम्यत्वे प्रमाणाभावात्। ननु सति मनोव्यापारे कर्तृत्वाद्युपलम्भः असति तस्मिन् सुषुप्ते न तदुपलम्भ इत्यन्वयव्यतिरेकावेव तत्र मानमिति चेन्न । तदन्वयव्यतिरेकयोः प्रथमापेक्षितकर्तृत्वाद्युपादानकारणविषयतयाऽन्यथासिद्धत्वात् । ननु क्लृप्तमुपादानमात्मेति नोपादानापेक्षेति चेन्न तस्य तदुपादानत्वे मानाभावात्। ननु कारणान्तराभावादात्मैवोपादानमिति वक्तव्यम् न चान्तःकरणं तदुपादानं तस्य करणत्वेन चक्षुरादिवत्तदुपादानत्वाभावादिति चेन्न । अन्योन्याश्रयात्। अनन्यथासिद्धकार्यानुपपत्त्या आत्मनस्तदुपादानत्वे क्लृप्ते उपादानकारणाकाङ्क्षाया अन्यतः शान्तत्वादन्तःकरणान्वयव्यतिरेकयोः कर्तृत्वादिप्रमितिकरणत्वविषयत्वमन्तःकरणस्य च प्रमितिकरणत्वे सिद्धेः कार्यस्यानन्यथासिद्धतया आत्मनस्तदुपादानत्वकल्पनमिति। नचान्तः करणस्येवात्मनः कर्तृत्वादिकं प्रत्यन्वयव्यतिरेकौ स्तः न वा तत्र प्रमाणान्तरमस्ति येन तस्य तदुपादानत्वं सिद्धवत्क्रियेत । आत्मनोऽसङ्गत्वश्रुतिविरोधाच्च न कर्तृत्वाद्युपादानत्वकल्पना संभवति किं च सुषुप्ते कर्तृत्वाद्यभावादपि तदप्रतीत्युपपत्त्या व्यतिरेकस्या-

न्यथा सिद्धेर्नान्तः करणस्य प्रमितिकरणत्वकल्पना सम्भवति। न च तदा तदभावकल्पना गुरुशरीरेति वाच्यम्। किं कृत्याद्याश्रयत्वं कर्तृत्वादि उत तदनुकूलशक्तिमत्त्वम्। नाद्यः। प्रत्यक्षात्मविशेषगुणानामवश्यवेद्यत्वेन तदभावे कर्तृत्वाद्यभावस्यावश्यकत्वात्। ननु कृत्याद्याश्रयत्वयोग्यत्वं तदिति चेत्। तद्धि तदनुकूलशक्तिमत्त्वमेव तद्व्यतिरिक्ते तस्मिन्मानाभावात्। तदेवास्त्विति चेत्तर्हि शक्तेरतीन्द्रियत्वेन मनोग्राह्यत्वानुपपत्तिः। न च स्वप्रकाशत्वादेव कर्तृत्वादिकं भासत इति वाच्यम्। अनेकस्वप्रकाशकल्पने गौरवात्। तस्मात्प्रमितिकरणाभावादात्मचैतन्यमात्रभास्यत्वात् शुक्तिरूप्यादिप्रतीतिवत् कर्तृत्वादिप्रतीतिर्भ्रान्तिरेवेति भावः। कूटस्थस्यात्मनोऽपरिणामित्वादपि न तव कर्तृत्वादिकमित्याह—कूटस्थस्येति। ननु बुद्ध्यादीनां स्वतो जडत्वात् व्यापारासम्भवादात्मप्रेरितत्वेनैव कार्यकरत्वं वक्तव्यम्। तथा च विकारित्वेन कर्तृत्वादिकं प्राप्तमित्याशङ्क्य बुद्ध्यादीनां जडत्वेपि चेतनात्मनो निरीक्षणमात्राद्व्यापारः सम्भवत्येव न तावन्मात्रेणास्य कर्तृत्वमायातीत्यभिप्रेत्याह—जागरणेऽपीति। जाग्रत्कालेपि कर्त्रादिकारकावभासकत्वमेवात्मनः तत्प्रेरकत्वं किमु वक्तव्यं सुषुप्त्यादौ कर्त्रादिकारकाभाववति तत्प्रेरकत्वाभाव इत्यभिप्रायेणापिशब्दप्रयोगः। अथवा जागरणे अपि शब्दात् स्वप्नेपीत्यर्थः॥ ६१॥

आत्मसन्निधिलक्षणनिरीक्षणमात्रेण बुद्ध्यादीनां व्यापारः न तावतात्मनः कर्तृत्वमायातीत्येतत्सदृष्टान्तमाह—

**व्यापारं सकलस्य भासयति यो भास्वत्करो भास्करो**
**नासौ कर्तृतया जनस्य विदितो भूमौ द्युलोकस्थितः।**
**एवं स्वे महिमन्यवस्थितवतः संघातमुत्पश्यतः**
**स्वव्यापारसमन्वितं तव कुतः कर्तृत्वमुत्प्रेक्ष्यते॥ ६२॥**

व्यापारमिति। व्यापारं लौकिकवैदिकलक्षणं सकलस्य जनस्य व्यापारमिति सम्बन्धः। भास्वत्करः भास्वन्तः कराः किरणाः यस्य स तथोक्तः असौ भास्करः भूमौ भूलोके कर्तृतया व्यापारकर्तृत्वेन न विदितः सूर्यस्य कर्तृत्वासम्भवे हेतुत्वेन द्युलोके स्थित इति विशेषणम्। एवं सूर्यवत् स्वे महिमन्यवस्थितवतः कूटस्थासङ्गे स्वरूपेऽवस्थितवतः इदं च कर्तृत्वासंभवे हेतुः। स्वव्यापारसमन्वितं स्वस्वव्यापारयुक्तं संघातं कार्यकरणसंघातमुत्पश्यतः भासकस्य तव चैतन्यात्मनः कः कर्तृत्वमुत्प्रेक्षते न कोपीत्यर्थः। एतदुक्तं भवति—जीवलोको हि पूर्वमन्धकारावृतः स्वस्वव्यापारे प्रवर्तितुमशक्नुवन् दिवि सूर्योदयमात्रेण स्वस्वव्यापारे प्रवर्तत इति एतावता न सूर्यस्य व्यापारकर्तृत्वं प्रसिद्धमस्ति एवं बुद्ध्यादिकं स्वतो जडं प्रवर्तितुं मशक्नुवत् चैतन्यात्मनिरीक्षणात् स्वस्वव्यापारे प्रवर्तत इति एतावता-नात्मनः कर्तृत्वमायातीति ॥ ६२ ॥

नन्वेवमपि भोक्तृत्वं चेतनस्यैव वक्तव्यम् नाचेतनस्य बुद्ध्यादेस्तस्य सुखदुःखसाक्षात्कारलक्षणभोगानुपपत्तेः। तस्यापि साक्षात्कारवत्त्वे द्रष्टृत्वमपि तस्यैव स्यान्न त्वात्मनः। तथा चात्मनो भोक्तृत्वे कर्तृत्वमप्यायात्येव कर्त्तुरेव भोक्तृत्वादित्याशङ्क्य बुद्ध्यादेः स्वतो जडत्वेपि तत्साधकचैतन्यस्य तस्मिन् चैतन्यासञ्जकत्वेन बुद्ध्यादेश्चैतन्यव्याप्ततया चैतन्यवद्भानाद् भोक्तृत्वमपि संभवतीत्यभिप्रेत्याह—

भूतानि पञ्च मोहसमुद्भवानि
संघातरूपपरिणाममुपागतानि।
कुर्वन्ति कर्मफलमश्नुवते च तेषां
साक्षी त्वमन्तरविलुप्तचिदेकरूपः ॥ ६३ ॥

भूतानीति॥ पृथिव्यादीनि मोहसमुद्भवानि मोहात्समुद्भवो येषां

तानि तथोक्तानि संघातरूपपरिणाममुपागतानि कार्यकरणसंघातरूपेण परिणामं प्राप्तानि स्थूलसूक्ष्मदेहद्वयाकारेण परिणतानीति यावत् । कर्म लौकिकं वैदिकं च फलं स्वर्गादिकं स्रगादिविषयभोगं चाश्नुवते प्राप्नुवन्ति । न चाचेतनस्यापि साक्षात्कारलक्षणभोगाश्रयत्वे तस्य भासकत्वप्रसङ्गः । तच्चैतन्यस्यागन्तुकत्वात् । किन्तु यद्बलादचेतनस्यापि चैतन्यप्राप्तिः तस्य सर्वान्तरस्यालुप्तचित्स्वरूपस्यात्मन एव भासकत्वमित्याह—तेषामिति । कार्यकरणरूपेण परिणताविद्यकभूतानामित्यर्थः । अन्तः अन्तर इति यावत् । अविलुप्तचिदेकरूपः अविनाशिचैतन्यस्वरूपः ॥ ६३ ॥

नन्वात्मनोऽविलुप्तचिदेकरूपत्वमनुपपन्नं बुद्ध्यादौ चैतन्यासञ्जकत्वेन विकारित्वादित्याशङ्क्यात्मनः स्वस्मिन्विकारं विनापि सन्निधिमात्रेण देहद्वयाकारपरिणताविद्यकभूतेषु चैतन्यासञ्जकत्वं तावन्मात्रेण तेषां चैतन्यव्याप्त्या चैतन्यवद् भानं च सदृष्टान्तमाह—

क्षीरस्य पूर्णे चषके निरस्तो
मणिर्यथा मारकतो महार्हः ।
क्षीरं समस्तं क्षणमात्रतस्तत्
करोति तच्छायमनूनतेजाः ॥ ६४ ॥

क्षीरस्य पूर्ण इति । क्षीरेण पूर्ण इत्यर्थः । चषके कांस्यादिविनिर्मितपात्रविशेषे निरस्तः प्रक्षिप्तः स्थापित इति यावत् । मारकतो मणिः मरकतरत्नं महार्हः—अनर्घः । तत्र हेतुः अनूनतेजाः उज्ज्वलप्रकाशयुक्त इत्यर्थः । तत् क्षीरमिति सम्बन्धः । क्षणमात्रतः क्षीरसम्बन्धमात्रेणेत्यर्थः । तच्छायं तस्य मरकतमणेश्छायेव छाया यस्य क्षीरस्य तत्तथा तत्समानवर्णमित्यर्थः ॥ ६४ ॥

दार्ष्टान्तिकमाह—

तथा तमः संभवमच्छमन्त-
र्बहिर्जडिम्नाऽन्वितमन्तरात्मा ।
जगच्चिदेकच्छवि चित्स्वरूपः
करोति सान्निध्यवशेन विश्वम् ॥ ६५ ॥

तथेति । तमसः संभवो यस्य जगतः तत्तमः संभवं जगत्तच्च कीदृशमन्तः स्वच्छन्देहाभ्यन्तरे अतिस्वच्छन्देहाद्बहिः जडिम्नान्वितं जाड्येन युक्तमधिभूतस्य पृथिव्यादेरन्तः करणादिवदतिस्वच्छत्वाभावात् जाड्यान्वितत्वव्यपदेशः अन्तरात्मा सर्वान्तरप्रत्यगात्मा चिदेकच्छवि चित्समानाकारं चैतन्यव्याप्तमिवेत्यर्थः । विश्वं सर्वं जगदिति सम्बन्धः ॥ ६५ ॥

एवमविकारिकूटस्थासङ्गचैतन्यस्वभावात्मस्वरूपसन्निधानेनाहंकारादेरेव चैतन्यव्याप्त्या कर्तृत्वभोक्तृत्वादिकं न त्वात्मनः तादृशचैतन्यस्वभावात्मैव त्वंपदार्थ इति दर्शितम् । एवमप्यात्मनश्चैतन्यैकरसत्वं न संभवति । अनात्मप्रतियोगिकभेदवैशिष्ट्यस्य सत्वात् । न च कल्पितप्रतियोगिकभेदेपि न वास्तवैकरसत्वभङ्ग इति वाच्यम् । एवमप्यात्मान्तरप्रतियोगिकभेदवैशिष्ट्यस्य सत्वात् धर्मप्रतियोगिनोः सत्वेन तद्भेदस्य सत्वात् न चात्मभेदोऽसिद्ध इति वाच्यम् सर्वानुभवसिद्धत्वादित्याशङ्क्योपाधिभेदादेवात्मनो भेदप्रत्ययः न तु स्वत इति सदृष्टान्तमाह—

तान्येव कार्यकरणानि बहुप्रकारं
भेदं च बिभ्रति भवानपि तत्र लग्नः ।
भेदेन भाति जलपात्रनिविष्टमूर्ति-
मार्तण्डमाण्डलवदन्वयमन्तरेण ॥ ६६ ॥

तान्येवेति। यानि कार्यकरणानि चैतन्यसन्निधानाच्चैतन्यव्याप्त्या कर्तृत्वादिकं भजन्ते तान्येव बहुप्रकारं भेदं बिभ्रति न त्वात्माभेदं बिभर्त्तीत्यर्थः। तर्हि कथमात्मनि भेदे प्रत्ययः तत्सम्बन्धवशादित्याह— भवानपीति। अद्वितीयासङ्गात्मस्वभावो भवानपि तत्र भिन्नेषु कार्यकरणेषु लग्नः प्रतिबिम्बितः सन् तदविवेकात् भेदेन भाति न तु वस्तुत इत्यर्थः। तत्र दृष्टान्तः— जलपात्रेति। जलपात्रे निविष्टा प्रतिबिम्बिता मूर्तिः स्वरूपं यस्य तच्च तन्मार्तण्डमण्डलं चेति तथोक्तं तद्वदित्यर्थः। यथैकस्मिन्नपि सूर्ये जलपात्रोपाधिभेदात् भेदप्रत्ययः तद्वदित्यर्थः। नन्वेवमप्युपाधिसम्बन्धवैशिष्ट्यस्य विद्यमानत्वान्नैकरसत्वमित्याशङ्क्योपाधिसम्बन्धस्यापि कल्पितत्वान्नैवमित्यभिप्रेत्याह—अन्वयमन्तरेणेति। वास्तवसम्बन्धं विना भेदेन भातीत्यर्थः ॥६६॥

एवमात्मभेदस्यौपाधिकत्वासमर्थनफलं समष्टिव्यष्ट्यात्मकद्विविधभोक्तृसाक्षितया सर्वत्रात्मन एकत्वसिद्धिरित्याह—

**अध्यात्ममेवमधिभूतमथाधिदैवं**
**सूत्रं विराजमपि पश्यसि साक्षिभूतः।**
**साक्षित्वकारणमशेषजगन्निदान-**
**मज्ञानमात्मचिदवज्वलितं सदैव ॥ ६७ ॥**

अध्यात्ममिति। व्यष्टिस्थूलसूक्ष्मदेहद्वयोपाधिकं चैतन्यमधिभूतं व्यष्टिपृथिव्याद्युपाधिकं चैतन्यं तस्य च भोक्तृत्वम् "इयं पृथिवी सर्वेषां भूतानां मध्वस्यै पृथिव्यै सर्वाणि भूतानि मध्वि"त्यादिना प्रदर्शितमधिदैवं व्यष्टिदेवाद्युपाधिकं चैतन्यं सूत्रं समष्टिसूक्ष्मभूताद्युपाधिकचैतन्यं विराजं समष्टिस्थूलभूताद्युपाधिकं चैतन्यम्। एतत्सर्वं त्वं पश्यसि। दर्शनविकारं व्यावर्त्तयति—साक्षिभूत इति। विकारं विना स्वप्रकाशसाक्षिरूपेणैव पश्यसीत्यर्थः। ननु कथमविकारिणः साक्षित्वं

तद्धि साक्ष्यसम्बन्धाधीनं सम्बन्धश्च विकारमन्तरेण न संभवतीत्यात्मनः कूटस्थत्वं भग्नमित्याशङ्क्य विकारं विनाप्यविद्यया साक्ष्यसम्बन्धोपपत्तेर्न कूटस्थत्वभङ्गः । न वा साक्षित्वाभाव इत्यभिप्रेत्याह— साक्षित्वकारणमिति । साक्षित्वप्रयोजकमित्यर्थः । अज्ञानस्य स्वातन्त्र्यं व्यावर्त्तयति— सदैवात्मचिदवज्वलितमिति । सर्वदात्मचैतन्यभास्यमेवेत्यर्थः ॥९७॥

तदेवं सर्वैरपि कार्यकारणाद्युपाधिभिरात्मैक एव भेदेन भातीत्यात्मनः सर्वशरीरेष्वेकत्वमुक्तं तत्र किं प्रमाणमित्याकाङ्क्षायामनुमानमित्याह—

देहव्यक्तिर्विप्रतीत्यास्पदत्वं
याता सर्वा तावकी तावकीव ।
देहव्यक्तिर्देहताकारणेन
तस्मादात्मा सर्वभूतस्थ एकः ॥ ९८ ॥

देहव्यक्तिरिति । देह एव व्यक्तिः देह इत्यर्थः । विप्रतीत्यास्पदत्वं यातैकस्य वा भोगायतनमनेकस्य वेति विवादास्पदत्वं प्राप्ता विवादविषयेति यावत् । अत्र विप्रतीत्यास्पदत्वं याता सर्वा देहव्यक्तिरिति पक्षनिर्देशः । तावकी तव भोगसाधिकेति साध्यनिर्देशः देहताकारणेन देहत्वादिति हेतुनिर्देशः । तावकी देहव्यक्तिरिवेति दृष्टान्तोपादानं तस्मादित्यादिना फलितप्रदर्शनं त्वद्देहव्यतिरिक्तानि सर्वाणि शरीराणि त्वदात्मनो भोगसाधनानि शरीरत्वात्त्वच्छरीरवदित्यनुमानात् सर्वस्यापि शरीरस्यैकात्मभोगसाधनत्वे सर्वशरीरेष्वैकात्म्यं सिद्ध्यतीत्यर्थः । एवमेवोत्तरप्रयोगेष्वनुमानप्रकारोऽभिप्रायश्च द्रष्टव्यः ॥ ९८ ॥

एवं स्थूलदेहपक्षीकारे सर्वशरीरेष्वैकात्म्यं प्रसाध्येदानीमन्तःकरणपक्षीकारेणापि तत्साधयति—

बुद्धिव्यक्तिर्विप्रतीत्यास्पदत्वं
याता सर्वा तावकी तावकीव ।
बुद्धिर्व्यक्तिर्बुद्धिताकारणेन
तस्मादात्मा सर्वभूतस्थ एकः ॥ ६९ ॥

बुद्धिव्यक्तिरिति ॥ ६९ ॥

बाह्येन्द्रियदशकपक्षीकारेणापि तत्साधयति—

अक्षव्यक्तिर्विप्रतीत्यास्पदत्वं
याता सर्वा तावकी तावकीव ।
अक्षव्यक्तिस्त्वक्षताकारणेन
तस्मादात्मा सर्वभूतस्थ एकः ॥ ७० ॥

अक्षव्यक्तिरिति । अक्षपदमिन्द्रियपरम् ॥ ७० ॥

इन्द्रियादिजन्यबुद्धिवृत्तिपक्षीकारेणापि तत्साधयति—

ज्ञानव्यक्तिर्विप्रतीत्यास्पदत्वं
याता सर्वा तावकी तावकीव ।
ज्ञानव्यक्तिर्ज्ञानताकारणेन
तस्मादात्मा सर्वभूतस्थ एकः ॥ ७१ ॥

ज्ञानव्यक्तिरिति । ज्ञानं बुद्धिवृत्तिः ॥ ७१ ॥

बुद्धिवृत्तिजन्यस्फुरणपक्षीकारेणापि तत्साधयति—

संविद्व्यक्तिर्विप्रतीत्यास्पदत्वं
याता सर्वा तावकी तावकीव ।

संविद्व्यक्तिः संविदात्मत्वहेतो-

स्तस्मादात्मा सर्वभूतस्थ एकः ॥ ७२ ॥

संविद्व्यक्तिरिति । संवित्प्रमाणफलं स्फुरणम् ॥ ७२ ॥

इष्टविषयसंविज्जन्यरागपक्षीकारेणापि तत्साधयति—

रागव्यक्तिर्विप्रतीत्यास्पदत्वं

याता सर्वा तावकी तावकीव ।

रागव्यक्ती रागताकारणेन

तस्मादात्मा सर्वभूतस्थ एकः ॥ ७३ ॥

रागव्यक्तिरिति । राग इच्छा ॥ ७३ ॥

अनिष्टसंविज्जन्यद्वेषपक्षीकारेणापि तत्साधयति—

द्वेषव्यक्तिर्विप्रतीत्यास्पदत्वं

याता सर्वा तावकी तावकीव ।

द्वेषव्यक्तिर्द्वेषताकारणेन

तस्मादात्मा सर्वभूतस्थ एकः ॥ ७४ ॥

द्वेषव्यक्तिरिति । द्वेषः क्रोधः । एवं सुखादावपीति द्रष्टव्यम् ॥ ७४ ॥

तर्हि शरीरादीनामेकस्यात्मनो भोगसाधनत्वे सर्वेष्वपि शरीरेषु तस्य भोक्तृत्वादिकमापतितमित्याशङ्क्य तस्य सर्वशरीरेष्वपि साक्षितयैकरूपत्वात्तत्सन्निधिबलायातचेतनभावबुद्ध्यादेरेव कर्तृत्वादिसंसारः । तदविवेकादात्मन्यपि सोऽविवेकिभिरारोप्यते बालैरिव

शुद्धेप्याकाशे तलमालिन्यादि न तु वस्तुतः संसारोस्तीत्युपसंहरति-

एवं सतीदमविवेकनिबन्धनं ते
कर्तृत्वमात्मनि विभाति न वस्तुभूतम् ।
बालेन कल्पितमतीव विशुद्धरूपे
व्योम्नीव भूम्नि मलिनत्वमबोधहेतोः ॥ ७५ ॥

एवं सतीति । आत्मनः सर्वशरीरेष्वेकरूपतया साक्षित्वे सतीत्यर्थः । अविवेकनिबन्धनं बुद्ध्याद्यविवेकहेतुकं ते आत्मनि तव स्वरूपभूते प्रत्यगात्मन्यतीवविशुद्धरूपे व्योम्नि मलिनत्वमिव भूम्नि व्योम्नि परिच्छिन्नत्वमिवेति शेषः । नन्वात्मनो देहादिव्यतिरेके सिद्ध तत्साक्षित्वादिकमुक्तं सिद्ध्यति तदेव तु न सिद्ध्यति तत्र प्रमाणाभावात् प्रत्युत ब्राह्मणोहमित्यादिरूपेणात्मबुद्धेर्देहादिविषयत्वमेव दृश्यते ततः कथमात्मनो नित्यमुक्तत्वं प्रत्युत देहादिव्यतिरेकासिद्धौ कर्तृत्वादिकमप्यात्मन एवापतितमिति गतं सर्वं गजशौचमिति चेन्न । देहादिकं स्वव्यतिरिक्तद्रष्टृकं दृश्यत्वाद्घटवदित्यनुमानेन तद्व्यतिरेकस्यापीह विवक्षितत्वात् । ब्राह्मणोहमित्यादिप्रतीतेश्च तादात्म्याध्यासनिमित्तत्वात् । न चाप्रयोजको हेतुः । उक्तसाध्याभावे जडदेहादिप्रकाशकाभावेन तदसिद्धिप्रसङ्गात् । देहादेः स्वस्वव्यापारे प्रवृत्त्यनुपपत्तेश्च । तस्मात् देहादेरेव कर्तृत्वादिकं नत्वात्मन इति भावः ॥७५॥

ननु देहादिव्यतिरिक्तचैतन्याभावे देहादिप्रकाशकाभावेन तदसिद्धिप्रसञ्जनं स्वव्यापारे प्रवृत्त्यनुपपत्त्यापादनं चायुक्तमादित्यादेस्तत्प्रकाशकस्य विद्यमानत्वादित्याशङ्क्याह—

बाह्यैरसौ रविनिशाकरवह्निवाग्भि-
र्ज्योतिर्गणैरुपकृतोऽपि हि कर्मजातम् ।

निर्वर्त्तयन्न खलु तावकमन्तरेण
चैतन्यसन्निधिबलं पुरुषः करोति ॥ ७६ ॥

वाह्यैरिति। असौ कार्यकरणोपाधिकः पुरुष इति सम्बन्धः। वाक्शब्दः ज्योतिर्गणैरुपकृतः ज्योतिर्गणैः प्रयुक्तः प्रकाशलक्षणोपकारवानपीत्यर्थः। कर्मजातं लौकिकवैदिकलक्षणं निर्वर्त्तयन्नपीत्यनुषज्यते। तावकं त्वत्स्वरूपभूतं चैतन्यसन्निधिबलं चैतन्यसन्निधिलक्षणं बलमन्तरेण विना न करोति कर्त्तुं न शक्नोतीत्यर्थः। यद्यपि शरीरः पुरुषः सूर्यादिवाह्यज्योतिर्गणैः प्रयुक्तप्रकाशलक्षणोपकारवान् सर्वकर्म निर्वर्त्तयन्नपि दृश्यते तथापि वाह्यज्योतिर्व्यतिरिक्तत्ववत् स्वरूपान्तरज्योतिर्विना पुरुषेण कर्म कर्त्तुमशक्यमेव वाह्यज्योतिर्भिस्तमोविरोधिलक्षणप्रकाशजननेऽप्यान्तरज्योतिर्विनाऽविद्याविरोधिलक्षणचैतन्याख्यप्रकाशाजननात् तादृशप्रकाशस्य च प्रवृत्तौ कारणत्वात्। ननु वाग्ज्योतिषस्तमोविरोधिलक्षणप्रकाशहेतुत्वादविद्याविरोधिप्रकाशहेतुत्वमेवेति न तदर्थमप्यान्तरज्योतिरपेक्षेति चेन्न हि वाक्साक्षादविद्याविरोधिप्रकाशहेतुर्जडत्वात् किन्तु चैतन्याभिव्यञ्जकवृत्त्युत्पादनेनैव ततस्तद्व्यतिरिक्तं चैतन्यज्योतिरवश्यमङ्गीकार्यमेवेति भावः ॥ ७६ ॥

ननु पुरुषस्य ज्योतिर्द्वयोपकृततयैव स्वव्यापारे प्रवृत्तौ स्वप्नेपि वाह्यज्योतिरपेक्षा स्यात् अविशेषात्। तथा च स्वप्ने चैकेन ज्योतिषोपकारसिद्धौ जाग्रत्यपि वाह्यज्योतिषैव तत्सिद्धिरिति न व्यतिरिक्तचैतन्यापेक्षेत्याशङ्क्याह—

ज्योतिर्द्वयान्तरित एव हि कर्मजातं
सर्वं करोति पुरुषोऽन्नमयः सदैव।
कर्मादिकारणविनिर्मितमस्य वाह्यं
ज्योतिस्त्वनित्यमनिमित्तकमान्तरं चित् ॥७७॥

ज्योतिर्द्वयेति । बाह्याभ्यन्तरलक्षणज्योतिर्द्वयव्याप्तः अन्नमयः स्थूलदेहोपाधिकः पुरुषो हि शारीरः कर्मजातं कुर्वन् चक्षुरादिकरणमुपादायैव प्रवर्त्तत इतिज्योतिर्द्वयोपकृत एव करोति । उभयज्योतिः प्रयुक्तोपकारस्य जागरणे संभवात् । विज्ञानमयस्तु पुरुषः स्वप्ने कर्मजातं कुर्वन् चक्षुरादिकरणमनुपादायैव प्रवर्त्तते तस्य तत्रोपरमात् । तथा च विज्ञानमयस्य स्वावभासकान्तरज्योतिरपेक्षायामपि न बाह्यज्योतिरपेक्षा तत्कृतोपकाराभावादित्यर्थः । ननूपकाराभावेन स्वप्ने बाह्यज्योतिषोऽनपेक्षेत्ययुक्तं बाह्यज्योतिषोपि जाग्रति प्रवृत्तिकारणत्वेन स्वप्नेपि तस्यावश्यकत्वे यस्य कस्य चिदुपकारस्य वक्तुं शक्यत्वादित्याशङ्क्य बाह्यं हि ज्योतिरन्नमयपुरुषादृष्टेनेवोपार्जितमिति तस्यैवोपकरोति न तु विज्ञानमयस्यापि तददृष्टानुपार्जितत्वादित्यभिप्रेत्याह—कर्मादीति । अस्यान्नमयपुरुषस्य कर्मादि कारणविनिर्मितमिति सम्बन्धः । आदिशब्देनाविद्यालक्षणं कारणमुच्यते । कर्मादिविनिर्मितत्वादेवानित्यं तर्ह्यान्तरज्योतिरपि तथैवेति विज्ञानमयस्यान्तरज्योतिःसम्बन्धोपि न भवेदित्याशङ्क्यान्तरज्योतिषो नित्यसिद्धत्वेन कर्मोपार्जितत्वाभावात् साधारण्यमेवेत्यभिप्रेत्याह-अनिमित्तकमिति । कर्माद्यजन्यमित्यर्थः । आन्तरं ज्योतिरित्यनुषज्यते तस्य स्वरूपं चिदिति ॥ ७७ ॥

ननु भवतु नाम बाह्यज्योतिरन्नमयकर्मोपार्जितं तत्कृतोपकारो विज्ञानमयस्यापि किन्न स्यात् न हि स्वेन प्रतिष्ठितो दीपः स्वस्यैवोपकरोतीत्याशङ्क्य विज्ञानमयस्य बाह्यज्योतिःप्रयुक्तोपकारस्य कस्यापि वक्तुमशक्यत्वान्नैवमित्यभिप्रेत्याह—

श्रोत्रादिजन्यमतिवृत्तिषु बाह्यशब्दा-
दर्थाकृतिर्विशति कर्मवशेन कर्त्तुः ।

बोधाकृतिस्तु तव सन्निधिमात्रहेतु-
र्धीवृत्तिषु प्रविशति स्वरसेन नित्यम् ॥ ७८ ॥

श्रोत्रादीति। श्रोत्रादीन्द्रियजन्या या मतिवृत्तयो बुद्धिवृत्तयस्तासु शब्दाद्यर्थाकृतिः शब्दरूपाद्यर्थाकारः प्रविशति प्रतिबिम्बतीत्यर्थः। कर्त्तुरन्नमयपुरुषस्य कर्मवशेनादृष्टवशेन। एतदुक्तं भवति। श्रोत्रादीन्द्रियाणां बाह्यशब्दादिभिः सम्बन्धात् पुरुषस्यादृष्टवशेन या बुद्धिवृत्तयो भवन्ति तास्वेव शब्दद्याकृतिप्रवेशो भवति नान्यासु तादृशस्य च वाग् ज्योतिषः स्वाकारवृत्तिप्रवेश एवोपकारः। आदित्यादिज्योतिषस्तु चक्षुरादिजन्यस्वाकारवृत्तौ प्रवेश एवोपकारः। रूपाकारवृत्तौ च तमोनिवृत्तिरेवोपकारः। स्वप्ने चेन्द्रियादीनामुपरतत्वात् तत्सम्बन्धजन्यवृत्तिर्नास्तीति न बाह्यज्योतिः कृत उपकारः सम्भवतीति। न च प्रदीपदृष्टान्तोऽत्र युक्तः कर्मणां प्रतिनियतफलत्वेन सामान्यतो दृष्टन्यायस्यात्राप्रवृत्तेरित्यर्थः। आन्तरज्योतिरुपकारस्तु नैवं कर्मादिनिमित्तः किन्तु स्वाभाविक एव तस्य बोधव्याप्तिरूपस्य तत्सन्निधिमात्रायत्तत्वादिन्द्रियद्वारानपेक्षणादित्याह—बोधाकृतिरिति। बोधस्वरूपं स्वरसेन स्वभावतः ॥ ७८ ॥

नन्वान्तरज्योतिरुपकारोप्यागन्तुक एव वृत्तेरागन्तुकत्वेन तत्र चैतन्यप्रतिफलनस्याप्यागन्तुकत्वस्यावश्यंभावात् ततस्तस्य कर्माधीनत्वमपि स्यात् तथा च तदुपकारः स्वप्ने न भवेदित्याशङ्क्य दृष्टान्तमुखेनागन्तुकत्वाभावमाह—

स्वाभाविकी हि वियदन्वितता घटादेः
क्षीरादिवस्तुघटना पुनरन्यहेतुः।
एवं धियामपि चिदन्वितताऽनिमित्ता
शब्दादिवस्तुघटना खलु कर्महेतुः ॥ ७९ ॥

स्वाभाविकीति। घटादेः वियदन्वितता आकाशसम्बन्धिता स्वाभाविकी स्वानन्तरभाव्यागन्तुककारणानपेक्षत्वात् क्षीरादिवस्तुघटना पुनः क्षीरादिपदार्थसम्बन्धस्त्वन्यहेतुः आगन्तुकः स्वानन्तरभाव्यागन्तुककारणापेक्षत्वात् एवं घटादेरिव धियां बुद्धिवृत्तीनामपि चिदन्वितता चैतन्यव्याप्तताऽनिमित्ता स्वाभाविकी शब्दादिवस्तुघटना-शब्दादेर्ज्योतिः सम्बन्धः कर्महेतुः कर्महेतुक इत्यर्थः। यथा लोके घटस्य वियता सम्बन्धः घटोत्पत्त्यनन्तरभाविकारणानपेक्षत्वाद् धूमस्येव वह्निना सम्बन्धः स्वाभाविक इति प्रसिद्धः क्षीरादिसम्बन्धस्त्वागन्तुककारणापेक्षत्वात् वह्नेरिव धूमसम्बन्ध आगन्तुक इति प्रसिद्धः। एवं बुद्धिवृत्तेरागन्तुकत्वेपि तस्याः सर्वगतान्तरज्योतिषः प्रतिफलनरूपः सम्बन्धः वृत्त्यनन्तरभाविकारणान्तरानपेक्षत्वात् स्वाभाविक एव बाह्यज्योतिःसम्बन्धस्त्विन्द्रियाद्यपेक्षत्वादागन्तुक एव। न च वृत्तौ सत्यां बाह्यज्योतिः सम्बन्धस्यापि नान्यापेक्षेति वाच्यम्। स्वप्नाकारेणात्मना स्थितायामपि तस्यामिन्द्रियादिविरहेण तद्दर्शनादान्तरज्योतिःसम्बन्धस्य तदापि वृत्तिमदन्तःकरणसाक्षित्वेन सत्त्वात्। किंच जाग्रत्यपि सत्यामेवान्तःकरणवृत्तौ शब्दाद्युपकारसमये आदित्याद्युपकारो न दृश्यते अस्ति तु तदाप्यान्तरज्योतिरुपकार इति स स्वाभाविक एव अतो न स्वप्ने तदभावप्रसङ्ग इत्यर्थः। तस्मादन्नमयादेरप्यनुग्राहकत्वेन तद्व्यतिरिक्तचैतन्यात्मनो वक्तव्यत्वात् न तस्य कर्तृत्वादिकमिति भावः॥ ७६॥

नन्वेवमात्मनः कर्तृत्वभोक्तृत्वाभावेपि प्रमाणफलाश्रयत्वं वक्तव्यम् अन्यस्याभावात् नचान्तःकरणं तदाश्रयो भवितुमर्हति तस्य जडत्वेन प्रमित्याश्रयत्वानुपपत्तेस्तथाचात्मनो विकारित्वं प्राप्तमित्याशङ्क्याह—

संवेदनं यदिह मानफलं प्रसिद्धं
तच्च प्रमातरि विकारिणि निष्ठितं नः ।
तस्य प्रमातुरपि साक्षितयाऽन्तरात्मा
सर्वस्य तिष्ठति भवानविकाररूपः ॥ ८० ॥

संवेदनमिति । संवेद्यतेऽनेनेति सम्वेदनं प्रमा । इह व्यवहारभूमौ मानफलं चक्षुरादिप्रमाणफलं प्रमातरि चित्तादाम्यमापन्नायां बुद्धौ यद्यप्यन्तःकरणं केवलं जडं तथापि चैतन्यव्याप्तं सत्प्रमाणफलप्रमित्याश्रयो भवत्येव । न च स्वरूपज्ञानस्य प्रमाणफलत्वं येन तदाश्रयत्वमन्तःकरणस्यानुपपन्नं स्यात् । तस्यानादिसिद्धत्वेन प्रमाणफलत्वाभावात् । तथा च प्रमाणफलं वोधव्याप्तवृत्तिरूपं ज्ञानं वोधतादात्म्यापन्नान्तःकरणे विकारिण्येव वर्त्तते न केवलत्वमपि अतो न कथमपि तव विकारित्वमित्यर्थः । किं तर्हि केवलस्य चैतन्यस्य कृत्यं यदि बुद्ध्यादिरेव प्रमाता कर्त्ता भोक्ता च भवेदित्याशङ्क्य तत्सत्तास्फूर्तिप्रदत्वमेवेत्याह-तस्येति । न केवलं प्रमाणफलाश्रयस्य प्रमातुरेव सत्तास्फूर्तिप्रदं किन्तु सर्वस्यापीत्याह—सर्वस्येति । साक्षित्वेनावस्थानफलमाह—अविकारिरूप इति । यथा लौकिकस्साक्षी स्वसाक्ष्यपुरुषादिगतव्यापारजातं स्वासने स्थित्वाऽविकार्येव पश्यति एवमन्तरात्मापि स्वमहिम्नि सच्चिदानन्दरूपे स्थित्वैव सर्वं पश्यति अतोऽयमविकार्येवेत्यर्थः ॥ ८० ॥

ननु तर्ह्यात्मनि कर्तृत्वादिप्रत्ययो न स्यात् न हि लौकिकं साक्षिणं तत्कर्त्तेति कश्चिद्व्यपदिशतीति चेन्न—बुद्ध्याद्यविवेकेन तदुपपत्तेरित्याह—

कर्त्रादिसन्निधिबलेन तवापि कर्तृ-
भोक्तृप्रमातृवपुरापतति भ्रमेण।
तद्बुद्धिसंश्रयमनात्मगतं प्रतीचि
शुद्धेऽपि पश्यसि तमःपटलावृताक्षः॥८१॥

कर्त्रादीति। तवाप्यविकारिकूटस्थासङ्गचैतन्यस्वभावस्यापीत्यर्थः। कर्तृभोक्तृप्रमातृवपुः भ्रमेणापतति प्राप्नोति। उक्तमेव स्पष्टयति—तद्बुद्धिसंश्रयमिति। त्वं तमःपटलावृताक्षः तमसावृतासङ्गानन्दस्वरूपचैतन्यः सन् शुद्धेऽपि प्रतीचि तद्बुद्धिसंश्रयं धर्मिणोस्तादात्म्यबुद्धिनिमित्त-कमनात्मगतबुद्ध्यादिगतं कर्तृत्वादिकं पश्यसि तादात्म्याध्यासव-शाद्बुध्यादिगतमपि त्वयि पश्यसीत्यर्थः॥ ८१ ॥

एवमात्मनः कर्तृत्वाद्यवभासकत्वान्न तद्धर्मकत्वमात्मन इत्यु-क्तम्। इदानीं कर्तृत्वादेर्दृश्यत्वात् द्रष्ट्रात्मधर्मत्वं नास्तीत्यनुमानेन साधयति—

कर्तृत्वादि च दृश्यवर्गपतितं द्रष्टुः स्वभावः कथं
संभाव्येत तव प्रसन्नविमलस्वच्छप्रकाशात्मनः।
यद्यद् दृश्यतया जगत्यभिमतं सर्वस्य तत्तद्भवेद्-
दूरं द्रष्टुरिति प्रसिद्धमखिलं भूभृत्समुद्रादिकम्॥८२॥

कर्तृत्वादि चेति। द्रष्टुः प्रसन्नविमलस्वच्छप्रकाशात्मनस्तवेति सम्बन्धः। स्वभावो धर्मः कथं सम्भाव्येत न कथमपीत्यर्थः। अनु-मानोपयोगितया सोदाहरणं व्याप्तिमाह—यद्यदिति। जगति यद्यत् दृश्यतया दृश्यत्वेन सर्वस्य सर्वजनस्याभिमतं तत्तदखिलं भूभृत् समुद्रादिकं द्रष्टुर्दूरं न धर्मो भवेदिति प्रसिद्धमिति सम्बन्धः। तथा

चेदमनुमानं कर्तृत्वादिकमात्मधर्मो न भवति दृश्यत्वात् भूभृदादिवदिति विवक्षितम् ॥ ८२ ॥

तदेवमात्मानात्मनोर्द्रष्टृदृश्यादिभावमाश्रित्य "आत्मनैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते विपल्येति"इति [ बृ० ४।३।६ ] श्रुतिगत्यनुरोधेन न्यायतश्च कर्तृत्वादिप्रहाणेन विशुद्धचिज्ज्योतिरात्मेति दर्शितम् । इदानीमागमापाये तदन्वयव्यतिरेकपरं स यत्र प्रस्वपितीत्यादिवाक्यमादायात्मशुद्धिमाह—

**एतस्माच्च न जाग्रतस्तव भवेत्स्वाभाविकी कर्तृता**
**यद्येषा स्वत एव किं न भवति स्वप्नेऽपि ते तिष्ठतः ।**
**यत्स्वप्ने परिपश्यसि त्वमखिलं त्वन्मायया निर्मितं**
**कर्तृत्वादि न सत्यमत्र घटते कार्त्स्न्यानभिव्यक्तितः॥८३॥**

एतस्मादिति । एतच्छब्दार्थमेवागमापायित्वमाह—यदीति । यद्येषा कर्तृता जाग्रतस्तव स्वतः स्वाभाविक्येव स्यात् स्वप्नेपि तिष्ठतस्तव चैतन्यवत् सा तथा किं न स्यात् स्वरूपस्य तदानीमपि भावात् । ततः कर्तृत्वादेरागमापायरूपत्वेन व्यभिचारात् त्वद्रूपस्य चावस्थात्रयानुयायित्वात् रज्जुसर्पवन्न तव कर्तृत्वादिकं वास्तवमित्यर्थः । ननु स्वप्नेपि जाग्रतीव कर्तृत्वादिव्यवहारो दृश्यते तत्कथं कर्तृत्वादेरागमापायित्वमित्याशङ्क्य स्वप्ने कर्तृत्वादिव्यवहारस्य मायामात्रत्वेन जाग्रद्विलक्षणत्वान्मैवमित्याह—यदिति । यत् रथादिकं स्वप्नदृष्टरथादेर्मायिकत्वे सौत्रं हेतुमाह—कार्त्स्न्येति । स्वोचितकारणेनाजन्यत्वादित्यर्थः । न हि स्वप्नद्रष्टुः स्वप्नदृष्टरथादिनिर्माणोचितकारणमस्ति । अतस्तदभावेपि जायमानत्वात् तन्मायिकमित्यर्थः । फलितमाह—कर्तृत्वादीति । अत्र स्वप्ने ॥ ८३ ॥

सूत्रस्थकात्स्न्यपदस्यार्थान्तरमाह—

**कात्स्न्यं ह्यिष्टमबाधनं न खलु तत्स्वप्नस्य जाग्रद्धिया**
**बाधाद्बाधितमेव सत्यमिति चेन्नैवं विरोधान्मिथः।**
**सत्यत्वे न हि बाधितत्वघटना बाधे च सत्यं कुतः**
**सत्यं बाधितमित्यतीव पदयोः सम्बन्धिता दुर्घटा ॥८४॥**

कात्स्न्यमिति। अबाधनं बाधाभावः। तथा चाबाध्यत्वेनानुत्पन्नत्वात् बाधितत्वादिति सौत्रहेतोरर्थः। नचासिद्धिरित्याह-न खल्विति। तदबाधनं स्वप्नस्याबाधाभावे सर्वानुभवं प्रमाणयति—जाग्रद्धियेति। जाग्रद्बोधेन बाधदर्शनादित्यर्थः। बाधितमपि तत्सत्यमेवेति कश्चित्तन्मतमनूद्य निराकरोति—बाधितमिति। बाधितमपि सत्यमेवेति चेन्नैवं मिथो विरोधात्। बाधितत्वसत्यत्वयोः परस्परं विरोधादित्यर्थः। विरोधमेव स्पष्टयति—सत्यत्व इति। बाधितत्वघटना बाधितत्वसंभवः। वस्तुनो बाधे च तद्वस्तु कुतः सत्यं स्यात् न कुतोपि तयोः परस्पराभावनियतत्वादित्यर्थः। बाधितं सत्यमिति पदप्रयोगोपि व्याहतत्वान्न संभवतीत्याह—सत्यमिति। सत्यं बाधितमितिपदयोः सम्बन्धिता समानाधिकृतता अतीव दुर्घटा दुरुपपादा व्याहतेरित्यर्थः। सत्यपदस्य लोके बाधानर्हे व्युत्पन्नत्वाद्बाधितपदस्यानृत एव व्युत्पन्नत्वादिति भावः॥ ८४॥

ननु सूत्रकारो मायामात्रं त्विति स्वप्नस्य मायिकत्वं दर्शयन् तस्य वास्तवत्वमेव मनुते अन्यथा अविद्यामात्रमित्येवासूचयिष्यदित्याशङ्क्य सूत्रकारस्याविद्यामयेपि स्वप्ने मायिकत्ववचनं न तस्य वास्तवत्वाभिप्रायं तथात्वे बाधितं स्वप्नं वास्तवं बोधयतस्तस्यानाप्तत्वप्रसङ्गात् किन्त्वज्ञानस्यैव मायात्वज्ञापनाय तदपि प्रपञ्चो

नाविद्यात्मकः किन्तु सर्वसाधारणेश्वरमायामय एवेति मन्दबुद्धिभिः सत्यत्वेनाभिमतप्रपञ्चस्याविद्यात्मकत्वेन ज्ञाननिवर्त्यत्वं दर्शयितुमित्यभिप्रेत्य मायाविद्ययोरेकत्वसाधनमुखेन जाग्रतोप्याविद्यकत्वं साधयाम इति प्रतिजानीते—

मायामेनां जागरे लोकसिद्धा-
मुक्त्वा तद्वत्स्वप्नमायां विविच्य ।
शक्तिव्याप्ती तत्र सिद्धे गृहीत्वा
मायासिद्धं जागरं साधयामः ॥ ८५ ॥

मायामिति । लोकसिद्धां लौकिकमायिकहस्त्याद्युपादानत्वेन सिद्धामित्यर्थः । उक्त्वा अविद्यात्वेन प्रतिपाद्येत्यर्थः । तद्वत् लौकिकमायावत् स्वप्नमायामपि विविच्याविद्यात्वेन प्रदर्श्य तत्राविद्यात्वेन निर्णीतयोः लौकिकस्वप्नमाययोः सिद्धे प्रसिद्धे शक्तिव्याप्तिं गृहीत्वा मायापदशक्तिं मायामयत्वव्याप्तत्वेनाभिमतलिङ्गानां दृश्यत्वजडत्वादीनामविद्यामयत्वव्याप्तिं च वृद्धप्रयोगसहचारदर्शनाभ्यां गृहीत्वा सिद्धे मायात्वेन सिद्धे तत्राज्ञान इति वा माया सिद्धं सर्वसाधारणेश्वरमायामयत्वेनाभिमतं जागरं जाग्रत्प्रपञ्चं मायात्वेन मायाशब्दप्रयोगेण दृश्यत्वाद्यनुमानेन चाविद्यात्मकत्वेन साधयाम इत्यर्थः ॥ ८५ ॥

तत्रादौ लौकिकमायायाः स्वरूपं निर्धारयन् तस्या अविद्यातिरिक्तत्वं निषेधति—

लोके हि मायाधिगता न माया
तमोऽतिरिक्ताऽस्ति निरूप्यमाणा ।

व्याप्तिश्च शक्तिश्च निरूप्यमाणा
भविष्यतीहैव तु नेतरत्र ॥ ८६ ॥

लोके हीति । लोके मायाविगता मायाविगतत्वेन प्रसिद्धा-या माया सा निरूप्यमाणा विचार्यमाणा तमोऽतिरिक्ता नास्ति द्रष्टृ-विद्यातिरेकेण निरूपयितुं न शक्यत इत्यर्थः । ननु किमिति न शक्येत मायाशब्देनाविद्यातिरिक्तवस्तुनः प्रतिपादनात् सर्वैर्दृश्यमानत्वलिङ्गेना-विद्यातिरिक्तत्वानुमानाच्चेत्यत्राह व्याप्तिरिति । सर्वदृश्यत्वादेर्व्याप्तिः मायापदशक्तिशब्दश्चेहैव अविद्यायामेव भविष्यति नेतरत्राविद्याव्यतिरिक्तवस्तुनीत्यर्थः । दृश्यत्वस्याविद्यामयत्वेन व्याप्यत्वात् सर्वदृश्यत्वमपि तेन व्याप्तं भवत्येव न हि संभवति धूमो वह्नि-व्याप्यो नीलधूमस्तु तद्व्याप्यो न भवतीति शक्तिश्चाविद्यायामेवेति वक्ष्यत इति भावः ॥ ८६ ॥

ननु लोके मन्त्रादियुक्त एव पुरुषे मायाविशब्दप्रयोगो दृश्यते न हि मन्त्रादिरविद्या भवति अतोऽविद्याव्यतिरिक्तैव मायेत्या शङ्क्याह--

मायाविनो न मणिमन्त्रमथौषधं वा
मायेति शक्यमिह वर्णयितुं कुतश्चेत् ।
सत्यं हि तत्सकलमिष्टमियं त्वसत्या
माया ततोऽन्यदिह किंचन वर्णनीयम् ॥ ८७ ॥

मायाविन इति । मणिश्च मन्त्रश्च मणिमन्त्रमिति समाहारद्वन्द्वः औषधं मूलिकाविशेषः मायाविनो माणिमन्त्रौषधं वा मायेति वर्ण-यितुं न शक्यं मण्यादीनां प्रत्येकमननुगमादित्यर्थः । दूषणान्तराभि-धित्सया पृच्छति—कुतश्चेदिति । विरोधादित्याह सत्यं हीति । हि यतः

तन्मन्त्रादिकं सकलं सत्यमिष्टमियं माया तु असत्याऽप्रसिद्धा अतः सत्यासत्ययोः परस्परविरोधान्न मण्यादिकं माया भवति। ततश्चान्यन्मण्यतिरिक्तमेव किञ्चिन्मायाशब्दवाच्यं वर्णनीयमित्यर्थः। ननु सत्यस्यैव मण्यादेर्मायाशब्दवाच्यत्वं भवतु न चासत्यवाचक मायापदवाच्यत्वं सत्यस्यानुपपन्नमिति शङ्क्यम्। मायापरस्यासत्य वाचकत्वेनाद्यप्यकल्पनात्। किंच ज्ञायमानेऽर्थे तद्वाचकशब्दप्रयोगो वृद्धानां न च मायाविगतं मन्त्राद्यतिरिक्तं किंचित्पार्श्वस्थेनानुभूयते यन्मायापदवाच्यं स्यात्। नन्वनुमानेन ज्ञायत इति चेन्न—अनुमानस्य कारणमात्राविषयस्योभयसिद्धमन्त्रादिविषयत्वेनार्थान्तरत्वात्। न च मन्त्राद्यतिरिक्तमायाकार्यत्वं कार्यस्यानुमीयत इति वाच्यम्। व्याप्तेरसिद्धेः नचार्थापत्त्या तत्परिज्ञानम् अन्यथाप्युपपत्तेः। नापि शब्दाच्छक्तेरद्याप्यनिरूपणात् ततः कथमियं त्वसत्येति। मायाया असत्यत्वं सिद्धवत्कृत्य मन्त्राद्यतिरिक्तत्वमुच्यते इति चेदुच्यते न तावन्मायाशब्दस्य मन्त्रादिवाचकत्वं संभवति। अननुगमादित्युक्तम्। एकार्थत्वे संभवत्यनेकार्थकल्पनायोगाच्च। न च मन्त्राद्यतिरिक्तमायाया अननुभूयमानत्वात् तच्छब्दप्रयोगानुपपत्तिः। अनुमानेनैव तज्ज्ञानात्। तथा हि वृद्धादीनां हि न केवलमण्यादियुक्ते पुरुषे मायाविशब्दप्रयोगोस्ति। हस्त्यादिमिथ्यावस्तुदर्शनविरहदशायां मान्त्रिकत्वादिना हि न केवलमण्यादियुक्ते पुरुषे मायाविशब्दप्रयोगोस्ति। हस्त्यादिमिथ्यावस्तुदर्शनविरहदशायां मान्त्रिकत्वादिना परिज्ञातेपि पुरुषे तच्छब्दप्रयोगादर्शनात् न हि गायत्रीं शिवं हरिं वा भजन्तं वज्रवैदूर्यादिखचिताङ्गुलीयकादियुक्तं दशमूलकषायादिपरिज्ञानिनं वा मायावीति व्यवहरन्ति। ननु मन्त्रादिविशेष एव मायाशब्दवाच्य इति चेन्न। तद्विशेषस्य मिथ्यावस्तुकार्यदर्शनं विना दुर्ज्ञेयत्वात् तर्हि तेनैव तज्ज्ञायत इति चेन्न। आवश्यकमिथ्यावस्तुदर्शनेनानुमेयस्य कारणस्य मिथ्यत्वेनैवानुमितत्वात्। मन्त्रादेश्च सत्यत्वेन तथानुमाना-

संभवात्। तस्मान्मिथ्यावस्त्वेव लोके मायापदवाच्यमिति इयं मिथ्या भूतगजादिकारणत्वेनानुमिता माया असत्येति मायाया असत्यत्वं सिद्धवत्कार उपपन्न इति भाव ॥ ८७ ॥

ननु मायाविनो मन्त्राद्याहितं गजादिविभ्रमानुगुणं किञ्चित्सामर्थ्यमस्तीति वक्तव्यम्। असमर्थस्य विभ्रमहेतुत्वानुपपत्तेः। तथा च सामर्थ्यमेव मायापदवाच्यमित्याशङ्कामनुवदति—

**सामर्थ्यमस्य मणिमन्त्रनिमित्तमस्ति**
**माया भविष्यति जनभ्रमहेतुरेषा।**
**इत्युच्यते यदि तदप्यतिफल्गु कस्मात्**
**सामर्थ्यमप्यवितथं हि तदिष्टमस्य ॥ ८८ ॥**

सामर्थ्यमिति। अस्य मायाविनः मणिमन्त्रनिमित्तमिति बहुव्रीहिः अस्य मणिमन्त्रनिमित्तं जनभ्रमहेतुर्यत्सामर्थ्यमस्ति एषा माया भविष्यतीति उच्यते यदीति सम्बन्धः। मन्त्रादेर्मायात्वपक्षोक्तदोषस्यात्रापि संभवादिदमप्यसाध्वित्याह—तदप्यतिफल्गिवति। अतितुच्छमित्यर्थः। तदेव दूषणमाकाङ्क्षापूर्वकमाह—तस्मादित्यादिना। अस्य मायाविनः तन्मन्त्रादिनिमित्तं सामर्थ्यमपि अवितथं सत्यं हि यतः अत इत्यर्थः। एतदुक्तं भवति। मन्त्राद्याहितं सामर्थ्यं न तावदसत्यं भवितुमर्हति असत्यादसत्यजन्मानुपपत्तेः अविद्यातो व्यतिरेकाभावप्रसङ्गाच्च। अविद्याव्यतिरिक्तासत्यवस्तुनि मानाभावात् सत्यत्वे तस्य गजादिविभ्रमेणानुपस्थितत्वात् उपस्थापकान्तराभावाच्च शक्यभेदेन शक्तिभेदादननुगमाच्च न तस्य मायापदवाच्यत्वमिति ॥ ८८ ॥

यत्तु कश्चिन्मायाविनो मन्त्राद्यनाधेयशक्तिविशेष एव मायेत्याह तदपि विकल्पासहत्वेन दूषयति—

**न च शक्तिरस्यि सहजा यदि वा**
**जनिताऽस्ति केनचिदिति ब्रुवतः ।**
**परिपुष्कलं स्वमतनिर्वहणं**
**भवितुं क्षमं तदनिरूपणतः ॥ ८६ ॥**

न चेति । सहजा शरीरेण सहोत्पन्ना केनचिदुपदेष्टृपुरुषेण जनितोत्पादिता परिपुष्कलं सम्पूर्णं समीचीनमित्यर्थः । स्वमतनिर्वहणं स्वमतनिर्वाहः सा शक्तिः किं सहजा उत केनचित्कृतोभयथाप्येवं ब्रुवतः स्वपक्षनिर्वाहः समीचीनो न भवेदित्यर्थः । तत्र हेतुमाह— तदनिरूपणत इति । सहजत्वादेरनिरूपणाद्दित्यर्थः ॥ ८६ ॥

सहजत्वपक्षे दुर्निरूपत्वमाह—

**न च शुक्रशोणितसमागमने**
**न च गर्भशायिन इयं विदिता ।**
**न च मातृयोनिविवरादुदरा-**
**दपसर्पतो बहिरियं घटते ॥ ९० ॥**

न च शुक्रेति । शुक्रशोणितसमागमने शुक्रशोणितसम्बन्धदशायामियं सहजशक्तिर्न घटते । गर्भशायिनः जरायुवासिनश्चेयं न विदिता । उदरादित्यवधौ पञ्चमी । मातृयोनिविवरादिति हेतौ पञ्चमी । अपसर्पतो निर्गच्छतः उदराद्बहिर्मातृयोनिद्वाराऽपसर्पतोपीयं न घटत इत्यर्थः । एतदुक्तं भवति । सहजातत्वं हि सहजत्वं तत्र कदा सहजन्म किं निषेककाले शक्तेः शरीरेण जन्म । उत गर्भवासावस्थायाम् । अथवा मातुरुदरात् बहिर्निःसरणवेलायाम् । न सर्वथापि सर्वशरीरेषु तस्या उपलम्भ प्रसङ्गात् । न हि साधारणकारणाज्जायमानायास्तस्याः शरीरविशेषेण सहोत्पत्तिः संगच्छत इति ॥ ९० ॥

न द्वितीयः उपदेष्टृपुरुषेण मन्त्रादिप्रदानव्यतिरेकेणान्यस्याकरणात्तस्य च मायात्वाभावादित्याह—

मणिमन्त्रमौषधमितीदृशकं
विरहय्य नापरमिहार्पयति ।
पुरुषोऽपि कश्चिदत एवमियं
परतोऽपि नास्य घटनामटति ॥ ६१ ॥

मणीति । ईदृशकं वस्त्विति शेषः । अपरं मन्त्राद्यतिरिक्तं मायाख्यं वस्तु इह शिष्ये पुरुषो नार्पयति नादधाति पुरुषः उपदेष्टा अतः यतो नार्पयति अतः एवं सहजत्ववदियं शक्तिरस्य मायाविनः न घटनामटत्युत्पत्तिं न प्राप्नोतीत्यर्थः ॥ ६१ ॥

ननु यद्यपि शक्तिः सहजत्वादिरूपेण निरूपयितुं न शक्यते तथापि प्रसिद्धत्वादेव लोके काचनमायाभ्युपेया । सा च मायाविशक्तिरेव भविष्यति मायायाः कार्यैकोन्नेयकारणधर्मत्वाच्छक्तेश्चैवंरूपत्वात् । न च शक्तेः सत्याया विभ्रमेणानुपस्थितत्वात्कथं मायापदप्रयोगस्तद्विषय इति वाच्यम् । सत्यत्वासत्यत्वाकारमनपेक्ष्य भ्रमहेतुत्वाकारेण कार्यानुमितेन तस्या मायापदवाच्यत्वोपपत्तेरिति शङ्कते—

अन्यस्य विभ्रमकरी पुरुषस्य शक्ति-
राकारमन्यमनपेक्ष्य मनीषिता चेत् ।
वाच्येह लौकिकजनव्यवहारभूमौ
मायागिरस्तदपि दुर्घटमिष्टहानेः ॥ ६२ ॥

अन्यस्येति। मायाविनोऽन्यस्येत्यर्थः। पुरुषस्य मायाविनः अन्यं भ्रमहेतुत्वादन्यमाकारमनपेक्ष्य समीक्षिता विभ्रमेणानुमिता सती इह लौकिकजनव्यवहारभूमौ मायागिरः मायापदस्य वाच्या चेत्। वाच्येत्यङ्गीक्रियते चेदित्यर्थः। तद् दूषयति— तद्दुर्घटमिति। किमेतदाचार्यमताननुसारिण एकदेशिनश्चोद्यम्। उत तदनुसारिणः। नाद्य इत्याह—इष्टहानेरिति। विभ्रमहेतुत्वेन कार्योन्नेयकारणत्वं काचादेश्च मायातिरिक्तदोषत्वमित्यादेरिष्टस्य हानेरित्यर्थः॥ ९२॥

द्वितीये तु मायायाः सत्यत्वं भाष्यकृद्वचनविरुद्धमित्याह—

मायामयत्ववचनादखिलं मृषेति
यद्भाष्यकारवचनं तदसंगतं स्यात्।
प्रत्यक्षमुत्सृजसि कारणमन्यदन्य-
द्यत्किंचिदानयसि कष्टमतः किमन्यत्॥ ९३॥

मायामयत्वेति। अखिलं स्वप्नदृष्टं सर्वं मृषैव कुतः मायामयत्ववचनान्मायामात्रमिति सूत्रकारवचनादिति यद्भाष्यकारवचनं तदकारणमनर्थकं बाधितं स्यात्। मायायाः सत्यत्वे मायाकार्यस्य स्वप्नपदार्थस्य मृषात्ववचनानुपपत्तेरित्यर्थः। किञ्चाविद्याया भ्रान्त्युपादानस्य स्वात्मनि प्रत्यक्षत्वादज्ञानमेव मिथ्याहस्त्याद्युपादानं मायापदवाच्यमस्तु सामान्योपस्थितस्य त्यागायोगादनुपस्थितकल्पनायोगाच्चेत्यभिप्रेत्य पक्षद्वयसाधारणदूषणमाह—प्रत्यक्षमिति। प्रत्यक्षतोऽनुभूयमानं सामान्यतोदृष्टेनात्रापि प्राप्तमविद्याख्यं कारणमुत्सृज्यान्यदन्यच्छलतयादिकं यत्किंचित् भ्रान्तिकारणत्वायोग्यमानयसि कारणत्वेन प्रापयसि अतोऽन्यत्किं कष्टमित्यर्थः॥ ९३॥

नन्वज्ञानस्य प्रत्यक्षेण प्रसिद्धावपि न मायायाः प्रसिद्धिस्तस्यास्ततोऽतिरिक्तत्वात् यतो जगन्निर्माणनिपुणपरमेश्वरशक्तिरेव श्रुति स्मृतिभ्यां मायेत्युच्यते अतः कथं प्रसिद्धिपरित्याग इत्याशङ्क्याज्ञानस्यैव परमेश्वरशक्तित्वात् तत्प्रसिद्धेरेवास्या अपि प्रसिद्धिरिति प्रसिद्धित्यागोऽस्त्येवेत्याह—

अज्ञानमेव च भविष्यति शक्तिरेषा
सर्वप्रपञ्चजननी परमेश्वरस्य ।
मायाश्रुतिस्मृतिवचोभिरुदीर्यमाणा
शक्तिग्रहो हि परविभ्रमहेतुशक्तौ ॥ ९४ ॥

अज्ञानमेवेति । नन्वज्ञानमेव मायेत्यनुपपन्नं यतो नाज्ञानिनि पार्श्वस्थे मायाविशब्दः प्रयुज्यत इत्याशङ्क्याज्ञान एव माया शब्दस्य शक्तिर्गृह्यते इत्याह—शक्तिग्रहोपीति । अज्ञानस्य हि द्वे शक्ती कार्यबलादवगम्येते प्रतिनियतविक्षेपविभ्रमजननी काचिदन्यसाधारणविभ्रमजननी काचित् ते च शक्ती साधारणासाधारणक्षोभकमण्यादिकाचादिदोषाभ्यामभिव्यज्येते । तत्रान्यसाधारणविभ्रमजनकशक्तिमत्यज्ञाने मायाशब्दव्युत्पत्तिर्गृह्यते न त्वसाधारणविभ्रमजनकशक्तिमति । तथाचाज्ञानमेव मायेति नानुपपन्नमिति भावः ॥९४

नन्विन्द्रो मायाभिः पुरुरूप ईयत इत्यादिना ब्रह्मणो बहुभवनसर्वज्ञत्वादौ मायायाः प्रयोजकत्वं श्रूयते । ततो लौकिकमायापदस्याज्ञानवाचकत्वेपि वेदे तस्य प्रसिद्धार्थसर्वज्ञादिपदसमभिव्याहारबलेनाज्ञानातिरिक्तमायायामेव व्युत्पत्तिर्वक्तव्या । स्वाश्रये व्यामोहहेतोरज्ञानस्य सर्वज्ञत्वाद्युपपादकत्वानुपपत्तेरित्याशङ्क्य निराकरोति—

न च प्रसिद्धार्थपदान्तराणां
प्रयोगसान्निध्यवशेन शक्तिः ।
ग्रहीष्यतेऽस्येति समञ्जसं स्या-
दलौकिके शब्द इदं हि युक्तम् ॥ ९५ ॥

न च प्रसिद्धेति । प्रसिद्धार्थपदान्तराणां सर्वज्ञादिपदानां प्रयोगसान्निध्यवशेन समभिव्याहारबलेनास्य मायापदस्य शक्तिर्ग्रहीष्यत इत्येतन्न समञ्जसं स्यादिति सम्बन्धः । तत्र हेतुः—अलौकिक इति । हिशब्दो हेतौ । यतः अलौकिके लोकाव्युत्पन्नशक्तिक एव यूपाहवनीयादौ शब्दे इदं प्रसिद्धार्थसमभिव्याहारेण व्युत्पत्तिरित्येतद्युक्तमतो मायाशब्दे तन्न समञ्जसमित्यर्थः । अज्ञानस्य हि साधारणासाधारणविक्षेपशक्तिद्वयवदाश्रयभेदेन व्यामोहकाव्यामोहकत्वमप्यनुभवसिद्धं श्रुतसर्वज्ञत्वाद्युपपत्तिगृहीतं च कल्प्यते । धर्मिधर्मोभयकल्पनातोऽस्य लघुत्वात् । ततोऽज्ञानस्य स्वाश्रयभूतेश्वराधीनस्य तद्व्यामोहकत्वाभावात् तेनैव तस्य सर्वज्ञत्वाद्युपपत्तिरिति भावः ॥ ९५ ॥

ननु मायाशब्दस्याप्यलौकिकत्वात् प्रसिद्धार्थपदसमभिव्याहारेणैव व्युत्पत्तिरित्याशङ्क्याह —

अयं तु मायेति न शब्द एव-
मलौकिको लौकिक एव तस्मात् ।
यदर्थवाची जगति प्रसिद्ध-
स्तमेव वेदेऽपि स वक्ष्यतीह ॥ ९६ ॥

अयमित्यति । मायेत्ययंशब्दस्त्वलौकिको न भवति किन्त्वेवमुक्तप्रकारेण लोकव्युत्पन्नत्वाल्लौकिक एव । ननु लोकव्युत्पन्नस्यापि वेदे-

ऽर्थान्तरे व्युत्पत्तिः किं न स्यादित्याशङ्क्य लोकवेदाधिकरणन्याय-विरोधान्नैवमित्याह—तस्मादित्यादिना । यतो मायाशब्दो लोकव्युत्पन्नस्त-स्मात् यदर्थवाची यस्य साधारणविभ्रमजनकशक्तिमदज्ञानस्य वाचको जगतिप्रसिद्धस्तं साधारणशक्तिमदज्ञानरूपमर्थमेवेह वेदे स माया-शब्दो वक्ष्यति । लोकवेदाधिकरणन्यायादित्यर्थः ॥ ९६ ॥

ननूद्भिच्चित्रादिशब्दानां लोके खननसाधनद्रव्यविशेषे वर्णविशेषे च योगवृत्त्याप्रसिद्धार्थानामप्युद्भिदा यजेत पशुकामः चित्रया यजेत पशुकाम इत्येवमादौ यजत्यर्थसामानाधिकरण्यादिनाऽलौकिककर्म-परत्वमवसीयते तत्कथं लोके व्युत्पन्नानां शब्दानां वेदे व्युत्पत्त्यन्तर-राहित्यमिति शङ्कते—

**ननूद्भिदादेर्यदि नाम लोके**
**प्रसिद्धमर्थान्तरवाचकत्वम् ।**
**तथाऽपि भावार्थनिपीडितस्य**
**विजानते कर्मणि शक्तिमस्य ॥ ९७ ॥**

ननूद्भिदादेरिति । उद्भिदादिपदस्येत्यर्थः । यदि नाम यद्यपीत्यर्थः । भावार्थनिपीडितस्य धात्वर्थसामानाधिकरण्येन संकुचितस्येत्यर्थः अस्य—उद्भिदादि पदस्य ॥ ९७ ॥

उद्भिदादिपदस्य अलौकिककर्मपरत्वमस्तीत्येतदङ्गीकरोति—

**सत्यं न गत्यन्तरमस्ति तत्र**
**ततस्तथा निश्चितमत्र नैवम् ।**
**मायागिरोऽज्ञाननिवेदनेऽपि**
**न कदाचिदत्रानुपपत्तिरास्ति ॥ ९८ ॥**

सत्यमिति । तर्हि तद्वन्मायापदस्यापि वेदेऽर्थान्तरे व्युत्पत्तिप्रसङ्गः। न वैषम्यादित्याह—न गत्यन्तरमिति। तत्रोद्भिदादौ ततः यतो गत्यन्तरं नास्ति ततस्तथाऽलौकिककर्मपरत्वेन युक्तं हि तत्रोद्भिदादिशब्दस्यालौकिककर्मपरत्वं गत्यन्तराभावात् । तथा ह्युद्भिदादिशब्दस्य वेदेपि लोकप्रसिद्धार्थत्वाश्रयणे किमेतद्वाक्यमुद्भिदादिगुणविधिपरं किं वा तद्विशिष्टयागविधिपरम्। नाद्यः। एकस्मिन्वाक्ये पश्वादिफलोद्देशेनापूर्वत्वाद्यागविधौ यागोद्देशेन गुणविधौ चाङ्गीकर्त्तव्ये यागस्य गुणविधिं प्रति साध्यतया प्राधान्यं सिद्धवन्निर्देश्यत्वलक्षणमुद्देश्यत्वं ज्ञातज्ञायमानत्वलक्षणमनूद्यमानत्वं तथा फलं प्रति साधनत्वेन गुणत्वं प्राधान्यविरुद्धमुद्देश्यत्वविरुद्धमनुष्ठेयत्वमनूद्यमानत्वविरुद्धमज्ञातज्ञाप्यत्वलक्षणविधेयत्वं चेति विरुद्धत्रिकद्वयापत्तेः। न द्वितीयः—उद्भिद्वतेति मत्वर्थलक्षणाप्रसङ्गात्। तस्याश्चान्याय्यत्वात् । न च सोमेन यजेतेत्यत्रेव सा न दोषायेति वाच्यम् युक्तं हि तत्र लोके लताविशेषरूढस्य सोमपदस्य लक्षणां विना यजत्यर्थपरत्वानुपपत्तेर्लक्षणापरत्वम्। नचोद्भिदादिशब्दा लोके द्रव्यादिविशेषे रूढ्या वर्त्तन्ते किन्तूद्भिनत्तीत्यादियोगेनैव योगश्च कर्मण्यपि कथं चित्संभवत्येव । ततो धात्वर्थसामानाधिकरण्यादुद्भिदादिशब्दानामलौकिकार्थपरत्वमेवोचितं नैवं मायाशब्दस्य काचिदनुपपत्तिरस्ति यया वेदे तस्यार्थान्तरपरत्वमाश्रीयेतेत्याह —अत्र नैवमित्यादिना। अत्र मायापदे एवमुद्भिदादाविव गत्यन्तरं नेति न किन्त्वस्त्येवेत्यर्थः। तदेवाह —मायागिर इति ॥ ६८ ॥

ननु कथमनुपपत्त्यभावः यावता स्वाश्रयावारकस्याज्ञानस्य सर्वज्ञेश्वरोपाधित्वमनुपपन्नमेव तस्मात्तदुपाधिभूतमायाऽज्ञानातिरिक्ता स्वीकर्त्तव्येत्याशङ्क्याज्ञानस्याकारभेदस्य वर्णितत्वात् सत्वगुणप्राधान्येन स्वाश्रयाव्यामोहकत्वाकारेणैव तदुपाधित्वं न तु स्वाश्रयमोहकत्वाकारेण अतो न काचिदनुपपत्तिरित्यभिप्रेत्याह—

अज्ञानं जडशक्तिमात्रवपुषा सर्वेश्वरस्येष्यते
सर्वज्ञत्वविरोधि तन्न च भवेदुक्तप्रकारेण नः ।
सर्वज्ञेश्वरसंश्रया भवति सैवाज्ञानमाया श्रुतौ
तस्मादुद्भिदिवेति वर्णनमिदं वैषम्यदुष्टं तव ॥ ९९ ॥

अज्ञानमिति । जडशक्तिमात्रवपुषेति मात्रपदेन स्वाश्रयव्यामोहक-त्वाकारो व्यावर्त्यते । सर्वेश्वरस्येष्यते उपाधिरिति शेषः । ततः किं तत्राह— सर्वज्ञत्वेति । तत्तादृशमज्ञानमुक्तप्रकारेणाश्रयभेदेन स्वाश्रयाव्या-मोहकत्वं व्यामोहकत्वमित्युक्तप्रकारेण तस्माल्लोकसिद्धमज्ञानमेव श्रुतौ स्मृतौ च मायापदवाच्यं न तूद्भिदादिवदर्थान्तरमित्याह— सर्वज्ञेश्वरेति । सा लोकप्रसिद्धा ऽज्ञानमायाज्ञानाख्या माया तथाचोद्भिद्-दृष्टान्तो विषम इत्याह—तस्मादिति ॥ ९९ ॥

नन्वज्ञानमात्रस्य मायात्वेऽतिप्रसङ्ग इत्याशङ्क्य शक्तिग्रहोपि पर-विभ्रमहेतुशक्तावित्युक्तमेवार्थं प्रपञ्चयति—

मायाऽनिर्वचनीयमेव तु तमो मायाविनो गीयते
द्रष्टॄणां भ्रमकारणं विषयता मायाविता तस्य तु ।
तं हस्त्यादिविकल्पनाघटितवन्मूढाशया जन्तवो
रज्जुं सर्पतयैव तद्विरहितं जानन्त्यबुद्धत्वतः ॥ १०० ॥

मायेति । द्रष्टॄणां भ्रमकारणमनिर्वचनीयं यत्तमः तदेव मायाविनो मायेति गीयते ततो नातिप्रसङ्ग इत्यर्थः । ननु तादृशमज्ञानं किं मायाविपुरुषनिष्ठमुत द्रष्टृपुरुषनिष्ठम् । नाद्यः । तस्याज्ञानाभावात् । अन्यथा तस्यापि भ्रमप्रसङ्गात् । न द्वितीयः । द्रष्टॄणामपि मायाविपद-

वाच्यत्वप्रसङ्गादित्याशङ्क्य न मायाश्रयत्वेन मायावित्त्वप्रसङ्गः मायाविषयस्यैव मायावित्वादित्याह—विषयतेति । तस्य तादृशाज्ञानस्य मायाविन इति वा विषयता मायाविता न तदाश्रयता ततो न द्रष्टॄणां मायावित्वमित्यर्थः । द्रष्टुर्भ्रमकारणाज्ञानविषयत्वमेव मायावित्वमित्यत्रान्वयव्यतिरेकौ प्रमाणमिति वक्तुमन्वयं तावदाह—तमिति । तं मायावित्वेनाभिमतम् । हस्त्यादिविकल्पनाघटितवत् हस्ताद्यारोपघटितवत् हस्त्यादिभावयुक्तवदित्यर्थः । तद्विरहितं वस्तुतो हस्त्यादिभावविरहितमबुद्धत्वतः हस्त्यादिभावविरहितत्वेन तस्याज्ञातत्वादित्यर्थः । मूढाशया जन्तवः तद्विरहितं तमबुद्धत्वतः रज्जुसर्पतयेव हस्त्यादिविकल्पनाघटितवत् जानन्तीति सम्बन्धः ॥१००॥

हस्त्यादिभावरहितत्वेन यदा तन्न जानन्ति तदा तस्मिन् हस्त्यादिभावकल्पनेत्यन्वयो दर्शितः । इदानीं व्यतिरेकमाह—

**सम्यग्ज्ञानबलेन तं विरहितं हस्त्यादिभिर्यत्क्षणे**
**जानीयुस्तदनन्तरं न स भवेद्धस्त्यादियुक्तः पुमान् ।**
**तेनाऽस्मत्तम एव तत्र विषये मायाऽस्तु मायाविनः**
**सोऽज्ञातो वयमज्ञकोटिपतिता मायी स तेनोच्यते।१०१।**

सम्यग्ज्ञानेति । तं मायाविनं सम्यग्ज्ञानबलेन यत्क्षणे यस्मिन्काले हस्त्यादिभिरारोपितहस्त्यादिभिर्विरहितं जानीयुः हस्त्यादिभावरहितं जानीयुरित्यर्थः । तदनन्तरं ज्ञानानन्तरं सः मायाविपुमान् हस्त्यादियुक्तो न भवेत् हस्त्यादिभावभ्रान्तिविषयो न भवेदित्यर्थः । फलितमाह—तेनेति । येनास्माकं मायाविस्वरूपाज्ञाने तस्मिन् हस्त्यादिकल्पना तज्ज्ञाने तु सा न तेनेत्यर्थः । तत्र विषये गजादिकार्ये

विषये अस्मत्तमः द्रष्टृज्ञानमेव मायाविनो मायास्तु मायाविनो माया-श्रयत्वं वारयति—सोऽज्ञात इति। सः मायावी अज्ञातः अज्ञानविषय एव न तु तदाश्रय इत्यर्थः। द्रष्टृणामज्ञानविषयत्वं निराकरोति मायावित्व-व्युदासाय वयमिति द्रष्टारः अज्ञकोटिपतिताः अज्ञानाश्रयकोटिनि-विष्टाः फलितमाह—मायीति। सः मायावित्वेनाभिमतस्तेन येनाज्ञान-विषयस्तेनेत्यर्थः॥ १०१॥

ननु द्रष्टृभ्रमकारणाज्ञानविषयत्वं मायावित्वमित्यनुपपन्नं तादृश-शुक्त्यादौ मायावित्वप्रसिद्ध्यभावात् अतोऽज्ञानविषयत्वादन्यदेव मायावित्वं वाच्यमिति शङ्कते—

**नन्वेवं सति रज्जुखण्डलकमप्यज्ञातमज्ञानिभि-**
**र्मायावीति गिरोच्यता न तु तथा लोके प्रसिद्धिः क्वचित्।**
**तेनाज्ञातविलक्षणत्वमुचितं मायाविनो लौकिका**
**मायावीति पुमांसमेव निपुणं येनाऽऽहुरत्यादरात्॥१०२॥**

नन्वेवं सतीति। अज्ञानविषयस्य मायावित्वे सतीत्यर्थः। रज्जु-खण्डलकं रज्जुखण्ड इत्यर्थः। नन्वस्तु रज्ज्वा अपि मायावित्वं न प्रसिद्धिविरोधादित्याह—नन्विति। तथा मायावित्वेन प्रसिद्धिः रज्ज्वा इति शेषः। फलितमाह—तेनेति। येन कारणेनाज्ञानविषयत्वाविशेषेपि मनुष्यमेव मायावीति निपुणमवैमत्येन व्यवहरन्ति लौकिकाः न तु रज्ज्वादिकं तेनेत्यर्थः॥ १०२॥

अज्ञानविषयत्वं मायावित्वमिति नोच्यते समुद्राद्यानेतुर्माया-वित्वाभावप्रसङ्गात् किन्तु मायाविनोपि कदाचित् गजादिभावा-पत्तिदशायामज्ञानविषयत्वमस्तीत्येतावन्मात्रं मायावित्वं तु मन्त्रादिना स्वेच्छया नियमेनाज्ञानक्षोभकत्वमेव तथा चाज्ञानविषयत्वाविशेषेऽ-

प्यवान्तरविशेषस्य विद्यमानत्वात् पुरुष एव मायावित्वव्यपदेशो न रज्ज्वादाविति सदृष्टान्तं समाधत्ते--

**नैवं भ्रान्तिनिमित्तकारणमयं संगृह्य पूर्वक्षणे**
**मन्त्रादिप्रचुरं प्रयत्नजनितं तज्जीवने वर्तते।**
**तेनात्रैव तु लोकरूढिरभवन्मायावितागोचरा**
**यद्वद्ब्राह्मणताप्रसिद्धिरभवन्मुक्त्वा परिव्राजकान् ॥१०३॥**

नैवमिति। भ्रान्तिनिमित्तकारणमज्ञानक्षोभद्वारेति शेषः। क्षोभकमन्त्रादिप्राप्तौ हेतुः—प्रचुरप्रयत्नजनितमिति। बह्वायासप्राप्तमित्यर्थः। अयं मायावी पुरुषः प्रचुरप्रयत्नजनितं भ्रान्तिनिमित्तकारणं मण्यादिसंगृह्य सर्वक्षणे सर्वदा तज्जीवनः तत् क्षोभकमण्यादिकमेव जीवनं जीवनोपायो यस्य स तथोक्तः तत्परो वर्त्तत इत्यर्थः। मन्त्रादेर्जीवनोपायत्वान्नियमेन मन्त्रादिनाऽज्ञानं क्षोभयन् वर्तत इत्यर्थः। तेन यद्यपि रज्ज्वादेरपि सादृश्यादिदोषद्वाराज्ञानक्षोभकत्वमस्ति तथापि तस्य कादाचित्कत्वात् न तत्र मायावित्वप्रसिद्धिः किन्त्वत्रैवेत्याह— तेनेति। येनायं नियमेन तत्परो वर्तते तेनात्र मायाविपुरुष एव मायाविताागोचरा मायावित्वविषया लोकरूढिः लोकप्रसिद्धिः न रज्ज्वादावित्यर्थः। उभयत्राज्ञानविषयत्वाविशेषेप्यवान्तरविशेषान्मायावित्व प्रसिद्ध्यप्रसिद्ध्योर्दृष्टान्तमाह—यद्वदिति। यथा गृहस्थपरिव्राजकयोरुभयोरपि ब्रह्मणत्वाविशेषेऽपि परिव्राजकशब्देन ब्राह्मणशब्दसमभिव्याहारे यज्ञोपवीतादिसाहित्यराहित्याभ्यां गृहस्थादावेव ब्राह्मणत्वप्रसिद्धिः न तु परिव्राजके तद्वदित्यर्थः॥ १०३ ॥

तस्माल्लौकिकमायापदस्यानिर्वचनीयाज्ञान एव प्रसिद्धत्वात् वैदिकमायापदमप्यज्ञानमेव बोधयेत् न तदतिरिक्तं सर्वदृश्यत्वादि-

लिङ्गमप्यव्यभिचारेण प्रसिद्धमायायामाविद्यकत्वेनावगतव्याप्तिकत्वा-दाविद्यकत्वमेव जाग्रत्प्रपञ्चस्य साधयतीति फलितमुपसंहरति—

एवं तावल्लोकसिद्धा न माया
मिथ्याज्ञानाद्भिद्यतेऽतश्च तत्र ।
शक्तिव्याप्तिप्रत्ययौ वर्णयित्वा
वेदाल्लिङ्गाच्चान्यमायात्वसिद्धिः ॥ १०४ ॥

एवं तावदिति । एवमुक्तप्रकारेण लोकसिद्धा लोके मिथ्यागजादि-हेतुत्वेन सिद्धा मायामिथ्याज्ञानात् मिथ्या च तदज्ञानं चेति मिथ्या-ज्ञानमनिर्वचनीयाविद्या ततो न भिद्यते । अतश्च यतो न भिद्यते अतस्तत्रानिर्वचनीयाविद्यायां शक्तिव्याप्तिप्रत्ययौ वर्णयित्वा माया-पदस्य शक्तिज्ञानं दृश्यत्वादिलिङ्गस्याविद्यकत्वेन व्याप्तिप्रत्ययं च वर्णयित्वा वेदान्मायया ह्यन्यदिवेत्यादिवेदाल्लिङ्गाद दृश्यत्वादि-लिङ्गाच्च अन्यमायात्वसिद्धिः । अन्यस्य लोकसिद्धमायिक-हस्ताद्यन्यस्य जाग्रतोपि मायात्वसिद्धिः आविद्यकत्वसिद्धि-रित्यर्थः । १०४ ।

इममेव श्लोकार्थं प्रपञ्चयति—

जाग्रद्भूमौ या प्रसिद्धेह माया
निर्णीता सा तावदज्ञानमेव ।
तस्यां शक्तिव्याप्तिविज्ञानसिद्धे-
र्विज्ञातव्या सैव वेदानुमानात् ॥ १०५ ॥

जाग्रद्भूमाविति। इह जाग्रद्भूमाविति सम्बन्धः। प्रसिद्धा मिथ्या-गजादिकारणत्वेन प्रसिद्धा या सा अज्ञानं प्रत्यगात्मनो द्रष्टुरज्ञानमेव निर्णीता तस्यामज्ञानाभिन्नमायायां शक्तिव्याप्तिविज्ञानसिद्धेः माया-पदशक्तिज्ञानस्य दृश्यत्वादेरविद्यामयत्वेन व्याप्तिज्ञानस्य च सिद्धेः। साऽ-ज्ञानाभिन्ना मायैव वेदानुमानाद्वेदादनुमानाच्च पूर्वोक्ताज्ज्ञातव्या जाग्र-दुपादानत्वेन ज्ञातव्येत्यर्थः ॥ १०५ ॥

नन्वेवमपि मायापदस्याज्ञाने शक्तिर्ग्रहीतुं न शक्यते स्वप्न-मायाया अज्ञानत्वाभावात्। अन्यथा सूत्रकारस्य स्वप्ने मायिकत्व-निर्देशानुपपत्तेः। अत एव दृश्यत्वादिलिङ्गमपि नाविद्यामयत्वेन व्याप्तमित्याशङ्क्याह—

**स्वप्नेऽप्येवं स्वप्नदृङ्मोहमात्रा-**
**दन्या काचिन्न प्रसिद्धाऽस्ति माया।**
**तत्रैवायं सूत्रकारस्य तस्मा-**
**न्मायाशब्दो वर्तते नापरत्र ॥ १०६ ॥**

स्वप्नेऽप्येवमिति। एवं जाग्रद्वत् स्वप्नेपि स्वप्नदृढमोहमात्रादन्या काचिन्माया प्रसिद्धा नास्ति। अन्यथा मायापदस्यानेकार्थ-त्वप्रसङ्गादित्यर्थः। अत एव सूत्रकारस्य स्वप्ने मायाशब्दप्रयोगोपि मायाया अज्ञानाभिन्नत्वाभिप्रायेणैव युज्यत इत्याह-तत्रैवायमिति। यस्मा-दन्या माया नास्ति तस्मात्सूत्रकारस्य तत्राज्ञान एवायं मायाशब्दो वर्तते नापरत्राज्ञानव्यतिरिक्त इत्यर्थः॥ १०६ ॥

ननु स्वप्नकारणाज्ञाने मायाशब्दप्रयोगोऽनुपपन्नः। तस्य पर-साधारणभ्रमजनकत्वाभावात् स्वाश्रयव्यामोहकत्वाच्च तथा च माया-शब्दं प्रयुञ्जानस्य सूत्रकारस्याज्ञानातिरिक्तैव मायेत्यभिमतम्। अन्य-

थाऽविद्यामात्रमित्येवासूत्रयिष्यदित्याशङ्क्य मायापदस्य प्रयोजनान्तरविवक्षया प्रयुक्तत्वान्मैवमित्याह—

शक्तिव्याप्तिप्रत्ययौ कारयिष्य-
न्स्वप्ने स्थित्वा प्रत्यगज्ञानमात्रे ।
मायावाचा लोकवत्सूत्रकारो
वेदे लिङ्गं चोपनेतुं प्रवृत्तः ॥ १०७ ॥

शक्तिव्याप्तिप्रत्ययाविति । सूत्रकारो मायाशब्दलिङ्गयोः प्रत्यगज्ञानमात्रे शक्तिव्याप्तिप्रत्ययौ कारयिष्यन् सन् स्वप्ने स्थित्वा मायावाचा प्रवृत्तः ‘मायामात्रमिति मायाशब्देन प्रवृत्तः किमर्थं लोकवत् वेदं लिङ्गं चोपनेतुं लौकिकशक्तिव्याप्तिग्रहानुराधेन वैदिकमायाशब्दं दृश्यत्वादिलिङ्गं च प्रत्यगज्ञानमात्रविषयतया नेतुमेव स्वप्नेपि मायाशब्दं प्रायुङ्क्तेत्यर्थः—एतदुक्तं भवति। न तावत्स्वप्नकारणेऽज्ञाने मायापदप्रयोगानुपपत्तिः। मूलाज्ञानस्यैव तत्कारणत्वात्। तस्य चान्यसाधारणभ्रमजनकत्वान्मिथ्याभूतत्वगुणयोगेन प्रयोगसंभवाच्च। न मायापदप्रयोगस्य प्रयोजनाभावः। यतः सर्वसम्प्रतिपन्नमिथ्याभावगजाद्युपादानमायायां गृहीतशक्तिकमायापदप्रयोगे वैदिकमायापदस्यापि मिथ्याभूतवस्तुवाचकत्वं सिद्ध्यतीति ॥ १०७ ॥

भगवता सर्वेश्वरेण हरिणा मायाज्ञानयोरुभयोरपि चैतन्यावरणलक्षणस्यैकस्य कृत्यस्य दर्शितत्त्वादपि तयोरैक्यमित्याह—

अज्ञानमावरणमावरणं च माया
सर्वेश्वरेण हरिणा दृढमभ्यधायि ।

चैतन्यवस्तुन इति प्रतिपद्यमाना-
स्तत्त्वं तदेकमिति निश्चयतः प्रतीमः ॥ १०८ ॥

अज्ञानमिति। आवरणशब्दः करणसाधनः सर्वेश्वरेण हरिणाऽज्ञानं चैतन्यवस्तुनः आवरणं माया च चैतन्यवस्तुन आवरणमिति दृढमभ्यधायीति प्रतिपद्यमाना जानन्तो वयं तत्तत्वं मायाविद्यास्वरूपमेकमिति निश्चयतः प्रतीमः निश्चयेन जानीम इत्यर्थः। १०८।

भगवता मायाशब्दाभिलप्यस्याज्ञानशब्दाभिलप्यत्ववज्ज्ञान निवर्त्योक्तेरपि तयोः स्वरूपमेकमेवेत्याह—

ज्ञानं निवर्तकमपि द्वितयस्य तस्य
गीतागतः करुणया भगवानुवाच।
तेनापि तत्त्वमिदमेकमिति प्रतीति-
रानीयते कथितलक्षणतुल्यभावात् ॥ १०९ ॥

ज्ञानमिति। तस्य मायाविद्यालक्षणस्य द्वितयस्यापि ज्ञानमखण्डसाक्षात्कारो निवर्तकमिति गीतागतो भगवान् करुणयोवाच तेनापि येनैवमुवाच तेनापीदं तत्त्वं मायाविद्यास्वरूपमेकमिति प्रतीतिरानीयते जायत इत्यर्थः। तत्र हेतुः कथितलक्षणतुल्यभावादित्यज्ञानलक्षणत्वेन कथितं यल्लक्षणं ज्ञाननिवर्त्यत्वलक्षणं तस्य मायायामपि तुल्यत्वादित्यर्थः ॥ १०९ ॥

भगवता गीतायां कैर्वचनैर्मायाविद्याशब्दाभिधेययोश्चैतन्यावारकत्वाख्यस्वरूपलक्षणज्ञाननिवर्त्यत्वाख्यस्वरूपलक्षणयोरेकत्वमुक्तमित्याकाङ्क्षायां तानि वचनानि प्रतीकेनोदाहरति—

नाहं प्रकाश इति तावदनेन मायाऽ-
ज्ञानेन चाऽऽवृतमितीतरदप्यभाणि ।
मामेव ये तु परमं पुरुषं प्रपन्ना
ज्ञानेन तु प्रभृतिना च धिया निवृत्तिः ॥ ११० ॥

नाहं प्रकाश इतीति । "नाहं प्रकाशः सर्वस्य योगमायासमावृत" इत्यनेन माया अभाणि मायाऽऽवारकत्वेन कथितेत्यर्थः । अज्ञानेनेति च्छेदः । अज्ञानेनावृतमिति । अनेन चेतरदज्ञानमप्यावारकत्वेनाभाणीत्यर्थः । "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते । ज्ञानेन तु तदज्ञानं येषां नाशितमात्मन" इत्यादिना धियाऽखण्डसाक्षात्कारेण निवृत्तिरविद्यानिवृत्तिरभाणीत्यर्थः । मामेवेत्यस्य व्यख्या परमं पुरुषमिति प्रपद्यन्त इत्यस्यानुकरणं प्रपन्ना इति जानन्त इत्यर्थः । ज्ञानेन तु प्रभृतिना ज्ञानेन त्वित्यादिनेत्यर्थः ॥ ११० ॥

नन्वज्ञानं हि ज्ञानप्रागभाव इति कणभुगादिसंमतं माया च निखिलजगत्प्रकृतिर्भावरूपैव तत्कथमनयोरैक्यं संभावयितुं शक्यते । ननु भगवद्वचनबलादेकत्वं प्रतीम इति चेत्न न यतो वचनस्यातिभार इत्याशङ्क्य प्रथमाध्यायोक्तमज्ञानभावत्वं स्मारयति—

ज्ञानस्य प्रागभावादपरमभिहितं प्रत्यगज्ञानमेत-
त्संसारव्याधिबीजं कथितनयवशादेव बुध्या स्वबुद्ध्या ।
ज्ञानेनाज्ञाननाशं कथयति भगवानेष गीतागतः स-
न्नज्ञानात्प्रागभावच्चय इति घटते तत्त्वये तत्प्रसूतेः॥१११॥

ज्ञानस्येति । अथवाऽज्ञानस्य ज्ञानाभावरूपत्वान्मायायाश्च भावरूपत्वात्कथमनयोरैक्यं संभवतीत्याशङ्क्य भगवद्वचनबलादेवाज्ञानस्य न प्रागभावत्वमपि सिद्ध्यतीत्याह—ज्ञानस्येति । अभिहितम-

ज्ञानेनावृतमित्यादिना प्रतिपादितं संसाराव्यधिवीजं संसारदुःख-निदानमेतत्प्रत्यक्षसिद्धमज्ञानं ज्ञानस्य प्रागभावादपरं बुद्ध्यस्वेति सम्बन्धः । तत्र हेतुः—कथितनयवशादीति । प्रथमाध्यायोक्तप्रत्यक्षत्वा-त्मावारकत्वोपादानत्वादिन्यायवशात् ज्ञानादज्ञाननाश इति कथित-ज्ञाननिवर्त्यत्वन्यायवशादिति वा प्रथमाध्यायेऽनुक्तामपि युक्तिमाह—ज्ञानेनेति । कथितां नीतिमेव वाह—ज्ञानेनेति । ननु ज्ञानेनाज्ञाननाशकथन-मात्रेण कथमज्ञानस्य ज्ञानाभावत्वासिद्धिः ज्ञानाभावत्वेपि ज्ञानान्ना-शोपपत्तेरित्याशङ्क्याह—न ज्ञानादिति । प्रागभावक्षयः ज्ञानप्रागभावक्षयः। ननु ज्ञानाज्ज्ञानप्रागभावक्षय इति किमिति न घटत इति चेत्तत्र वक्तव्यं किं ज्ञानमेव ज्ञानप्रागभावनिवृत्तिः किं वा तदन्या । नाद्यः । स्वस्याः स्वजनकत्वानुपपत्त्या ज्ञानप्रागभावनिवृत्तिजन्मानुपपत्तेः । द्वितीयेपि सा निवृत्तिर्ज्ञानोत्पत्त्यनन्तरं जायते । उत प्रथमं निवृत्तिः पश्चाज्ज्ञान-जनिः । नाद्यः । प्रतियोगिकाले प्रागभावावस्थानानुपपत्तेः । कादाचित्कसंसर्गाभावस्यैकस्मिन्काले प्रतियोगिसामानाधिकरण्यस्य प्रध्वंसेऽदर्शनात् तन्न्यायेनात्रापि वक्तव्यत्वात् । उत्पन्नस्य प्रतियोगिनः पुनरुत्पत्तिप्रसङ्गाच्च प्रागभावघटितसामग्र्याः पूर्वक्षणे सामग्रीत्व-व्यभिचारायोगादेका सामग्र्येकमेव कार्यं जनयतीति स्वभावश्चेत्कृतं प्रागभावकारणत्वेन तस्माद्द्वितीयः परिशिष्यते । तत्र च ज्ञानादज्ञान-नाशो न संभवत्येव पूर्वभाविनः पश्चाद्भाविजन्यत्वानुपपत्तेरित्याह—तत्क्षय इति । तस्य ज्ञानप्रागभावस्य क्षये निवृत्तौ सत्यामेव तत्प्रसूतेः तस्य ज्ञानस्य प्रसूतेरुत्पत्तेरित्यर्थः ॥ १११ ॥

तस्मान्मायापदस्याज्ञान एव शक्तिग्रहात् दृश्यत्वादेश्चाविद्यकत्वेन व्याप्तत्वात् स्वप्नद्रष्टुस्य कर्तृत्वादेर्मिथ्यात्वं सिद्धमित्युपसंहरति—

मायामात्रमतः समस्तमभवत्स्वप्ने प्रसिद्धं दृशः

कर्तृत्वादि तमोमयं वितथमेवाज्ञानमात्रं यतः ।

तस्माज्जागरितेऽपि नैतदभवत्स्वाभाविकं यत्पुन-
स्तादृक्चं तव सर्वदैव तु भवेत्स्वप्नेऽपि चैतन्यवत् ॥११२॥

मायामात्रमिति । यतोऽविद्यामाययोरेकत्वमतो मायामात्रं स्वप्नप्रसिद्धं समस्तं दृश आत्मनः कर्तृत्वादि तमोमयमत एव वितथं मिथ्याभूतमेव तथा च जाग्रत्कर्तृत्वस्य स्वप्नेऽभावेनागमापायित्वान्न-कर्तृत्वादिकमात्मनः स्वाभाविकं रूपमिति परमप्रकृतमुपसंहरति— अज्ञानमात्रं यत इति । यतः स्वप्रसिद्धं कर्तृत्वाद्यज्ञानमात्रं मिथ्यैव ततः जागरितः ? कर्तृत्वस्य स्वप्नेऽभावाज्जागरितेप्येतत्कर्तृत्वादिकं स्वाभाविकं न भवतीत्यर्थः । नन्वागमापायित्वे स्वाभाविकत्वं किं न स्यादिति चेन्न । स्वाभाविकस्य चैतन्यवदागमापायित्वानुपपत्तेरित्याह—यत्पुनरिति । यदि पुनरित्यर्थः । तादृशं स्वाभाविकं स्वप्नेपीत्यस्य व्याख्या—सर्वदेति । कर्तृत्वादिकं यदि स्वाभाविकं स्यात्तदा सर्वदैव चैतन्यवत्स्यादित्यर्थः ॥ ११२ ॥

ननु कर्तृत्वादेः स्वाभाविकत्वे चैतन्यवत्सर्वदापि सद्भावः इत्यनुपपन्नं कादाचित्कत्वेपि घटलौहित्यादिवत्स्वाभाविकत्वोपपत्ते रित्याशङ्क्य युक्तं तत्र सावयवपरिणामिवस्तुनो हेतूपरागेण वास्तवरूपान्तरसम्भवात्कादाचिकत्वेपि स्वाभाविकत्वं निरवयव-कूटस्थात्मनस्तु हेतूपरागासंभवात्तत्र प्रतीयमानकादाचित्कधर्मस्याकाशकार्ण्यादिवत्स्वाभाविकत्वस्य विरुद्धत्वान्न कर्तृत्वादेः स्वाभाविकत्वमित्याह—

सत्यप्यलुप्तचिति यत्त्वयि नास्ति कर्तृ-
भोक्तृप्रमातृमुखमन्यदपीह किंचित् ।
जाग्रद्दशावगतमप्यखिलं न तत्ते
स्वाभाविकं भवितुमुत्सहते विरोधात् ॥ ११३ ॥

सत्यपीति । अलुप्तचिन्त्यविकारिकूटस्थचैतन्ये त्वयि सत्यपि जाग्रद्दशावगतं यत्कर्तृभोक्तृप्रमातृमुखमन्यदपि किञ्चिद्भोगोपकरणादिकमिह स्वप्ने नास्ति । तत्कर्तृत्वादिकमखिलं ते स्वाभाविकं भवितुं नोत्सहते विरोधादिति सम्बन्धः ॥ ११३ ॥

किंच स्वाभाविकधर्मतद्वतोरन्यतरसद्भावेऽन्यतरविरहाभावस्य वह्नितदौष्ण्ययोर्दर्शनादपि न कर्तृत्वादेः स्वाभाविकत्वमित्यभिप्रेत्याह—

**स्वाभाविकी हुतभुजः खलु नोष्णता तं**
**जातु प्रमुञ्चति न तामपि जातवेदाः ।**
**एवं भवन्तमपि जागरितोपलब्धं**
**स्वप्ने भवानपि च जागरितं न मुञ्चेत् ॥ ११४॥**

स्वाभाविकीति । उष्णतोष्णस्पर्शः तं वह्निं जातु कदाचिदपि ताम्-उष्णताम्,एवम्-उष्णतावद् भवन्तमविलुप्तचैतन्यस्वरूपं त्वामपि जागरितोपलब्धकर्तृत्वादीति शेषः । स्वप्ने न विमुञ्चेद्यदि तत्स्वाभाविकं स्यादिति शेषः । भवानपि जागरितं जाग्रद्दृष्टकर्तृत्वादिकं न प्रमुञ्चेदिति सम्बन्धः ॥ ११४ ॥

नन्वात्मनि सति कर्तृत्वादेर्विरहो नास्त्येव स्वप्नेपि तदनुभवात् सुषुप्ते तत्प्रतीतिकारणाभावादेव तदप्रतीतेः । न च जाग्रत्स्वप्नकर्तृत्वयोः सत्यमिथ्याभेदेन भिन्नतयैकत्वानुपपत्तेः आत्मनि सति कर्तृत्वादेर्विरह एवेति शङ्क्यं भवन्मते सर्वस्यापि मिथ्यात्वेन वैषम्याभावादतः कथं व्यतिरेकेण स्वाभाविकत्वाभाव इत्याशङ्क्य वैषम्याभावोऽसिद्ध इत्याह—

स्वप्ने न जागरितमस्ति मृषात्वहेतोः

स्वप्नस्य सत्यमिति जागरितं वदन्ति ।

स्वप्नस्य बाधनबलादनृतत्वमुक्तं

तस्माच्चिदेव तव रूपमतोऽन्यदार्त्तम् ॥ ११५ ॥

स्वप्ने इति । स्वप्ने जागरितं कर्तृत्वादि नास्ति स्वप्नस्य मृषात्वाज्जागरितस्य च सत्यत्वादित्यर्थः । तर्हि किं जाग्रत्पारमार्थिकसत्यं नेत्याह—सत्यमिति । जागरितं वदन्तीति व्यावहारिकसत्यमित्यर्थः। ननूभयोरप्याविद्यकत्वाविशेषे व्यावहारिकप्रातीतिकभेदः किंनिबन्धन इत्याशङ्क्य सति प्रमातरि बाध्यत्वाबाध्यत्वनिबन्धन इत्युक्तं स्मारयति—स्वप्नस्येति । बाधनं बाधः सति प्रमातरि बाधबलादित्यर्थः। उक्तं न प्रमातरीत्यादावित्यर्थः । जाग्रतश्च तस्मिन्सत्यबाधात् व्यावहारिकत्वमुक्तमिति च द्रष्टव्यम् । फलितमाह—तस्मादिति । यस्माच्चैतन्यमेवावस्थात्रयेप्यनुस्यूतं जाग्रत्कर्तृत्वादिकं चागमापायि तस्मात् चिदेवासङ्गकूटस्थचैतन्यमेव तव रूपं स्वाभाविकस्वरूपमतश्चैतन्यादन्यत् जाग्रद्दृष्टमार्त्तं मिथ्येत्यर्थः। तथा च श्रुतिः'अतोऽन्यदार्त्तमि'ति ॥ ११५ ॥

ननु जाग्रतोपि मिथ्यात्वे तत्त्वज्ञानहेत्वभावात् संसारनिवृत्तिर्न स्यादित्याशङ्क्य यथाऽसत्यस्यापि स्वप्नव्याघ्रादेर्जाग्रद्बोधहेतुत्वं तद्वज्जाग्रतोऽसत्यस्यापि तत्त्वबोधहेतुत्वं संभवतीति "सूचकश्च हि श्रुतेराचक्षते च तद्विद" इति सूत्रं द्वितीयाध्यायोक्तं चार्थमनुसृत्याह—

स्वप्नोपलब्धमखिलं वितथं तथापि

तत्सूचयत्यवितथं परमार्थवस्तु ।

जाग्रद्दशावगतमप्यनृतं तथापि
तद्वत्तदप्यवगतिक्षममेव भूम्नः ॥ ११६ ॥

स्वप्नोपलब्धमिति । तत्स्वप्नोपलब्धं सूचयति बोधयति अवितथं सति प्रमातर्यबाध्यमत एव स्वप्नापेक्षया परमार्थवस्तु जाग्रत्पदार्थं तद्वत्स्वप्नोपलब्धवज्जाग्रद्दशावगतमपि वस्तु यद्यप्यनृतं तथापि तज्जाग्रद्वस्त्वपि भूम्नः अनवच्छिन्नपरमानन्दब्रह्मात्मनः अवगतिक्षममेव ब्रह्मात्मसाक्षात्कारसमर्थमेवेत्यर्थः ॥ ११६ ॥

एवं जाग्रद्दृष्टस्यागमापायित्वेन मिथ्यात्वमुक्त्वा स्वप्नदृष्टस्यागमापायित्वेन तदाह—

स्वप्नभ्रमोऽपि सुकृतादिनिबन्धनत्वा-
त्तावत्परिस्फुरति यावददृष्टमस्ति ।
क्षीणे तु तत्र लयमेति जगन्निदाने
गाढे तमस्यनुभवावगते प्रतीचः ॥ ११७ ॥

स्वप्नभ्रमोऽपीति । सुकृतादीत्यादिपदेन दुष्कृतमुच्यते । यावददृष्टमस्ति तावत्परिस्फुरतीति सम्बन्धस्तत्रादृष्टे प्रतीचस्तमसीति सम्बन्धः । अथवा ननु स्वप्नवज्जागरितस्याप्यसत्यत्वे व्यवहारकाल एव बाधः किं न स्यादिति चेत्किं सविलासाज्ञाननिवृत्तिलक्षणो बाधः किं न स्यादित्यापाद्यते । उत मिथ्यात्वनिश्चयलक्षणः । नाद्यः । स्वप्नस्यापि तदभावात्स्वप्नभोगप्रदकर्मनाशे सति तस्य कारणाज्ञानात्मनावस्थानस्यैवाङ्गीकारात्तदिदमुक्तं तत्रादृष्टे क्षीणे सत्यनुभवावगते जगन्निदाने गाढे प्रतीचस्तमसि प्रत्यग्विषयतमसि लयमेतीति । न द्वितीयः । स्वप्नारम्भकं हि कर्म क्षुद्रतरमतस्तस्य शीघ्रमुपरमा-

त्स्वप्नदृष्टवस्त्वपि न परिस्फुरति । स्वप्नान्तरेण च न संवाद्यते । तस्य कर्मान्तरारब्धत्वात् । अतस्तस्य जाग्रज्ज्ञाननिवर्त्यत्वबुद्ध्या-मिथ्यात्वनिश्चयो भवति । जाग्रद्दृष्टस्य च पित्रादिपदार्थस्यैकस्मिन् शरीरे एककर्मारब्धत्वाज्जाग्रदन्तरेपि संवादोऽस्तीति न तस्य व्यवहारकाले बाध इत्यभिप्रेत्याह—स्वप्नभ्रमोऽपीति ॥ ११७ ॥

ननु सुकृतदुष्कृतकर्मणां क्रियारूपत्वात् क्रियायाश्च कारक-समानकालीनत्वेन कारकविरहदशायां तदभावात् कथं स्वप्नादि-भोगस्तन्निमित्तो भवेदित्याशङ्क्य यद्यपीदानीं क्रियायाः परिदृश्यमान-स्थूलरूपेणावस्थानं न सम्भवति तथापि सूक्ष्मरूपेण यावत्फलभोग-मवस्थानसम्भवान्नोक्तानुपपत्तिरित्याह—

> निष्पादिता सकलकारकवर्गसाध्या
> सर्वेण कारकगणेन सहैव तावत् ।
> तिष्ठेत्क्रिया परमसूक्ष्मतयेक्ष्यमाणा
> सर्वेश्वरेण पुरुषः फलमेति यावत् ॥ ११८ ॥

निष्पादितेति । अस्यैव व्याख्या सकलेति कारकं कर्त्रादि ननु सूक्ष्मरूपस्यापि क्रियारूपत्वात्कथं कारकवर्गं विनाऽवस्थानमित्या-शङ्क्योक्तं कारकगणेन सहैवेति । कारकवर्गोपि सूक्ष्मरूपेण तिष्ठतीति नानुपपत्तिरित्यर्थः। परमसूक्ष्मतयेतीत्थं भावे तृतीयाऽतिसूक्ष्मरूपेण तिष्ठेदित्यर्थः । नन्वदृष्टस्य यावत्फलभोगमवस्थानसम्भवे तस्यैव फलदातृत्वात्किमीश्वरेणेत्याशङ्क्याह—ईक्ष्यमाणा सर्वेश्वरेणेति । पुरुषो यावत्फलमत्ति तावत्सर्वेश्वरेणेक्ष्यमाणाधिष्ठितैव तिष्ठेत् न तु स्वतन्त्रेत्यर्थः । यद्यपि यावत्फलभोगमदृष्टमस्ति तथापि तस्य केवलस्य जडतया फलदातृत्वानुपपत्तेः ईश्वरोप्यपेक्षणीय इति भावः ॥ ११८ ॥

ननु स्वप्नजागरितयोर्भ्रान्तित्वे कर्मनिबन्धनत्वं कुतः न हि रज्ज्वां सर्पभ्रमो यागादिकर्मनिबन्धन इत्याशङ्क्य भ्रमान्तरेपि कर्माधीनत्वमविरुद्धं वक्तव्यं च। अन्यथा रज्ज्वां कस्यचित् मालारोपेण सन्तोषः कस्याचित्सर्पारोपेण दुःखमिति वैचित्र्यानुपपत्तेरित्यभिप्रेत्याह—

स्वप्नश्च जागरितमप्युभयं तवैव
मोहप्रसूतमपि कर्मफलं विभाति।
कर्मक्षये तदखिलं परमात्ममाया-
माश्रित्य सूक्ष्ममवतिष्ठत एव लीनम् ॥ ११९ ॥

स्वप्नश्चेति। तर्हि कर्ममूलत्वात्संसारस्य सुषुप्त्यादौ तत्क्षये तत्क्षयसंभवात्तत्त्वज्ञानं नाभ्यर्थनीयमित्याशङ्क्य तत्त्वज्ञानं विनाऽज्ञाननिवृत्त्यनुपपत्तेः। तां विना कर्मणस्तज्जन्यसंसारस्य चात्यन्तक्षयानुपपत्तेः ज्ञानमर्थवदेवेत्यभिप्रेत्याह—कर्मक्षय इति। तज्जाग्रत्स्वप्नरूपसंसरणमखिलं सूक्ष्मं कार्याकाररहितं सत्परमात्ममायामाश्रित्य विलीनमवतिष्ठत एव कारणात्मना विद्यत एवेत्यर्थः ॥ ११९ ॥

ननु सुषुप्त्यादावज्ञाने जगल्लीनप्रायं वर्त्तत इत्यनुपपन्नं प्रमाणाभावात् तथात्वे वा "सता सोम्य तदा सम्पन्नो भवति" "तदभावो नाडीषु तच्छ्रुते"रिति श्रुतिसूत्रसिद्धा जीवस्य तत्सम्पत्तिरूपा विशुद्धिर्विरुद्ध्येतेति चेन्न तावत्प्रमाणाभावः पुनरुत्थानस्यैव मानत्वात्। नापि सत्संपत्तिविरोधः सुषुप्त्यादावज्ञानात्मतया जगत्सद्भावस्योत्थानलिङ्गमात्रगम्यतया तत्संपत्तिश्रुतेस्तदानीं विक्षेपप्रतीत्यभावपरत्वादित्यभिप्रेत्याह—

उत्थानलिङ्गकृतकल्पनयैतदेवं
विज्ञायते न तु तथावगतं तदानीम्।
अज्ञानलीनमखिलं जगदस्ति सूक्ष्मं
तत्रेति नानुभवनादवगम्यते हि ॥ १२० ॥

उत्थानेति। उत्थानमेव लिङ्गं तत्कृता तज्जन्या या अनुमित्यात्मिका कल्पना तयैवेत्यर्थः। एतत्सुषुप्तौ जगदज्ञाने विलीनप्रायं वर्त्तत इत्येतदेवंप्रकारव्यावर्त्यमाह—न त्विति। तथा सूक्ष्मरूपेण वर्त्तत इत्यनेन प्रकारेण तदानीं सुषुप्तौ जगत्सूक्ष्मरूपेणाज्ञाने वर्तत इत्येवंप्रकारेण सुषुप्तौ जगन्नावगतमित्यत्रानुभवमेव सर्वलोकप्रसिद्धं प्रमाणयति—अज्ञानलीनमिति। तत्र—सुषुप्तौ ॥ १२० ॥

नन्वेवं सत्यज्ञानस्याप्युत्थानलिङ्गानुमेयत्वात् सुषुप्तौ तदनुभवो न कल्प्यः न हि तदा कश्चिदहमज्ञ इत्येवमज्ञानमनुभवतीति चेत् किमेवं वदतो विवक्षितं सुषुप्तावज्ञानस्यानुभवकल्पने तदात्मकतया वर्त्तमानस्य संसारस्याप्यनुभवः कल्पनीय इति किं वा तद्वदज्ञानस्यापि सुषुप्तावनुभवो न कल्पनीय इत्येतावन्मात्रं नोभयथाप्यज्ञानानुभवकल्पकवत् तत्कल्पकाभावादित्यभिप्रेत्याह—

अज्ञानमेव तु तदाऽवगतं त्वदीयं
येनोत्थितो वदसि नावगतं मयाऽद्य।
सुप्तेन किंचिदपि गाढतमस्यभूवं
क्षिप्तः समस्तविषयावगमासमर्थः ॥ १२१ ॥

अज्ञानमेवेत्वित्यादिनानुभवप्रमाणादित्यन्तेन न तु संसार इत्यर्थः। तदा सुषुप्तौ सुषुप्तावज्ञानानुभवसद्भावे प्रमाणमाह—येनेति। येन कारणेनो

त्थितस्त्वमेवं वदसि तेन सुषुप्तिकालेऽज्ञानमस्ति अवगतं च तदिति निश्चिन्वित्युत्तरेण सम्बन्धः। उक्तिमेवाह--नावगतमिति। गाढतमसि क्षिप्तः सन् मग्नः सन् समस्तविषयावगमासमर्थोऽभूवमत एवाद्य सुप्तेन मया किंचिदपि नावगतमिति ॥ १२१ ॥

ननूत्थितस्य मम एवमभिवदनमात्रेण कथं सौषुप्तिकाज्ञानतदनुभवौ सिद्ध्येतामित्याशङ्क्याभिवदनस्याभिवदितव्यविषयज्ञानसाध्यत्वाज्ज्ञानस्य चात्र परामर्शरूपत्वात्तस्य च पूर्वानुभवं विनाऽसंभवात् अज्ञानतदनुभवौ सिद्ध्यत एवेत्याह—

अज्ञानमत्र यदि नानुभवात्प्रसिद्धं
नाज्ञासिषं त्विति कुतस्तव निश्चयोऽभूत्।
अज्ञानमस्त्यवगतं च सुषुप्तिकाले
तेनेति निश्चिनु तवानुभवप्रमाणात् ॥ १२२ ॥

अज्ञानमिति। अत्र सुषुप्तौ नाज्ञासिषमिति निश्चयः। न किंचिदवेदिषमिति परामर्शः। अभिवदनहेतुत्वेन निश्चयस्य पूर्वभावित्वादभूदिति लुङ् प्रयोगः। केन तर्ह्यज्ञानानुभवः। त्वत्स्वरूपसाक्षिणेत्याह—तवेति। अथवा श्लोकद्वयेन क्रमेण पक्षद्वयनिरासः ॥ १२२ ॥

किमिति तर्हि सुषुप्तौ 'अहमज्ञ' इति स्फुटानुभवो नास्तीति चेत् स्पष्टताभिव्यञ्जकाहंकाराभावादित्याह—

स्पष्टानुभूतिविषयो न तमस्तदानी-
मासीदहंकरणहीनतयाऽधुना तु।

निष्पाद्य कार्यमिदमंशमहं न जाने
मूढोऽस्मि चेत्यवगतेर्विषयत्वमागात् ॥ १२३ ॥

स्पष्टानुभूतिविषय इति । तदानीं सुषुप्तौ । नन्वहंकारस्य स्पष्टाभिव्यञ्जकत्वे किं प्रमाणमित्याशङ्क्यान्वयव्यतिरेकाविति सुषुप्तिर्व्यतिरेकस्थलमभिप्रेत्यान्वयस्थलमुदाहरति—अधुना त्विति । उत्थानानन्तरमित्यर्थः । इदमंशमहंकरणमवगतेः स्पष्टावगतेः विषयत्वमागात् । विषयत्वं प्राप्तं तम इत्यनुषङ्गः ॥ १२३ ॥

स्पष्टानुभवाभावादेव सुषुप्तावविवेकिनामज्ञानासत्त्वबुद्धिराचार्याणां च क्वचिदात्मशुद्धिप्रस्तावेनास्त्यज्ञाने सुषुप्ताविति वचनं न त्वज्ञानासत्त्वादित्याह—

एतावता तव तमोऽपि सुषुप्तिकाले
नास्तीति बुद्धिरुदितं गुरुभिश्च कैश्चित् ।
स्थाने क्वचित्क्वचिदतो द्वयमुच्यमानं
ग्राह्यं विविच्य भवता विषयं विभज्य ॥ १२४ ॥

एतावतेति । स्पष्टानुभवाभावमात्रेणेत्यर्थः । तवेत्यविवेकिनामुपलक्षणं गुरुभिर्भगवत्पादैः कैश्चिदन्यैरप्याचार्यैरित्यर्थः । स्थाने स्थले क्वचित् क्वचित्तत्र तत्रात्मशुद्धिप्रकरणे उदितम् । सुषुप्तिकाले तमो नास्तीत्यनुषङ्गः । नन्वाचार्याणामज्ञानासद्भाववचनस्य कथं स्पष्टप्रतीतिविषयत्वाभावाभिप्रायः कल्प्यत इत्याशङ्क्य स्थलान्तरे तेषामेव सौषुप्तिकाज्ञानसद्भाववचनस्य विद्यमानत्वादित्यभिप्रेत्याह—तम इति । यतः क्वचित् क्वचिदेव सौषुप्तिकाज्ञानं नास्तीति वचनं स्थलान्तरे तु सद्भाववचनं चास्त्येव अतो द्वयं सद्भावासद्भाव-

लक्षणद्वयं विषयं विभज्य प्रतिपाद्यार्थं विभज्य विविच्य ग्राह्य-मित्यर्थः ॥ १२४ ॥

तत्र किं तद्द्वयमुदितं कथं वा विभज्य ग्रहणमित्याकाङ्क्षायामाह-

**नाज्ञानमस्ति च सुषुप्तिगतस्य पुंसो**
**गाढे तमस्ययमभूत्पुरुषः सुषुप्तः ।**
**इत्युच्यमानमविरुद्धतया विविच्य**
**ग्राह्यं त्वयाऽनुभवयुक्तिनिरूपणेन ॥ १२५ ॥**

नाज्ञानमिति । सुषुप्तिगतस्य पुंसः अज्ञानं नास्त्ययं सुप्तः पुरुषो गाढे तमस्यभूत् गाढतमसि मग्नोऽभूदित्युच्यमानं वचनद्वयमनुभव-युक्तिनिरूपणेनानुभवः स्पष्टाज्ञानानुभवस्याहंकारान्वयव्यतिरेकानुभव परामर्शानुपपत्तिगम्यसौषुप्तिकाज्ञानानुभवो वा युक्तिः पुनरुत्थाना-द्यनुपपत्तिः । तयोर्निरूपणेनाविरुद्धतया वचनद्वयस्य परस्पराविरोधेन विविच्यासद्भाववचनं स्पष्टप्रतीत्यभावविषयमेवेति विविच्य ग्राह्य-मित्यर्थः । अन्यथा सद्भाववचनस्य विरोधप्रसङ्गादिति भावः ॥१२५॥

इदानीमन्यदपि सौषुप्तिकाज्ञानाभाववचनमुदाहृत्य परिहरति—

**एवं तमोऽपि न बभूव सुषुप्तिकाले**
**भाषान्तरेण पुरुषः पर एव जीवः ।**
**निर्बीजतामुपगतः स निरन्वयेन**
**न स्पष्टमत्र तमसोऽनुभवोऽस्ति यस्मात् ॥ १२६॥**

एवमिति । यथा नाज्ञानमस्ति सुषुप्तिगतस्येति वचनम् । एवं भाषान्तरेण शब्दान्तरेण सुषुप्तिकाले तमो न बभूव । पुरुषः पर एव

बभूव परमात्मैव बभूव। स जीवो निर्वीजतां मूलकारणताज्ञानरहिततामुपगत इत्युच्यमानमविरुद्धतया ग्राह्यमित्यनुषङ्गः। अविरोधप्रकारमेवाह—निरन्वयेनेति। स्पष्टाभिव्यञ्जकाहंकारसम्बन्धाभावेनेत्यर्थः। अत्र—सुषुप्तौ ॥ १२६ ॥

सौषुप्तिकाज्ञानाद्यभावविषयमाचार्यान्तरवचनमप्युदाहृत्य परिहरति—

**अज्ञानतज्जमतिहीनतया सुषुप्ते**
**शुद्धः परोऽसि भगवानसि नित्यमुक्तः।**
**कामश्च कर्म सकलं च तदा कुतस्त्यं**
**चित्सागरेऽनवकरे त्वयि तायमाने ॥ १२७ ॥**

अज्ञानेति। मतिरन्तःकरणम्। नन्वज्ञानाद्यभावमात्रेण कथं विशुद्धता कामादीनां विद्यमानत्वादित्याशङ्क्य कारणासद्भावसिद्धौ कार्यासद्भावः कैमुतिकन्यायसिद्ध इत्यभिप्रेत्याह—काम इत्यादिना। तदा सुषुप्तावनवकरेऽज्ञानाद्युपाधिशून्ये तायमाने परिपूर्ण इत्यर्थः। तदा अनवकरे तायमाने चित्सागरे त्वयि कामश्च कर्म च सकलं कुतः स्यादित्युच्यमानमविरुद्धतया स्पष्टप्रतीत्यभावविषयत्वेन नेयमित्यर्थः। तस्मात्सुषुप्तावज्ञानमस्त्येवेति भावः ॥ १२७ ॥

ननु सुषुप्तावज्ञानसत्त्वे तत्कार्यदुःखादीनामपि सत्त्वात् कथमात्मनः शुद्धिरुच्यत इत्याशङ्क्याह—

**आसीदहंकरणमात्मतमोनिमित्तं**
**तज्जाग्रतश्च भवतः स्वपतश्च दुःखम्।**

आनीय दर्शयति तन्न सुषुप्तिकाले
बीजक्षयादिति भवानतिनिर्मलोऽभूत् ॥ १२८ ॥

आसीदिति । प्रबोधकाल इति शेषः । आत्मतमो निमित्तमिति बहुव्रीहिः । तदहंकरणं स्वपतः स्वप्नाभिमान्यात्मनः दुःखमानीय दर्शयति स्वस्मिन् विद्यमानं स्वसंसृष्टे आत्मनि तादात्म्याध्यासेन संपाद्य दर्शयतीत्यर्थः । तत् दुःखं बीजक्षयात् दुःखहेत्वहंकारक्षयात् । यद्यप्यज्ञानं सुषुप्तौ विद्यते तथापि तन्मात्रस्य दुःखाद्यजनकत्वादाविद्यकाहंकारस्यैव जाग्रत्स्वप्नयोर्दुःखादिहेतुत्वदर्शनात्त्वहंकारस्य सुषुप्तौ नष्टत्वान्न तव दुःखादिकमिति शुद्धत्वमुच्यत इत्यर्थः ॥ १२८ ॥

ननु दुःखादेराहंकारिकत्वे पारमार्थिकत्वं स्यात् । न चाहंकारस्याज्ञानकार्यत्वात् तज्जन्यस्य मिथ्यात्वमज्ञानस्य ज्ञानाभावत्वेनाहंकारकारणत्वानुपपत्तेरित्याशङ्क्याहंकारं प्रति कारणत्वसिद्ध्यर्थमुक्तमज्ञानभावत्वं स्मारयति—

सद्रूपमावरणतानुभवादभीष्ट-
मज्ञानमात्मचिति नैशतमोवदेतत् ।
ज्ञानं दिवाकरवदस्य जडप्रकाश-
रूपं निवर्त्तकमिति प्रवदन्ति धीराः ॥ १२९ ॥

सद्रूपमिति । भावरूपमसद्विलक्षणमित्यर्थः । आत्मचित्यात्मचैतन्य एतदनुभूयमानमज्ञानं सद्रूपमिति प्रतिज्ञा तत्र पूर्वोक्तमेव हेतुं स्मारयति—आवरणतानुभवादिति । आवरणत्वादिति हेतुर्विवक्षितः । आवारकत्वे प्रमाणमुक्तम्—अनुभवादिति । मूढोऽस्मीत्यनुभवादज्ञान-

स्यावारकत्वमित्यर्थः । नैशतमोवदन्धकारवदिति दृष्टान्तनिर्देशः इदानीं प्रकाशनिवर्त्यत्वादपि तमोवदज्ञानं भावरूपमेवेत्युक्तमाह— ज्ञानमिति । यथा दिवाकरस्तमोनिवर्त्तकः तथा ज्ञानमप्यज्ञानस्य निवर्त्तकमिति वदन्तीति सम्बन्धः । ननु स्वरूपज्ञानस्याज्ञानसाधकत्वात्कथं तन्निवर्त्तकत्वमित्याशङ्क्य यद्यपि तस्य केवलस्य न निवर्त्तकत्वं तथापि वाक्योत्थाखण्डाकारवृत्तिप्रतिफलितस्य तन्निवर्त्तकत्वमस्त्येवेत्याह—जडेति । जडप्रकाशान्तःकरणवृत्तिप्रतिफलितत्वात्तद्रूपमित्यर्थः ॥ १२९ ॥

न केवलमस्माभिरेवाज्ञानस्य भावत्वमुच्यते किन्तु स्वप्रकाशसंवेदनं तद्विषयाज्ञानमभ्युपयद्भिर्वादिभिरपि तत्प्रथममेव वक्तव्यमित्याह—

प्रावादुकैरपि तथैव तदेषितव्यं
संवेदनेऽस्फुरणमभ्युपयद्भिरग्रे ।
संवेदनं न खलु संविदभावरूप
मज्ञानमभ्युपगतं न च बुद्ध्यभावः ॥ १३० ॥

प्रावादुकैरपीति । वादिभिरित्यर्थः । तथैव भावत्वेनैव तदज्ञानमस्फुरणमितिच्छेदः । अग्रे प्रथमं स्वप्रकाशरूपेपि संवेदने तत्स्वरूपस्वप्रकाशत्वविषयसन्देहात्तद्विषयाज्ञानं वक्तव्यं तथा च तद्भावस्वरूपमेवेषितव्यमित्यर्थः । ननु स्वप्रकाशसंवेदनेऽज्ञानं ज्ञानाभाव एव किन्न स्यात् तत्राह—न खल्विति । नाभ्युपगतमभ्युपगन्तुं न शक्यमित्यर्थः । तत्र हेतुः—नचेति । चो हेतौ । यतो बुद्ध्यभावः संविद्विषयज्ञानाभावो नास्ति । संविदः स्वयमेव प्रकाशादतो ज्ञानाभावाभावादेव संवेदनेऽज्ञानं ज्ञानाभावो न भवतीत्यर्थः ॥ १३० ॥

तस्मात्सुषुप्तावप्यज्ञानस्य सत्त्वेपि तत्कार्याहंकाराभावेन दुःखाद्यभावात् नाज्ञानसत्त्वमात्मशुद्धिविरुद्धमिति शुद्धिप्रतिपादकानि श्रुत्याचार्यवाक्यानि न विरुद्धानीत्युपसंहरति—

तस्मादशेषजगदेकनिदानभूत-
मज्ञानमात्मविषयं न विरुद्धमूचुः ।
वेदावसानवचनानि मुनीश्वराश्च
स्थानेषु भूरिषु ततोऽवकरो न कश्चित् ॥१३१॥

तस्मादिति । यस्मादज्ञानस्य भावरूपत्वेन तत्कार्यत्वमहंकारस्य यस्माच्चाहंकाराभावादेव दुःखाद्यभावः तस्मान्न विरुद्धं न शुद्धत्वनित्यमुक्तत्वसत्संपत्त्यादिविरुद्धमित्यर्थः । यतो न विरुद्धं ततः सत्संपत्तिप्रतिपादकवेदान्तवाक्यस्य शुद्धत्वादिप्रतिपादकाचार्यवचनस्य च न किंचिदवद्यमित्याह-वेदावसानवचनानि मुनीश्वराश्च भूरिषु स्थानेषूचुरिति भूरिषु बहुषु स्थानेषु तत्तदात्मशुद्धिप्रकरणेषु ऊचुः शुद्धत्वादिकमिति शेषः । ततस्तत्रावकरो दोषः ॥ १३१ ॥

ननु सुषुप्तिकालेऽज्ञानमङ्गीकृतं चेत् केन तर्हि तदनुभवः । आत्मनेति चेन्न । तस्यान्तःकरणं विनाऽनुभवितृत्वानुपपत्तेः । तस्य च तदानीमभावात् अन्यथा प्रमातृत्वेनाहमुल्लेखापत्तेरित्याशङ्क्य यद्यपि चैतन्यप्रकाशस्यात्मनः स्पष्टानुभवितृत्वलक्षणप्रमातृत्वेऽन्तःकरणापेक्षा तथापि साक्ष्यसम्बन्धमात्रप्रयुक्तसाक्षित्वलक्षणानुभवितृत्वस्याज्ञानमात्रायतत्त्वात्तस्य च तदानीमपि भावादात्मना साक्षित्वाकारेणाज्ञानानुभवः संभवतीत्याह—

साक्षित्वमात्मतमसा मतिकञ्चुकेन
मातृत्वमेतदपि नेह सुषुप्तिकाले ।

यद्धेतुकं भवति यत्र हि तद्विना त-
त्संभाव्यते न च तदत्र सुषुप्तिकाले ॥ १३२ ॥

साक्षित्वमिति। आत्मनः साक्षित्वमात्मतमसा आत्माज्ञानमात्रेणैव भवति नान्तःकरणादिकमप्यपेक्ष्येत्यर्थः। न च साक्षादीक्षत इतीक्षणक्रियाकर्तुरेव साक्षित्वात्तस्याश्च तदानीमभावात् कथं साक्षित्वाकारेणाप्यज्ञानानुभव इति शङ्क्यं साक्ष्यसम्बन्धमात्रस्यैव चैतन्यस्यापेक्षणात् कर्तृत्वस्य दिव्यादित्यः प्रकाशत इतिवत्स्वरूपप्रकाशमात्रसम्बन्धेनोपचारादुपपत्तेरिति भावः। तर्हि प्रमातृत्वमपि तदा स्यात् न तस्यान्तःकरणोपाधिकत्वात्तस्य च तदाभावादित्याह—मतिकञ्चुकेनेति। मतिरन्तःकरणं तदेव कञ्चुकमुपाधिः तेनात्मनः प्रमितिकर्तृत्वलक्षणं प्रमातृत्वं भवति। अन्तःकरणस्य च तदा अभावादेतत्प्रमातृत्वं सुषुप्तिकाले नास्तीत्यर्थः। अपिशब्दो दृष्टान्तार्थः। यथाऽज्ञानसाक्षित्वमस्ति नैवमेतदित्यर्थः। यथाहंकारादिकमस्मिन् नास्ति तथा तद्धर्मप्रमातृत्वादिकमपि नास्तीति वार्थः। ननु प्रमातृत्वस्यान्तःकरणहेतुकत्वेपि तदभावेपि किं न स्यात्। नहि दण्डहेतुको घटो दण्डाभावे नास्तीत्याशङ्क्य न हि दण्डवदन्तःकरणस्य प्रमातृत्वं प्रति निमित्तकारणत्वं किन्तूपाधित्वमेवोपाध्यभावे चौपाधिकाभावः स्फटिकलौहित्यादिषु दृष्ट इत्याह—यद्धेतुकमिति। यदुपाधिकमित्यर्थः। तम्—उपाधिम्। तदितिपाठे उपाधिरूपवस्त्वित्यर्थः। सदौपाधिकं स्वसन्निधौ स्वसंसर्गिणि स्वधर्मासञ्जकस्यैवोपाधित्वादिति भावः। अत्र प्रयोजकसद्भावं व्यावर्त्तयति—न चेति। तद्–अन्तःकरणम् ॥ १३२ ॥

नन्वनुभवानुरोधेनाज्ञानाद्यसत्त्वमेवात्मनः शुद्ध्यर्थं सुषुप्तौ कल्प्यतां किमर्थंकष्टकल्पनया अज्ञानसत्वं कल्प्यते। परामर्शस्य भ्रान्तित्वेनाप्यु-

पपत्तेरित्याशङ्क्य शुद्धेरन्यथाप्युपपत्तेः। अज्ञानाभावे सुषुप्तेर्मोक्षरूपत्वप्रसङ्गाच्च। परामर्शबाधकाभावाच्चाज्ञानसत्त्वं कल्पनीयमित्याह—

अज्ञानमस्ति सकलं च सुषुप्तिकाले
तत्र प्रलीनमिति यद्यपि नास्ति पुंसः।
स्पष्टानुभूतिरपवर्गविलक्षणत्वा-
देष्टव्यमेव तु सुषुप्तिभुवस्तथात्वम् ॥ १३३ ॥

अज्ञानमिति। तत्राज्ञाने सुषुप्तिकालेऽज्ञानमस्ति। तत्र च सकलं लीनमित्येवंरूपेण स्पष्टानुभूतिः पुंसो यद्यपि नास्ति तथापि सुषुप्तिभुवः सुषुप्तिलक्षणस्थानस्य तथात्वमज्ञानवत्त्वमेष्टव्यमेव तत्र हेतुः अपवर्गविलक्षणत्वादिति। अन्यथा सुषुप्तिसुलभा मुक्तिः स्यादिति भावः ॥ १३३ ॥

नन्वज्ञानस्य सुषुप्तावपि सत्त्वे कर्तृत्वादिवदागमापायित्वाभावात् चैतन्यवत्स्वाभाविकमेव तत्स्यादिति शङ्कते—

एवं सतीह तमसो न विविच्य वस्तु
साक्षान्निवेदयितुमस्ति निदर्शनं चेत्।
नैतत्परागवगतेर्विषयो विभाति
गाढं तमो न तु तथाऽवगतिः प्रतीचि ॥ १३४ ॥

एवंसतीति। सुषुप्तावप्यज्ञाने सतीत्यर्थः। इह व्यवहारभूमौ वस्तु—आत्मवस्तु साक्षात्स्पष्टं निदर्शनं व्यतिरेकप्रदर्शनं स्थलं जाग्रद्दृष्टस्य स्वप्नेऽभावात् स्वप्नदृष्टस्य च सुषुप्तावभावादागमापायित्वात् स्थूलसूक्ष्मशरीरतद्धर्मस्यात्मस्वरूपत्वं नास्ती-

त्युक्तमज्ञानस्य तु सुषुप्तावपि भावात् तद्व्यतिरेकस्थलान्तराभावान्मुक्तेश्च शोधितात्मस्वरूपत्वेनानिदर्शनस्थलत्वात् नागमापायित्वमतश्चैतन्यवत्स्वाभाविकं स्यादिति न तद्व्यतिरेकेणात्मा ज्ञातुं शक्यत इत्यर्थः । अज्ञानस्यागमापायित्वेन स्थूलसूक्ष्मवदात्मव्यतिरेकासंभवेपि दृश्यत्वेन तद्व्यतिरेकस्य सुकरत्वात् । नात्र मतिक्लेशापेक्षेत्यभिप्रेत्याज्ञानस्य दृश्यत्वमात्मनश्च तदभावमाह—नैतदिति । गाढं तमः परागक्गतेर्ममाज्ञानमिति प्रत्यगभिन्नत्वेनावगतेः विषयो विभाति । प्रतीच्यस्मत्प्रत्ययविषये प्रत्यगात्मनि तथा पराक्त्वेनावगतिर्नास्ति ॥१३४॥

फलितमाह—

**प्रत्यक्पराग्विषयवस्तुविवेचनाय**
**क्लेशो न संभवति कस्यचिदत्र जन्तोः ।**
**दृश्यं तमो घटपटादिवदेष तस्य**
**द्रष्टा सुषुप्तिभुवि चिद्घनविग्रहोऽभूत् ॥१३५॥**

प्रत्यगिति । प्रत्यक् च पराग्विषयश्च प्रत्यक्परागविषयौ तावेव वस्तुनी तयोरित्यर्थः । विवेचनाय विविच्य ज्ञानाय कस्यचित् स्थूलमतेरपि जन्तोः क्लेशो न संभवति पराचः प्रतीचश्चेदमस्मत्प्रत्ययविषयत्वेन भेदस्यातिस्फुटत्वादित्यर्थः । ननु जागरिते स्यादयं विवेकः स्पष्टत्वात् । सुषुप्ते तु कथं भवतीत्याशङ्क्योत्थितस्य मूढोऽहमस्वाप्समिति परामर्शानुपपत्तिकल्प्यमानसौषुप्तिकाज्ञानानुभवस्यापि पराग्विषयत्वेनैव कल्प्यमानत्वात् विवेकः सम्भवतीत्याह—दृश्यमिति । परागनुभवविषयः एषः प्रत्यगात्मा तस्याज्ञानस्य द्रष्टृत्वं चाविकारितया तत्साक्षित्वमित्याह—दृश्यमिति । चिद्घनेति ॥ १३५ ॥

एवं जाग्रदादिदृष्टानां स्थूलसूक्ष्मकारणानामात्मस्वरूपत्वमात्मनश्च तद्द्रष्टृत्वादिना तद्व्यतिरेकितां चोक्त्वेदानीं जाग्रदाद्यवस्थासम्बन्धराहित्यमात्मनः कैमुतिकन्यायेन दर्शयति—

तिस्रोऽपि चिद्घनतनोस्तव दृश्यभूता
दूरे चकासति मतेर्बहिरेव तावत् ।
आविस्तिरोभवनधर्मतया ह्यवस्थाः
कः संकरो विमलचिद्वपुषस्तवाभिः ॥१३६॥

तिस्रोऽपीति । जाग्रत्स्वप्नसुषुप्तिलक्षणास्तिस्रोऽप्यवस्थाः चिद्घनतनोस्तवदृश्यभूता अतो विमलचिद्वपुषस्तवाभिरवस्थाभिः कः संकरः सम्बन्धः न कोऽपीत्यर्थः किंचान्तः करणस्यापि नावस्थाः स्वरूपं भवन्ति तद्व्यभिचारादित्याह—दूर इति । बहिरित्यनेन धर्मतया अवस्थानां मतिस्वरूपत्वप्रसक्तावुक्तं दूर इति । तस्या अस्वाभाविक्यः चकासति भासन्ते । तस्याः स्वाभाविकधर्मा न भवन्तीत्यर्थः । तत्र हेतुः आविरिति । आविर्भावतिरोभावलक्षणधर्मवत्त्वेनान्तःकरणे सत्यप्यवस्थानामागमापायित्वादित्यर्थ ॥ १३६ ॥

ननु माभूदात्मनोऽवस्थासम्बन्धः अवस्थावदन्तःकरणाश्रयत्वं तु वक्तव्यमद्वैतमतेऽन्तःकरणस्यान्याश्रयत्वस्वातन्त्र्ययोरनुपपत्तेः अतोऽवस्थावदन्तःकरणप्रयुक्ताशुद्धिः स्यादित्याशङ्क्यान्तःकरणस्य सावस्थस्य त्वयि कल्पितत्वान्न तत्प्रयुक्ताशुद्धिरित्याह—

त्वय्येव कल्पितमहंकरणं बिभर्ति
तिस्रोऽपि ताः सहितमेव तु तच्च ताभिः ।
त्वच्चित्प्रकाशविषयत्वमुपेत्य भाति
स्वाज्ञानवत्तव न रूपमेतच्चतुष्कम् ॥१३७॥

त्वय्येवेति। एतावता ग्रन्थसंदर्भेण प्रतिपादितोऽप्यर्थो मन्दबुद्ध्यनुग्रहाय त्वय्येवेत्यादिना श्लोकचतुष्टयेनैकत्र संगृह्य प्रदर्शित इति न पौनरुक्त्यदोष इति द्रष्टव्यम्। त्वयि कल्पितमेवेति सम्बन्धः। बिभर्ति भजते ताः अवस्था अहंकारस्य च सुषुप्त्यवस्थावत्वं स्वोपरमलक्षणसुषुप्तिप्रतियोगित्वेन वा कारणात्मना विद्यमानत्वाद्वेति मन्तव्यम्। कल्पितत्त्वे हेतुमाह—सहितमित्यादिना। ताभिरवस्थाभिः सहितमन्तःकरणं क्वचित्प्रकाशविषयत्वमुपेत्यैव भाति न स्वतः जडत्वात् तथा च दृश्यत्वात् कल्पितमित्यर्थः। कल्पितत्वसाधनफलमाह—स्वाज्ञानवदिति। रूपं स्वाभाविकं चतुष्कमन्तःकरणमवस्थात्रयं चेत्यर्थः। अथवा—अन्तःकरणस्यावस्थात्रयवत्त्वे कथं तस्मादात्मनो विवेकः समुदायव्यतिरेकस्थलाभावादित्याशङ्क्याज्ञानवदात्मचैतन्याभास्यत्वाद्विवेकः सम्भवतीत्याह—सहितमिति। किंचावस्थावदहंकारस्यात्मभेदाभेदाभ्यामनिरूपणाच्चात्मनि कल्पितत्वमतो न तत्त्वद्रूपमित्याह—

**नान्वेति तत्तव चिता व्यतिरेकिता च**
**दूरे न संभवति तस्य चतुष्टयस्य।**
**नाभावरूपभजनाय समर्थमेत-**
**देवं चिदेव तु चतुष्टयमेतदासीत्॥ १३८॥**

नान्वेतीति। तच्चतुष्कं तव चिता त्वत्स्वरूपचैतन्येन नान्वेति न तादात्म्येन सम्बध्नाति। जडाजडस्वभावविरोधात्तस्य चतुष्टयस्य व्यतिरेकिता ऽऽत्मभिन्नता दूरे न संभवति। जडस्य तस्य स्वतः प्रकाशासंभवात् प्रकाशात्मसम्बन्धासंभवाच्च तत्प्रतीत्यभावप्रसङ्गादित्यर्थः। अभेदपक्षे प्रकाशात्माभेदात् प्रतीतिसंभवेपि भेदपक्षे तु प्रतीतिरेव न संभवति कुतस्तदेकमूलवस्तुसिद्धिरित्यभिप्रायेण दूर इत्युक्तम्। न च तस्यासत्त्वमेवास्तु तावतापि न कल्पितत्वपरिशेष

इति शङ्क्यम्। अपरोक्षप्रतीत्यनुपपत्तेरित्याह—नाभावेति। अभावशब्दोऽसत्पर्यायः। एतच्चतुष्कं फलितमाह—एवमिति। वस्तुत आत्मनो भिन्नत्वादिरूपेण दुर्निरूपत्वमेवंशब्दार्थः। चैतन्यमेव स्वाज्ञानेन रज्जुरिव सर्परूपेणाहमादिरूपेण प्रतीयते। ततो दृश्यमानाहमादिचतुष्टयस्य चैतन्यमेव वास्तवस्वरूपं दृश्यमानरूपं तु कल्पितमतस्तत्प्रयुक्ताशुद्धिर्नास्तीत्यर्थः॥ १३८॥

नन्वहमादिचतुष्टयस्य मिथ्यात्वेऽऽत्मनोपि तत्सम्बन्धाश्रयत्वात् तद्वन्मिथ्यात्वं स्यादित्याशङ्क्य व्यभिचारिष्वेव रज्ज्वां प्रतीयमानस्रक्सर्पादिषु मिथ्यात्वदर्शनात् अव्यभिचारिण्यां रज्ज्वां च तद्दर्शनादात्मनश्चाव्यभिचारादुक्तानुमानं व्यभिचारित्वलक्षणोपाधिग्रस्तमव्यभिचारित्वलक्षणप्रत्यनुमानग्रस्तं चेत्यभिप्रेत्याह—

**जाग्रत्स्वप्नसुषुप्तिमूर्च्छिततनूनिष्क्रान्त्यवस्थासु य-**
**चैतन्यं व्यभिचारिणीष्वनुगतं तत्सत्यमेवाऽऽत्मनः।**
**यत्किञ्चिद्व्यभिचारि तन्ननु मृषा स्रक्सर्पदण्डादिव-**
**न्नानुस्यूतचिदात्मवस्तु वदितुं शक्यं मृषा रज्जुवत्॥१३९॥**

जाग्रदिति। मूर्च्छिता तनुर्यस्यामवस्थायां सा मूर्च्छिततनुः निष्क्रान्तिर्मरणमवस्थापदस्य जाग्रदादिभिः प्रत्येकं सम्बन्धः। व्यभिचारिणीषु परस्परव्यभिचारिणीष्वनुगतमनुस्यूतं व्यभिचारिणीषु जाग्रदाद्यवस्थासु यदात्मनः स्वरूपभूतं चैतन्यमनुगतं तत्सत्यमेव न तु मृषेत्यर्थः। चैतन्यानुगत्यभावे चावस्थासिद्धिरेव न स्यादिति द्रष्टव्यम्। अनुगतमित्यनेन व्यभिचारित्वोपाधेः साधनाव्यापकत्वमुक्तं साध्यव्यापकत्वमाह—यत्किंचिदिति। ननुशब्दः प्रसिद्धौ स्रक्सर्पदण्डादिवत् रज्ज्वारोपितस्रगादिवद्व्यभिचारि यद्रज्जुसर्पादि तत्खलु मृषादृष्टं

नान्यत्तथा च मृषात्वे व्यभिचारित्वमेव प्रयोजकमित्यर्थः । अव्यभिचारित्वलक्षणसत्प्रतिपक्षहेतोर्व्याप्तिमाह—नानुस्यूतेति स्वस्मिन्प्रतीयमानजाग्रदाद्यवस्थास्वनुस्यूतो यश्चिदात्मा स एव वस्तुरज्जुवत्सर्पाद्याधाररज्जुवन्मृषा वदितुं न शक्यमिति सम्बन्धः । यत्स्वस्मिन् प्रतीयमाननिखिलपदार्थानुस्यूतं तन्न मृषा यथा स्रक्सर्पदण्डाद्यनुस्यूता रज्जुः आत्मा च जाग्रदाद्यवस्थानुस्यूतः तस्मान्न मृषेति वक्तु शक्यमित्यर्थः । तथा च व्यभिचारित्वादप्यन्तःकरणावस्थानामव्यभिचार्यात्मैव वास्तवस्वरूपमिति भावः ॥ १३९ ॥

अन्तःकरणावस्थानामात्माज्ञानकार्यत्वादपि तासामात्मैव वास्तवस्वरूपमित्याह—

**जाग्रत्स्वप्नसुषुप्तिधर्मकमिदं चित्तं त्वदज्ञानतः**
**प्रादुर्भूतमतस्त्वमेव सततं त्वत्तो न तद्भिद्यते ।**
**स्वाज्ञानं च तवानुभूतिबलतः सिद्धं मृषा तत्त्वतो**
**नाऽऽसीदस्ति भविष्यतीति भवतः पूर्णा चितिः शिष्यते**
**॥ १४० ॥**

जाग्रदिति । जाग्रत्स्वप्नसुषुप्तयो धर्माः यस्येति तद्गुणसंविज्ञानो बहुव्रीहिः । चित्तमन्तःकरणं त्वदज्ञानतः त्वत्स्वरूपचैतन्याश्रयाज्ञानात् प्रादुर्भूतं ततः किमित्यत्राह—अत इति । यतः सावस्थचित्तं त्वदज्ञानादेव कल्पितमतस्तत्तादृशं चित्तं सततं कालत्रयेपि त्वमेव न तु त्वत्तो वस्तुतो भिद्यते । यद्यदज्ञानजं तत्तदात्मकं न तु ततः पृथक् सदिति व्याप्तेरज्जुसर्पादौ दृष्टत्वादतस्तत्प्रयुक्ताशुद्धिर्नास्तीत्यर्थः । नन्वज्ञाने नैवाशुद्धिः प्राप्ता न तस्यापि दृश्यत्वेन मिथ्यात्वादित्याह—स्वाज्ञानं चेति । स्वाज्ञानं च यतस्तावनुभूतिबलात्सिद्धमतो

मृषैव तत्त्वतस्तु नासीन्नास्ति न भविष्यति । कालत्रयेपि वस्तुतो नास्तीत्यर्थः । तस्मादाविद्यकाहंकारस्यैव कर्तृत्वभोक्तृत्वाशयनायाद्युपप्लवावस्थादिधर्मकत्वादविद्यायास्तत्कार्यस्य चाहंकारादिवर्गस्य दृश्यत्वागमापायित्वादिना प्रत्यग्रूपसम्बन्धाभावात्प्रत्यग्रूपस्य च सर्वत्र सर्वदाहंकारादिसाक्षितयानुस्यूतत्वान्नित्यशुद्धबुद्धमुक्तासङ्गपरिपूर्णकूटस्थसत्यपरमानन्दस्वभावस्त्वमेक एव शिष्यसे इत्युपसंहरति—इतीति । इतिशब्दो हेतौ । यतः शरीरत्रयतद्धर्माः सर्वदा मृषैवातः परिपूर्णा परिच्छेदत्रयरहिता भवतश्चितिः भवत्स्वरूपचैतन्यं शिष्यते केवलीभवतीत्यर्थः ॥ १४० ॥

किंच यच्चैतन्मयोक्तं तद्वैशेषिकादिमतवन्न युक्तिमात्रसिद्धं किन्तु स्वतः प्रमाणश्रुतिमस्तकवाक्यसिद्धमतोऽत्यन्तं श्रद्धेयमित्याह—

**ज्योतिर्ब्राह्मणवाक्यमानबलतः सम्पूर्णरूपा चिति-**
**र्जाग्रत्स्वप्नसुषुप्तिधर्मरहिता मोक्षाय निश्चीयते ।**
**तस्मादस्मदुदीरितं स्वकवपुः श्रद्धत्स्व मानं विना**
**नास्माभिः प्रतिपादिता चितिरियं वाक्यार्थसम्बन्धिनी**
**॥ १४१ ॥**

ज्योतिर्ब्राह्मणेति । ज्योतिर्ब्राह्मणवाक्यमेव मानं प्रमाणं तद्बलतः तत्तात्पर्यादित्यर्थः । तत्र हि किं ज्योतिरेवायं पुरुष इत्युपक्रम्यात्रायं पुरुषः स्वयंज्योतिर्भवतीत्यन्तेन । आदित्यादिज्योतिरपवादेन विशुद्धचैतन्यमेव निखिलव्यवहारसाक्षितया ज्योतिरिति प्रदर्श्य ततः स्वप्नादिखण्डिकायां सधीः स्वप्नोभूत्वेत्यादिना कर्तृत्वादेर्बुद्ध्युपाधिकत्वमुपवर्ण्य दृष्ट्वैव पुण्यं च पापं चेत्येवकारेणावस्थादिसम्बन्धराहित्येनासंगत्वमुपवर्ण्यैषोऽस्य परमानन्द इत्यादिना परमानन्द-

स्वभाव एवायमात्मेति दर्शितं तदिदमाह—जाग्रत्स्वप्नसुषुप्तिधर्मै रहितेति । जाग्रदादिभिस्तद्धर्मैश्च रहितेत्यर्थः । मोक्षाय मोक्षसाधनवाक्यार्थ-ज्ञानाय तत्त्वमादिवाक्यार्थसम्बन्धित्वेनेत्यर्थः । श्रुतिसिद्धप्रदर्शन-फलमाह—तस्मादिति । यस्माच्छुद्धं चैतन्यं श्रुतिसिद्धं तस्मादस्मदु-दीरितं स्वकवपुः त्वत्स्वरूपं श्रद्धत्स्व । अस्माभिश्च वाक्यार्थ-सम्बन्धिनी तत्त्वमादिवाक्यार्थोपयोगित्वंपदलक्ष्यभूतेयं चितिर्मानं विना न प्रतिपादिता किन्तु श्रुतिमानपूर्वमेव प्रतिपादितेत्यर्थः ॥१४१॥

उपपादितं त्वंपदार्थशोधनमुपसंहरति—

**एवं त्वंपदलक्ष्यवस्तु भवता यत्पृष्टमासीत्पुरा**
**तन्निर्णीतमतोऽन्यदस्ति यदि ते चित्तस्थितं पृच्छ तत् ।**
**बुद्धिस्थं कुरु पूर्वमुक्तमखिलं यद्वक्ष्यमाणं च तद्**
**बोद्धुं धारय ते मनः स्थिरतरं श्रद्धाधनाद्याश्रयः ॥ १४२ ॥**

एवंत्वमिति । भवता यत्त्वंपदलक्ष्यवस्तु पुरा पृष्टमासीत् तन्निर्णीतम् एवमुपसंहृत्य शिष्यस्य नैतावता कृतकृत्यता किन्तु वाक्यार्थज्ञाना देव तच्च तत्पदार्थज्ञानं विना न सम्भवतीति तत्पदलक्ष्यमपि व्युत्पादयितुं नाबुभुत्सितं बोधयेदिति न्यायेन बुभुत्सानुरोधेन बोधयितुं बुभुत्सामुद्भावयति—अतोऽन्यदिति । अतस्त्वंपदलक्ष्यादन्यत् चित्तस्थितं बुद्धिस्थमस्ति यदि तत्पृच्छ यदीत्यवधारणे पदार्थ-द्वयज्ञानस्यापि वाक्यार्थज्ञाने कारणत्वात् प्रतिपन्नस्त्वंपदार्थोऽपि न विस्मरणीय इत्याह—बुद्धिस्थमिति । अखिलमवस्था तद्विवेचनादिकं श्रद्धादेरपि कारकत्वात् श्रद्धादिपूर्वं वक्ष्यमाणार्थे चेतःस्थैर्य-संपादयेत्याह—यद्वक्ष्यमाणमिति । श्रद्धा प्रमेयबोधाभिलाषः सैव धनमादि-

पदेन शान्त्यादिकं गृह्यते। तदाश्रयः सन् यच्च तत्पदार्थस्वरूपादिकं वक्ष्यमाणं तद्बोद्धुं ते मनः स्थिरतरं धारयेति सम्बन्धः ॥ १४२ ॥

एवं शिष्यो गुरुणानुज्ञातः सन्नुक्तार्थानुवादपूर्वकं तत्पदार्थ-जिज्ञासां दर्शयतीत्याह—

**इत्युक्ते गुरुणा स पृच्छति पुनस्त्वंशब्दलक्ष्यं मम**
**ज्ञातं न्यायबलेन पूर्वमुदितावस्थात्रयापोहनात् ।**
**तच्छब्देन तु लक्ष्यमर्थमधुना बोद्धुं मनो मामकं**
**धावत्याशु तमप्यपोह्य सकलद्वैतप्रपञ्चं वद ॥ १४३ ॥**

इत्युक्त इति। इत्येवं गुरुणोक्ते सतीत्यर्थः। स शिष्यः पुनः पुनरपि पृच्छति। पूर्वं न्यायवलेनागमापायादियुक्तयोदितं प्रतिपादितं यदवस्थात्रयापोहनमवस्थात्रयादेरनात्मत्वेन निश्चयः तस्माद्धेतोः ततो निष्कृष्टमसङ्कूटस्थानुभवरूपत्वंपदलक्ष्यं मम ज्ञातमधुना तच्छब्देन तत्त्वमसिवाक्यस्थतत्पदेन लक्ष्यमर्थं बोद्धुं मामकं मदीयं मनो धावति तत्परं वर्त्तत इत्यर्थः। आशु शीघ्रं तं तत्पदलक्ष्यार्थमपि सकलं द्वैतप्रपञ्चमपोह्यानात्मत्वेन परित्यज्य वदानुगृहाणेत्यर्थः ॥१४३॥

एवमाचार्यप्रवृत्त्यर्थं भवदुक्तार्थं च न विस्मरामि वक्ष्यमाणार्थे च मनः स्थिरतरं करोमीत्युक्त्वा प्रश्नप्रकारमाह—

**किं सप्रपञ्चमिदमस्त्वथ वा समस्त-**
**द्वैतप्रपञ्चरहितं परिपूर्णरूपम् ।**
**यद्वोभयात्मकमिदं परमार्थतोऽस्तु**
**विष्णोः परं पदमितीह विचारणीयम् ॥ १४४ ॥**

किं सप्रपञ्चमिति । इदं विष्णोः परमं पदं किं सप्रपञ्चं परमार्थतः सप्रपञ्चस्वरूपमेवास्तु । अथवा मायया सप्रपञ्चं परमार्थतः समस्तद्वैतप्रपञ्चरहितमेव एवं सति परिपूर्णरूपत्वमपि सिद्ध्यतीति । यद्वेदं परमार्थतः सप्रपञ्चत्वनिष्प्रपञ्चत्वलक्षणोभयात्मकमपीति विचारणीयमिति प्रश्नार्थः ॥ १४ ॥

नन्वेतादृशप्रश्नोऽनुपपन्नः एकमेवाद्वितीयं नेह नानास्ति किंचनेत्यादिना निष्प्रपञ्चस्वरूपस्यैव प्रमीयमाणत्वात् जन्माद्यधिकरणे आरम्भणाद्यधिकरणे च तथैव दर्शितत्वात् कोट्यन्तरोपस्थापकाभावादित्याशङ्क्य सत्यं तद्वत् "सर्वस्य वशी सर्वस्येशान" इत्यादिसविशेषब्रह्मस्वरूपप्रतिपादकवाक्यानामपि विद्यमानतया कोट्यन्तरोपस्थितिसंभवात् प्रश्न उपपन्न एवेत्याह—

वेदान्तवाक्यगतिरत्र बहुप्रकारा
काचित् कथञ्चिदिति संशय उत्थितो मे ।
तत्त्वं प्रकाशय निवर्त्तय मोहमूलं
मत्संशयं मम हिताय भव प्रसीद ॥ १४५ ॥

वेदान्तवाक्येति । गतिः प्रवृत्तिः अत्र ब्रह्मणि बहुप्रकारा सप्रपञ्चत्वप्रतिपादनरूपा निष्प्रपञ्चत्वप्रतिपादनरूपा चेत्यर्थः । ततः किं तत्राह— काचिदिति । किमुभयरूपप्रवृत्तेर्मुख्यत्वेनोदितानुदितहोमवदुभयमपि पारमार्थिकम् । अथवा—काचिन्मुख्या काचित्कथंचिल्लक्षणया नेतव्येत्यन्यतरदेव परमार्थिकं तत्रापि सप्रपञ्चवाक्यप्रवृत्तेर्मुख्यत्वम् । अन्यस्यास्तु वैपरीत्यमिति सप्रपञ्चत्वमेव परमार्थः । अथवा—निष्प्रपञ्चवाक्यप्रवृत्तेर्मुख्यत्वमितरस्यास्तु वैपरीत्यमितिनिष्प्रपञ्चत्वमेव परमार्थस्वरूपमिति मे विशेषानिर्द्धारणात्संशय उत्थितः । अतस्तत्वं

प्रकाशय मोहमूलं मत्संशयं निवर्त्तय तत्वं प्रकाश्य मोहमूलं संशयं निवर्त्तयेत्यर्थः। संशयानिवृत्तावनर्थपरम्परायाः अनिवृत्तेः पुरुषार्था-भावाद्वश्यं स उच्छेदनीयः। अतस्तदर्थमाचार्यं प्रार्थयते मम हिताय भव प्रसीदेति ॥ १४५ ॥

तत्रोभयविधश्रुतिदर्शनादुभयरूपमपि वास्तवमिति वक्तुमशक्यं तथा हि सप्रपञ्चत्वमपि ब्रह्मणो ज्ञानस्य दोषोपाधिकाप्रामाण्यवदौ-पाधिकं सद्वास्तवमुत चैतन्यवन्निरुपाधिकमेव सत् नाद्य इत्याह –

**न स्थानतोऽप्यस्ति परस्य कश्चि-**
**द्विशेषयोगः परमार्थरूपः।**
**स्वतः पुनर्दूरनिरस्त एव**
**परस्य तत्त्वस्य विशेषयोगः ॥ १४६ ॥**

न स्थानत इति। स्थानतः पृथिव्याद्युपाधितः परस्य कूटस्थासङ्ग निष्प्रपञ्चब्रह्मणः उपाधितोपि परमार्थरूपः कश्चिद्विशेषयोगो विशेष-सम्बन्धो नास्त्येव विरोधात्। औपाधिकस्य वास्तवत्वानुपपत्तेश्च। न चाप्रामाण्यवत्तदुपपद्यत इति वाच्यं न हि प्रमाणस्य सतो ज्ञानस्य दोषोपाधिनाऽप्रामाण्यमुच्यते किं तु दोषविरहदशायां प्रमाणीभवितुं योग्यस्य तस्य दोषहेतुकमप्रामाण्यमुच्यते। ब्रह्मणश्च वस्तुतो निष्प्र-पञ्चस्य न वस्तुतस्तद्विरुद्धं सप्रपञ्चत्वमुपपद्यत इत्यर्थः। द्वितीयस्तु सुतरां न सम्भवतीत्याह – स्वत इति ॥ १४६ ॥

ननूभयविधश्रुतिदर्शनादुभयरूपत्वं परमार्थत एव न च विरोधः श्रुतिसिद्धेऽर्थे विरोधशङ्काया अनवकाशादुदितानुदितहोमवद् व्यव-स्थोपपत्तेरित्याशङ्क्याह –

स्वभावतश्चिद्घनविग्रहस्य
मृषा ह्युपाधिप्रभवा विशेषाः।
यथा जपापुष्पनिबन्धनः स्या-
न्मृषा मणेर्लोहितिमा तथैव ॥ १४७ ॥

स्वभावत इति। न हि सप्रपञ्चवाक्यं तात्पर्यवृत्त्या सप्रपञ्चत्वं प्रतिपादयति निष्प्रयोजनत्वात्। किन्तु निर्विशेषब्रह्मप्रतिपत्तिशेषत्वेनैव। न च तात्पर्यतो गम्यस्य वास्तवत्वं सम्भवति न चोपासनया सप्रयोजनत्वात् तच्छ्रुतिस्तात्पर्येण प्रतिपादयतीति शङ्क्यम्। योषिदग्न्यादिवन्मिथ्याभूतत्वेपि तदुपपत्तेः। न च वेदार्थस्य मिथ्यात्वे तदप्रामाण्यं स्यादिति शङ्क्यं विद्यमानार्थकत्वेन तत्प्रामाण्योपपत्तेः। न हि वेदो विशेषः परमार्थ इति बोधयति येनाविद्यमानार्थो भवेत्। कल्पना तु प्रमाणान्तरविरोधान्न प्रवर्तिष्यत इति वक्ष्यति। किंच सर्वगन्धादीनां वास्तवत्वे ब्रह्मणस्तदाकारेण परिणामो वक्तव्यः। न च स संभवति कूटस्थचिद्धातोरित्यभिप्रायेणोक्तं—चिद्घनविग्रहस्येति। न चोदितानुदितहोमवद्व्यवस्थासम्भवः। सिद्धवस्तुनि विकल्पायोगात्। न हि स्थाणुः पुरुषत्वेन प्रतिपाद्यमानः पुरुषो भवति। न वा निष्प्रपञ्चप्रमितिं विनानर्थनिवृत्तिः सम्भवतीत्यर्थः। अत एव सप्रपञ्चत्वमेव पारमार्थिकमिति निरस्तम्। अतः परिशेषाद्वस्तुतो निष्प्रपञ्चं मायया सप्रपञ्चमित्येव तत्त्वमित्याह मृषेति। तत्र दृष्टान्तमाह—यथेति। मणेः स्फटिकमणेः जपापुष्पनिबन्धनो जपाकुसुमोपाधिप्रयुक्तो लोहितिमा यथा मृषा स्यात्तथैव समष्टिव्यष्ट्यात्मकप्रपञ्चोपाधिप्रयुक्ता विशेषा मिथ्येत्यर्थः॥ १४७॥

नन्वीश्वरत्वलक्षणो विशेषो ब्रह्मणि वास्तवः स्वीकर्त्तव्यः। अन्यथा तस्यानीश्वरत्वप्रसङ्गान्न हि कल्पितधनेन कश्चिद्धनी भवति।

तथा च निरधिष्ठातृकं सज्जगन्न चेष्टेतेत्याशङ्क्येश्वरत्वस्यापि मायोपाधिकत्वेन कल्पितत्वात्तावन्मात्रेणैव जगद्व्यवहारोपपत्तेर्नोक्तदोष इत्याह—

मायोपाधेरद्वयस्येश्वरत्वं
कार्योपाधेर्जीवता च प्रतीचः ।
मिथ्यैव स्याद्बन्धुजीवप्रसून-
संपर्कात्तथा रक्ततेवाभ्रकादेः ॥ १४८ ॥

मायोपाधेरिति । ईश्वरत्वस्यौपाधिकत्वे दृष्टान्तः—जीवता चेति । औपाधिकस्य मिथ्यात्वे दृष्टान्तमाह—बन्धुजीवेति । बन्धुजीवप्रसूनं बन्धूकपुष्पमभ्रमको धातुविशेषः । आदिपदेन स्फटिकादिकं गृह्यते ॥ १४८ ॥

नन्वौपाधिकस्य मिथ्यात्वं न नियतं भल्लातकादिरसासञ्जितवस्त्रकलङ्कस्य वास्तवत्वात् तस्य यावद्द्रव्यभावित्वात् । न च पटस्तदाकारेण परिणमते येन ब्रह्मणोऽपरिणामित्वात्सप्रपञ्चत्वस्यावास्तवत्वं भवेदित्याशङ्क्य तस्यापि सत्यत्वासंप्रतिपत्तेर्मैवमित्याह—

भल्लातकादिरसयोगनिबन्धनं च
वस्त्रे कलङ्कितमनेन यथा निरस्तम् ।
तस्यापि पक्षपतितत्वमभीष्टमेव
तस्मादसौ न भवति व्यभिचारभूमिः ॥ १४९ ॥

भल्लातकेति । कलङ्कितं कलङ्कः अनेन यथौपाधिकधर्माणां मिथ्यात्वसमर्थनन्यायेन निरस्तं सत्यमिति निरस्तम् । न च कलङ्कस्य मिथ्यात्वे यावद्द्रव्यमवस्थानानुपपत्तिः । औपाधिकानां यावदुपाधि सत्वादुपाधीनां च भल्लातकरसानामतिस्निग्धानां वस्त्रेण दृढतरयोगेन विश्लेषासम्भवात् यावद्द्रव्यमवस्थानोपपत्तेः । ततस्तस्यापि पक्षतुल्यत्वान्न तद्व्यभिचारस्थलमित्याह—तस्यापीति । भल्लातकासञ्जितकलङ्कं यस्यासौ भल्लातकासञ्जितकलङ्कः ॥ १४६ ॥

न केवलं ब्रह्मणः सविशेषत्वमुपाधिकल्पितमित्येतद्युक्तिसिद्धं किन्तु श्रुतिसिद्धमिति श्रुतिप्रमाणमुदाहरति ।

**यथा ह्ययं ज्योतिरात्मा विवस्वा–**
**नपो भिन्ना बहुधैकोऽनुगच्छन् ।**
**उपाधिना क्रियते भेदरूपो**
**देवः क्षेत्रेष्वेवमजोऽयमात्मा ॥ १५० ॥**

यथेति । ज्योतिरात्मा ज्योतिस्वरूपः भिन्ना अपोऽनुगच्छन् शरावादिपात्रभेदेन भिन्नास्वप्सु प्रतिबिम्बित इत्यर्थः । उपाधिना शरावादिनिष्ठजलोपाधिना भेदरूपः क्रियते भिन्नस्वरूपत्वेन प्रतीयत इत्यर्थः । क्षेत्रेषु मायातत्कार्यदेवादिशरीरेषु । यथैकोपि सूर्यः घटशरावोदञ्चनस्थास्वप्सु प्रतिबिम्बितस्तदुपाधिभेदेन भेदवानिव प्रतीयते तथा स्वप्रकाशात्माप्येक एवाज्ञानतत्कार्यदेवादिशरीरेषु प्रतिबिम्बितः जीवत्वेश्वरत्वादिव्यावृत्तरूपेण प्रतीयते । वस्तुतस्तु निर्विशेषनित्यशुद्धबुद्धमुक्तस्वभाव इतिश्रुतेरर्थः ॥ १५० ॥

एवमीश्वरत्वाद्यप्यात्मनो मायोपाधिकं मिथ्यैव न तु वास्तवमित्युक्तम् । अस्यैव दार्ढ्याय मतान्तरं दूषयितुं तदनुवदति—

ऐश्वर्यमस्य परमात्मन उक्तमन्यैः
साक्षात्स्वरूपमवबोधसुखादितुल्यम् ।
तेनेशते किल यथायथमीशितव्या-
न्भूत्यान्प्रतीश्वरतया जगतीभृतोऽपि ॥ १५१ ॥

ऐश्वर्यमिति । सर्ववशित्वाद्यैश्वर्यं सर्वेश्वरत्वं साक्षात्स्वरूपं निरपेक्षस्वरूपम् । ननु हिरण्यगर्भादीनामाधुनिकनरेश्वराणामपि यथायथमैश्वर्यं विद्यते तत्कथं चैतन्यादिवदीश्वरत्वं परमात्मनो निरपेक्षस्वरूपं स्यात् । असाधारणस्यैव स्वरूपत्वादित्याशङ्क्यात्मस्वरूपभूतैश्वर्यस्यैव प्राणिषु तारतम्येनाभिव्यज्यमानत्वान्नोक्तदोष इत्यभिप्रेत्याह—तेनेति । आत्मस्वरूपैश्वर्येण यथायथं यथायोग्यमीश्वरतयेशत ईश्वरत्वेन वर्त्तन्ते इत्यर्थः । जगतीभृतः—जगद्रक्षका हिरण्यगर्भादयः । अथवैश्वर्यमात्मस्वरूपमित्यत्र प्रमाणमाह—तेनेति । हिरण्यगर्भादिषु विद्यमानमैश्वर्यमात्मस्वरूपमेव सत्तत्राभिव्यज्यत इति वक्तव्यम् । अन्यथा तेषां तत्कार्यभूतानां परतन्त्रतया स्वत ऐश्वर्यायोगादित्यर्थः ॥ १५१ ॥

नन्वीश्वरत्वमीशितव्याद्यपेक्षमुत्पत्त्यादिमच्च प्राणिष्वनुभूयमानं कथमात्मनः स्वरूपं स्यादिति चेन्न सुखादिवदुपपत्तेरित्याह—

नित्यं प्रियादिषु सुखं प्रतिबिम्बितं स-
ल्लोके वदन्ति विषयेन्द्रियसंप्रयोगात् ।
उत्पन्नमन्यदिति तद्वदिहेश्वरत्वं
मायातदुत्थमतिषु प्रतिबिम्बितं सत् ॥ १५२ ॥

नित्यमिति । लोके नित्यमात्मसुखमेव प्रियादिषु निमित्तेषु सत्सु शुभकर्मसम्पादितान्तःकरणवृत्तिषु प्रतिबिम्बितं सत् भाति तथापि विषयेन्द्रियसंप्रयोगवशात् नित्यनिरपेक्षस्वरूपसुखादन्यदेव सुखमुत्पन्नमिति वदन्ति यथा तद्वदीश्वरत्वमप्यात्मस्वरूपमेव मायायां तज्जन्यान्तःकरणेषु च प्रतिबिम्बितं सद्भाति तथाप्युपाधेर्विषयादिसापेक्षत्वाज्जन्यत्वाच्च तत्प्रतिबिम्बितमैश्वर्यमपि सापेक्षं जन्यं च प्रतीयत इति न विरोध इत्यर्थः ॥ १५२ ॥

नन्वेवं सति मायोपाधिकस्य सर्वजगदीश्वरस्य बुद्ध्याद्युपाधिकस्य हिरण्यगर्भादिमनुष्यान्तस्य प्राणिनश्चैश्वर्यादितारतम्यं न स्यात् आत्मस्वरूपेश्वरत्वस्य तुल्यत्वादित्याशङ्क्य यद्यप्यात्मस्वरूपैश्वर्यं तुल्यं तथाप्युपाधीनां तारतम्यात्तत्प्रयुक्तमैश्वर्यस्यापि तारतम्यं सुखादितारतम्यवद् भवत्येवेत्याह—

मायानिविष्टवपुरीश्वरबोध एष
सर्वेश्वरो भवति सर्वमपेक्षमाणः ।
बुद्धिप्रविष्टवपुरेष तथेश्वरः स्या-
दात्मीयभृत्यजनवर्गमपेक्षमाणः ॥ १५३ ॥

मायेति । मायानिविष्टवपुः मायाप्रतिबिम्बित एष ईश्वरबोधः परचेतनः परमात्मा स्वत ऐश्वर्ययुक्तः अपरिच्छिन्ननिखिलजगत्कारणमायायां प्रतिबिम्बितः सन् सर्वानपेक्ष्येश्वरो भवति कर्माद्यधीनबुद्ध्याद्युपाधौ हिरण्यगर्भादिरूपेण प्रविष्टः सन् यथाक्रमं संपादितकतिचिद्भृत्यवर्गानपेक्ष्येश्वरो भवतीत्युपाधिप्रयुक्तत्वात्तारतम्यस्य नैश्वर्यस्य स्वरूपत्वानुपपत्तिरित्यर्थः ॥ १५३ ॥

ऐश्वर्यस्यात्मस्वरूपत्वसाधनफलं परमात्मविदुषोपि तादृशेश्वराभेदप्राप्त्या तत्प्राप्तिर्भवतीत्याह—

सम्यग्ज्ञानध्वस्तसर्वप्रपञ्चः
स्वीये रूपे निर्गुणे निर्विशेषे ।
पूर्णैश्वर्ये स्वप्रकाशस्वभावे
स्वाराज्येऽस्मिन्स स्वराडेव तिष्ठेत् ॥ १५४ ॥

सम्यग्ज्ञानेति । निर्गुणे गुणरहिते सः परमात्मज्ञान्येवंभूते स्वीये रूपे तिष्ठत्यतः स्वराडनवच्छिन्नैश्वर्ययुक्त इत्यर्थः ॥ १५४ ॥

मुक्तस्याप्यैश्वर्याप्राप्तौ प्रमाणमाह—

ज्ञात्वा देवं सर्वपाशापहानिः
क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः ।
तस्याभिध्यानात्तृतीयं देहभेदे
विश्वैश्वर्यं केवल आप्तकामः ॥ १५५ ॥

ज्ञात्वा देवमिति । तस्येश्वरस्याभिध्यानादाभिमुख्येन प्रत्यक्तया ध्यानादेवं स्वप्रकाशमात्मानं ज्ञात्वा विश्वैश्वर्यमाप्नोतीति सम्बन्धः केन क्रमेण विश्वैश्वर्यमाप्नोतीत्याकाङ्क्षायामाह—सर्वपाशेत्यादि । ईश्वरज्ञाने सति प्रथमं मिथ्याज्ञाननाशात् सर्वपाशापहानिः पाशानामविद्यास्मितादीनां क्लेशाख्यानां हानिः क्लेशहाने च सति कर्माभावाज्जन्ममृत्युप्रहाणिः जन्ममरणलक्षणैहिकामुष्मिकदेहान्तरसम्बन्धस्य प्रकर्षेण नाशः देहभेदे वर्तमानदेहवियोगे च सति तृतीयं क्लेशहानिशरीर-

नाशापेक्षया तृतीयं विश्वैश्वर्यमाप्नोतीति शेषः । ततः केवलः गुणारहितः आप्तकामः स्वानन्दातृप्तो भवतीति श्रुत्यर्थः ॥ १५५ ॥

श्रुत्यन्तरमप्यस्मिन्नर्थे प्रमाणं दर्शयति—

स स्वराडिति च विद्यते श्रुति-
र्वर्णितेश्वरवपुः प्रकाशिनी ।
तेन सत्यसुखबोधवद्भवे-
दीश्वरत्वमिति केचिदूचिरे ॥ १५६ ॥

स स्वराडिति । स स्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवतीति श्रुतिरपि मुक्तस्य वर्णितपूर्णैश्वर्यं बोधयन्ती विद्यत इत्यर्थः । फलितमुपसंहरति—तेनेति । येन मुमुक्षुप्राप्यत्वेन विश्वेश्वरत्वाद्यैश्वर्यं श्रूयते तेन तदपि सुखादिवद्वास्तवमित्यर्थः ॥ १५६ ॥

दूषयति—

तन्न भाति चतुरस्रमुच्चकै-
स्तत्प्रमाणविरहादिह श्रुतौ ।
सत्यबोधसुखवन्न तत्परा
सत्युवाच यत ईश्वरश्रुतिः ॥ १५७ ॥

तन्नेति । यदैश्वर्यं वास्तवमिति त्वदुक्तं चतुरस्रं समीचीनं न भाति न सम्भवति । न भातीति च क्वचित्पाठः । तत्र हेतुमाह—तत्प्रमाणेति । मुक्तस्य विश्वैश्वर्ये स्पष्टं प्रमाणाभावादित्यर्थः । ननु श्रुतिरेव प्रमाणं तत्राह—सत्येति । यतः ईश्वरश्रुतिः ऐश्वर्यप्रतिपादकश्रुतिः तत्परा सती सत्यादिवन्नोवाच । अत ऐश्वर्ये प्रमाणं नास्तीत्यर्थः ॥ १५७ ॥

एतदेव स्पष्टयति —

तत्परश्रुतिवचः प्रमाणकं
सत्यबोधसुखविग्रहं परम् ।
ब्रह्म तद्वदिह नेश्वरत्वभाक्
तत्परश्रुतिवचःप्रमाणकम् ॥ १५८ ॥

तत्परेति । यथा सत्यादिस्वरूपं परब्रह्म तात्पर्योपेतशब्दप्रमाणकं तद्वदीश्वरत्वभाक् ब्रह्म तत्परश्रुतिवचः प्रमाणकं न भवतीत्यर्थः ॥१५८॥

ननूदाहृतश्रुत्या विश्वैश्वर्यविशिष्टं ब्रह्म प्रतीयते न च तस्याः तत्परत्वाभावः हेत्वभावादित्याशङ्क्य वर्त्तमानार्थबोधकतया फल-श्रुतित्वमेव तत्र हेतुरित्याह —

या फलश्रुतिरिहोपवर्णिता
सा न तत्परतयावगम्यते ।
तत्त्वमादिवचनं हि तत्परं
तत्परा न तु फलश्रुतिः क्वचित् ॥ १५९ ॥

या फलश्रुतिरिति । स स्वराड् भवति विश्वैश्वर्यं केवल आप्तकाम इत्याद्या न तत्परा फलवचनत्वेनार्थवादत्वादित्यर्थः । किं तर्हि तत्परं प्रमेयविषयमित्याह—तत्त्वमादीति । तत्त्वमादिवचनमेव तात्पर्ययुक्तं प्रमेयविषयत्वादित्यर्थः । ननु फलवचनस्यापि तात्पर्यवत्त्वं किं न स्यादिति चेत् । मैवम् । अन्यत्रादर्शनादित्याह—तत्परेति । क्वचित्कर्म-काण्डे उपास्तिकाण्डे वा ॥ १५९ ॥

नन्वन्यत्र तथात्वेपि प्रकृते फलश्रुतेरैश्वर्यविशिष्टब्रह्मपरत्वं किं न स्यादित्याशङ्क्यातिप्रसङ्गमाह —

**सामगानमपि तत्स्वरूपतां**
**जक्षणं च जगतश्च सर्जनम् ।**
**अश्नुवीत फलवाक्यतः श्रुतं**
**तत्स्वरूपमिति यद्युपेयते ॥ १६० ॥**

सामगानमिति । एतत्सामगायन्नास्त इति श्रुतिप्रतिपन्नं सामगानं तत्स्वरूपतां ब्रह्मस्वरूपतां जक्षणं भक्षणं जगतः सर्जनं जगत्स्रष्टृत्वमश्नुवीत प्राप्नुयात् तस्य ब्रह्मणः यदि फलवाक्यश्रुतमप्यैश्वर्यं ब्रह्मणः स्वरूपमिष्यते तथा सामगानादिकमप्यर्थवादवाक्यप्रतिपन्नं ब्रह्मरूपतां प्राप्नुयादित्यर्थः ॥ १६० ॥

नन्वर्थवादप्रतिपन्नत्वन्नानुपादेयत्वे हेतुः देवताविग्रहवत्त्वाविद्यानिवृत्त्यादेरङ्गीकारात्तथा च देवताधिकरणन्यायेन सामगानादेरपि विवक्षितत्वं किन्न स्यादिति चेत् भवेदेवं यदि मानान्तरविरोधो न स्यात् । अन्यथा आदित्यस्य यूपत्वमप्युपादेयं स्यादस्ति चात्र मानान्तरविरोधः । मुक्तौ—यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत्, अथाकामयमान, इत्यादिना सकलधर्मनिषेधादित्याह—

**अर्थवादगतमभ्युपेयते**
**न प्रमान्तरविरोधि यन्मतम् ।**
**सामगानमथ जक्षणादि वा**
**तत्परश्रुतिविरुद्धमुच्यते ॥ १६१ ॥**

अर्थवादेति । अर्थवादवाक्यप्रतिपन्नमित्यर्थः । जक्षणादीत्यादिपदेन स्रष्टृत्वादिकं गृह्यते ॥ १६१ ॥

ननु लक्षणादेस्तत्परनिर्विशेषश्रुतिविरोधाद्विवक्षितत्वं माभू-दीश्वरत्वं तु ज्ञानादिवदात्मस्वरूपं किन्न स्यादित्याशङ्क्य नेति नेतीति तत्परश्रुत्याऽविशेषेणेश्वरत्वस्यापि निषिद्धत्वाज्ज्ञानादेश्च निषेधावधित्वेन नेत्यन्यत्परमस्तीति परिशेषणात् न ज्ञानादिवदी-श्वरत्वस्यात्मस्वरूपत्वमित्याह—

ईश्वरत्वमपि तत्परश्रुति-
र्नेति नेति परिदुःखिता सती ।
वारयत्यवशिनष्टि केवलं
चित्स्वरूपमनवद्य विग्रहम् ॥ १६२ ॥

ईश्वरत्वमपीति । अवशिनष्टि परिशेषयति केवलमैश्वर्याद्य-विशिष्टम् ॥ १६२ ॥

ननु द्विविधमीश्वरत्वं मूर्तामूर्तादीशितव्यसापेक्षमेकन्निरपेक्षं च स्वाभाविकं ज्ञानादिवदपरं सर्ववशित्वादि तत्र मूर्तादिकं प्रकृत्य निषेधात्सोपाधिकेश्वरत्वस्य निषेधेपि न निरुपाधिकस्या-त्मस्वरूपभूतस्यैश्वर्यस्य निषेधः अतस्तत्परवाक्यविरोधाभावा-दीश्वरत्वमुपादीयतामिति शङ्कते—

सोपाधीश्वरतानिषेधनपरा सा नेति नेति श्रुतिः
साक्षाद्भागवतं निरस्तनिखिलोपाधिस्वरूपं पुनः ।
विश्वैश्वर्यमिहोच्यमानमधुना मोक्षे ततस्तत्परै-
र्वाक्यैरस्य विरुद्धतानवसरो मुख्यं ततो गृह्यताम् ॥१६३॥

सोपाधीति । साक्षान्निरपेक्षं तदेवाह—निरस्तेति । भागवतं सर्वज्ञ-ब्रह्मसम्बन्धीह विश्वैश्वर्यं केवलं आप्तकाम इत्यादौ मोक्षे तत्परैर्वाक्यै

नेति नेतीत्यादिनिर्विशेषात्मप्रतिपादनपरैर्वाक्यैः अस्य निरुपाधिकैश्वर्यस्य मुख्यं निरुपाधिकैश्वर्यं नेति नेति श्रुतिः सोपाधीश्वरतानिषेधनपरेहोच्यमानं पुनर्विश्वैश्वर्यं निरस्तनिखिलोपाधिसाक्षाद्भागवतं स्वरूपं ततः अधुना तत्परैर्वाक्यैरस्य विरुद्धतानवसरः। ततो मोक्षे मुख्यं गृह्यतामिति सम्बन्धः । इह मोक्षे उच्यमानमिति वान्वयः ॥ १६३ ॥

यदीश्वरत्वं द्विविधमिष्यते तर्हि सामगानादेरपि द्विविधत्वमङ्गीकृत्य नेति नेतीति यत्र त्वस्येत्यादिना सोपाधिकस्य तस्यैव निषेधः निरुपाधिकं तन्न निषिध्यते ईश्वरत्ववदिति गृह्यतामिति प्रतिबन्ध्या परिहरति —

**सामगानमथ लक्षणं जग-**
**त्सर्जनं च निरुपाधि गृह्यताम्।**
**नेति नेति वचसा निषिध्यते**
**लक्षणादिकमुपाधिसंश्रयम् ॥ १६४ ॥**

सामगानमिति। तथा च ब्रह्मात्मतां प्राप्तस्य सामगानादिमत्वे ब्रह्मणोपि तत्स्यादित्यर्थः ॥ १६४ ॥

ननु सामगानादिद्वैविध्यं नास्ति तत्र प्रमाणाभावात् तथा च नेश्वरत्ववत्तस्य स्वरूपत्वमिति वैषम्यमाशङ्कते—

**सामगानमथ लक्षणं जग-**
**त्सर्जनं न च खलु द्विधेष्यते।**
**तत्प्रमाणविरहादिहेति चे-**
**दीश्वरत्वमपि न द्विधा भवेत् ॥ १६५ ॥**

सामगानमिति । इह-श्रुतौ । साम्येन समाधत्ते—ईश्वरत्वमपीति । ईश्वरत्वमपि द्विधा मुख्यामुख्यभेदेन द्विविधं न स्यात् प्रमाणाभावादित्यर्थः । ननु विश्वैश्वर्यमिति श्रुतिरेव मुख्यैश्वर्ये प्रमाणमिति चेत्तर्हि तत् साम गायन्नास्त इत्यादि श्रुतिरेव मुख्यसामगानादौ प्रमाणं स्यात् । अथ ब्रह्मात्मतां प्राप्तस्य गेयादिवस्त्वन्तराभावान्न गानादेर्मुख्यत्वमिति तर्हि निरस्तनिखिलोपाधिपरमानन्दस्वरूपं प्राप्तस्येशितव्याभावात् केवलो निर्गुणश्चेति अतोन्यदार्त्तमिति ब्रह्मव्यतिरिक्तस्य सर्वस्याप्यविशेषेण निषेधाच्च नेश्वरत्वमपि स्वाभाविकमिति तुल्यम् । तस्मादीशितव्यसापेक्षमीश्वरत्वमात्मनः स्वरूपं न भवतीति भावः ॥ १६५ ॥

ननु यदीश्वरत्वं सापेक्षमात्मनः स्वरूपं न भवतीत्युच्यते । तदा ज्ञानादेरपि विषयादिसापेक्षत्वादनित्यत्वात् निर्विषयस्याविनाशिनश्च ज्ञानस्याभावात् ज्ञानमप्यात्मस्वरूपं न स्यादित्याशङ्क्य निर्विषयाविनाशिज्ञानाभावोऽसिद्धः तस्य प्रमाणसिद्धत्वादित्याह—

ज्ञानमस्ति खलु बाह्यगोचरं
निर्विशेषमविनाशि च द्विधा ।
बाह्यगोचरमपोह्य केवला
स्वापमोक्षसमये चितिः स्थिता ॥ १६६ ॥

ज्ञानमिति । ज्ञानं द्विधास्तीति सम्बन्धः । द्वैविध्यमेवाह—बाह्येत्यादिना । बाह्यगोचरमन्तःकरणवृत्त्युपाधिकमेकं निर्विशेषं स्वतोनिर्विषयमविनाशि चापरबाह्यगोचरज्ञानस्य प्रसिद्धत्वान्निर्विशेषनित्यज्ञाने प्रमाणमाह—बाह्येति । बाह्यगोचरमिति समानाधिकरणसमासः बाह्यपदार्थं विहाय निर्विषयेत्यर्थः । इदं च केवलेत्यस्यविवरणम् । इदमुक्तं भवति । अस्ति हि स्वापे आत्मचैतन्यानुभवः ।

अहमित्युत्थितस्य परामर्शदर्शनात् न च स तदा बाह्यविषयः इन्द्रियसंप्रयोगादेरभावात् । नन्वात्मचैतन्यं ह्यबाह्यविषयत्वाभावेप्यज्ञानादिविषयत्वान्न निर्विषयज्ञानं तदापि सिद्ध्यतीति चेत् किमतः ज्ञानस्यात्मस्वरूपत्वानुपपत्तिरिति चेत्तर्हि कीदृशेन ज्ञानेनाज्ञानसिद्धिः न तावज्जन्यज्ञानेन तस्य तदासंभवादित्युक्तत्वात् नित्यज्ञानेन चेत्तर्हि तदेवात्मा तद्व्यतिरिक्ते तस्मिन्मानाभावात् । ननु निष्प्रतियोग्यात्मनस्सप्रतियोगिज्ञानात्मत्वमनुपपन्नमिति चेत् । यद्धि नियमेन यन्निरूपणाधीननिरूपणं तत्तत्प्रतियोगि यथा घटानिरूपणाधीननिरूपणोऽभावो घटप्रतियोगिकः न च ज्ञानं नियमेनाज्ञाननिरूपणाधीननिरूपणं स्वप्रकाशतया स्वयमेव प्रकाशात् । अविद्याया अपि साधकत्वाच्च । नन्वविद्याविषयविकल्पितज्ञानस्य निर्विकल्पकात्मरूपत्वमनुपपन्नमिति चेन्न । कल्पितविकल्पनस्याकल्पितनिर्विकल्पताविरोधात् । न चैकान्ततोऽविद्याविषयत्वं ज्ञानस्य मोक्षदशायां तदभावादित्यभिप्रेत्योक्तं मोक्षसमय इति । न च तदा ज्ञानाभावः । मोक्षस्याप्रकाशमानतया भूनिखातनिक्षेपवदपुरुषार्थत्वप्रसङ्गात् । तस्मान्निर्विषयमविनाशि च ज्ञानं स्वापमोक्षयोः सिद्धमिति ज्ञानद्वैविध्यं श्रुत्यापि दर्शितं न दृष्टेर्द्रष्टारं पश्येरिति । सुरेश्वराचार्यैरप्युक्तम्—"अन्तःकरणवृत्तिर्या चक्षुरादिसमाश्रया । रूपादिविषयाभासा लौकिकी दृष्टिरुच्यते । तस्याश्च क्रियमाणत्वाज्जन्मनाशादिसङ्गतिः । आत्मदृष्टिस्त्वियं नित्या जन्मनाशादिवर्जिते"ति ॥ १६६ ॥

एवं स्वापमोक्षयोर्निर्विशेषाविनाशिज्ञानसद्भावं प्रदर्श्य श्रुत्यन्तरमपि तत्र प्रमाणयति—

**पश्यन्न पश्यति गिरा कथयांबभूव**

**साक्षादनश्वरविनश्वरचिद्विभागम् ।**

तात्पर्यतः श्रुतिवचः स्फुटमेव नैव-
मैश्वर्यवस्तुनि विभागवचः श्रुतिर्नः ॥ १६७ ॥

पश्यन्निति । पश्यन् वै तन्न पश्यतीत्यत्र पश्यन्न पश्यतीतिशब्देन सुप्त्यादौ स्वरूपज्ञानेन पश्यन्नपि जाग्रदादाविव विशेषतो न पश्यति इन्द्रियसंप्रयोगाभावादिति तदर्थः । अनश्वरविनश्वरचिद्विभागमविनाशिविनाशिचितोर्विभागमनित्यचैतन्यान्निष्कृष्य नित्यज्ञानं कथयामासेत्यर्थः । यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वादिति श्रुतिः स्वापादौ नित्यज्ञानं दर्शयतीत्यर्थः । तस्माज्ज्ञानस्यात्मस्वरूपत्वमुपपद्यत इति भावः । ऐश्वर्यं तु नैवमित्याह नैवामात । एवं ज्ञान इव विभागवचःश्रुतिः विभागवचोरूपा श्रुतिः विभागवादिश्रुतिरित्यर्थः । विभागवचः श्रवणमिति वा ॥ १६७ ॥

एवं सुखस्यापि विषयोपाधिस्वरूपव्यतिरेकेण निरपेक्षस्वरूपास्तित्वं विषयोपाधिकस्य तस्य सुखत्वनिषेधपूर्वमाह—

एवं न वा अर इति श्रुतमेव ताव-
त्पुत्राद्युपाधिपुरुषस्य सुखं विनाशि ।
नित्यं निरन्तरमनन्तमपारमुक्तं
ब्राह्मं सुखं वचनकोटिशतैश्च यत्नात् ॥ १६८ ॥

एवमिति । ज्ञानवत्पुत्राद्युपाधि पुत्रादिनिमित्तं न वा अरे पत्युः कामायेत्यादिवाक्यं पतिजायापुत्रादिजन्यमनित्यं सुखं वैराग्याय दर्शयति । तथा च तत्सुखमेव न भवतीत्यर्थः । नित्यसुखसद्भावे किं वाक्यं प्रमाणमिति चेत् विज्ञानमानन्दं ब्रह्म एषोऽस्य परमानन्दः

एतस्यैवानन्दस्यान्यानि भूतानि यो वै भूमा तत्सुखं न ह्यस्य प्रियं प्रमा युक्तं भवतीत्यादीनि सर्वाण्यपि श्रुतिशिरोवाक्यानीत्याह—नित्यमित्यादिना। नित्यमपारमानन्दमिति देशकालवस्तुपरिच्छेदनिरासः। अत एव निरन्तरमेकरसमित्यर्थः। वचनकोटिशतैः यत्नात्तात्पर्येण श्रुतमित्यनुषङ्गः ॥१६८॥

एवं ज्ञानादिद्वैविध्ये प्रमाणमुक्त्वा नैवमैश्वर्यवस्तुनि विभागवचः श्रुतिरित्युक्तमेव प्रपञ्चयति।

**ऐश्वर्यवर्णनमिह द्विविधं न वेदे**
**नित्यं क्वचित् क्वचिदनित्यमिति प्रतीमः।**
**ऐश्वर्यमात्रकथनं पुनरस्ति मोक्षा-**
**दर्वाक्तु न मोक्षसमये च न तत्परं तत् ॥ १६९ ॥**

ऐश्वर्येति। इह वेदे क्वचित् क्वचित् तस्मिन् तस्मिन् प्रदेशे नित्यमनित्यमिति द्विविधमैश्वर्यवर्णनं न प्रतीम इति सम्बन्धः। ननु द्वे वाव ब्रह्मणो रूपे स एष सर्वेश्वरः विश्वैश्वर्यं केवल आप्तकाम इति श्रुत्या द्विविधमैश्वर्यं श्रूयत इत्याशङ्क्य द्वे वावेत्यादेर्व्यावहारिकैश्वर्यपरत्वादितरस्याश्च फलवचनत्वेन तत्परत्वाभावात् मैवमित्यभिप्रेत्याह—ऐश्वर्यमात्रेति। मात्रपदेन नित्यत्व व्यावर्त्यते। मोक्षादर्वाक्षु मोक्षसमयादधस्तनसाधनसमयेषु तद्विश्वैश्वर्यमित्याद्यैश्वर्यवर्णनम्॥१६९॥

उक्तमेवार्थं तदभिमतदृष्टान्तपूर्वकमुपपादयति—

**प्रियशिरस्त्वकथा खलु यादृशी**
**भवति तादृशमेव तदीरणम्।**
**तदनु नेति च नेति वचः श्रुते-**
**र्यदपि मोक्षगतं स्तुतये हि तत् ॥ १७० ॥**

प्रियशिरस्त्वेति । प्रियशिरस्त्ववचनं यथानन्दमयशब्दस्य ब्रह्माभिधायकत्ववादिना त्वया तस्य प्रियमेव शिर इत्यादिप्रियशिरस्त्वाद्युक्तेरौपाधिकप्रियशिरस्त्वादिविषयत्वमेवाङ्गीक्रियते । न तु स्वाभाविकं तद्विषयत्वं तथा तदीरणमैश्वर्यवर्णनमप्यौपाधिकैश्वर्यविषयमङ्गीकर्त्तव्यमित्यर्थः । ननु शिरःपाण्याद्यङ्गशून्यस्य ब्रह्मणः सशिरस्कत्वाद्यनुपपत्त्या तत्र तथात्वमत्रत्यैश्वर्यस्य स्वाभाविकत्वे न काचिदनुपपत्तिरस्तीत्याशङ्क्यैश्वर्यनिषेधानुपपत्तिरेव तत्स्वाभाविकत्वबाधिकेत्याह—तदन्विति । ऐश्वर्यवर्णनानन्तरमित्यर्थः । नेति नेति वचः श्रुतेः स एष नेति नेतीत्यैश्वर्यस्य निषिद्धत्वादित्यर्थः । ननु ज्ञात्वा देवम् एष सर्वेश्वर इत्यादिना मुक्तावप्यैश्वर्यं श्रूयत इति चेत् । न तस्यार्थवादात्मत्वेन तत्परत्वाभावादित्याह—यदपीति । यत्तच्छब्दावैश्वर्यवर्णनपरौ स्तुतये विद्यास्तुतये तस्माज्ज्ञानादिवन्निरुपाधिकैश्वर्ये प्रमाणाभावात् सर्वेश्वरादिश्रुतेश्च स्तुतिपरत्वात्सूत्रकारभाष्यकाराभ्यां च पत्यादिशब्देभ्य इत्यादौ सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिरित्यादेः स्तुतिपरत्वेनैव व्याख्यातत्वान्न विदुषोपि तत्प्राप्तिरिति सिद्धम् ॥ १७० ॥

केचित्तु निरुपाधिके ब्रह्मणि सर्वेश्वरादिशब्दो गुणवृत्त्या स्वातन्त्र्यप्रतिपादनार्थ एवेति तस्मिन् तच्छब्दप्रयोगस्याविरोधमाहुः तन्मतमाह—

स्वातन्त्र्यमीश्वरगिरा गुणमार्गवृत्ति-
माश्रित्य पूर्वगुरवः प्रतिपादयन्ति ।
सिंहस्य शौर्यगुणवत्परमेश्वरस्य
स्वातन्त्र्यलक्षणगुणोऽव्यभिचारिरूपः ॥ १७१ ॥

स्वातन्त्र्यमिति । गुणमार्गवृत्तिं गुणद्वाराशब्दप्रवृत्तिं गौणीं वृत्तिमाश्रित्येत्यर्थः । यथा सिंहशब्देन गौणीं वृत्तिमाश्रित्य देवदत्ते शौर्यविशेषः प्रतिपाद्यते सिंहो देवदत्त इति तथा पूर्वगुरवोपीश्वरशब्देन गौणीं वृत्तिमाश्रित्यासंसारिब्रह्मणि स्वातन्त्र्यं प्रतिपाद्यते सिंहो देवदत्त इति यन्तीत्यर्थः । ननुवाच्यार्थाव्यभिचारिगुणो गुणशब्देन प्रवृत्तिनिमित्तं यथा शौर्यविशेषः सिंहाव्यभिचारी स्वातन्त्र्यं च नेश्वरशब्दवाच्यव्यावहारिकेश्वर एव नियतं लौकिकेश्वरेऽपि दर्शनादित्याशङ्क्य लौकिकेश्वरं प्रत्यपि तस्येशितृत्वेन तस्यैव मुख्यस्वातन्त्र्यान्न तत्तद्व्यभिचारीत्याह–सिंहस्येति । अथवा–परमात्मनि सर्वेश्वरशब्दस्य गुणवृत्त्या प्रवृत्तौ दृष्टान्तमाह—सिंहस्येति । यथा सिंहशब्दविषयस्य सिंहस्यासिंहस्य वा शौर्यमव्यभिचारीत्यसिंहे तच्छब्दप्रयोगेण शौर्यं प्रतिपाद्यते । तथा सर्वेश्वरादिशब्दविषयस्य सर्वेश्वरस्यासर्वेश्वरस्य वा स्वातन्त्र्यमभिचारीति तच्छब्दप्रयोगेण स्वातन्त्र्यं प्रतिपाद्यत इति तत्र स्वातन्त्र्याव्यभिचारो बीजमित्यर्थः । अव्यभिचारीति च्छेदः ॥ १७१ ॥

ननु गुणवृत्त्या निरुपाधिकब्रह्मणि स्वातन्त्र्यमेव प्रतिपाद्यत इति कथं ज्ञायते मुख्यया वृत्त्या तस्मिन्नैश्वर्यप्रतिपादनमेव किं न स्यादित्याशङ्क्यैश्वर्यप्रवृत्तिनिमित्तपुरस्कारेणैवेश्वरशब्दप्रयोगान्निरुपाधिके च ब्रह्मणि प्रकृतैतावत्त्वमित्यादिना भगवदैश्वर्यस्य निषिद्धत्वात्प्रवृत्तिनिमित्ताभावान्न मुख्यया वृत्त्या तस्मिन्नैश्वर्यप्रतिपादनायेश्वरशब्दप्रयोगः । किन्तु गुणवृत्त्या स्वातन्त्र्यं प्रतिपादयितुमेवेति ज्ञायत इत्यभिप्रेत्याह—

ऐश्वर्यवस्तु परिगृह्य तदत्यजन्तः

सामर्थ्यसिद्धिमुपपादयितुं क्वचिच्च ।

सर्वेश्वरश्रुतिवचः समुदाहरन्ति

स्वातन्त्र्यलक्षणगुणस्य तमस्वितायाम् ॥१७२॥

ऐश्वर्यवस्त्विति । तमस्वितायामज्ञानावस्थायां विद्यमानमैश्वर्यरूपं-वस्तुपरिगृह्य प्रवृत्तिनिमित्तत्वेन परिगृह्य तदैश्वर्यमत्यजन्तः वाच्यत्वकोटौ प्रवेशयन्तः क्वचित्प्रदेशे सर्वेश्वरश्रुतिवचः सर्वेश्वर इत्यादिश्रुतिवचः समुदाहरन्ति किमर्थं स्वातन्त्र्यलक्षणगुणस्य सामर्थ्यसिद्धिं सामर्थ्यतोऽनुपपत्त्या सिद्धिमुपपादयितुं निरुपाधि-केश्वर इति शेषः । तदप्यनन्तइति पाठे तत्—आविद्यकैश्वर्यवस्तु-परिग्रहपूर्वकसर्वेश्वरश्रुतिवाक्योदाहरणम्, अनन्ते–निरुपाधिकब्रह्मणि स्वातन्त्र्यलक्षणगुणस्य सामर्थ्यसिद्धिमुपपादयितुमित्यर्थः । अथवा निरुपाधिकब्रह्मस्वरूपपरतयेश्वरपदश्रवणमेव नास्तीत्युक्तम् । तत्क-थमीश्वरपदेन स्वातन्त्र्यलक्षणापीतिचेन्न । व्यावहारिकेश्वरत्वा-भिधायिसर्वेश्वरश्रुतेर्निरुपाधिकेपि ब्रह्मणि भाष्यकारादिभिः क्वचिदुदाहरणात् तथा चेश्वरपदस्य स्वातन्त्र्योपपादकत्वमस्त्येवे-त्याह—ऐश्वर्यवस्त्विति ॥ १७२ ॥

ननु तमस्यवस्थावत्यैश्वर्यप्रवृत्तिनिमित्तकेश्वरश्रुतिवाक्योदा-हरणे न कस्यानुपपत्त्या निरुपाधिके स्वातन्त्र्यसिद्धिरित्याशङ्क्य तस्मिन् तादृशेश्वरपदप्रयोगस्यैवानुपपत्त्येति सदृष्टान्तमाह—

सिंहश्रुतिर्न घटते यदि शूरताऽस्य

न स्यात्तथैव परमेश्वरता श्रुतिश्च ।

नैश्वर्यलक्षणगुणः परमात्मनश्चे-

दित्यर्थलब्धिमभिसंदधते महान्तः ॥ १७३ ॥

सिंहश्रुतिरिति । अस्य देवदत्तस्य यदि शूरता न स्यात् तदा सिंह-श्रुतिः सिंह इति श्रुतिः सिंहपदविषयत्वं न स्यादित्यर्थः । तथैव यथा देवदत्तस्य शौर्याभावे सिंहशब्दविषयत्वाभाव इति सिंहशब्दप्रयोगानुपपत्त्यैव तस्य शौर्यसिद्धः तथैव परमात्मनः निरुपाधिकब्रह्मणः ऐश्वर्यलक्षणगुणः ऐश्वर्यं लक्षणं ज्ञापकं यस्य स्वातन्त्र्यगुणस्य स न चेत् परमेश्वरताश्रुतिर्न घटेतेत्यर्थः । लब्धिमर्थादुक्तानुपपत्त्या स्वातन्त्र्यलब्धिं महान्तः सूत्रकारादयः अभिसंदधते अभिप्रेतवन्त इत्यर्थः ॥ १७३ ॥

नन्वेवं स्वातन्त्र्यमश्रौतं स्यादित्याशङ्क्य श्रुतानुपपत्तिगम्यस्यापि श्रौतत्वमस्तीति कैमुतिकन्यायमभिप्रेत्याह—

**श्रौतार्थवृत्तिबललभ्यमपीह वस्तु**
**श्रौतं वदन्ति निकटत्वमनुस्मरन्तः ।**
**आसन्नवृष्टिमपि देवमुदीरयन्ति**
**वर्षन्तमेव हि जना भुवि तादृगेतत् ॥ १७४ ॥**

श्रौतार्थेति । श्रुतिप्रतिपन्नो धात्वर्थः श्रौतार्थः । तत्र वृत्तिर्वर्त्तनं यस्येष्टसाधनत्वस्य तद्बललभ्यतदनुपपत्तिगम्यमपीत्यर्थः । अथवा श्रौत्रं श्रुतिप्रतिपन्नं यदर्थवृत्तिधात्वर्थवृत्तीष्टसाधनत्वं तद्बललभ्यं यजेतेति श्रुतिप्रमितधात्वर्थेष्टसाधनत्वानुपपत्तिगम्यमपीत्यर्थः । वस्त्वपूर्वादि वस्तु वदन्ति भट्टादय इति शेषः । तैर्हि यागस्य स्वर्गसाधनत्वाक्षिप्तमप्यपूर्वं श्रौतमित्येवाभ्युपेयते । अन्यथा यागस्यापूर्वजनकत्वाङ्गीकारेणाङ्गान्वयित्वानुपपत्तिरित्यर्थः । श्रौतार्थानुपपत्तिगम्यस्य श्रौतत्वे वीजमाह—निकटत्वमनुस्मरन्तइति । श्रुतार्थसमीपवृत्तित्वादपूर्वादेः श्रौतत्वमित्यर्थः । श्रौतासत्तिमात्रेण श्रौतत्वव्यवहारे दृष्टान्तमाह—आसन्नेति । आसन्ना वृष्टिर्यस्य वृष्ट्यधिपतेर्देवस्य तमेतच्छ्रुतार्थानुपपत्तिगम्यस्यापि श्रौतत्वमित्येतद्यथा लोके जना विशिष्टमेघो-

द्गमकाले वृष्टिसामीप्यमात्रेण देवो वर्षतीति वदन्ति तद्वच्छ्रुतार्थसमीपवृत्तित्वादपूर्वमपि श्रौतमिति वदन्तीत्यर्थः। तथा च श्रुतार्थानुपपत्तिगम्यस्यापि श्रौतत्वे किमु वक्तव्यं ततोऽप्यतिनिकटस्य श्रुत्यनुपपत्तिगम्यस्य श्रौतत्वमिति भावः। तदेवमीश्वरश्रुतेः स्वातन्त्र्यपरत्वादैश्वर्यपरत्वाभावान्नैश्वर्यं वास्तवं ब्रह्मणः स्वरूपमिति सिद्धम् ॥१७४॥

ननु सूत्रकारो मुक्तिदशायामप्यैश्वर्यं सूत्रयति स्म "पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययावि"ति अतस्तत्प्रामाण्यादैश्वर्यमपि वास्तवमभ्युपेयमिति चेन्न तस्या अभ्युपगमवादत्वाद्वस्तुस्वरूपत्वे प्रमाणाभावस्योक्तत्वादित्याह—

**ऐश्वर्यमज्ञानतिरोहितं स-**
**द्ध्यानादभिव्यज्यत इत्यवोचत् ।**
**शरीरिणः सूत्रकृदस्य यत्तु**
**तदभ्युपेत्योदितमुक्तहेतोः ॥ १७५ ॥**

ऐश्वर्यमिति। अज्ञानतिरोहितं संसारदशायामिति शेषः। ध्यानादीश्वरध्यानादस्य शरीरिणोभिव्यज्यत इति यदवोचदिति सम्बन्धः। अभ्युपेत्योदितत्वे हेतुमाह—उक्तहेतोरिति। प्रमाणाभावाद्युक्तहेतोः ॥ १७५ ॥

ननु सूत्रकारसूचितं तथैवेति वक्तव्यं नान्यथयितुं शक्यमतिप्रसङ्गादिति चेत्सत्यम्। यदि प्रमाणवन्न तु तद्विना नहि सूत्रमागमविधया निरपेक्षं प्रमाणं किन्तु तदपेक्षितन्यायसूचकत्वेनानुगृह्यप्रमाणसापेक्षमेव न चात्रैश्वर्यप्रतिपादकतादृशागमोस्ति। न च ज्ञात्वा देवमित्युक्तश्रुतिस्तादृशीतिवाच्यं तस्यार्थवादत्वेनैश्वर्यपरत्वाभावादित्यभिप्रेत्याह—

**अथ वा चितिवत्प्रतीयतां**
**पुरुषस्येश्वरताऽपि वास्तवी।**
**यदि किंचन कारणं भवे-**
**न्न विना सा तदिहाभ्युपेयते॥ १७६॥**

अथेति। अथेत्यर्थान्तरे, वाशब्दोऽनास्थायम्, स च वास्तवीत्यनेन सम्बध्यते। पुरुषस्य परमात्मनः कारणं प्रमाणं तत्प्रमाणं विनेति सम्बन्धः। सा-ईश्वरता॥ १७६॥

इतश्च पराभिध्यानादिति वचनमभ्युपगमवादाभिप्रायमेवेत्याह—

**कामादि तत्र च भवेदितरत्र चेति**
**यत्सूत्रकारवचनं तदुदीक्षमाणाः।**
**कामादिकेन दहरस्थगुणेन तुल्यं**
**सर्वेश्वरादिगुणजातमिति प्रतीमः॥ १७७॥**

कामादीति। सत्यकामत्वादिकं सर्वेश्वरत्वादिकं च तत्र बृहदारण्यगतनिर्गुणविद्यायामितरत्र छान्दोग्यगतदहरविद्यायां सत्यकामत्वादिकं निर्गुणविद्यायां भवेत्सर्वेश्वरत्वादिकं च दहरविद्यायां भवेदिति विभाग इति यत्सूत्रकारवचनमिति "कामादीतरत्र तत्र चायतनादिभ्य" इति सूत्रस्यार्थतोनुकरणमुदीक्षमाणाः पश्यन्तः। वयमिति शेषः। कामादिकेन सत्यकामसत्यसंकल्पत्वादिकेन सर्वेश्वरादिगुणजातं सर्वेश्वरत्वादिगुणजातं कामादीतरत्रेत्यत्र हि छान्दोग्ये दहरोस्मिन्नन्तराकाश इति हृदयान्तर्गतत्वेन श्रुतदहराकाशगुणानां सत्यकामत्वादीना बृहदारण्यके निर्गुणविद्यायां य एषोन्तर्हृदयाकाश

इति श्रुतहार्दाकाशगुणानां सर्ववशित्वसर्वेश्वरत्वादीनां विद्याभेदेऽप्युभयत्राकाशशब्दवाच्यस्य परमात्मन एकत्वात्परस्य परत्रोपसंहार उक्तः। तत्र दहरविद्यायामुपसंहृतानां वशित्वादीनामुपास्त्यर्थत्वाद् दहराद्निर्गुणविद्ययामुपसंहृतानां सत्यकामत्वादीनां कश्चिदुपकारो वक्तव्यः। तेषां च य उपकारः स एव वशित्वादीनामपि तत्र श्रुतानां वक्तव्यः तुल्यताप्रयुक्तत्वादुपसंहारस्येत्यर्थः ॥ १७७ ॥

कस्तर्हि सत्यकामत्वादीनामुपकारः येन तत्साधर्म्येण सर्वेश्वरत्वादीनामविवक्षा स्यात् स्तुतिरेवेत्याह—

**दहरस्थगुणोपसंहृतेः**
**स्तुतिमात्रं विरहय्य नापरम् ।**
**फलमस्ति परात्मनिष्ठिते**
**वचने वाजिभिराहृते महत् ॥ १७८ ॥**

दहरस्थेति । दहरविद्यागत सत्यकामत्वादिगुणानामुपसंहारस्योपसंहृतसत्यकामत्वादिगुणस्येत्यर्थः । स्तुतिमात्रमल्पं फलं विरहय्यापरं महत् फलं वाजिभिराहृते वचने वाजसनेयिभिरधीते वाक्ये नास्ति । तत्र हेतुः—परमात्मनिष्ठित इति । निर्गुणब्रह्मपरे वाक्ये गुणविवक्षाया असंभवात् सत्यकामत्वादीनां स्तुतिमात्रमेव फलं न तु चैतन्यादेरिव मोक्षाख्यं महत्फलमस्ति । तथा च तत्साधर्म्येण सर्ववशित्वादीनामपि स्तुतिमात्रमेव फलं न तु मोक्षान्वयित्वमित्यर्थः ॥ १७८ ॥

ननु क्रेतव्या गौर्वहुक्षीरेत्यादौ सतोपि वहुक्षीरतादिगुणस्य स्तुतिपरत्ववत् सर्ववशित्वादेः सत्यकामत्वादिवत् स्तुतिपरत्वेप्या-

त्मस्वरूपत्वं किन्न स्यादित्याशङ्क्य वहुक्षीरतादिगुणे हि मानान्तर-सत्त्वात् सत्त्वमत्र तु वचनादेव तत्सिद्धिर्वक्तव्येति कथमन्यपराद्वचनात्तत्सिद्ध्येदित्यभिप्रेत्याह—

**दहराद्युपसंहृतैर्गुणैः**
**सदृशाश्चेद्वशितादिलक्षणाः ।**
**न तदा परमात्मरूपतां**
**प्रतिपत्तुं कलयाऽपि शक्नुयुः ॥ १७९ ॥**

दहरादिति । गुणैः सत्यकामत्वादिभिः सदृशा इति सादृश्यं च स्तुतिपरत्वं वशितादिलक्षणाः-वशित्वाधिपतित्वादिरूपाः । गुणा इति शेषः । परमात्मस्वरूपतां वशित्वादीनामिति शेषः । कलया मात्रयापीत्यर्थः । प्रमाणाभावादिति भावः ॥ १७९ ॥

एवमीश्वरत्वप्रयोजकवशित्वादेः स्तुतिपरत्वमुक्त्वा तत्प्रयोज्य-परमेश्वरत्वस्यापि तत्तुल्यन्यायतया स्तुतिपरत्वमेवेत्याह—

**परमेश्वरतागुणोऽप्यतः**
**स्तुतये तस्य परस्य वस्तुनः ।**
**परिकीर्तित इत्युपेयता-**
**मविशेषाद्वशितादिलक्षणैः ॥ १८० ॥**

परमेश्वरतागुणोऽपीति । परमेश्वरलक्षणगुणोप्यतः । यतो वशित्वादीनां स्तुतिपरत्वमतो वशित्वादिलक्षणैः गुणैरिति शेषः । अविशेषा-त्प्रमाणाभावादेस्तुल्यत्वादित्यर्थः ॥ १८० ॥

किञ्चेश्वरत्वं परमात्मनो वास्तवं स्वरूपमिति वदतो जगत्कारणत्वसाक्षित्वे अपि तत्स्वरूपत्वेनानभिमते उताभिमते । नाद्यः ईश्वरत्वेन तुल्ययोगक्षेमत्वेन तयोरपि स्वरूपत्वावश्यंभावादित्यभिप्रेत्यादौ कारणत्वस्य तत्स्वरूपत्वापत्तिमाह —

कारणत्वमपि चित्सुखादिव-
त्तत्स्वरूपमिति किं न गृह्यते ।
ईश्वरत्वविषये विपश्चितां
पक्षपातकरणे न कारणम् ॥ १८१ ॥

कारणत्वमपीति । तत्स्वरूपं तस्य परमात्मनः स्वरूपम् । नन्वीश्वरत्वस्य तत्स्वरूपत्वस्वीकारे कारणत्वादेरपि तत्स्वरूपत्वं स्वीकर्त्तव्यमिति कोयं नियमः विपरीते वा कोयं नियमः विनिगमकाभावात्तस्यापि स्वरूपत्वमङ्गीकार्यमित्याह—ईश्वरत्वविषय इति । विपश्चितामित्युपहासः पक्षपातकरणे तदेकाङ्गीकारः पक्षपातः तत्करणे कारणं विनिगमने हेतुर्नास्तीत्यर्थः ॥ १८१ ॥

इदानीं साक्षित्वस्यापि परमात्मनः स्वरूपत्वापत्तिमाह—

साक्षितापि परमात्मनो भवे-
दीश्वरत्ववदियं न संशयः ।
नित्यसिद्धनिजबोधरूपव-
द्रूपमेव निरुपाधिकं विभोः ॥ १८२ ॥

साक्षिताऽपीति । यथा विभोः परमात्मन ईश्वरत्वं नित्यसिद्धस्वाभाविकज्ञानस्वरूपवत् निरुपाधिकं वास्तवं स्वरूपं, तद्वत्साक्षितापि निरुपाधिकं स्वरूपं स्याद्विनिगमकाभावादित्यर्थः ॥ १८२ ॥

ननु विनिगमकाभावोऽसिद्धः ईश्वरत्वस्य श्रुतिप्रतिपन्नत्वात् साक्षित्वादेश्च श्रुतिप्रतिपन्नत्वाभावादित्यपि न शङ्कनीयम्। साक्षित्वादेरपि श्रुतिसिद्धत्वादित्यभिप्रेत्यादौ साक्षित्वे श्रुतिं दर्शयति—

**एको देवः सर्वभूतेषु गूढः**
**सर्वव्यापी सर्वभूतान्तरात्मा ।**
**कर्माध्यक्षः सर्वभूताधिवासः**
**साक्षी चेता केवलो निर्गुणश्च ॥ १८३ ॥**

एक इति । मूर्तित्रयात्मना पुराणसिद्धभेदवारणार्थमेकपदम् । जाड्यं निरस्यति—देव इति । स्वप्रकाश इत्यर्थः । पराभिमतं ताटस्थ्यं वारयति—सर्वभूतेषु गूढ इति । सर्वभूतानामात्मेत्यर्थः । आधाराधेयभावेन भेदं वारयति सर्वव्यापीति । परिच्छेदत्रयशून्य इत्यर्थः । ननु जीवपरयोर्नियम्यनियामकभावस्य सत्त्वात् कथं त्रिविधपरिच्छेदशून्यता तत्राह—सर्वभूतेति । सर्वेषां ब्रह्मादिस्तम्बान्तानां भूतानामयमेवान्तरात्मा सर्वेषु भूतेष्वस्यैव प्रवेशश्रवणात् । तथा चात्यन्ताभेदे नियम्यनियामकभावानुपपत्तेरारोपित एव भेद इत्यर्थः। तर्हि कर्त्तुरभिन्नत्वात्परोपि कर्त्ता स्यात् । तत्राह—कर्माध्यक्ष इति । प्रत्यगात्मनोपि न कर्तृत्वमित्यर्थः । साक्ष्यसाक्षिणोर्भेदः स्यात् तत्राह—सर्वेति । सर्वेषां भूतानां साक्ष्या-

णामयमधिवासः अधिष्ठानत्वात् । तथा चारोपितस्याधिष्ठानाभेदान्न वस्तुतः परिच्छेद इत्यर्थः। तस्य वस्तुत्वेन घटवद्दृश्यत्वानुमानं जडत्वोपाधिहतमित्याह—साक्षीति । ईक्षणकर्तृत्वं वारयति —चेतेति । द्रष्टृत्वाद्विकारित्वं लौकिकद्रष्टृवन्नेत्याह—केवल इति । स्वसन्निधिमात्रेण विश्वव्यवहारहेतुतया चिन्मात्रत्वमस्य द्रष्टृत्वं न विकारितयेत्यर्थः। ज्ञानानन्दौ ब्रह्मणो गुणाविति मतं निरस्यति—निर्गुण इति। एकरसत्व-श्रुतिविरोधादित्यर्थः ॥ १८३ ॥

एवं कारणत्वेपि श्रुतिमाह—

**न तस्य कार्यं करणं च विद्यते**
**न तत्समश्चाभ्यधिकश्च दृश्यते ।**
**पराऽस्य शक्तिर्विविधैव श्रूयते**
**स्वाभाविकी ज्ञानबलक्रिया च ॥ १८४ ॥**

न तस्येति। तस्येश्वरस्य कार्यं स्थूलदेहः करणं सूक्ष्मदेहः उभयमपि न विद्यते। अनेन जीववैलक्षण्यमुक्तं तह्यर्यं जगत्सर्जनेऽसमर्थ एव स्यादित्याशङ्क्यायमेव समर्थ इतिवक्तुं जगतः कारणान्तरं प्रतिषेधति—न तत्सम इति । तस्य परमेश्वरस्य सदृशोपि नास्ति कुतोऽधिक इत्यर्थः । सामर्थ्यमुपपादयति। परेति। अस्य परमेश्वरस्य परोत्कृष्टा विविधा विचित्रा कार्यजननी शक्तिर्मायाख्या श्रूयत एव इन्द्रो मायाभिरित्यादिभिरन्तःकरणहीनस्यापि जगत्स्रष्टृत्वमविरुद्धमित्यर्थः। ननु मायाया अपि जडत्वात्कथमेतादृशं सामर्थ्यमित्याशङ्क्य स्वतः सामर्थ्याभावेपि स्वरूपचैतन्यसम्बन्धाद् भवत्येवेत्याह—

स्वाभाविकीति । अनादिसिद्धा ज्ञानबलक्रिया ज्ञानं स्वरूपचैतन्यं तदेव बलं तेन या क्रिया मायाप्रवर्तनरूपा साऽप्यस्तीत्यर्थः । अतः सर्वज्ञत्वं कारणत्वं च सम्भवतीति भावः ॥ १८४ ॥

एवं साक्षित्वकारणत्वयोः श्रुतिं प्रदर्श्य दृष्टान्तत्वेनैश्वर्येपि श्रुतिं दर्शयति—

न तस्य कश्चित्पतिरस्ति लोके
न चेशिता नैव च तस्य लिङ्गम् ।
सकारणं वै करणाधिपाधिपो
न चास्य कश्चिज्जनिता न चाधिपः ॥ १८५ ॥

न तस्येति । अथवा मुखतोपि कारणत्वप्रतिपादिकां श्रुतिमाह—न तस्येति । तस्य परमेश्वरस्य पतिः स्वामी ईशिता नियन्ता लिङ्ग्यते ज्ञायते ऽनेनेति लिङ्गं कार्यकरणं, सः-परमात्मा, कारणम् , जगत्कारणं करणाधिपाधिपः—चक्षुरादिकरणानामधिपानामादित्यादीनामप्यधिपः, अतोऽयमेव सर्वेश्वर इत्यर्थः । नचास्य कश्चिज्जनिता नैव च तस्य लिङ्गमिति जीववैलक्षण्यमुक्तं न तस्य कश्चिदित्यादिना स कारणमित्यादिना च सर्वेश्वरत्वजगत्कारणत्वे उक्ते शेष उपसंहारः ॥ १८५ ॥

तस्मात्कारणत्वसाक्षित्वयोरपीश्वरत्ववत् श्रुतिनिर्देशस्तुल्य इत्याह—

उक्तश्रुतिः कारणसाक्षिभाव-

मैश्वर्यवद्वक्ति परस्य पुंसः ।

अतत्परत्वान्न तदिष्यते चेद्-

द्वयं तृतीयं न तथैषितव्यम् ॥ १८६ ॥

उक्तेति । उक्तप्रकारेण श्रुतिः उक्तश्रुतिः कारणसाक्षिभावं कारणत्वं साक्षित्वं च । ननु कारणत्वादिप्रतिपादकश्रुतेरात्मपरत्वेन तत्परत्वाभावान्न तदुभयं स्वरूपमिति चेतर्हि तात्पर्याभावस्यैश्वर्यश्रुतावपि समत्वात्तदपि न स्वरूपमित्याह—अतत्परत्वादिति । तद् द्वयमिति सम्बन्धः । कारणत्वं साक्षित्वं चेत्यर्थः । इष्यते स्वरूपत्वेनेति शेषः । तृतीयं कारणत्वसाक्षित्वापेक्षया तृतीयमैश्वर्यमपीत्यर्थः । तथा स्वरूपत्वेन ॥ १८६ ॥

तस्मात् त्रिष्वपि श्रुतेरविशेषादतत्परत्वस्य च तुल्यत्वात् त्रयाणामप्यस्वरूपत्वं वक्तव्यमन्यथैकस्य स्वरूपत्वाङ्गीकारे इतरयोरपि स्वरूपत्वापत्तिः । इतरयोश्चास्वरूपत्वेऽन्यस्याप्यस्वरूपत्वमिति प्रथमपक्षनिराकरणपूर्वकमुपसंहरति—

अतत्परत्वं श्रवणस्य तुल्यं

त्रिषु त्रयं तेन विवर्जनीयम् ।

अथैषमेकं त्रयमेषितव्यम्

विशेषहेतोरनिरूपणेन ॥ १८७ ॥

अतत्परत्वमिति। श्रवणस्य श्रुतेः त्रिषु कारणत्वसाक्षित्वसर्वेश्वरत्वलक्षणेषु त्रिष्वपीत्यर्थः। तेन येनातत्परत्वं तुल्यं तेन त्रयं विवर्जनीयम् स्वरूपत्वेन न स्वीकर्त्तव्यमित्यर्थः। अथ यद्येकमीश्वरत्वमिष्टं स्वरूपत्वेनेति शेषः। त्रयं त्रयमप्येषितव्यं विशेषहेतोर्विनिगमनस्यानिरूपणादित्यर्थः॥ १८७॥

नन्वीश्वरत्ववत्कारणत्वसाक्षित्वे अपि स्वाभाविके एवेति चेन्न-सापेक्षस्य मिथ्यात्वनियमादिति त्रयाणामपि मिथ्यात्वं वक्तुमादौ दृष्टान्तत्वेनाभिमतेश्वरत्वस्य सापेक्षत्वमाह—

ईशितव्यमनपेक्ष्य नेश्वरो
नेशितव्यमपि तद्वदीश्वरम्।
अन्तरेण घटते ततो मृषा
मोहमात्रपरिकल्पितं द्वयम्॥ १८८॥

ईशितव्यमिति। यथेश्वरेण विनेशितव्यं न घटते तद्वदीशितव्यमनपेक्ष्य परमात्मापीश्वरो न घटते इत्यर्थः। एतदुक्तं भवति। परमात्मा हीशितव्यं ब्रह्मादि जगदपेक्ष्यैव ईश्वरो भवति न तु तदनपेक्ष्य स्वतः लोके ग्रामादीशितव्यसापेक्षस्यैव ईश्वरत्वदर्शनात्तदभावे परिव्राजके तददर्शनात् तद्वदीशितव्यं ब्रह्मादि जगदपीश्वरमपेक्ष्यैवेशितव्यं भवति न तु तमन्तरेण ग्रामादावीश्वरपुरुषापेक्षयैवैश्वर्यव्यवहारादन्यथा परिव्राजकं प्रत्यपि तदैश्वर्यं स्यादिति फलितमाह—तत इति। सापेक्षत्वं तच्छब्दार्थः द्वयमीशितव्यमीश्वरत्वं चात्र चेशितव्यं दृष्टान्तत्वेनोपात्तं यथेश्वरसापेक्षमीशितव्यं मोहपरिकल्पितं मृषैव न तु वस्तुसत् तथेशितव्यसापेक्षमीश्वरत्वमपि मोहमात्रपरिकल्पितं मृषैवेत्यर्थः॥ १८८॥

एवं कारणत्वस्यापि सापेक्षत्वं सदृष्टान्तमाह—

कार्यवस्तु विरहय्य कारणं
न क्वचिद् घटयितुं क्षमेमहि ।
नापि कारणमपोह्य केवलं
कार्यवस्तु परिकल्पयेमहि ॥ १८९ ॥

कार्यवस्तु विरहय्येति । क्षमेमहि समर्था भवेम यथा कारणं विना कार्यं न भवतीति कारणसापेक्षं कार्यं तद्वत्कार्यमपेक्ष्यैव कारणं भवति न तु तद्विना कार्यनियतपूर्ववर्तिन एव कारणत्वादित्यर्थः ॥ १८९ ॥

साक्षित्वस्यापि सापेक्षत्वमाह—

साक्ष्यवस्तु परिहृत्य साक्षिता
साक्षिणं च परिहृत्य साक्ष्यता ।
नेष्यते न घटते च तेन त-
त्सव्यपेक्षमुभयं परस्परम् ॥ १९० ॥

साक्ष्यवस्त्विति । साक्ष्यवस्त्वीक्षणविषयवस्तु यथा घटादेः साक्ष्यत्वं साक्षिणं विना नेष्यते न घटते चेक्षणविषयस्यैव साक्ष्यत्वादीक्षणस्य चेशितारं विनानुपपत्तेस्तद्वत्परमात्मनः साक्षित्वमपि साक्ष्यं विना नेष्यते न घटते चेक्षणाश्रयस्यैव साक्षित्वादीक्षणस्य च विषयं विनानुपपत्तेरित्यर्थः । फलितमाह—तेनेति । येनैकं विनेतरं न घटते न तेन तदुभयं साक्षिता साक्ष्यता च परस्परं सव्यपेक्षमत्रापि साक्ष्यतेति दृष्टान्तत्वेनोपात्तम् ॥ १९० ॥

इदानीं प्रसङ्गादात्मनः प्रमातृत्वादिकमपि मिथ्येति वक्तुमादौ प्रमातृत्वस्य सापेक्षत्वमाह—

**न प्रमेयमपहाय मातृता**
**नापि मातृविरहे प्रमेयता ।**
**मातृमेयरहिता न च प्रमा**
**न प्रमाणरहितं प्रमाफलम् ॥ १६१ ॥**

न प्रमेयामिति। प्रमाश्रयत्वस्यैव प्रमातृत्वात् प्रमायाश्च विषयसापेक्षत्वात् प्रमातृत्वं प्रमेयसापेक्षमित्यर्थः। अत्रापि नापि मातृविरहे इत्यादिदृष्टान्तार्थः। प्रमातारं विनापि प्रमेयता न संभवति। प्रमात्राश्रितप्रमाविषयस्यैव प्रमेयत्वात्। एवं प्रमातृप्रमेये विना प्रमाणमपि न संभवति। तस्य प्रमात्वस्य प्रमातृसमवेतार्थप्रकाशत्वास्याश्रयविषयसापेक्षत्वात्। एवं प्रमाणं विना तत्फलमभिव्यक्तिरपि न संभवति तस्यास्तदधीनत्वात्। अथवा प्रमातृप्रमेये विना चक्षुरादेः प्रमाणत्वं न संभवति। एवं प्रमाणं विना प्रमारूपं फलमपि न संभवति। तस्य तज्जन्यत्वात्तथा च कारणत्वादेरेकैकसापेक्षत्वमेव प्रमातृत्वादिकं तु प्रमेयादित्रितयमपेक्षत इति परम्परया मेयादित्रयसापेक्षमित्यर्थः ॥ १६१ ॥

एवं कर्तृत्वमपि सापेक्षमित्याह—

**कर्तृ कर्म परिहृत्य नेष्यते**
**कर्म कर्तृरहितं न च क्वचित् ।**
**कर्तृकर्मरहिता न च क्रिया**
**न क्रियाविरहितं क्रियाफलम् ॥ १६२ ॥**

कर्त्रिति । कृत्याश्रयस्यैव कर्तृत्वात् कृतेश्च क्रियारूपायाः सकर्मकत्वेन कर्म विना अभावात् कर्मकारकसापेक्षमेव कर्तृत्वमेवं कर्मत्वमपि कर्त्तारं विनाऽनुपपन्नं कर्तृसापेक्षक्रियाजन्यफलभाज एव कर्मकारकत्वात् । एवं क्रियापि कर्तृकर्मणी विना न संभवति । तस्या आश्रयविषयसापेक्षत्वात् । एवं क्रियाफलमपि क्रियां विना न संभवति तस्य तज्जन्यत्वात् तथा च कर्मतादिवत्कर्तृत्वमपि सापेक्षमित्यर्थः । एवं भोक्तृत्वादिकमपि सापेक्षं द्रष्टव्यम् ॥ १९२ ॥

एवमस्मदात्मनः सर्वानुगतत्त्वेन सामान्यत्वमपि सापेक्षमित्याह—

**सामान्यं न विशेषवस्तुविरहे तस्माद्विना तन्न च**
**स्वातन्त्र्येण घटामुपाश्नाति ततः सापेक्षमेतद्द्वयम् ।**
**यत्सापेक्षमिहेक्षितं भवति तन्मायामयं स्वप्नव-**
**त्तस्मादीश्वरतादिकल्पितवपुः स्वीकुर्महे न्यायतः ॥१९३॥**

सामान्यमिति । विशेषं विना सामान्यं न सम्भवति । विशेषेष्वनुगतस्यैव सामान्यत्वात् । एवं तद्विशेषवस्तु च स्वान्त्र्येणास्यैव व्याख्या—तस्माद्विनेति । सामान्यादृते घटां घटनां सद्भावं नोपाश्नाति न प्राप्नोति न संभवतीत्यर्थः । स्वानुगतसामान्यकस्यैव विशेषत्वात् गोत्वादेर्विशेषत्वाभावादिति भावः । फलितमाह—तत इति । यतः सामान्यत्वं विशेषवस्तु विना न संम्भवति । विशेषत्वं च सामान्यं विना न संभवति ततो द्वयं सामान्यत्वं विशेषत्वं च सापेक्षमेवात्रापि विशेषस्य सापेक्षत्वं दृष्टान्ततयोक्तमेतच्च ब्रह्मप्रपञ्चयोः सामान्यविशेषभावेनैक्यनिरसनार्थमुक्तमिति द्रष्टव्यम् । नन्वस्त्वीश्वरत्वादेः सापेक्षत्वं न ह्येतावताऽवास्तवत्वं भवतीत्याशङ्क्य

सापेक्षत्वस्य स्फटिकलौहित्यादौ मिथ्यात्वेन व्याप्तिदर्शनादीश्वरत्वादेरपि सापेक्षत्वात् मिथ्यात्वं भवत्येवेति तस्य न तत्स्वरूपत्वमिति वक्तुं व्याप्तिमाह—यत्सापेक्षमिति। इह जगति मायामयं मिथ्या स्वप्नस्य च सापेक्षत्वं निद्रादिना व्याप्तिमुक्त्वाऽनुमानमाह - तस्मादिति। सापेक्षत्वमिथ्यात्वयोर्व्याप्यव्यापकत्वं नच्छब्दार्थः ईश्वरतादीत्यादिपदेन पूर्वोक्तं कारणत्वादिकं गृह्यते कल्पितवपुः कल्पितस्वरूपं न्यायत अनुमानादीश्वरत्वादिकं कल्पितरूपं सापेक्षत्वात् स्वप्नस्फटिकलौहित्यादिवत्। न चाप्रयोजकः वास्तवत्वे आत्मवत्सापेक्षत्वाभावस्यैव बाधकत्वात् परस्परापेक्षसिद्धिकस्य वास्तवत्वानुपपत्तेश्चेत्यर्थः ॥१९३॥

ननु समुद्रतरङ्गन्यायेन भिन्नाभिन्नत्वरूपेण तस्य तत्स्वरूपत्वमविरुद्धमित्याशङ्क्य ब्रह्मणो भिन्नत्वाभिन्नत्वे स्वाभाविके उतान्यतरदौपाधिकं नोभयथापि विरुद्धत्वादित्याह—

**अभिन्नता भिन्नतया विरुद्धा**
**विभिन्नताऽभिन्नतया तथैव।**
**उपाधिभेदे परिकल्पितेऽपि**
**विना पुनस्तं किमुदीरणीयम् ॥ १९४ ॥**

अभिन्नतेति। परिकल्पितेप्यङ्गीकृतेपीत्यर्थः। तमुपाधिमुपाधिभेदेनाप्येकस्य भिन्नाभिन्नत्वे न संभवतः वस्तुनो द्वैरूप्यायोगात् किमु वक्तव्यमुपाधिभेदाभाव इत्यर्थः ॥ १९४ ॥

नन्वेकस्य स्वतो विरुद्धोभयरूपासंभवेप्युपाधिभेदादुपपद्यते। आकाशादौ तथा दर्शनादित्याशङ्क्य किमुभयं रूपं वास्तवमुत भिन्नत्वं कल्पितम्। नाद्यः सम्भवतीत्याह—

स्वभावतो यन्मिथुनं विरुद्धं
न तन्निमित्तान्तरतः कदाचित् ।
उपैति सख्यं परमार्थवृत्त्या
अमादलभ्यं न च किंचिदस्ति ॥ १९५ ॥

स्वभावत इति । यद् द्वयं स्वतोविरुद्धत्वान्न ब्रह्मण्युपाधितोपि तयोस्तदुपाधितोपि परमार्थवृत्त्या साहित्यं न प्राप्नोति एकत्रैकावच्छेदेन न वर्त्तते । तथा च भेदाभेदयोरपि स्वतो विरुद्धत्वान्न ब्रह्मण्युपाधितोपि तयोरुभयोरपि वस्तुतः संभवः । आकाशादौ घटाद्युपाधिप्रयुक्तवर्त्तुलत्वादिकमवास्तवमेव निर्भेदे वस्तुनि तद्विरुद्धसभेदत्वस्य वास्तवत्वे वाऽनिर्मोक्षप्रसङ्ग इति भावः । द्वितीयस्त्वङ्गीक्रियते किंत्वीश्वरत्वादेर्वास्तवत्वं भवदभिमतं न सिध्यतीत्यभिप्रायेणाह— अमादिति । ॥ १९५ ॥

विरुद्धयोरुपाधिद्वारापि वस्तुत एकत्रासंभवे दृष्टान्तमाह—

न रविशार्वरसख्यकृदीक्ष्यते
जगति कश्चिदुपाधिरमोहतः ।
यदि भवेत्स भवेद्भवतो मतः
स न भवेद्यदि सोऽपि न संभवेत् ॥ १९६ ॥

न रवीति । न हि सूर्यान्धकारयोः साहित्यापादकः कश्चिदुपाधिरस्तीत्यर्थः । ननु स विद्यते पेचकदीनां सूर्ये तमोबुद्धिदर्शनादिति चेत्सत्यं भ्रान्तिरेव सा न तु वस्तुतः । अन्यथान्येषामपि तस्मिन् तमोबुद्धिप्रसङ्गादित्यभिप्रेत्याह—अमोहत इति । वस्तुत इत्यर्थः । ततः

किमिति चेत् तद्वदेव परस्परविरुद्धभेदाभेदसाहित्यापादकोपाधेरप्यसंभवात् तत्साहित्यं न संभवेत्तत्संभवे वा सूर्यतमःसाहित्यमपि स्यादविशेषादित्याह—यदि भवेदिति । सः सूर्यतमः साहित्यापादकोपाधिर्यदि भवेत् भवेद् भवतो मतः भेदाभेदसाहित्यप्रयोजकः तमसः सूर्यसाहित्यापादकः उपाधिर्यदि न भवेत् स भवदभिमतोपाधिरपि न भवेदविशेषादित्यर्थः ॥ १६६ ॥

भ्रान्तिपक्षे तु नायं दोषः अविद्यायाः महायोगिन्या असंभावितामासचतुरत्वादिति भ्रमादलभ्यमित्युक्तमेवार्थं स्पष्टयति—

खमपि खादति खण्डितमीक्षते
निजशिरो नयनेन करार्पितम् ।
किमपि दुर्घटमस्य न विद्यते
यदि विमूढमतिर्भवति स्वयम् ॥ १६७ ॥

खमपीति । यदि स्वयं मूढमतिर्भवति तदाऽस्य विमूढमतेर्दुर्घटं किमपि न विद्यते इति सम्बन्धः । तदेवाह—खमपीत्यादिना । खमाकाशमपि खादतीव स्वप्नादाविति शेषः । खण्डितं छिन्नकरार्पितं हस्ते स्थापितं निजशिरः ईक्षते खं खण्डितमीक्षत इति वा तस्माद्भेदस्याविद्याविजृम्भितत्वात्सप्रपञ्चश्रुतेश्च तादृशभेदवादेन निर्विशेषात्मप्रतिपादनपरत्वान्नेशितव्यादिप्रपञ्चघटितमीश्वरत्वादिकमात्मनः स्वरूपमिति सिद्धम् ॥ १६७ ॥

किंच कार्यकारणभावो यदि वास्तवः स्यात्तदा तदधीनमीश्वरत्वादिकमप्यात्मनः स्वरूपं स्यादात्मा च स विशेषो भवेत् स एव दुर्निरूपः अतो नेश्वरत्वादिविशेषो वास्तवः न वात्मत्वं स विशेषमित्यभिप्रेत्याह—

इतश्च निर्भेदकमात्मतत्त्वं
निरूपणे कारणकार्यतादेः ।
अनादिमायैकनिबन्धनत्वा-
दसंभवादस्य तु वस्तुवृत्त्या ॥ १९८ ॥

इतश्चेति । वक्ष्यमाणहेतोरपीत्यर्थः । चकारात्पूर्वोक्तसापेक्षत्वादिकं गृह्यते । हेतुमेवाह—निरूपण इति । कारणकार्यता कार्यकारणभावः आदिपदेन साक्षिसाक्ष्यतादिकं गृह्यते अस्य कार्यकारणतादेः वस्तुवृत्त्या वस्तुतः असद्वा कार्यं सद्वा कार्यं कुर्वद्वा कारणमकुर्वद्वा-कारणं सम्बन्धं वा साक्ष्यसम्बन्ध वेत्येवं विचारे कार्यकारणतादेः केनापि प्रकारेण निरूपयितुमशक्यत्वेन वस्तुतोऽसम्भवादाविद्यकत्वमेव वक्तव्यम् । ततश्च निर्भेदमेवात्मतत्त्वमित्यर्थः ॥ १९८ ॥

तत्र कार्यकारणभावस्य वस्तुतोऽसंभवं वैशेषिकमतानुसारेण कार्यस्य दुर्निरूपत्वेन तावदाह—

असन्न कार्यं गगनप्रसून-
वन्ध्यासुतादेः करणाप्रसिद्धेः ।
न प्रागसत्कार्यमिति प्रवादः
प्रशस्यते तस्य विरोधहेतोः ॥ १९९ ॥

असन्नेति । किं कार्यमसदुत्पद्यते उत सत् नाद्य इत्याह—असन्न कार्यमिति । असतः करणाधीनसत्त्वलक्षणकार्यत्वस्यानुपपत्ते-रित्यर्थः । अप्रसिद्धमप्याह—वन्ध्यासुतादेरिति । कारणस्य निष्पादनस्याप्रसिद्धेश्चेत्यर्थः । ननु वन्ध्यासुतादिकमत्यन्तासत्त्वान्नोत्पादि कार्यं तूत्पत्तेः पूर्वमसदुत्पद्यतामित्याशङ्क्य तदपि न्यायविरोधेन

दूषयति—न प्रागसदिति । उत्पत्तेः प्रागसदित्यर्थः । प्रवादः उक्तिः सिद्धान्त इति वा न प्रशस्यते न सम्यग्भवति । तत्र हेतुः—सस्येति । तस्य प्रागसतः पश्चात्कारणाधीनसत्त्वलक्षणोत्पत्तिरित्यस्य विरोधहेतोः यदसत् न तत्कदापि सत् यथा नरविषाणम्, यत्सत् न तत्कदाप्यसत् यथा ब्रह्मेति नियमविरोधाद्धेतोर्नैकस्य कालभेदेन सत्त्वासत्त्वे संभवत इत्यर्थः ॥ १९९ ॥

किंचोत्पत्तेः पूर्वं कार्यमसदिति प्रतीतौ पूर्वकालः कार्यस्य विशेषणं प्रतीयते न च तत्कार्यस्यासत्वे युज्यते असति विशेषण-प्रवृत्तेरदर्शनादनुपपत्तेश्चेत्याह—

**विशेषणानामसति प्रवृत्ति-**
**र्न दृश्यते क्वापि न युज्यते च ।**
**युधिष्ठिरात्प्रागभवन्नरेन्द्रो**
**वन्ध्यासुतः शूर इतीह यद्वत् ॥ २०० ॥**

विशेषणानामिति । पूर्वकालीनत्वोत्पत्स्यमानत्वादीनां न युज्यत इति विशेष्यसम्बन्धस्यैव विशेषणत्वादसता च सम्बन्धासंभवादित्यर्थः । असति विशेषणाप्रवृत्तौ दृष्टान्तमाह—युधिष्ठिरादिति । यद्वद्वन्ध्यासुतो युधिष्ठिरात् प्राक् नरेन्द्रोऽभवत् शूरश्चेति प्रतीतौ युधिष्ठिरप्राक्भवत्वनरेन्द्रत्वशूरत्वानां वन्ध्यासुतं प्रति विशेषणत्वन्न युज्यते तद्वदुत्पत्तेः पूर्वमसदित्यपीत्यर्थः । ननूत्पत्तेः पूर्वं कार्यमसदिति न ब्रूमः किन्तु तत्प्रागभाव एवेति चेन्न । किं प्रागभावसत्त्वेन घटस्यायातं घटस्वरूपं तु तदाऽसदेव सत्तासमवायस्य स्वरूपसत्त्वस्य वा तदाऽभावान्न हि घटसत्ता पटसत्ता भवति । न ह्यभावप्रतियोगित्वमेव सत्वं तदाऽसतोऽभावप्रतियोगित्वानुपपत्तेश्च ॥ २०० ॥

किंचोत्पत्तिस्वरूपानिरूपणादप्यसत्कार्यवादोऽयुक्त इत्याह—

उत्पत्तिरप्यस्य निरूप्यमाणा
न काचिदागच्छति युक्तिमार्गम् ।
स्वसत्तया स्वैः समवायिकारणै-
रपीह्या स्यात्समवायिताऽस्य ॥ २०१ ॥

असज्जनिः सेत्युपवर्ण्यमानं
सुदुर्घटं न ह्यसतो युजैभिः ।
सदेव सद्भिः सह सर्ववस्तु
संगच्छते न त्वसदेव सद्भिः ॥ २०२ ॥

उत्पत्तिरिति। अस्य असतः। ननु प्रागसतः कार्यस्य सत्तासमवायित्वं स्वसमवायिकारणसमवायित्वं वोत्पत्तिरिति प्रसिद्धमतः कथं तदनिरूपणमित्याशङ्क्य सत्यं प्रसिद्धं तदेव कार्यस्यासत्त्वे नोपपद्यत इत्यभिप्रेत्याह—स्वसत्तयेति। यस्य कार्यस्य स्वसत्तया स्वाभिव्यङ्ग्यया सत्तया सह या समवायिता समवायाश्रयता सत्तानिरूपितसमवायाश्रयतेत्यर्थः। यद्वा स्वैः स्वीयैः समवायिकारणैः सह या समवायिता समवायिकारणेषु समवेतत्त्वमित्यर्थः॥ २०१॥ सा सत्तासमवायिता समवायिकारणसमवायिताऽसज्जनिः असत उत्पत्तिरित्युपवर्ण्यमानं निरूप्यमाणं सुदुर्घटं सुतरां दुर्घटं तत्र हेतुः। नहीति। यतः असतः कार्यस्य एभिः सत्तया समवायिकारणैर्वा युजा सम्बन्धो न संभवति। सतोरेव सम्बन्धात् तत इत्यर्थः। नन्वसतोऽपि सद्भिः सह सम्बन्धः किं न स्यादित्याशङ्क्याह—सदेवेति। सदेव सर्ववस्तु सद्भिः सह सम्बध्नाति न त्वसदेव—असदपि। समवायो हि सम्बन्धः

सम्बन्धिनोः सतोरेव भवति नान्यतरस्यासत्त्वेप्याकाशतत्कुसुमयोः समवायसम्बन्धादर्शनात्। न चोत्पद्यमानमपि सदेवेति सत्तादिसमवायः स्यादिति वाच्यम्। सत्तासमवायित्वस्यैव सत्त्वेनोत्पद्यमानत्वे च तत्पूर्वं सत्त्वानुपपत्तेः। तथा च सत्तादिसमवायित्वस्यैवोत्पत्तित्वे तत्पूर्वं कार्यस्यासत्वात् न तस्य सत्तादिसमवायित्वमिति नोत्पत्तिर्निरूपयितुं शक्यत इत्यर्थः ॥ २०२ ॥

नन्वसतः सद्भिः सह सम्बन्धाभावेप्यसद्भिरेव सत्तादिभिः सह सम्बन्धः किं न स्यादित्याशङ्क्य सत्तादीनां सत्त्वान्नैवमित्याह—

**सती ह सत्ताऽस्य पटस्य दृष्टा**

**तथैव सन्तः पटतन्तवोऽपि।**

**तया च तैश्चास्य कथं पटस्य**

**सम्बन्धिता स्यादसतो वदैतत् ॥ २०३ ॥**

सती हेति। ह इत्यवधारणे। इह वैशेषिकसमय इति वा। अस्य सत्ता सत्येव दृष्टा न त्वसती अन्यथा सद्बुद्धिविषयत्वायोगात् तथा पटतन्तवः पटकारणतन्तवोपि सन्त एव दृष्टाः अन्यथा कारणत्वानुपपत्तेरित्यर्थः। फलितमाह—तया चेति। सदेकाश्रयया सत्या सत्तया तैः सद्भिस्तन्तुभिश्च सहास्यासतः पटस्य कथं सम्बधिता स्यादेतत्सम्बन्धिता स्यादित्येतद्वदेत्यर्थः ॥ २०३ ॥

ननु माभूत् सत्तासमवायः स्वकारणसमवायो वा सतो जन्म प्रकारान्तरेणैव तत्तस्य भवत्वित्याशङ्क्य तथानभ्युपगमान्नैवमित्याह—

स्वकारणैस्तन्तुभिरेवमस्य
स्वसत्तया चान्वय एव जन्म।
तवेष्टमेवं सति जन्म तस्य
न शक्यते वर्णयितुं पटस्य ॥ २०४ ॥

स्वकारणैरिति। अस्यासतः पटस्य स्वकारणैस्तन्तुभिरेव स्वसत्तया चान्वयः समवाय एव जन्म तवेष्टं नान्यदित्यर्थः। फलितमाह— एवं सतीति। सत्तादिसमवायस्यैवोत्पत्तित्वे सतीत्यर्थः ॥ २०४ ॥

ननु पटस्य सत्तासमवायित्वेन स्वकारणसमवायित्वं स्वकारणसमवायित्वेन च सत्तासमवायित्वमिति द्रव्यत्वगुणत्वयोरिव परस्परप्रयोज्यतया नासतः समवाय इत्याशङ्क्य किमेकदैव कार्यस्योभयसमवायित्वं किं वा पौर्वापर्येण नाद्यः परस्परप्रयोज्यप्रयोजकतानुपपत्तेः द्रव्यत्वगुणत्वयोश्चानादित्वेनादोषत्वात् तदसंमतेश्च, द्वितीये येन प्रथमं सम्बध्यते तत्समवायात् पूर्वं कार्यस्यासत्वात् कथं तेन तत्समवायि स्यादित्यभिप्रेत्याह—

तदन्वयात्प्रागसतः कथं स्या-
त्तदन्वयो न ह्यसदन्वयाय।
सता समर्थं न हि वन्ध्यया त-
त्पुत्रः समन्वेति कदाचिदत्र ॥ २०५ ॥

तदन्वयादिति। सत्तास्वकारणान्यतरान्वयादित्यर्थः। असतः कार्यस्येति शेषः। तदन्वयः सत्ताद्यन्यतरान्वयः कथं स्यान्न कथमपीत्यर्थः। तत्र हेतुः। न हीति। हि यतः असत्सत्तान्वयाय न समर्थमिति सम्बन्धः। तत्र दृष्टान्तमाह—नहीति। अत्र—लोके ॥ २०५ ॥

पूर्वं स्वसत्तादिसमवायादन्यदेवोत्पत्तिशब्दवाच्यमस्त्वित्याशङ्क्य तथानभ्युगमादिति हेतुरुक्तः इदानीमन्यच्च निरूपयितुं न शक्यमित्याह—

न च किंचिदन्यदसतो वदितुं
पटवस्तुनोऽत्र शकनीयमतः ।
जनिशब्दवाच्यमनवद्यतया
तदयुक्तमेवमसदुद्भवनम् ॥ २०९ ॥

न च किंचिदिति । अस्य पटवस्तुनः इतः सत्तादिसमवायादन्यज्जनिशब्दवाच्यमुत्पत्तिपदाभिधेयमनवद्यतया निर्दुष्टतया वदितुं निरूपयितुं न शकनीयं न शक्यमिति सम्बन्धः । ननु किमिति निरूपयितुं न शक्यते आद्यक्षणसम्बन्धस्यैवोत्पत्तिपदार्थत्वादिति चेन्न । नित्यगगनादेरप्युत्पत्तिमत्त्वप्रसङ्गात् । क्षणस्यानादिप्रवाहरूपत्वेनाद्यत्वाभावाच्च । ननु स्वसमानकालीनपदार्थप्रतियोगिकध्वंसानाधारसमयत्वमेव क्षणस्याद्यत्वं तत्सम्बन्ध एवोत्पत्तिपदार्थः गगनादेश्च स्वसमानकालीनघटादिपदार्थप्रतियोगिकध्वंसाधारसमयसम्बन्धित्वान्नोत्पत्तिमत्त्वमिति चेन्न । समयसम्बन्धस्य संयोगादिरूपत्वेऽसतः कार्यस्यासंभवात् स्वरूपस्य चासम्बन्धत्वादुत्पत्तेः पूर्वं स्वरूपाभावाच्चेत्यभिप्रेत्योक्तमसत इति । फलितमाह—तदिति । यतोऽन्यदुत्पत्तिपदाभिधेयं वक्तुमशक्यं तत्तस्मादेतदसदुद्भवनमसदुद्भवः अयुक्तं वक्तुमयुक्तमित्यर्थः । किंच किं सत्तादिसमवायस्तदा जायते उतानादिसिद्धः । नाद्यः जन्यसम्बन्धस्य सम्बन्धिद्वयजन्यत्वेनानुत्पन्नपटाद्युत्पत्त्यनुपपत्तेः । न द्वितीयः तत्र प्रमाणाभावात् । तत्र न तावत्प्रत्यक्षं प्रमाणमननुभवात् नाप्यनुमानं तत्सिद्धेः पूर्वं व्याप्त्यभावात् । न च संबन्धसामान्यव्याप्त्या तत्सिद्धिः

स्वरूपविषयत्वेन विशिष्टप्रत्ययस्यार्थान्तरत्वात् । न च स्वरूपाणामनेकत्वेन गौरवात्समवायस्यैकत्वेन लाघवात् स एवानुमानविषय इति वाच्यम् । स्फुटतरविवेकप्रत्ययाविषयत्वेन तदेकत्वासंभवात्तादृक्सत्त्वाच्च समवायस्यैकत्वे उत्पत्तेः पूर्वमपि तत्सत्तादिसमवायित्वेन कार्यस्य कादाचित्कत्वानुपपत्तेः । घटादिनिरूपितसमवायस्य पूर्वमसत्त्वे च तस्य जन्यतया दोषानिस्तारादिति ॥ २०६ ॥

ननु सत एव जन्मास्तु तत्र च पूर्वोक्तदोषगन्धोपि नास्तीति चेत् न हि कणादमतानुसारेणैवं वक्तुं शक्यमपसिद्धान्तापातादित्याह—

**न च वर्णितादपरमत्र भवा-**
**ननुमन्यते जनिवचोर्थमितः ।**
**यदि वर्ण्यते किमपि तत्र भवे-**
**त्स्वमतप्रहाणमलिनीकरणम् ॥ २०७ ॥**

न च वर्णितादिति । इतो वर्णितादिति सम्बन्धः । अत्र कार्यकारणभावपरीक्षायामुत्पत्तिपदार्थनिरूपणायां वा प्रागसतः सत्तादिभिः समवाय इत्येतस्माद्वर्णितादपरं जनिवचोऽर्थमुत्पत्तिपदाभिधेयं भवान् कणादमतानुसारी नानुमन्यते । तत्रैव सति यद्यसत उत्पत्तिपक्षोक्तदोषपरिहाराय भवता किमपि यत्किंचित्सदुत्पत्तिरित्येतद्वर्ण्यते तदा स्वमतप्रहाणमलिनीकरणं स्वमतप्रहाणमेव मलिनीकरणं स्वसिद्धान्तत्यागलक्षणदोषो भवेदित्यर्थः ॥ २०७ ॥

अपसिद्धान्ततामेव स्पष्टीकर्त्तुमुत्पत्तिपदार्थं कणादाभिमतं दर्शयति—

समवायिकारणगणेन तथा
सह सत्तया च पटवस्त्विह यत् ।
समवैति तत्कणभुगिच्छति त-
ज्जनिशब्दवाच्यमिति नान्यदितः ॥ २०८ ॥

समवायीति । इहोत्पत्तिपदार्थनिरूपणे समवायिकारणगणेन सह तथा सत्तया च सह पटवस्तु समवैतीति यत्तज्जनिशब्दवाच्यं पटोत्पत्तिशब्दवाच्यमिति कणभुगिच्छति इतः स्वसत्तादिसमवायाद्न्यत् सत उत्पत्तिरित्येवं रूपन्नेच्छतीति सम्बन्धः । पटवस्त्विति कार्यमात्रस्योपलक्षणम् प्रागसतः सत्तासमवायित्वं स्वकारणसमवायित्वं वा जनिपदाभिधेयमिति कणादमतं नान्यदित्यर्थः ॥ २०८ ॥

तर्हि कणादमहर्षिसंमतं तदेव जनिशब्दवाच्यमस्त्वित्यपि न शङ्कनीयं तदसंभवस्योपपादितत्वादित्याह—

न तदत्र संभवति युक्तिवशा-
दुपवर्णितं तदतिविस्तरतः ।
न च किञ्चिदन्यदुचितं भवतो
वदितुं स्वपक्षमपरित्यजतः ॥ २०९ ॥

न तदिति । तत्प्रागसतः सत्तादिसम्बन्धित्वमत्र कार्ये न सम्भवति असतो युक्तिवशात् तदसंभवनमतिविस्तरत उपवर्णितमित्यर्थः । तथा च भवान् यदि कणादमतानुसरणं परित्यज्य कपिलादेर्दत्तपुत्रो भवेत्तदा सत उत्पत्तिरिति वक्तुं शक्यम्अपरित्यज्य तु तत्सत उत्पत्तिरिति कथनेऽपसिद्धातापातो दुर्वार इति फलितमाह—न च किंचिदिति । अन्यत्—प्रागसतः स्वकारणादिसमवायादन्यत् ॥ २०९ ॥

किं च प्रागसत उत्पत्तिरिति पक्षे पटादिकार्यस्य तन्त्वादिभ्य इव चक्रादिभ्योऽप्युत्पत्तिप्रसङ्गः। नन्वन्वयव्यतिरेकौ ययोर्विद्येते तयोरेव कार्यकारणभाव इति चेन्न। अन्वयव्यतिरेकौ प्रमाणं प्रमेयं यथावस्थितमेवावगमयतः न तु कुरुतः ततश्चक्रादेः पटादिकं प्रति कारणत्वाभावः कथमिति वक्तव्यमेव स्वभावादिति चेन्न तस्य खाण्डनिकं प्रत्युपन्यासानर्हत्वात्। ननु स्वप्रागभाववतः कारणात् स्वस्योत्पत्तिरिति चेन्न। निमित्तादिप्रसङ्गापरिहारात्। प्रागभाववत्वं हि प्रागभावसम्बन्धित्वं न हि प्रागभावकारणयोः संयोगादिः संभवति तदभावे च तद्वत्वे मृदादेरपि तद्वत्वं किं न स्यात्। ननु प्रागभावस्य कारणेन सह विशेषणतैव सम्बन्धः इति चेन्न। विशेषणता हि स्वरूपमेव। तथा च पटप्रागभावस्वरूपस्य मृदादेश्च विद्यमानत्वात् तस्यापि तद्वत्वं स्यादेव। ननु विशिष्टप्रत्ययजननयोग्यत्वं सम्बन्धः। विशिष्टप्रत्ययश्च पटप्रागभावमृदोर्नास्तीति चेन्न योग्यता हि स्वरूपमेव नत्वन्यत् स्वरूपद्वयं च तत्रापि विद्यत एवेति विशिष्टप्रत्यय एव किमिति न भवेत्। सामग्र्याः कार्याव्यभिचारात्। ननु फलबलात्तादृशी योग्यता तत्र नास्तीति कल्प्यत इति चेन्न। योग्यतायाः स्वरूपत्वेन स्वरूपद्वयस्यैवाभावकल्पनाप्रसङ्गात्। एवं पटतत्प्रागभावयोरपि सम्बन्धाभावेन स्वप्रागभाववत इति वक्तुमशक्यत्वात् प्रागभाववन्मात्रादुत्पत्तावतिप्रसङ्गतादवस्थ्यात्। तस्मादसत उत्पत्तिरिति वैशेषिकपक्षो दुर्निरूप एवेत्युपसंहरति—

निरूपणायां न यतोऽस्ति कश्चि-
दुत्पत्तिशब्दार्थ इह त्वदीये।
पक्षे ततो दुर्घटनाप्रसिद्धि-
रसज्जनेरुक्तनयेन तावत्॥ २१०॥

निरूपणायामिति । असज्जनेस्तावद् दुर्घटताप्रसिद्धिः दुर्घटत्वेनैव सिद्धिः अनिरूपितरूपत्वेनैव सिद्धिरित्यर्थः ॥ २१० ॥

तर्हि सत एवोत्पत्तिरिति तावच्छब्दसूचितं सत्कार्यवादमाशङ्क्य निराकरोति ।

**सतोऽपि कार्यत्वमयुक्तमेव**
**निरूपणे कारणकृत्यहानेः ।**
**न कारणव्यापृतिरत्र शक्या**
**सतः स्वरूपे वदितुं फलाय ॥ २११ ॥**

सतोऽपीति । एवमसत इव सतोप्युत्पत्तेः पूर्वं विद्यमानस्यापि निरूपणे कार्यत्वं क्रियमाणत्वमयुक्तं तत्र हेतुः—कारणकृत्यहानेरिति । कारणव्यापारस्य प्रयोजनाभावात्कारणवैयर्थ्यप्रसङ्गादित्यर्थः । कुत इति चेत्किं कार्यस्यात्मलाभाय कारणव्यापारः, किं वा पृथुबुध्नत्व-शौक्ल्यादिधर्मविशेषसिद्धये, अथवा आवरणनाशाय, यद्वा अभि-व्यक्तये, अथवा अनभिव्यक्तिनाशाय, नाद्य इत्याह—न कारणेति । अत्र सतः कार्यत्वमितिपक्षे सतः विद्यमानस्य कार्यस्य स्वरूपे फलाय-आत्मलाभलक्षणफलाय कारणव्यापृतिर्वदितुं न शक्या स्वरूपस्य लब्धत्वादित्यर्थः ॥ २११ ॥

द्वितीयमनुवदति—

**गुणं क्षिपत्कारणमर्थवत्त्वं**
**लभेत चेन्नात्र गुणस्य भावात् ।**
**न चेद्गुणोऽसत्करणं प्रसक्तम्**
**निरर्थकं कारणकर्म तस्मात् ॥ २१२ ॥**

गुणं क्षिपदिति। गुणं शौक्ल्यादिधर्मं क्षिपत् जनयदर्थवत्त्व प्रयोजनवत्त्वं सत्कार्यवादे जायमानस्य गुणस्यापि सत्त्वमेव वक्तव्यमन्यथा असत्कार्यवादापत्तेः ततश्च कारणव्यापारो व्यर्थ एवेत्याह— नेत्यादिना। अत्र कारणे गुणस्य शौक्ल्यादिधर्मस्यापि भावात् सद्भावादित्यर्थः। असत्कारणमसदुत्पादनं कारणकर्म कारणव्यापारः गुणविशेषाधाना-संभवस्तच्छब्दार्थः ॥ २१२ ॥

तृतीयमनुवदति—

**मलं निरस्यार्थवदिष्यते चे-**
**न्मलोऽपि सन्नेव निरस्य इष्टः।**
**सतोऽविनाशादसतोऽजनेश्च-**
**वृथा ततः कारणमत्र पक्षे ॥ २१३ ॥**

मलमिति। मलवन्मलः पूर्वावस्थादिलक्षणावारकपदार्थः तन्निरस्य कारणमर्थवद् भवतीतीष्यते चेदित्यर्थः। अस्मिन्नपि पक्षे निरस्यो मलोपि सन्नेव वक्तव्यः असतो नित्यनिरस्तत्वेन निरस्यत्वायोगा-त्ततः कारणं वृथैव स्यादित्याह—मलोऽपीति। अत्र पक्षे निरस्यो मलोपि सन्नैवेष्टः। ततः कारणं वृथा स्यादिति सम्बन्धः। ननु निरस्यस्य मलस्य सत्त्वे कथं कारणस्य वैयर्थ्यं तन्निरसनेनैव सार्थकत्वादित्याशङ्क्य भवेदेवं यदि निरासः सम्भवेत् स एव सत आत्मवन्निरस्यत्वानुपपत्तेरित्याह— सत इति। अविनाशादिति छेदः। विनाशासंभवादित्यर्थः। किं च कारणेन जायमानो निरासः सन्वाऽसन्वा। आद्ये कारणवैयर्थ्यं, द्वितीयस्तु न संभवति असतः शशशृङ्गस्येव जन्यत्वानुपपत्तेः। असत्कार्यवादापत्तेश्चेत्याह—सत इति। अजनेरिति छेदः। जन्यसंभवादित्यर्थः ॥ २१३ ॥

कारणस्य गुणविशेषजनकत्वासंभवादेवाभिव्यक्तिजनकत्वमप्ययुक्तमिति सिद्धमिति चतुर्थं निरस्यति—

**तस्मादभिव्यक्तिकरी न हेतुः**
**प्रवृत्तिरत्रार्थवती घटेत ।**
**न चानभिव्यक्तिनिरासकृत्या**
**तस्मान्न सत्कार्यवचः प्रशस्तम् ॥ २१४ ॥**

तस्मादभिव्यक्तिकरीति । अभिव्यक्तिकरी सत्यर्थवती न घटते अभिव्यक्तेः सत्त्वेऽसत्त्वे च तज्जनकत्वासंभवादित्यर्थः । कारणस्य मलनिरासार्थतानिरासेनानभिव्यक्तिनाशकत्वमपि न युक्तमित्याह— न चेति । अनभिव्यक्तिनिरासकृत्या अनभिव्यक्तिनिरासमार्गेणाप्यर्थवती न घटत इत्यनुषङ्गः अनभिव्यक्तेः सत्त्वे निरासानुपपत्तेः । असत्त्वे च नित्यनिरस्तत्वेन निरासानुपपत्तेरित्यर्थः । तस्मात्सत्कार्यवादोऽप्यनुपपन्न इत्युपसंहरति—तस्मादिति । केनापि प्रकारेण कारणव्यापारस्य प्रयोजनासंभवस्तच्छब्दार्थः । सत्यकार्यवचः-सतः कार्यत्वमिति वचः ॥ २१४ ॥

किं च सत्कार्यवादिनः कारणगुणव्यापारः सन्नित्येव वक्तव्यः । अन्यथा असतस्तस्योत्पत्त्यनुपपत्त्या कार्योत्पादनस्यैवासंभवात् कारणगणव्यापारस्य च सामग्रीलक्षणस्य नित्यत्वे सर्वदा कार्योत्पत्त्यवश्यंभावे सुषुप्तिमूर्च्छाप्रलयादिकं न स्यादित्युभयतःपाशा रज्जुरित्यभिप्रेत्याह—

**नित्या च कारकगणस्य सती प्रवृत्ति-**
**र्नित्यं व्यनक्ति सकलं फलमित्यवश्यम् ।**

वक्तव्यमत्र न लयो न सुषुप्तिमूर्छे
नो चेन्न सृष्टिरिति कष्टमुपस्थितं वः ॥ २१५ ॥

नित्या चेति । नित्यं सर्वदा फलं कार्यमवश्यं वक्तव्यमिति सामग्र्याः फलाव्यभिचारादित्यर्थः । ततः किमिति तत्राह—अत्रेति । अत्रास्मिन्पक्षे लयः प्रलयः कारणगणव्यापारस्यागन्तुकत्वे दूषणमाह—नो चेदिति । कारणगणप्रवृत्तिर्नित्या नो चेत्कदाचिदसती स्यात् तथा च तस्या एवोत्पत्त्यनुपपत्तेः सृष्टिः कार्योत्पत्तिर्न स्यादिति वः सत्कार्यवादिनां कष्टमुपस्थितमुभयतः पाशा रज्जुरित्यर्थः ॥ २१५ ॥

ननु भवत्पक्षेपि कार्यस्यासत्त्वं सत्त्वं वा वक्तव्यम्, तृतीयप्रकारासंभवात् तथा च भवदुक्तदोषो भवन्तमप्याश्रयत इति चेन्मैवम्—अस्मन्मते सत्त्वासत्त्वादिप्रकारैरनिर्वचनीयमायाजन्यत्वेन कार्यस्यापि तादृग्रूपतया कस्यापि दोषस्याप्रसक्तेरित्याह—

वेदान्तवादिसमयेऽपि समानमेत-
च्चोद्यं परैर्न खलु वाच्यमिहाप्रसक्तेः ।
अस्मन्मते न खलु संव्यवहारमात्रे
मायामये किमपि दूषणमस्ति यस्मात् ॥ २१६ ॥

वेदान्तेति । एतच्चोद्यं कार्यस्य सत्त्वासत्त्वविकल्पदूषणं वेदान्तवादिसमयेऽपि समानमिति परैर्वैशेपिकादिभिर्न वाच्यम् । तत्र हेतुः इहेति । इह वेदान्तवादिसमये ऽप्रसक्तेस्तस्य चोद्यस्य प्रसक्तेरेवाभावादित्यर्थः । प्रसक्त्यभावमुपपादयति—अस्मन्मतइति । संव्यवहारमात्रे व्यवहारमात्रे व्यवहारमात्रसिद्धे वस्तुतो मिथ्याभूत इत्यर्थः । तत्र हेतुः—मायामय इति । अनिर्वचनीयमायाकार्ये न हि मायिकपदार्थेपि

किंचिद्दूषणमस्ति । मायिकस्य शुक्त्यसहत्वस्य भूषणत्वात् ततोऽस्मन्मते प्रपञ्चपरमार्थतावादिभिः साम्यं न चोदनीयमित्यर्थः । तथा च स्वव्याघातदर्शित्वाभावान्नैतस्य जातित्वमित्यर्थः ॥ २१६ ॥

कार्याकारणभावादेः संव्यवहारमात्रत्वं ब्रह्मनन्दिनापि छान्दोग्यषष्ठाध्यायव्याख्यानावसर उक्तमुक्तदोषाप्राप्त्यर्थमित्याह—

**आत्रेयवाक्यमपि संव्यवहारमात्रं**
**कार्यं समस्तमिति नः कथयांबभूव ।**
**सत्कार्यवादविषयो न हि दोषराशि-**
**र्मायामये भवितुमुत्सहते विरोधात् ॥ २१७ ॥**

आत्रेयवाक्यमिति । अत्रिवंश्यो ब्रह्मनन्दी आत्रेयः तद्वाक्यं- "नासत उत्पत्तिः अनिष्पाद्यत्वात् । नापि सतः प्रवृत्त्यानर्थक्यात् । सत्त्वाविशेषादभिव्यक्त्यर्थमिति चेन्न । तस्या अपि सत्त्वात् । प्रवृत्तिनित्यत्वाच्च सदाऽभिव्यक्तिप्रसङ्गः । न संव्यवहारमात्रत्वादि"त्यादिकं तद्वाक्यं सदसत्कार्यपक्षदूषणेन समस्तं कार्यं संव्यवहारमात्रमिति नः कथयांबभूव । अतोऽत्र सत्पक्षोक्तदोषो नास्तीत्यर्थः । ननु तदुक्तिमात्रेण कथं विवर्तवादे सदसत्पक्षोक्तदोषाभाव इत्याशङ्क्य न केवलं तदुक्तिमात्रेण किं तु सयुक्तिकं तेनोक्तत्वादिति विवक्षन्नादौ सत्कार्यवादसमाश्रितदोषासंभवमाह—सत्कार्येति । दोषराशिः कारणव्यापारनैरर्थक्यं कार्यस्य सदाभावादिश्च दोषगणो मायामये कार्ये भवितुं नोत्सहते । तत्र मायामयपदसूचितं हेतुमाह—विरोधादिति । सत्त्वप्रयुक्तानां दोषाणां तद्विरुद्धसद्विलक्षणकार्येऽसंभवादित्यर्थः॥२१७॥

मायावादं प्रति सत्कार्यवादस्य सन्निकृष्टत्वेपि तत्प्रयुक्तदोषाभावेऽसत्कार्यवादप्रयुक्तदोषो दूरापास्त इत्याह—

काणाददर्शनसमाश्रयदोषराशि-
दूरान्निरस्त इह संव्यवहारमात्रे ।
वेदान्तभूमिकुशलो मुनिरत्रिवंश्य-
स्तेनाऽऽह कार्यमिह संव्यवहारमात्रम् ॥ २१८ ॥

काणादेति । इह संव्यवहारमात्रे मायामये कार्ये अतो युक्तियुक्तमेव तदुक्तमित्याह—वेदान्तेति । मुनिः ब्रह्मानन्दी तेन येन कारणेनेतरयोः पक्षयोर्दुष्टता तत्प्रयुक्तदोषस्य च मायावादे प्राप्तिर्नास्ति तेनेह जगति कार्यं संव्यहारमात्रमाहेत्यर्थः ॥ २१८ ॥

ननु ब्रह्मनन्दिवाक्येष्वनेकपक्षप्रतिभासनादयमेव पक्षः सिद्धान्त इति कथं निश्चीयत इति चेत्परमात्मनिरूपणावसरे प्रतिपादितत्वादित्याह—

षष्ठप्रपाठकनिबद्धमुदीरितं यत्
तत्सत्यमेव खलु सत्यसमाश्रयत्वात् ।
अत्रैव यत्पुनरुवाच समुद्रफेन-
दृष्टान्तपूर्वकमदो व्यवहारदृष्ट्या ॥ २१९ ॥

षष्ठेति । षष्ठाध्यायसम्बद्धं यदुदीरितं तत्सत्यमेव तथ्यमेव खलु कुतः सत्यसमाश्रयत्वात्—सत्यपरमात्मप्रतिपादनपरत्वात् षष्ठाध्यायविचारस्येत्यर्थः । ननु षष्ठाध्याये परिणामवादोऽप्युक्त इति चेत्सत्यं तद्व्यवहारदृष्ट्यैव सत्कार्यवादादिदूषणपुरःसरं न कार्यकारणभावस्य संव्यवहारमात्रत्वादिति तदुक्तेरित्याह—अत्रैवेति । यत्परिणामलक्षणं कार्यमदः तत् ॥ २१९ ॥

तर्हि परिणामवादस्य विस्तरेणाभिधानं किमर्थमिति चेदद्वैतावगतिं प्रति परम्परयोपयोगित्वादित्याह—

**पूर्वं विकारमुपवर्ण्य शनैः शनैस्त-**
**दृदृष्टिं विसृज्य निकटं परिगृह्य तस्मात्।**
**सर्वं विकारमथ संव्यवहारमात्र-**
**मद्वैतमेव परिरक्षति वाक्यकारः॥ २२०॥**

पूर्वमिति। पूर्वमादौ विकारं विकारवादमुपवर्ण्याथानन्तरं शनैः शनैः सर्वं विकारं कार्यं संव्यवहारमात्रं यथा भवति। तथा तस्माद्विकारवादादपि निकटं समीपभूतमद्वैतावगमं प्रत्यत्यन्तसन्निहिते विवर्त्ते परिगृह्येत्यर्थः। तद्दृष्टिं विकारदृष्टिं विसृज्याद्वैतमेव परिरक्षति परिपालयतीति सम्बन्धः। वाक्यकारः—छान्दोग्यभाष्यवार्तिककारो ब्रह्मनन्दी। अथवा विकारवादो व्यवहारदृष्ट्यैव व्युत्पादितः न तु सिद्धान्तत्वेनेति कुतो ज्ञायत इति चेत् यत आदौ विकारमुपवर्ण्य पश्चात्तं परित्यज्य विवर्त्तवादमाश्रित्याद्वैतं प्रतिपादितवान् तस्मादित्याह—पूर्वमिति॥ २२०॥

किंचाद्वैतमेव तत्राध्याये सिद्धान्तत्वेन विवक्षितं न तु विकारवाद इत्येतद्भाष्यकृद्द्रविडाचार्यवचनादपि निश्चीयत इत्याह—

**अन्तर्गुणा भगवती परदेवतेति**
**प्रत्यग्गुणेति भगवानपि भाष्यकारः।**
**आह स्म यन्नदिह निर्गुणवस्तुवादे**
**संगच्छते न तु पुनः सगुणप्रवादे॥ २२१॥**

अन्तर्गुणेति। अन्तर्गुणेत्यस्य व्याख्या प्रत्यग्गुणेति, गुणशब्दः स्वरूप-परः परदेवता परमात्मा प्रत्यग्गुणा भगवती परदेवतेति भगवतीति परदेवता च प्रत्यग्गुणेति यदाह भगवान् भाष्यकारः छान्दोग्योपनिषद्भाष्यकारः तदपीह निर्गुणवस्तुवादे प्रत्यग्ब्रह्मणोरत्यन्ताद्वैतवाद एव संगच्छते न तु सगुणप्रवादे विकारवाद इत्यर्थः ॥ २२१ ॥

किंच कार्यकारणयोरत्यन्तं भेदः उतात्यन्तमभेदः अथवा भेदाभेदौ नाद्यः संगच्छत इत्याह—

न खलु कारणकार्यसमन्वयो
भवतु जातु चिदत्र विभिन्नयोः।
किमिह सागरसह्यसमाश्रयो
भवति कारणकार्यसमन्वयः ॥ २२२ ॥

न खल्विति। कारणकार्यसमन्वयः कार्यकारणरूपेण सम्बन्धः जातुचित् कदाचिदपि,अत्र—जगति, भिन्नयोः कार्यकारणसम्बन्धाभावमुदाहरणमुखेन स्पष्टयति—किमिति। इह लोके सह्यः पर्वतविशेषः सागरसह्यसमाश्रयः कार्यकारणभावो भवति किं नास्त्येव तथा च तन्तुपटयोरपि भिन्नत्वे कार्यकारणभाव एव न स्यात् दर्शनं त्वन्यथापि घटत इत्यर्थः ॥ २२२ ॥

न द्वितीय इत्याह—

न च तथायमभिन्नसमाश्रयो
भवितुमुत्सहतेऽनभिवीक्षणात्।
न हि घटो विदधाति घटं क्वचि-
न्न च पटः पटमित्थमनीक्षणात् ॥ २२३ ॥

न च तथेति। तथा यथा भिन्नसमाश्रयः कार्यकारणभावो नास्ति तथाऽभिन्नसमाश्रयोप्ययं कार्यकारणसमन्वयो भवितुन्नोत्सहते। तत्रादर्शनमेव हेतुमाह—अनभिवीक्षणादिति। अदर्शनादित्यर्थः। अदर्शनमेवोदाहरणमुखेन स्पष्टयति। नहीति। क्वचित् क्वचिदपि न च पटः पटं विदधातीत्यनुषङ्गः। घटोपि तं प्रति कारणमस्त्विति वदन्तं प्रत्याह—इत्थमनीक्षणादिति। पूर्वापरभावापन्नपदार्थनियतस्य कार्यकारणभावस्य स्वात्मानं प्रति स्वस्मिन्नसंभवादित्यर्थः। तथा च तन्तुपटयोरभेदेपि कार्यकारणभावो न स्यादित्यर्थः। भेदाभेदपक्षस्तु प्रतीत्यैव विरुद्ध इत्युपेक्षितः॥ २२३॥

एवं कार्यस्य सत्त्वासत्त्वाभ्यामनिरूपणेन कार्यकारणभावो दूषितः। इदानीं कारणमपि व्यापारवद्वा कारणं निर्व्यापारं वा आद्येऽपि व्यापार आगन्तुको वा नित्यो वेति विकल्प्याद्यमनवस्थया दूषयति—

**कुर्वत्कारणपक्षमाश्रितवतः कुर्वच्च कुर्वत्कृतं**
**तत्कुर्वच्च तथाविधान्यकृतमित्येषाऽनवस्था भवेत्।**
**कुर्वद्रूपमकार्यमिष्टमिति चेन्नित्यं जगज्जायतां**
**नित्यं मा जनि वा विशेषविरहादेतत्समस्तं जगत्॥२२४॥**

कुर्वत्कारणेति। व्यापारवत् कारणमिति पक्षे विशेषणीभूतव्यापारोपि जन्यः व्यापारान्तरवतो जात इति वक्तव्यम् एवं सोऽपि व्यापारस्तथाविधेनान्येन जायते इत्येवमनवस्था स्यात्। ततश्च कुर्वत्कारणं व्यापारश्चागन्तुक इत्ययं पक्षो न समीचीन इत्यर्थः। व्यापारो नित्य इति द्वितीयपक्षे सामग्रीलक्षणकारणगणव्यापारस्य सर्वदा भावात् सर्वदा कार्यं भवेन्न भवेद्वा न तु कदाचित् भवेत् नियामका-

भावादित्याह—कुर्वद्रूपमिति । व्यापारवद्रूपं व्यापार इति यावत् मा जनि जननं माभूदित्यर्थः । तत्र हेतुः—विशेषविरहादिति । नियामकाभावादित्यर्थः ॥ २२४ ॥

अकुर्वदेव कारणमिति पक्षमतिप्रसङ्गेन दूषयति—

**सर्वं सर्वसमुद्भवाय घटते कुर्वन्न चेत्कारणं**
**न ह्यस्मिन्क्वचिदस्ति कस्य चिदपि व्यापारवत्ता यतः ।**
**तस्मात्कारणकार्यतादि सकलं मायामयं तत्त्वतो**
**नाऽऽसीदस्ति भविष्यतीति सकलं चैतन्यशेषं जगत् २२५**

सर्वमिति । कार्यानुकूलव्यापारवदेव यदि कारणं न स्यात्तदा तिलादेव तैलमित्येवमादि नियमो न स्यात् किं तु सर्वमपि सर्वोद्भावकं स्यात् । तत्र हेतुः—न हीति । यतोऽस्मिन् कुर्वत्कारणमिति पक्षे कस्यचिदपि कारणस्य क्वचिदपि कार्ये विषये व्यापारवत्ता नास्ति अत इत्यर्थः । यदि तिलस्य तैलोत्पादनानुकूलव्यापाराभावेपि तदुत्पादकत्वं तदा सैकतस्यापि तत्किं न स्यादित्यर्थः । ननु भिन्नयोर्निर्व्यापारयोरपि ययोरन्वयव्यतिरेकौ तयोः कार्यकारणभाव इति नातिप्रसङ्ग इति चेन्न । नित्यविभूनामकारणत्वप्रसङ्गात् । दण्डादिव्यतिरेकेणापि गृहदास्यादिभिर्घटादिनिर्माणदर्शनाच्च । न हि गृहदासीविनिर्मितघटे कुतूहलादिनाऽस्मदादिभिस्तिर्यगूर्ध्वं च संयुज्यमानतन्तुषु यन्त्रनिष्पीडनं विना वा जायमानेषु तैलेषु घटपटतैलबुद्धिर्भ्रान्तिर्भवति न वा जातिविशेषो दृश्यते । तस्मात्कार्यकारणभावो न वास्तवः किन्त्वाविद्यक एवेति चैतन्यमात्रं तत्त्वमित्युपसंहरति—तस्मादिति । कार्यस्य सत्त्वासत्त्वादिना

कारणस्य कुर्वत्त्वाकुर्वत्त्वादिना निरूपणं तच्छब्दार्थः। इति—इति कृत्वा ॥ २२५ ॥

ननु निर्व्यापारस्यैव कारणत्व नचातिप्रसङ्गः—तिलादेस्तैलाद्युत्पादनानुकूलशक्तिवत् सिकतादेस्तदभावादतः शक्तिविशेष एवातिप्रसङ्गं निवारयतीति चेत् तिलादेस्तैलादावेव शक्तिरिति कुतो नियमः तैलादेरेव तच्छक्यत्वादिति चेत्तर्हि परस्पराश्रय-इत्याह—

सकलशक्तिविकल्पनयाऽन्वये
सकलशक्यविकल्पनयाऽन्वयः।
सकलशक्यविकल्पनयाऽन्वये
सकलशक्तिविकल्पनयाऽन्वयः ॥ २२६ ॥

इतिपरस्परसंश्रयता यदा
वद कथं जगतः परमार्थता।
यदि पुनर्जगतोऽपरमार्थता
परममस्ति पदं परमात्मनः ॥ २२७ ॥

सकलेति। सकलस्य कारणस्य शक्तिविकल्पनया शक्तिविशेषेणान्वयेऽस्य कारणस्य शक्तिरस्मिन्नेवेति शक्यव्यावृत्तशक्त्यन्वये सतीत्यर्थः। सकलशक्यविकल्पनया सकलस्य शक्यविशेषेणान्वयः। अस्येदमेव शक्यमिति शक्यविशेषेणान्वय इत्यर्थः। एवमुत्तरत्रापि द्रष्टव्यम्। शक्तिर्ह्यतीन्द्रियतया कार्यैकोन्नेया। कार्यं च तदीयत्वेन ज्ञातमेव तामनुमापयति। तथा च कार्यस्य तदीयत्वसिद्धौ कारणस्य

तदनुकूलशक्तिमत्त्वसिद्धिः कारणस्य तदनुकूलशक्तिमत्त्वसिद्धौ कार्यस्य तदीयत्वसिद्धिरित्यनेन प्रकारेण परस्पराश्रयग्रस्तत्वात्कथं जगतः पारमार्थिकत्वमिति भावः । एवं चाद्वितीयं ब्रह्मैव केवलं परमार्थतत्त्वमिति सिद्धमित्युपसंहरति—यदि पुनरिति । परमात्मनः परमं पदमेवास्ति अबाधितं विद्यत इत्यर्थः ॥ २२६ ॥ २२७ ॥

केचिच्छक्तिमदेव ब्रह्म वस्तुत इति वदन्ति । ब्रह्मणो हि शक्तिद्वयमेका चैन्यलक्षणा वास्तवी अन्या तु जडा अनृता अविद्याख्या तयोश्च परस्परसंसर्गाज्जगदुत्पत्तिः ब्रह्मस्वरूपचैतन्यलक्षणा शक्तिर्वस्तुतो निर्विकारापि विकुर्वत्या अविद्यया सम्बन्धाच्छक्तिमद्ब्रह्मस्वरूपाद्भेदेन जीवलक्षणकार्यभावं प्राप्नोतीति तन्मतमाह —

चिच्छक्तिः परमेश्वरस्य विमला चैतन्यमेवोच्यते
सत्यैवास्य जडा परा भगवतः शक्तिस्त्वविद्योच्यते ।
संसर्गाच्च मिथस्तयोर्भगवतः शक्त्योर्जगज्जायतेऽ-
सच्छक्त्या सविकारया भगवतश्चिच्छक्तिरुद्रिच्यते ।२२८।

इत्येवं कथयन्ति केचिदपरे श्रद्धालवस्तत्पुनः
कस्यां चिद्भुवि संमतं च विदुषां नेष्टं तु भूम्यन्तरे ।
कर्मोपास्तिविधानभूमिषु तथा सत्संमतं निर्गुणे
तत्त्वे तत्परवेदवाक्यविषये त्वालोचिते नेष्यते ॥ २२९ ॥

चिच्छक्तिरिति । असतीति च्छेदः । अस्य भगवत इति सम्बन्धः । तयोश्चैतन्याविद्याख्ययोः असच्छक्त्या अविद्याख्यया सविकारया

भूतभौतिकलक्षणविकारसहितया भगवत उद्रिच्यते भगवतः सकाशात् भिद्यते भेदेन जीवभावं प्राप्नोतीत्यर्थः । एतच्च परिणामदृष्टिदशायामङ्गीकृतं न विवर्त्तदृष्टिदशायां तत्र शक्तिशक्तिमद्भावायोगादतो वस्तुतः शक्तिमत्त्वमनुपपन्नमेवेत्यभिप्रेत्याह—तत्पुनरिति । तद् ब्रह्मणः शक्तिमत्त्वं कस्यांचिद्भुवि कस्याचिद्दशायां तदेव विभज्य दर्शयति—कर्मेत्यादिना । कर्मविधिस्थलेषु उपास्तिविधिस्थलेषु च तद् ब्रह्म तथा शक्तिमत्त्वेन संमतं तत्परवेदवाक्यस्य विषये निर्गुणे तत्त्वे विचारिते तु तत्तथा नेष्यत इत्यर्थः । परिणामबुद्धिदशायां स्वाभाविकप्रपञ्चपारमार्थिकत्वबुद्ध्यनुरोधेन कर्त्रादिभेदमादाय कर्मादिविधिप्रवृत्तेर्ब्रह्मण शक्तिमत्त्वमङ्गीक्रियते विवर्त्तदशायां तत्परनिर्गुणवाक्यविचारावसरे तु न शक्तिशक्तिमद्भावरूपो विकल्पः प्रत्येतुं शक्यत इत्यर्थः ॥२२८॥२२९॥

ननु चैतन्यलक्षणा शक्तिः ब्रह्मणः परिणामदृष्ट्याङ्गीकृता चेत् कथं तर्हि दृष्ट्यन्तरे तन्निरासः न हि चैतन्यं मिथ्या भवितुं युक्तमित्याशङ्क्य न चैतन्यस्य मिथ्यात्वं ब्रूमः किं तु तच्छक्तित्वस्यैव चैतन्यं हि ब्रह्मणः स्वरूपमेव सदविद्यातत्कार्यभूतभौतिकोपाधिवशात् ब्रह्मणो भिन्नमिव शक्तिरिव भवति जीव इति च व्यपदेशं लभते । तथा च नेतिनेतीत्यादितत्परवेदान्तवाक्यविचारेणाविद्यातत्कार्याद्युपाधौ निरस्ते औपाधिकशक्तित्वादिकं च निवृत्तं भवति । चैतन्यं च च केवलब्रह्मस्वरूपमात्रं पर्यवसितं भवति अतो न शक्तिशक्तिमद्भावोपि वास्तव इत्युपसंहरति—

**मूर्त्तामूर्त्ततदुत्थलिङ्गपुरुषव्यामिश्रभूता चिति-**
**र्वीप्सापूर्वकनेतिनेतिवचनप्रध्वस्तसर्वद्वया ।**
**संपूर्णे परमे सुखे परिहृताशेषे शिवे शाश्वते**
**सत्ये शुद्धमहिम्नि तायिनि परे भूम्न्यचरे तिष्ठति ॥२३०॥**

मूर्तेति । मूर्त्तानि पृथिव्यप्तेजांसि । अमूर्ते वाय्वम्बरे । तानि च तदुत्थलिङ्गपुरुषौ च मूर्त्तामूर्त्ततदुत्थलिङ्गपुरुषाः लिङ्गपुरुषशब्दौ सूक्ष्मस्थूलदेहपरौ तैर्व्यामिश्रिता आत्मभूता अवच्छिन्ना जडचेतनभावं प्राप्तेत्यर्थः। इदं च परिणामदशायां रूपम्। विवर्त्तदशायां तत्स्वरूपमाह- वीप्सेति । वीप्सारूपं यन्नेति नेति वचनं तेन प्रध्वस्तमवस्तुत्वेन ज्ञातं सर्वं द्वयं भूतभौतिकलक्षणं सर्वद्वैतं यस्याश्रितेः सा तथोक्ता तादृशी सतीत्यर्थः । द्वे वाव ब्रह्मणो रूपे तद्यथा माहारजनं वास इत्यादिना जडत्वेन प्रपञ्चं प्रकृत्य अथात आदेशो नेति नेतीति वीप्सया तदुभयं निषिध्य नेत्यन्यदिति केवलपरिपूर्णसच्चिदानन्दब्रह्मण एवावशेषणान्न शक्तिशक्तिमद्भावः परमार्थ इत्यर्थः ॥ २३० ॥

एवं कार्यकारणभावस्य दुर्निरूपित्वात् तद्घटितं जगत्कारणत्वमात्मनो न स्वाभाविकमित्युक्तम्। इदानीं दृग्दृश्यसम्बन्धानिरूपणात् तद्घटितं साक्षित्वमपि तथेत्यभिप्रेत्य वास्तवत्वे जगतः सिद्ध्यसंभवमाह—

**जगन्महिम्ना न जगत्प्रसिद्धि-**
**र्न चिन्महिम्नाऽपि जगत्प्रसिद्धिः ।**
**न च प्रमाणाज्जगतः प्रसिद्धि-**
**स्ततोऽस्य मायामयताप्रसिद्धिः ॥ २३१ ॥**

जगन्महिम्नेति । जगतः पारमार्थिकत्वे किं तस्य स्वत एव सिद्धिः किं वा चैतन्यबलेन उत प्रत्यक्षादिप्रमाणबलात् न त्रेधापि वक्ष्यमाणहेतोः अतो मायामयत्वेनाध्यासिकसम्बन्धादेव सिद्धिर्वक्तव्येत्यर्थः ॥ २३१ ॥

तत्राद्यप्रतिज्ञाहेतुमाह—

**जडत्वहेतोर्न जगन्महिम्ना**
**न चिन्महिम्ना तदसङ्गभावात् ।**
**न च प्रमाणात्तदकारकत्वा—**
**त्कृतस्य जाड्यादजडाजनेश्च ॥ २३२ ॥**

जडत्वहेतोरिति । न जगन्महिम्ना जगत्प्रसिद्धिरिति शेषः । जगन्न स्वतः प्रकाशते जडत्वादित्यर्थः । द्वितीयायां हेतुमाह— न चिन्महिम्नेति । तदसङ्गभावात् तस्याश्चितः असङ्गत्वात् तया चिता असम्बद्धत्वादिति वा । चैतन्यबलादपि जगन्न प्रकाशते । तस्यासङ्गत्वेन प्रकाश्यसम्बन्धाभावात् प्रकाशसम्बन्धस्यैव प्रकाशमानताशब्दार्थत्वादित्यर्थः । तृतीयायां हेतुमाह—न च प्रमाणादिति । तदकारकत्वात्तस्य प्रमाणस्याकारकत्वात् प्रमाणेन हि साक्षान्न जगत्सिद्धिः किन्तु संविद्द्वारेति वक्तव्यं तत्र किं प्रमाणं जगद्विषयां संविदमुत्पादयति उत न । नान्त्यः-जगत्सिद्ध्यनुपपत्तेः प्रमाणस्यापि जडत्वात् । नाद्यः । प्रमाणस्याकारकत्वेन संविदुत्पादकत्वायोगादित्यर्थः । किंचोत्पद्यमानापि संवित् जडा उताजडा । नाद्यः । जगत्प्रकाशानुपपत्तेरित्यभिप्रेत्याह— कृतस्येति । उत्पन्नस्य कार्यस्य जडत्वनियमादुत्पन्नापि संविज्जडैव स्यात् तया जगत्सिद्धिर्न स्यादित्यर्थः । न द्वितीय इत्याह—अजडेति । यदि जगत्प्रकाशार्थं संविदोऽजडत्वमङ्गीक्रियते तर्हि तादृश्याः संविदश्चैतन्यात्मरूपत्वादुत्पत्तिर्न स्यात् तथा च प्रमाणेन जगत्सिद्धिरनुपपन्नेत्यर्थः ॥ २३२ ॥

अस्तु तर्हि चैतन्यबलादेव जगत्प्रसिद्धिः, न च चैतन्यजगतोः सम्बन्धाभावः—विषयविषयिभावस्य सत्त्वादिति चेन्न—विषयविषयिभावो हि मूलसम्बन्धपूर्वको वक्तव्यः । अन्यथातिप्रसङ्गात् ।

मूलसम्बन्धश्च तयोस्तादात्म्यं संयोगः समवायो वा न त्रेधापि संभवतीत्याह—

न संकरो नापि च संयुतिस्तयो-
र्न चास्ति तद्वत्समवायसंभवः ।
ततो न चिच्चेत्यसमन्वयं प्रति
प्रतीयते का चन मूलसंगतिः ॥ २३३ ॥

न संकर इति । तयोः चैतन्यजगतोः संकरस्तादात्म्यं न संभवति । चैतन्यस्याजडत्वेन जगतो वैलक्षण्यात् । नापि संयुतिः संयोगः संभवति । निरवयवस्य चैतन्यस्य तदयोगाद् गुणादिना तदयोगाच्च । नापि तयोः समवायसंभवः । अयुतसिद्ध्यभावादित्यर्थः । ततः इति फलितप्रदर्शनम् । यतस्त्रिविधसम्बन्धाभावः । ततश्चिच्चेत्यसमन्वयं प्रति चित्तश्चैतन्यस्य चेत्यस्य जगतश्च समन्वयं विषयविषयिभावलक्षणं सम्बन्धं प्रति का चन मूलसंगतिर्मूलसम्बन्धः न प्रतीयत इत्यर्थः । ननु जन्यजनकभावो वा विशेषणविशेष्यभावो वा चिच्चेत्ययोर्विषयविषयिभावं प्रति मूलसम्बन्ध इति चेत्— न तावज्जन्यजनकभावः संभवति । चितो नित्यत्वात् । अतीतादौ ज्ञानजनकत्वाभावेन ज्ञानविषयत्वाभावप्रसङ्गाच्च । चक्षुरादेरपि घटादिज्ञानविषयत्वप्रसङ्गाच्च । तस्यापि तज्जनकत्वात् । ननु प्रतीयमानत्वे सति जनकत्व विवक्षितमिति चेन्न । प्रतीति विषयत्वस्यैव प्रतीयमानताशब्दार्थत्वात् । तस्य चाद्याप्यनिरूपणात् । नापि विशेषणविशेष्यभावो विषयविषयिभाव प्रति मूलसम्बन्धः चाक्षुषज्ञानमिति चक्षुषोऽपि घटादिज्ञानविशेषणत्वेन तद्विषयत्वप्रसङ्गात् । जन्यजनकभावविशेषणविशेष्यभावयोरपि मुख्यसम्बन्ध-

त्वाभावेन मूलसम्बन्धापेक्षणाच्च। अन्यथा वनस्थदण्डादेरपि घटादिकारणत्वप्रसङ्गः देवदत्तविशेषणत्वप्रसङ्गश्चेत्येतत्सर्वमभिप्रेत्योक्तं न काचनेति ॥ २३३ ॥

ननु चैतन्यचेत्ययोर्विशिष्टप्रत्ययजननयोग्यतालक्षणं स्वरूपमेव मूलसम्बन्धोऽस्त्विति चेन्नेत्याह —

**न योग्यतामात्रनिबन्धनो भवे-**

**ज्जडात्मनोरत्र विवक्षितोऽन्वयः।**

**तदा हि तस्या अनपायिरूपतः**

**सदाऽऽत्मनः स्यादनपायिसंसृतिः ॥ २३४ ॥**

न योग्येति। घटः स्फुरति स्फुरन् घट इति विशिष्टप्रत्ययजननयोग्यतामात्रं निबन्धनं कारणं यस्य स तथा जडात्मनोः जडचेतनयोः विवक्षितोऽन्वयः विषयविषयिभावलक्षणसम्बन्धो न संभवति। तत्र हेतुः—तदा हीति। हि शब्दो हेतौ तस्या योग्यताया अनपायिरूपतः आत्मस्वरूपतया अविनाशिरूपत्वात् सदेति च्छेदः। सदात्मन इति वा पदे सद्रूपात्मन इत्यर्थः। योग्यताया एव चिच्चेत्ययोर्विषयविषयिभावसम्बन्धं प्रति मूलत्वे योग्यताया आत्मस्वरूपत्वेनानपायात् मुक्तावप्यात्मनो द्रष्टृत्वादिसंसारप्रसङ्गः। न च स युज्यते तन्निषेधक"यत्र ... त्वस्य"त्यादिश्रुतिविरोधात् मुक्तेरपुरुषार्थत्वापाताच्चेत्यर्थः ॥ २३४ ॥

किं च विशिष्टप्रत्ययजननयोग्यत्वस्य विषयविषयिभावं प्रति मूलसम्बन्धत्वे घटपटज्ञानयोरपि विषयविषयिभावप्रसङ्गः स्वरूपस्य तत्रापि भावादतीतादिपदार्थानां विशिष्टज्ञानाजनकतया विषयत्वप्रसङ्गश्च, ननु सम्बन्धान्तरमन्तरा विशिष्टप्रत्ययविषयत्वमेव चिच्चे-

त्ययोर्विषयविषयिभावं प्रति मूलसम्बन्ध इति चेन्न—विषयत्वस्यैव सम्बन्धात्प्रागसिद्धेः । सम्बन्धसम्बन्धिनोर्भेदनियमेन सम्बन्धिस्वरूपस्य सम्बन्धत्वानुपपत्तेश्च । तस्मात्सम्बन्धान्तरानिरूपणात्तदभावे च जगत्सिद्ध्यनुपपत्तेर्जगत्प्रतिभानार्थं चैतन्याश्रिताविद्याविवर्त्तत्वेन जगतश्चैतन्यस्य चाध्यासिक एव सम्बन्धो वक्तव्य इत्याह—

**ततो वियन्मुख्यमदो जगज्जडं**
**चिदात्मनोऽस्यैव विवर्त्त इष्यताम् ।**
**अनाद्यविद्यापटसंवृतात्मन-**
**स्तदोपलभ्यत्वममुष्य कल्प्यते ॥ २३५ ॥**

तत इति । जगतश्चिदात्मनश्च सम्बन्धानिरूपणं तच्छब्दार्थः । वियन्मुख्यं वियदादि केवलस्य चिदात्मनः । जगद्विवर्त्तसंभवशङ्कां व्यावर्त्तयति—अनादीति । अनाद्यविद्यैव पटवदाच्छादकत्वात् तेनावृत आत्मा पूर्णानन्दस्वरूपं यस्य चिदात्मनः स तथोक्तः तदा जगतो ज्ञानाश्रयविषयचिदात्मविवर्त्तत्वेऽमुष्य जगत उपलभ्यत्वमुपपद्यते। आध्यासिकसंबन्धसंभवादित्यर्थः । तथा च जगत्साक्षित्वमप्यात्मनो न वास्तवमिति भावः ॥ २३५ ॥

ननु चिदात्मनि प्रपञ्चाध्यासेन तयोराध्यासिकसम्बन्धेपि घटतत्प्रकाशयोः सम्बन्धो न संभवति घटस्य तत्रानध्यस्तत्वात् । न च घटप्रकाशोप्यात्मैवेति वक्तुं शक्यं तस्य व्यावृतत्वपरिच्छिन्नत्वोत्पत्तिविनाशादिधर्मकत्वादित्याशङ्क्यासिद्धो हेतुरित्याह—

**संवित्तिभेदनदभावतदीयजन्म-**
**नाशादयो न खलु मानबलेन लभ्याः ।**

**न ह्यस्ति मानमिह किं चन तद्यदस्या**
**धर्मस्वरूपविषयीकरणे समर्थम् ॥ २३६ ॥**

संवित्तीति । संवित्तेः संविदो भेदः अन्योऽन्याभावः स च तस्या अभावः त्रैकालिकः स च तदीयौ जन्मनाशौ च संवित्तिभेदतदभावतदीयजन्मनाशाः ते आदिर्येषामनित्यत्वादीनां ते तथा संविदो जन्मविनाशादिमत्त्वं वदन् प्रष्टव्यः किं तत्प्रमाणान्तरेण गृह्यते, उत स्वेनैवेति । नाद्यः । स्वप्रकाशसंविदः प्रमाणान्तराविषयत्वेन धर्मिग्रहणाधीनग्रहणस्योत्पत्त्यादिधर्मस्य प्रमाणेन नाशादिग्राहकत्वानुपपत्तेः । धर्म्यादिसापेक्षभेदादिग्राहकत्वानुपपत्तेश्च । तस्मात्संविदुत्पत्त्याद्यभावादात्मैव संविदित्यर्थः । नन्वेवमपि संविदात्मत्वमनुपपन्नं तस्याश्चिदात्मधर्मत्वादित्याशङ्क्य तदप्यसिद्धमित्याह—

न ह्यस्तीति । यन्मानमस्याः संविदः धर्मस्वरूपविषयीकरणे धर्मत्वग्रहणे समर्थं तादृशं किं चन मानं नास्ति तस्याः स्वप्रकाशत्वेनैव प्रमाणविषयत्वासंभवादित्यर्थः ॥ २३६ ॥

नन्वेवं सति संविदुत्पत्त्यादिप्रतीतेः का गतिरिति चेन्नास्त्येव स्वतः किन्त्वन्तःकरणवृत्त्युपाधिसंबन्धादेवोत्पत्त्यादिप्रत्यय इत्याह—

**तस्मान्न मानफलता निरुपाधिकस्य**
**संवेदनस्य घटतेऽविषयत्वहेतोः ।**
**एवं च मानफलसिद्धिसमन्वयेन**
**सिद्धिर्जडस्य जगतो न कदाचिदस्ति ॥ २३७ ॥**

तस्मादिति । संविदुत्पत्त्यादिग्राहकाभावस्तच्छब्दार्थः । मानफलता मानजन्यता निरुपाधिः निर्गत उपाधिर्यस्याः मानफलतायाः सा

तथोक्ता उपाधिसंबन्धं विना मानफलत्वं नास्तीत्यर्थः । तत्र हेतुः अविषयत्वहेतोरिति । न विद्यते विषय आश्रयत्वेन यस्य तदविषयं तत्त्वाद्धेतोः विषयसमवेतं प्रमाणजन्यं हि फलं तथैवानुभवादन- वच्छिन्नं चैतन्यं न विषयसमवेतं न वा प्रमाणजन्यमतो वृत्त्युपाधिनैव विषयाश्रिते मानफलं न तु स्वत इत्यर्थः । एवं च मानफलेन संवेदनेन जगत्सिद्धिः संभवतीति मतमपि निरस्तमिति फलितमाह— एवञ्चेति । संवेदनस्योत्पत्तिविकलतया प्रमाणजन्यत्वाभावे सती- त्यर्थः । मानफलसिद्धिसमन्वयेन प्रमाणफलप्राकट्याख्यसिद्धि- सम्बन्धेन जडस्य जगतः कदाचिदपि सिद्धिर्न संभवति । उत्पन्नस्य जडत्वनियमेन प्रमाणफलसिद्धेरपि जडत्वादित्यर्थः । तथा च जडस्य जगतः कूटस्थसंविदा आध्यासिकसम्बन्धादेव सिद्धिरिति वक्तव्यम् ॥ २३७ ॥

नन्वेवमपि जगत्सिद्धिर्न संभवति जगदध्यासाधिष्ठानेन कूटस्थपरमात्मसंविदा प्रकाशमानेनैव जगत्सिद्धिर्वक्तव्या अप्रका- शमानस्य साधकत्वायोगात्, न च तस्य प्रकाशः संभवति अध्यासे अध्यस्तस्यैव प्रकाशनियमादित्याशङ्क्य परस्पराध्यासाभ्युपगमा- न्मैवमित्याह—

इतरेतराध्यसनमस्त्वनयो-
रुभयोरतो दृगदृशोरनिशम् ।
अपरस्परव्यतिकरानुभवा-
दिह शुक्तिकारजतविभ्रमवत् ॥ २३८ ॥

इतरेतरेति । अत इत्यादौ योजनीयं प्रकारान्तरेण जगत्सिद्ध्य- संभवोऽतः शब्दार्थः । परस्पराध्यासेऽनुभवं प्रमाणमाह—अपरस्परेति ।

परस्परव्यतिकरानुभावात् घटः स्फुरति पटः स्फुरतीति दृग्दृश्ययोस्तादात्म्यानुभवादित्यर्थः। तादात्म्यानुभवविषययोरितरेतराध्यासे दृष्टान्तमाह—शुक्तिकेति ॥ २३८ ॥

इतरेतराध्यासे शून्यवादप्राप्तिमाशङ्क्य पूर्वोक्तं स्मारयति—

**संसिद्धा सविलासमोहविषये वस्तुन्यधिष्ठानगी-**
**र्नाऽऽधारेऽध्यसनस्य वस्तुनि ततोऽस्थाने महान्संभ्रमः।**
**केषां चिन्महतामनूनतमसां पाण्डित्यगर्वादय-**
**मन्योन्याध्यसने निरास्पदमिदं शून्यं जगत्स्यादिति।२३९।**

संसिद्धेति। उक्तार्थः श्लोकः ॥ २३९ ॥

ननु शून्यपरिशेषाभावेपि शून्यवादसाम्यमस्त्येव सर्वस्यापि जगतोऽध्यस्तत्वपरिज्ञाने यागादिप्रवृत्त्युच्छेदापत्तेरित्याशङ्क्य न हि सर्वान्प्रति जगतोऽध्यस्तत्वं ब्रूमः किन्तु शुद्धिविवेकादिसंपन्नं प्रति तथा च सर्वेषां विषयज्ञाने तदध्यस्तत्वपरिज्ञानानपेक्षणात् मन्दमतीनां स्वाभाविकप्रपञ्चसत्यतादृष्ट्यनुरोधेन पारलौकिकप्रवृत्त्युपपत्तेः व्युत्पन्नमतीनां च पारलौकिकप्रवृत्त्यभावादैहिकदेहयात्रादिनिर्वाहकप्रवृत्तेश्चाध्यस्तत्वपरिज्ञानेप्युपपत्तेर्न शून्यवादसमतापत्तिरित्यभिप्रेत्याह—

**कृपणमध्यमपक्वधियां नृणां**
**मतिविलासविधात्रितयं क्रमात्।**
**परिणतिर्बहुजीवतमाश्रिता**
**परमपुंसि तमः परिकल्पना ॥ २४० ॥**

कृपणेति । मतिविलासविधात्रितयं बुद्धिकल्पितप्रकारत्रय-मित्यर्थः । विधात्रयमेवाह—परिणतिरिति । इदं च विवर्त्तनिष्प्रपञ्च-दृष्ट्योरुपलक्षणं कृपणधियः परिणतिः मध्यमधियो विवर्त्तदृष्टिः पक्वधियः निष्प्रपञ्चदृष्टिरिति विभागः। विवर्त्तदृष्टेरपि शुद्धितारतम्येन द्वैविध्यमाह—जीवेति । बहवो जीवाः तेषां चाज्ञानाश्रयत्वमिति काचिद् दृष्टिः परमपुंसि तमः परिकल्पना परमात्मन्येव तमः परिकल्पना न तु जीवेषु स एक एव जीव इति श्रुतिवचसां काचिद्-दृष्टिरित्यर्थः ॥ २४० ॥

एवं प्रतिपादनक्रमः किंमूल इत्याशङ्क्य श्रुत्यादिसामञ्जस्या-न्यथानुपपत्तिमूल इत्याह —

श्रुतिवचांसि मुनिस्मरणानि च
द्वयविशारदगीरपि सर्वशः ।
त्रयमपेक्ष्य विधात्रितयं विना
न हि घटामुपयान्ति कदाचन ॥ २४१ ॥

श्रुतिवचांसीति । उक्तार्थः श्लोकः ॥ २४१ ॥

एताश्च दृष्टयः परस्परहेतुहेतुमद्भावादेकमेव पुरुषं कालभेदेना-श्रयन्त इति पूर्वोक्तं स्मारयति —

पुरुषमेकमपेक्ष्य च भूमिका-
त्रितयमस्ति पुरोदितमेव तत् ।
तदनुसारवशादखिलश्रुति-
स्मृतिवचांसि वयं घटयामहे ॥ २४२ ॥

पुरुषमेकामिति । अत एव श्रुत्यादिसामञ्जस्यमपीत्याह—तदनुसारवशादिति । एकपुरुषवर्त्तिदृष्टिक्रमानुरोधादखिलश्रुतिस्मृतिवचांसि सृष्टिमायावादश्रुतयः श्रुतिशब्दार्थः ॥ २४२ ॥

सूत्रप्रवृत्त्यनुरोधेनाप्ययं क्रमो विवक्षित इत्याह—

**परिणतिं च विवर्तदशाद्वयं**
**स्थितमनुक्रमतः श्रुतिशासने ।**
**अनुशशास मुनिप्रवरः सुधीः**
**पुरुषबुद्धिमपेक्ष्य यथाक्रमम् ॥ २४३ ॥**

परणतिं चेति । विवर्त्तदशाद्वयं विवर्त्तदशाया एकानेकजीवविषयबुद्धिलक्षणद्वयमनुक्रमतः स्थितं विवर्त्तदशायां द्वयमिति सम्बन्धः । श्रुतिशासने श्रुतिमूलशास्त्रे सूत्रसन्दर्भ इत्यर्थः । अनुशशास सूत्रितवानित्यर्थः । तस्मात्तत्पदार्थस्यैश्वर्याद्यावेदकमानाभावात् फलश्रुतेश्च वर्त्तमानापदेशिन्या अनुपलब्धिबाधिततयार्थवादत्वेन निष्प्रपञ्चश्रुत्यन्तरविरोधेन च तत्परत्वायोगात् । ऐश्वर्यादिसूचकसूत्रस्य चाभ्युपगमवादत्वात् सापेक्षत्वेनैश्वर्यस्य वास्तवत्वानुपपत्तेः । कार्यकारणभावस्य च दुर्निरूपत्वेन तद्घटितजगत्कारणत्वस्याप्यवास्तवत्वात् दृग्दृश्यसम्बन्धानिरूपणेन साक्षित्वस्याप्यवास्तवत्वात् निर्विशेषसत्यज्ञानानदात्मकं ब्रह्मैव तत्पदलक्ष्यमिति सिद्धम् ॥ २४३ ॥

ननु सर्वस्यापि जगतो ब्रह्मकार्यत्वे तदन्तर्भूतवेदोपि ब्रह्मपरिणतिस्तद्विवर्त्तो वा वक्तव्यः न च तदुपपद्यते अपौरुषेयत्वेन स्वतः प्रामाण्यं यत्प्रथमपादे स्थापितं तद्विरोधप्रसङ्गादिति चोदयति—

यदि परिणतिरेषा चिद्विवर्त्तोऽथवा स्या-
द्भवति ननु तदानीं वेदशास्त्रे विरोधः ।
न हि खलु कृतकत्वे पौरुषेयत्वहेतो-
र्भवितुमलमियं नो मानता स्वप्रयुक्ता ॥ २४४ ॥

यदीति । नन्वित्यादौ योजनीयम् । एषां वियदादीनां सर्वेषामपि प्रपञ्चानामित्यर्थः । वेदशास्त्रे वेद एव शास्त्रं हितशासनात् तस्मिन्विषये विरोधः । स्वतः प्रामाण्यव्युत्पादकप्रथमतन्त्रप्रथमलक्षणप्रथमपाद-विरोधः । तत्र हेतुः नहीति । यतः कृतकत्वे वेदशास्त्रस्येति शेषः । यतो वेदशास्त्रस्य कृतकत्वे स्वप्रयुक्ता मानता स्वतः प्रमाण्यं भवितुन्नालं तत इत्यर्थः । तत्रापि हेतुः—पौरुषेयत्वहेतोरिति ॥ २४४ ॥

अस्तु नाम तद्विरोधः का नो हानिः न हि शास्त्रान्तरविरोधेन किञ्चिद्धीयत इति चेद्धीयत एव स्वतः प्रमाण्यानभ्युगमे परतः प्रामाण्यस्याप्रामाण्यस्य वाभ्युपेयत्वेन विवक्षितार्थासिद्धेरित्याह—

कणभुगभिमतिर्वा कल्पनीया तदानीं
सुरगुरुमतमेवोपास्यमाहोस्विदुच्चैः ।
इति निपतति चोद्यं ब्रह्मणो विश्वसृष्टि-
र्यदि भवति न चेद्वा नित्यमायाति विश्वम् ॥२४५॥

कणभुगिति । ब्रह्मणः सकाशात् विश्वसृष्टिः सर्वस्यापि जगत उत्पत्तिर्यदि भवति तदानीं पौरुषेयत्वेन स्वतः प्रामाण्यासंभवात् कणभुगभिमतिः आप्तोक्तत्वेन परतः प्रामाण्यं वा कल्पनीयं स्यात् । आहोस्विदुच्चैः स्पष्टं सुरगुरुमतं बृहस्पतिसम्मतं चार्वाकमतं

पौरुषेयत्वेनाङ्गुल्यादिवाक्यवद्वेदाप्रामाण्यं वोपास्यं तथाचाखण्डैकरसब्रह्मसिद्धिर्न स्यादिति चोद्यं निपतति प्राप्नोतीत्यर्थः। यद्येतद्दोषपरिजिहीर्षया वेदस्य नित्यत्वमाश्रीयते तदा अद्वैतासिद्धिरित्याह—न चेदिति। ब्रह्मणः सकाशात् सर्वस्यापि जगतः सृष्टिर्नास्ति चेद् विश्वं नित्यमायाति विश्वैकदेशो वेदो नित्य आपतेत्। तथाचाद्वैतासिद्धिरित्यर्थः। यद्यप्ययं विचारः प्रथमाध्याये कर्त्तुं युक्तः तथापि वेदस्यापि ब्रह्मात्मैकज्ञानसाधनत्वेन साधनविचारावसरे क्रियत इति न विरोध इति द्रष्टव्यम् ॥ २४५ ॥

किमेतन्मीमांसकस्य चोद्यमुत नैयायिकस्य आद्ये "यश्चोभयोः समो दोषः परिहारोपि वा समः। नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे" इति न्यायमभिप्रेत्य चोद्यसाम्यमाह—

**ननु सदृशमिदं वश्चोद्यमस्मासु कस्मा-**
**द्विनिहितमुभयेषां पूर्वमीमांसकानाम्।**
**अवगतिकृतमेतद्वाचकत्वं पदाना-**
**मवगतिरियमिष्टा नश्वरी तत्क्षणेन ॥ २४६ ॥**

ननु सदृशमिति। इदं चोद्यं वेदस्य कार्यत्वे स्वप्रयुक्तं प्रामाण्यं न स्यादित्येतच्चोद्यं वो युस्माकं पूर्वमीमांसकानामुभयेषां भाट्टानां प्राभाकराणां च सदृशमतः कस्माद्धेतोरस्मास्वेव विनिहितमित्यर्थः। साम्यमेवाह—अवगतीति। अवगम्यमानानां हि वर्णानां वाचकत्वमन्यथातिप्रसङ्गात् अवगतिश्च क्षणविनाशिनीति तद्विशिष्टवाचकाकारस्यापि क्षणिकत्वमित्यर्थः॥ २४६ ॥

इतोपि वेदस्य क्षणविनाशित्वमित्याह—

अवगतिगतमेवापेक्ष्य पूर्वापरत्व-
प्रतिनियममियं वो वेदता वेदराशेः ।
क्षणिकमभवदित्थं वेदशास्त्रं समस्तं
कथमिव तदिदानीं वेदशास्त्रं प्रमाणम् ॥ २४७ ॥

अवगतीति । पूर्वापरत्वप्रतिनियमं नियतपूर्वापरत्वं वेदता न वर्णमात्रस्यातिप्रसङ्गात् । अर्थप्रत्यायकत्वमपि तथैव नियतक्रमविशिष्टानां हि वर्णानां वेदत्वमित्यर्थः । अन्यथा राजा जारेति पदद्वयं श्रुतवतोऽविशेषेणार्थप्रतीतिप्रसङ्गात् । क्रमश्च न वर्णानां स्वतः संभवति नित्यविभुत्वेष्टेः तथा चोपलब्धिक्रमावच्छिन्नानामेव वेदत्वं वाचकत्वं चेति न वाचकस्य वाक्यलक्षणवेदस्य नित्यत्वमित्यर्थः । तदेवं भवत्पक्षे वेदस्य क्षणिकत्वमेव नास्मन्मत इव कार्यत्वमात्रमतः कथं स्वतः प्रामाण्यं स्यादिति चोद्यसाम्यमुपसंहरति—क्षणिकमिति ॥२४७॥

परिहारोपि सम इति दर्शयितुं तदीयप्रामाण्यसमर्थनप्रकारमाशङ्कते—

पुरुषमतिनिवेशो नास्ति वेदप्रमेये
विषय इति यदीष्टा मानता स्वप्रयुक्ता ।
सदृशमिदमिदानीं कारणं मानतायां
परमपुरुषसृष्टे वेदशास्त्रेऽप्यभीष्टम् ॥ २४८ ॥

पुरुषमतिनिवेश इति । अस्मदादिपुरुषबुद्धिप्रवेशः विषये अर्थे अर्थमुपलभ्य शब्दरचन एव हि मानान्तरसापेक्षत्वलक्षणाप्रामाण्यप्राप्तिः न तु कार्यत्वमात्रेण वेदार्थे च न पुरुषबुद्धिप्रवेश इति कृत्वा यदि स्वप्रयुक्तमानतेष्टा तर्हि वेदानामविद्याशबलब्रह्मविवर्त्तत्वेप्ययं परिहारः

समान इत्याह—सदृशमिति। इदमुपलभ्याविरचितत्वलक्षणं कारणं प्रयोजकमित्यर्थः। वेदशास्त्रे परमपुरुषसृष्टेऽभीष्टेऽपीत्यन्वयः। परमपुरुष इति स्वपक्षे विशेषो ध्वनितः॥ २४८॥

नन्वीक्षणपूर्वकत्वश्रवणात् सृष्टेः कथं वेदस्य कार्यत्वे बुद्धिपूर्वकत्वाभाव इत्याशङ्क्य वियदादिसृष्टेस्तत्पूर्वकत्वेपि न वेदसृष्टेस्तथात्वं किन्त्वध्यापकादिवद् ब्रह्मणः सकाशादीक्षणं विनैव वेदो जायते अन्यथा निश्वसितश्रुतिविरोधादित्यभिप्रेत्याह—

**न हि खलु मतिपूर्वा ब्रह्मणः सृष्टिरिष्टा**
**निगदितुरिव सृष्टिर्वेदविद्यासु नित्यम्।**
**भवति नु पुनरेषा तस्य निःश्वासकल्पा**
**श्रुतिवचनमपीदं वस्तु वक्ति स्फुटं नः॥ २४९॥**

न हीति। मतिपूर्वा बुद्धिपूर्वा न खलु ब्रह्मणः सकाशाद्वेदविद्यासु सृष्टिः वेदविषयसृष्टिः मतिपूर्वेष्टा किन्त्वेषा सृष्टिः निगदितुरध्यापकादिवन्नित्यनिश्वासकल्पैव भवति। श्रुतिवचनमस्य महतो भूतस्य निश्वसितमेतदिति श्रुतिवाक्यमपीदं वस्तुनिश्वासकल्पैव वेदसृष्टिः न बुद्धिपूर्वेत्येतत्स्फुटं वक्ति। तथा च तद्विरोधः स्यात् वेदस्य बुद्धिपूर्वकमविरचितत्वात्पुरुषजन्यत्वेपि प्रामाण्यं स्यादिति भावः॥ २४९॥

एवं पुरुषजन्यत्वमात्रेण सापेक्षत्वलक्षणाप्रामाण्यं प्रतिबन्द्या परिहृतमिदानीं व्यभिचारादपि नैवं वक्तुं शक्यमित्याह—

**अपि च पुरुषकर्मोद्भूतिकानीन्द्रियाणि**
**स्फुटमवगमयन्ति स्वं स्वमन्यानपेक्षम्।**

विषयमिति हि दृष्टं तद्वदिष्टं च तस्मा-
दिह किमपि न चोद्यं वाक्यमेतद्भवाद्भिः ॥ २५० ॥

अपि चेति। पुरुषस्य जीवस्य कर्मणः सकाशादुद्भूतिर्येषां तानि तथोक्तानि स्वं स्वं विषयमन्यानपेक्षं स्फुटमवगमयन्ति दृष्टमिति सम्बन्धः। न केवलं दृष्टमपि तु संमतं चेत्याह—इष्टमिति। इन्द्रियाणि हि स्वकर्मारब्धान्येव स्वस्य भोगसाधनानीति कर्मद्वारा पुरुषजन्यान्येव भवन्ति तथाप्यन्यनिरपेक्षप्रमाणान्येव स्वस्वप्रमेयमवगमयन्तीति संमतं मीमांसकानां प्रत्यक्षादिप्रामाण्यस्यापि स्वत एवाङ्गीकारात्। अतस्तद्वदिह वेदेऽप्यस्त्विति कथमस्मान्प्रति युष्माभिर्वेदस्य पुरुषजन्यत्वे सापेक्षत्वलक्षणाप्रामाण्यं चोद्यत इत्यर्थः ॥२५०॥

ननु तदैक्षत बहु स्यामिति सामान्येनैव सृष्टेरीक्षणपूर्वकत्वश्रवणात् वेदसृष्टेरपीक्षणपूर्वकत्वं वक्तव्यम् तस्या अनायासमात्रपरत्वादतः कथं भवन्मते वेदस्यानपेक्षप्रामाण्यं स्यादित्याशङ्क्ते—

श्रुतिवचनमनेकं वक्ति तस्येक्षितृत्वं
मतिमदिति ततस्तन्नेष्यते कस्य हेतोः।
इति यदि मनुषे तन्मैव मंस्थाः कुतश्चे-
त्सकलकरणहीनं ब्रह्म नः शास्ति शास्त्रम् ॥२५१॥

श्रुतिवचनमिति। तदैक्षत सोऽकामयतेत्यादिकं तस्य ब्रह्मणः मतिमद्बुद्धिमदेव कारणमिति शेषः। तद्ब्रह्मानेकं श्रुतिवचनं तस्येक्षितृत्वं वक्ति यतः ततस्तन्मतिमदेव कारणमिति कस्य हेतोर्नेष्यत इति यदि मनुष इति सम्बन्धः। अथवा—तद्वेदवचनं मतिमद्बुद्धिपूर्वकमित्येवमपि वेदस्य सृज्यमानत्वेन स्वविषयबुद्धिपूर्वकत्वेपि स्वप्रमेयबुद्धिपूर्वकत्वाभावात्तस्यैव च निरपेक्षताविरोधित्वान्न

किंचिदनिष्टमित्यभिप्रेत्याह—तन्मैवं मंस्था इति । न च बुद्धिपूर्वकत्वमात्रस्यैव सापेक्षताप्रयोजकत्वमितिशङ्क्यं वाक्यार्थज्ञानप्रामाण्याप्रामाण्याभ्यां तज्जन्यवाक्येपि तद्दर्शनेन तस्यैव तत्प्रयोजकत्वात् किं प्रमाणजन्यान्तःकरणवृत्तिलक्षणबुद्धिमत्त्वेन ब्रह्मणः वेदस्य तत्त्वं सिसाधयिषितं किं वाऽविद्यावृत्तिलक्षणतद्वत्त्वेन । नाद्यः । अचक्षुरित्यादिश्रुत्या ब्रह्मणः करणादिराहित्यप्रतिपत्तेरित्याकाङ्क्षापूर्वकमाह—तत्कुतश्चेदित्यादिना । ब्रह्ममतिमन्न भवतीत्येतच्छब्दार्थः । यतोऽचक्षुरित्यादिशास्त्रं ब्रह्म सकलकरणहीनं बोधयति तत इत्यर्थः ॥ २५१ ॥

द्वितीये न सापेक्षत्वापत्तिः अविद्यावृत्तेर्बुद्धित्वाभावादित्यप्रेत्याह—

**चितिगतजडशक्तेराद्य इष्टो विवर्त्त-**
**श्चितिनिकटनिवेशाल्लब्धदीप्तिर्जडोऽपि ।**
**श्रुतिशिरसि निषण्णैरीक्षणं कथ्यते त-**
**न्न तु परमपदस्यापीक्षणं बुद्धिवृत्तिः ॥ २५२ ॥**

चितीति । चैतन्याश्रितजडाविद्याशक्तेर्विवर्त्तः तदैक्षतेत्यादिश्रुतिसिद्धाविद्यावृत्तिलक्षणः । ननु बुद्धित्वाभावे तस्या ईक्षणत्वव्यपदेशो वा कुत इत्याशङ्क्य तद्गताभासगुणयोगादित्याह—चितीति । चितिनिकटनिवेशाच्चैतन्यतादात्म्याध्यासादित्यर्थः । लब्धदीप्तिरिति बहुव्रीहिः । प्रकाशमान इत्यर्थः । श्रुतिशिरसि निषण्णैः श्रुतिशिरोनिष्ठैस्तदैक्षतेत्यादिवाक्यैः सृष्टिकाले हि परमेश्वराध्यस्तानाद्यनिर्वचनीयाविद्यायाः सृज्यमानप्राणिकर्मसंक्षुब्धायाः सृज्यमानपदार्थाकारेण काचिद्वृत्तिरुदेति । सा च स्वतो जडाप्यधिष्ठानचैतन्याभाससम्बन्धात्प्रकाशमाना भवतीति तदैक्षतेत्यादिश्रुत्या तस्या ईक्षणत्व-

व्यपदेशः न तु मुख्यमीक्षणत्वं बुद्धिवृत्तेरेवेक्षणत्वात्तदभावस्य चोक्तत्वात्तस्मान्न बुद्धिपूर्वकत्वं वेदस्य । नन्वीश्वरस्य ज्ञानस्वरूपसत्त्वात् तस्य च सर्वविषयत्वेन वेदार्थस्यापि विषयीकरणात् तज्जन्यो वेदः पौरुषेयः स्यादिति चेन्न—ज्ञानस्वरूपस्यापि तस्य नामरूपप्रपञ्चाकारेण विवर्त्तमानाविद्याधिष्ठानतया स्वरूपेण कारणत्वेपि वाक्यार्थज्ञानत्वाकारेणाकारणत्वात् बुद्धित्वाभावाच्च तत्पूर्वकत्वस्यैव लोके पौरुषेयत्वप्रयोजकत्वात् सर्वविषयस्यापि तस्य स्वनिष्ठसर्वविषयतत्त्वनिश्चयत्वेन विषयादेरप्रमाणत्वनिश्चयस्य प्रमाणशब्दकारणत्वानुपपत्तेश्च । किंच स्वातन्त्र्येणेश्वरस्य तत्कर्तृत्वाभावादपि न तस्य पौरुषेयत्वम् । ईश्वरो हि सर्गान्तरीयवेदं कारणात्मना स्थितं तथैव सृजति नत्वन्यथा धाता यथा पूर्वमकल्पयदिति श्रुतेः स्वराद्यन्यथात्वेनार्थान्यथाभावप्रसङ्गेनेदानींतनवेदस्यापुरुषार्थत्वप्रसङ्गाच्च । एकविधस्यैव कर्मादेः पुरुषार्थत्वेनानेकविधस्य तस्य तत्कल्पनायोगाच्च । नचेश्वरस्य स्वेच्छया वेदस्रष्टृत्वाभावे स्वातन्त्र्यभङ्गः स्वतन्त्रस्यापि प्रयोजनानुरोधेन नियतक्रमस्रष्टृत्वोपपत्तेरिति । तस्मान्न जन्यत्वमात्रेण सापेक्षत्वलक्षणं प्रामाण्यं मीमांसकेन वक्तुं युक्तमिति भावः ॥ २५२ ॥

ननु वेदस्य कार्यत्वे तदर्थसम्बन्धस्यागन्तुकत्वप्रसङ्गेन तदर्थसम्बन्धः सांकेतिकः शब्दार्थसम्बन्धत्वात् डित्थादिशब्दार्थसंबन्धवदिति सांकेतिकत्वानुमानात् संकेतस्य च वक्तृपुरुषबुद्ध्युपाध्यधीनत्वात्तद्विशिष्टपदसंहतिरूपवेदोपि पौरुषेय एव सांकेतिकार्थसम्बन्धिशब्दस्यैव पौरुषेयत्वात् ततश्च वक्तृज्ञानप्रामाण्याधीनप्रामाण्यो वेद इति तस्य परतः प्रामाण्यमेवेति नैयायिक आशङ्कते—

ननु च डित्थडवित्थपदादिव-
त्सकलमेव तु सामयिकं पदम् ।

**अनुमिमीमहि पूर्वनिदर्शना-**

**दनुमितिर्भवतीति किमद्भुतम् ॥ २५३ ॥**

ननु चेति । सकलं लौकिकं वैदिकं च सामयिकम्, अस्य शब्दस्येदं-वाच्यमितिपुरुषसंकेतविशिष्टमनुमिमीमह्यनुमानं कुर्याम् । ननु डित्था-दिपदे सामयिकत्वदर्शनेनान्यत्र कथं तदनुमानं भवेदित्याशङ्क्य साध्यसाधनवत्त्वेन पूर्वानुभूतमहानसादिदृष्टान्तवलाद्धूमादिमति पर्वतादौ वह्न्याद्यनुमितिदर्शनान्नात्र किंचच्चित्रमित्याह पूर्वेति ॥ २५३ ॥

न हि दृष्टान्तमात्रात्साध्यसिद्धिः अपि त्ववाधितत्त्वमपेक्ष्य तच्चात्रासिद्धमित्यभिप्रेत्य परिहरति—

**अनादिवृद्धव्यवहारलक्षणे**

**कथं प्रमाणे परिपन्थिनि स्थिते ।**

**गवादिशब्दे समयोऽनुमास्यते**

**डवित्थशब्दादिवदेतदुच्यताम् ॥ २५४ ॥**

अनादीति । अथवा अनुमिमीमहीत्यन्तः पूर्वपक्षः पूर्वनिदर्शनादि-त्यादिना सोपहासं परिहारमाह पूर्वानुभूतदृष्टान्तात् किमिति काक्वो-पहासः सूचितः । दृष्टान्तवलादनुमितिर्भवतीति किमद्भुतं वह्न्यनौ-ष्ण्यानुमानस्यापि दर्शनादिति भावः । यदि दृष्टान्तवलेन सांकेतिक-त्वानुमानं तदा वह्न्यनौष्ण्यानुमानमपि स्यादिति तात्पर्यम् । ननु दृष्टान्तवलेन न वह्न्यनौष्ण्यानुमानं भवितुमर्हति अवाधितविषय-त्वस्यानुमितिप्रयोजकस्याभावादिति चेत्तुल्यमत्रापीत्याह अनादीति । प्रवाहरूपेणानादिर्यो वृद्धव्यवहारः मध्यमवृद्धव्यहारः स एव लक्षणं गमकं यस्यान्वयव्यतिरेकाख्यप्रमाणस्य तत्तथोक्तं तस्मिन् प्रमाणे

परिपन्थिनि बाधके स्थिते सति गवादिशब्दे डित्थडवित्थशब्दादिवत् समयः कथमनुमास्यते । एतदनुमास्यते इत्येतत् उच्यतां न कथमपि संभवतीत्यर्थः । एतदुक्तं भवति । मध्यमवृद्धव्यवहारो हि व्युत्पित्सोः प्रवर्त्तकज्ञाने प्रमाणं तस्य तेनैवानुमेयत्वात् । अनुमिते च मध्यमनरसमवायिनि प्रवर्त्तकज्ञाने शब्दान्वयव्यतिरेकाभ्यां शब्दस्य तत्कारणत्वं गृह्यत इति सर्वसंमतं तत्रायं व्युत्पित्सुः गवादिशब्दान्वयव्यतिरेकाभ्यां गवादिशब्दो गवाद्यर्थे संकेतित इति गृह्णाति उतास्यास्मिन्नर्थे सामर्थ्यमिति विषयेऽन्तमेव युक्तं पश्यामः न त्वाद्यमन्वयव्यतिरेकयोः कार्यकारणभावमात्रग्राहकयोः संकेतग्रहणे सामर्थ्याभावात्प्रथमव्युत्पत्तौ डित्थादिशब्दगतसंकेतानुपस्थितेश्च कार्यकारणभावग्रहणे तु तयोः सामर्थ्यं बालस्य स्वात्मनि स्तन्यपानादिव्यवहारेऽवगतं कारणत्वमेव च सामर्थ्यं ततश्चोपस्थितत्वादस्यास्मिन्नर्थे सामर्थ्यमित्येव ताभ्यां गृह्णातीति युक्तं न त्वयमस्मिन् संकेतित इति । न च संकेत एव सामर्थ्यमिति शङ्क्यम् । दण्डादौ तदभावप्रसङ्गात् । किं च शब्दार्थसम्बन्धस्य सामयिकत्वपक्षे सर्वशब्दानां सर्वत्र संकेतसंभवेन सर्वेषामपि सर्वार्थत्व प्रसङ्गः । ननु नास्मदादिसंकेतेन शब्दार्थव्यवस्था किन्त्वीश्वरसंकेतेन स च नियतविषय एवेति चेत् किमीश्वरोपि तत्तदर्थज्ञानजननयोग्यं शब्दं तत्तदर्थे संकेतयति । उतायोग्यम् । आद्ये योग्यतायाः सामर्थ्यरूपत्वात्तस्य च त्वयाप्युपजीव्यत्वात् । तदेव सम्बन्धोऽस्तु किमतिरिक्तसंकेतेन । द्वितीये कथमीश्वरो नासौ न भवेत् ? वस्तुसामर्थ्यं विना तदिच्छामात्रेणायोग्यात्कार्यानुपपत्तेश्च । ननु प्रलये सर्वव्यवहारोच्छेदात्सर्गादौ कथं व्यवहारात्सामर्थ्यसिद्धिः अन्योऽन्याश्रयादिति चेन्न । तत्रापि ज्ञानकर्मातिशयवतां हिरण्यगर्भादीनां सुप्तप्रबुद्धवत्पूर्वकल्पावगतसामर्थ्यानुसंधानेन प्रवृत्त्युपपत्तेस्तद्व्यवहारेणार्वाचीनानामपि व्युत्पत्त्युपपत्तेः । तथा च श्रुतिस्मृतिपुराणादीनि "ततः कृतयुगस्यादौ

ब्रह्मभूतो महायशाः । सर्वज्ञो धृतिमानृषिः पुनराजायते स्मरन् ॥ ज्ञानम प्रतिमं यस्य "इत्यादीनि । तस्माद्वन्ह्यनौष्ण्यानुमानमिव तदुष्णत्व-ग्राहिप्रत्यक्षेण संकेतव्यतिरिक्तसामर्थ्यग्राहिणा अनादिवृद्धव्यवहार-लक्षणान्वयव्यतिरेकप्रमाणेन बाधितविषयं सांकेतिकत्वानुमान नोदेतुमर्हतीति ॥ २५४ ॥

ननु सर्वकर्तृत्वेनेश्वरसिद्धेः शब्दार्थसम्बन्धस्यापि तत्कृतत्वमेव हिरण्यगर्भादीनां च तत्कृतसंकेतानुरोधेन व्यवहारप्रवर्तकत्वमात्रमि-त्याशङ्क्य तादृशेश्वरे प्रमाणाभावान्नैवमित्याह—

**सतः प्रमाणाभिमतेषु पञ्चसु**

**प्रमाणमक्षादिषु किंचिदीक्ष्यते ।**

**नहीह सम्बन्धरि तेन तस्य वः**

**खपुष्पकल्पत्वमभावमानतः ॥ २५५ ॥**

सत इति । सतो भावस्य प्रमाणाभिमतेषु भावविषयत्वेनाभिमतप्र-माणेष्वित्यर्थः । अक्षादिषु प्रत्यक्षानुमानोपमानागमार्थापत्तिषु मध्ये किंचिदपि प्रमाणमिह भवदभिमते संबन्धरि संकेतयितरि तटस्थेश्वरे नेष्यत इति संबन्धः । सम्बन्धरीश्वरे प्रत्यक्षादिकमागमो वा किमपि न प्रमाणं वक्ष्यमाणदूषणग्रासादित्यर्थः । यद्यपि प्रत्यक्षादेरीश्वरे न शङ्का कस्यापि तथा तटस्थेश्वरे आगमस्यापि तत्साम्यं दर्शयितुं तदुपन्यस्य दूषितमिति द्रष्टव्यम् । माभूत्तर्हि प्रमाणाभावात्तत्सद्भाव-निश्चयः संदेहस्तु भविष्यति तावतापि न त्वत्पक्षसिद्धिरित्याशङ्क्य सद्भावावेदकनिखिलप्रमाणविरहनिश्चयात्तदभाव एव निश्चीयत इत्याह—तेनेति । येन सम्बन्धरि किमपि प्रमाणं नास्ति तेनेत्यर्थः । तस्य सम्बन्धुरीश्वरस्य खपुष्पतुल्यत्वमसत्त्वमेव सिद्ध्यतीति शेषः । अभावमानतः अनुपलब्धेरित्यर्थः ॥ २५५ ॥

ननु यस्य कस्यचित्प्रमाणपञ्चकानुपपत्तिमात्रेण तादृशेश्वराभावो निश्चेतुं न शक्यते विद्यमानस्यापि घटस्य दोषादिना यस्य कस्यचिदननुभवदर्शनात् सर्वेषां तदनुदयश्चास्माभिरशक्यग्रहः अतः कथमीश्वराभावो निश्चीयत इति चेन्न—यद्धि वस्तु केनचित्कदाचित् प्रत्यक्षाद्यन्यतमेन प्रतिपन्नं तस्मिन् वस्तुनि निखिलप्रमाणानुदयेपि तत्सद्भावावेदकप्रमाणानुरोधेनानुपलब्धेस्तु वस्त्वभावव्यतिरेकेणान्यदेव करणदोषादि कारणं कल्पनीयं यत्तु पुनः कदाचिदपि केनचिदप्रतिपन्नं तस्य पुनरेकस्यापि निखिलप्रमाणानुदयमात्रेण दर्शनेन तदसत्त्वमेव निश्चीयते न त्वनुपलब्धौ कारणान्तरं कल्प्यते। भवदभिमतेश्वरश्च न केनचिदपि प्रमाणेन सेद्धुमर्हति। तदभावस्य वक्ष्यमाणत्वात्। तस्मादनुपलब्ध्याऽसत्त्वमेव निश्चीयत इत्यभिप्रेत्याह—

**पुरोपलब्धो विषयो न दृश्यते**
**यदा प्रमाणैरिह भावगोचरैः।**
**तदा तु तत्रानुपलब्धिकारणं**
**किमप्यभावादपरं हि मृग्यते ॥ २५६ ॥**

**अत्यन्तानुपलब्धवस्तुनि पुनर्यः पञ्चकानुद्भव-**
**स्तस्याभावनिमित्तकः स न पुनस्तत्रापरं कारणम्।**
**अन्विच्छन्ति मनीषिणो न हि शशेऽदृष्ट्वा विषाणाऽस्तितां**
**तत्रादर्शनकारणान्तरपरा हेत्वन्तरान्वेषिणः ॥ २५७ ॥**

पुरोपलब्ध इत्यादिना—श्लोकद्वयेन। पुरा कदाचिदुपलब्धो येन केनचिज्ज्ञातः विषयः पटादिपदार्थः इह लोके तत्र तस्मिन् विषये किमपि करणदोषादिकमभावादपरं पटाद्यभावादन्यत् मृग्यते चिन्त्यते ॥२५६॥

अत्यन्तेति। अत्यन्तानुपलब्धवस्तुनि कदाचिदपि केन चिदननुभूते वस्तुनि विषये, पुनः शब्दो विशेषद्योतकः। विशेष एव तस्येत्यादिना स्पष्टीक्रियते। यः पञ्चकानुद्भवः प्रमाणपञ्चकानुदयः स तस्य वस्तुनो भावनिमित्तक एव न तु तत्र तादृशवस्तुविषयप्रमाणपञ्चकानुदयेऽपरे वस्त्वभावातिरिक्तं कारणं मनीषिण इच्छन्ति। वस्त्वभावादेव तद्विषयप्रमाणपञ्चकानुदयः। न तु तस्मिन् सत्यपि दोषादिकारणान्तरादित्यर्थः। तत्र दृष्टान्तः—न हीति। न हि लोके केचित् शशे विषाणास्ति तामदृष्ट्वा तत्र शशविषाणे विषयेऽभावव्यतिरेकेणादर्शनकारणान्तरपराः सन्तः हेत्वन्तरान्वेषिणो दृश्यन्त इत्यर्थः। तथा च नैयायिकाभिमतेश्वरो न सिद्ध्यतीत्यर्थः॥ २५६॥

किं च भवदभिमतेश्वरः शब्दार्थसंकेतं कथं कुर्यात् किं शरीरं विना स्वकीयनित्यज्ञानेनार्थं ज्ञात्वा तत्र शब्दं संकेतयति इदमस्य वाच्यमिति किं वा शरीरसम्बन्धेनेन्द्रियादिनार्थं ज्ञात्वा। नाद्यः-असंभवात्। न हि शरीरं विना मयैवं संकेतितमिति तत्कथनमिदमस्य वाच्यमिति कादाचित्कसंकेतकरणं वा संभवति। न द्वितीयः। तस्य शरीरसम्बन्धापादकादृष्टाभावात्। ननु प्राणिकर्मवशात् शरीरमादाय संकेतव्यवहारं प्रवर्त्तयतीति चेन्न-स्वादृष्टाकृष्टशरीरस्यैव स्वव्यवहारकारणत्वदर्शनात्। किंचैकशरीरसम्बन्धेन तदिन्द्रियेणार्थं ज्ञात्वा तत्र शब्दं संकेतयति—उतानेकतत्सम्बन्धेन। नाद्यः। सर्वशब्दानां सर्वत्र संकेतकरणानुपपत्तेः। न हि तत्तत्पदार्थज्ञानं विना तत्र तत्र शब्दानां संकेतः सुकरः। न च दूरविप्रकृष्टनानादेशस्थपदार्थानामिन्द्रियेण ज्ञानं संभवति सम्बन्धाभावात्। द्वीपान्तरमहारण्यादिगतपदार्थज्ञानाय तत्र शरीरिण एकस्य गमनासंभवाच्चेत्यभिप्रेत्याह—

**विषमदुर्गमदेशसहस्रगः**
**कथमिवैष नरः समयक्रियाम्।**

सकलशब्दतदर्थनिवेशिनीं-
वद विधातुमलं स्वयमेकलः ॥ २५८ ॥

विषमेति । विषमत्वमुन्नतावनतत्वमत एव दुर्गमो गन्तुमशक्यो यो देशः तत्सहस्रं गच्छतीति तथोक्तः शरीरित्वान्नर इत्युक्तं समयक्रियां संकेतकरणम् कथमिव विधातुमलं वद न कथमपीत्यर्थः । तत्र हेतुः— स्वयमेकलइति । एकशरीर इत्यर्थः ॥ २५८ ॥

नन्वेकेनापि शरीरेणेश्वरस्यालौकिकपुरुषत्वात् झटिति विषमानेकभूदेशगमनं संभवति अनेकेनापि तेन तत्संभवति नित्यज्ञानेन वैकत्र स्थितस्यैव सर्वपदार्थानुपलभ्य भूतावेशन्यायेन शरीरमेकं प्रविश्य स्वसंकेतेष्वाज्ञापकत्वं संभचति अतः कथं तदभाव इत्याशङ्क्य एवमपि संकेतितेश्वर आद्यशब्दसंकेतज्ञापनकाले केनचित्पदेनार्थमभिलप्य प्रतिपत्रे शब्दविशेषस्य तत्र संकेतग्रहं बोधयति, उताङ्गुल्यादिना निर्दिश्य, नाद्यः प्रथमसंकेतकरणात् पूर्वं प्रतिपत्तुः शब्दविशेषस्य तत्रार्थे संकेतग्रहणाभावेन तथा संकेतग्रहणानुपपत्तेरित्याह —

अपि च किंचिदपि प्रतिपादकं
न हि यदा पदमस्ति जगन्मुखे ।
अनभिधाय पदेन तदा कथं
समयमेष करिष्यति शंकरः ॥ २५९ ॥

अपि चेति । न प्रतिपादकं सङ्गतिग्रहणाभावात् पूर्वमिति शेषः । यदेत्यस्य विवरणं—जगन्मुख इति । सर्गाद्यकाले प्राथमिकव्युत्पत्तिसमय इत्यर्थः । इदं च गृहीतसम्बन्धपदाभावे हेतुः । न च पदेनार्था-

भिलापो मास्त्विति शङ्क्य वक्तुमित्याह— अनभिधायेति । अर्थमिति शेषः । गवादिपदं सास्नादिमदादिपिण्डवाचकमित्येवंरूपेण प्रतिपत्तुः सास्नादिमदादिपिण्डवाचकत्वेन प्रसिद्धसास्नादिमदादिपिण्डशब्देन तमनूद्य तत्र गवादिपदस्य संकेतः कर्त्तव्यः न हि तत्पदान्तरस्यानभिलापे संभवति, न च तदभिलापः—प्राथमिकव्युत्पत्तिकाले संभवतीत्यर्थः ॥ २५९ ॥

द्वितीयमनूद्य दूषयति—

**अभिनयेन करिष्यति चेदयं-**
**समयमेतदतीव हि दुर्घटम् ।**
**न हि पदार्थसहस्रविमिश्रिते**
**गवि तदाभिनयात्समयो भवेत् ॥ २६० ॥**

अभिनयेनेति । अङ्गुल्यादिनिर्देशेनायमीश्वरः एतदङ्गुल्याद्यभिनयेन समयाभिधानं दुर्घटम् । दुर्घटत्वमेवाह—नहीति । पदार्थसहस्रविमिश्रिते गुणकर्मसामान्याद्यनेकपदार्थयुक्ते गवि गोपिण्डे तथाभिनयात् गोसंकेतानुकूलत्वेनाभिनयात् यदीश्वरोऽङ्गुल्या पुरोवर्तिनीं गान्निर्दिश्य प्रतिपत्रे तत्र शब्दस्य संकेतं कुर्यात् । तदा गोपिण्डेऽनेकपदार्थसंभवात् नार्थविशेषस्य गोशब्दवाच्यत्व प्रत्तिपत्तुः सिद्ध्येदित्यर्थः । यदि पुनः प्रतिपत्तुः कल्पान्तरीयसंकेतस्मरणमाश्रित्य संकेतं कुर्यात् । तदेश्वरसंकेतो व्यर्थ एवेति द्रष्टव्यम् ॥ २६० ॥

किंचाङ्गुल्यादिना निर्दिष्टेऽर्थे शब्दसंकेत इति पक्षे प्रतिपत्तुरसन्निहितातीन्द्रियेन्द्रादेरङ्गुल्यादिना निर्देशायोगात् नेन्द्रादिशब्दानां संकेतः संभवतीत्याह—

**अपि च लौकिकमानबलाश्रया-**
**दधिगते विषये समयो भवेत् ।**
**अनुपलब्धसतत्त्वकदेवता-**
**प्रभृतिकार्थगतः समयः कुतः ॥ २६१ ॥**

अपि चेति । लौकिकमानबलाश्रयात् लौकिकमानं प्रत्यक्षं तदेव बलं तदाश्रयात् तस्मादेव निमित्तादित्यर्थः । समयः शब्दसंकेतो भवेदङ्गुलीनिर्देशेनेति शेषः । अनुपलब्धसतत्त्वकदेवताप्रभृतिकार्थगतः प्रत्यक्षानुपलब्धस्वरूपेन्द्रादिदेवताधर्माधर्मपदार्थविषयः समयः इन्द्रधर्मादिपदसंकेतः कुतो भवेत् न कुतोपीत्यर्थः । ननु न पदान्तरेणाभिधाय संकेतं करोति नाप्यङ्गुल्यादिना निर्दिश्य किन्त्वयमीश्वरः प्राणिकर्मबलात् शरीरद्वयमुपादाय प्रयोज्यप्रयोजकभावेन लौकिकवृद्धवद्धिरण्यगर्भादिकं व्युत्पादयिष्यति सोऽपि स्वकीयं व्युत्पादयिष्यतीति चेन्न—पुनराजायते स्मरन्निति हिरण्यगर्भस्य भगवत्प्रसादमात्रेण कल्पान्तरीयशब्दतदर्थसंबन्धादिप्रतिपादकश्रुतिविरोधात् । किं चानुमानिकेश्वरस्य यदि सर्वज्ञत्वं सिद्ध्येत् तदैतदुपपद्येतापि तदेव न सिद्ध्यति तत्र प्रमाणाभावात् । अनुमानेन शरीरेन्द्रियानित्यज्ञानादिमतः सिद्धे शरीरसर्वज्ञानासिद्धेः । एतच्चानुपदमेव प्रपञ्चयिष्यते । एतदभिप्रेत्यैवोक्तम् नर इति तस्मान्न पुरुषाधीनः शब्दार्थसम्बन्ध इति ॥ २६१ ॥

अस्मर्यमाणकर्तृत्वाच्च न शब्दार्थसम्बन्धस्येश्वरकर्तृकत्वसिद्धिरित्याह—

**अपि च कर्त्तुरनुस्मरणं भवे-**
**द्यदि चकार पुमान्समयं गिराम् ।**

**न खलु कर्तृगबुद्धिबलं विना**
**व्यवहृतिर्भवति व्यवहर्त्तरि ॥ २६२ ॥**

अपि च कर्तुरिति । सम्बन्धस्येति शेषः । अत्र च प्रकरणे पुमान्नर इति च तद्व्यवहारः पराभिमतसंकेतयिता नैवमीश इति ज्ञापनाय यदीश्वरशब्दार्थः संकेतं कुर्यात्तदेश्वरकृतोयं संकेत इतिविशेषण-त्वेन स स्मर्येत । अन्यथा तत्कृतत्वबुद्ध्यनुपपत्तेरित्याह—न खल्विति । कर्तृगबुद्धिबलं कर्तृविषयज्ञानमेव बलं व्यवहृतिः तत्कृतत्वबुद्ध्यादिव्यवहारः व्यवहर्त्तरि शब्दार्थसम्बन्धे इश्वरेण कृत इति व्यवहर्त्तरि कर्तृस्मरणं विना तत्कृतत्वबुद्ध्यभावे दृष्टान्तमाह—न खल्विति । पाणिनिना पिङ्गलेन वा व्याकरणकर्त्रा कृता या संज्ञानदी-वृद्ध्यादिरूपा तयेत्यर्थः । तयोः पाणिनिपिङ्गलयोः न हि पाणिन्यादेः स्मरणं विना आकारादिषु तत्कृतत्वेन वृद्ध्यादिसंज्ञां व्यवहरन्ती-त्यर्थः । पाणिनीयं पैङ्गल्यमिति संज्ञयेति वा । न च कर्तुरस्मरणेपि देवदत्तादिसंज्ञायाः संकेतितत्वपरिज्ञानवदत्रापि किं न स्यादिति वाच्यम् । तत्रापि केनचित् संकेतितेयं सञ्ज्ञेति सामान्येन कर्तृस्मर-णात् । न च प्रकृतेपि केनचित् संकेतित इति सामान्येन कर्तृस्मरण-मिति वक्तुं शक्यम् । देवदत्तादिसंज्ञाश्रवण इव घटादिशब्दश्रवणकाले लौकिकानां तत्सम्बन्धस्य सकर्तृकत्वज्ञानाभावात् वेदतदर्थसम्बन्ध-कर्तुर्विशेषतः परिज्ञानं विना तत्कृतवेदवोधिते पारलौकिके कर्मणि वृद्धानां नियमेन प्रवृत्त्यनुपपत्तेश्च न चेश्वरस्य विशेषतः परिज्ञानं सम्भवति प्रमाणाभावादित्यर्थः ॥ २६२ ॥

ननु किमिति प्रमाणाभाव इति चेद् न तावत्प्रत्यक्षं प्रमाणं रूपादि-हीनतया परात्मत्वेन च वाह्याभ्यन्तरप्रत्यक्षागोचरत्वात् । ननु क्षित्यादिकार्यलिङ्गानुमानं पराभिमतेश्वरे प्रमाणमिति चेत्—अत्रा-

स्मत्स्वामिचरणाः । लाघवतर्कसहायात् कार्यात् लिङ्गात्परात्मनो बोधं वाञ्छति यः स हि नूनं पश्येदर्कैर्गुदैरपि निधानं यदुक्तं लाघवसहकृतात् कार्यलिङ्गादेव परमेश्वरः सिद्ध्यतीति तदतितुच्छमेव महान्तो मन्यते। अस्मदादिकर्तृपूर्वकत्वेनैवानुमानस्य सिद्धसाधनत्वात्। नन्वस्मदादेरुपादानविषयापरोक्षज्ञानादिमत्त्वं न सिद्ध्यति परमाणोरतीन्द्रियत्वात् कर्तृत्वञ्च तादृक्ज्ञानादिमत्त्वमेवेति चेन्न। कार्यानुकूलापरोक्षज्ञानादिमत्वं हि कर्तृत्वं तच्चादृष्टद्वारास्माकमपि विद्यते। अदृष्टद्वारा क्षितिजनकहविरादिसमवेतयागोपादानपशुपुरोडाशादिविषयापरोक्षज्ञानस्यास्मासु सत्त्वात्। ननु कार्यानुकूलापरोक्षज्ञानादिमात्रं न कर्तृत्वे प्रयोजकं किन्त्वदृष्टाद्वारकतादृशज्ञानादिमत्त्वं तच्च नास्मदादेरिति चेन्न लाघवेन कार्यानुकूलापरोक्षज्ञानादिमत्त्वस्यैव तत्र प्रयोजकत्वात्। एतेनोपादानविषयापरोक्षज्ञानादिमत्त्वं कर्तृत्वमिति निरस्तम्-कार्यानुकूलत्वस्यावश्यं ज्ञानविशेषणतया वक्तव्यत्वेन तावन्मात्रेणोपपत्तेः। अन्यथा—सामान्यप्रत्यासत्त्या परमाणुज्ञानवतः कर्तृत्वप्रसङ्गात्। नन्वेवं सति कुविन्दादिभोजकादृष्टजन्ये घटे तस्यापि कर्तृत्वं स्यादिति चेत्। कस्तत्र सन्देहः समानन्यायत्वात्। किमिति तर्हि न तथा व्यवहारः भोग्यस्य भोक्त्रदृष्टजन्यत्वज्ञानिनां वृद्धानां तदनुकूलकृतिमत्त्वव्यवहारो विद्यत एव सएव च कर्तृत्वव्यवहार इति न व्यवहाराभावः। प्राकृतव्यवहाराभावस्तु न तत्कर्तृत्वं बाधते। अभावाभावात्मकेषु भावेष्वभावव्यवहाराभाववदुपपत्तेः। लौकिकानां कर्तृत्वव्यवहारस्यादृष्टाद्वारककार्यानुकूलकृतिमद्विषयत्वेन भिन्नविषयत्वाच्च। अवश्यं चैवमेव त्वयाभ्युपेयमीश्वरकृतेरप्यदृष्टद्वारकत्वात्। तथा हि—तद्द्वारकत्वं हि तज्जनकत्वे सति तज्जन्यजनकत्वमीश्वरकृत्यादिकं च क्षितिजननानुकूलास्मदाद्यदृष्टजनकं क्षितिजनकं चेति भवत्यदृष्टद्वारकम्। ननु द्वारिसमानाश्रयस्यैव द्वारत्वमिति चेन्न-अपूर्वस्य यागद्वारत्वाभावप्रसङ्गात्। ननु यज्ञ-

ननान्तरं यत्र तिष्ठति तदेव तस्य द्वारमीश्वरज्ञानादिकं तु नित्यमेवेति तददृष्टद्वारकं न भवतीति चेन्न—संप्रयोगानन्तरवर्तिनो मनआदेः संप्रयोगाद्वारकत्वप्रसङ्गात् । ननु यद्यज्जनयित्वैव यज्जनयितुमीष्टे तदेव तत्र तस्य द्वारमीश्वरज्ञानादिकं तु नैवं तस्यानाद्यनन्तस्य कार्यकालादिसम्बन्धित्वेनादृष्टानपेक्षणादिति चेन्न—क्लृप्तसहकारिणं विना भगवज्ज्ञानादेरपि कार्यानुत्पत्त्याऽदृष्टस्याप्यपेक्षितत्वात् । ननु यस्य प्रागभावस्यादृष्टप्रागभावो व्यापकः तत्प्रतियोगित्वमदृष्टद्वारकत्वं तादृशप्रागभावाप्रतियोगित्वमदृष्टाद्वारकत्वमेव तच्चेश्वरप्रयत्नादावपि तस्य नित्यत्वादिति चेन्न—चिकीर्षादिजनकज्ञानस्य नित्यत्वस्य निरसिष्यमाणत्वात् । किं च कर्तृत्वप्रयोजककृतेरदृष्टाद्वारकत्वेन विशेषणे व्रीहिप्रोक्षणावहननहविरासादनावदानादिद्वाराग्नेयादिविषयकृतेरेवादृष्टहेतोस्तत्कर्तृत्वप्रयोजकत्वमित्युत्सन्न एव यागाद्यनुष्ठातुः प्रोक्षणादिकाले यागकर्तृत्वव्यहारः स्यात् । न च प्रोक्षणादिकृतेराग्नेयादिविषयत्वमेव न प्रोक्षणादिना व्यवधानादिति वाच्यम् । कुलालादिकृतेरपि चेष्टादिव्यवधानेन तस्य घटकर्तृत्वाभावप्रसङ्गात् । ननु कृतेर्यस्मिन्कार्ये स्वजन्यमदृष्टमपेक्ष्यते तत्रैव सादृष्टद्वारिका । न च प्रोक्षणादिकृतिराग्नेयादिविषयत्वमेव न प्रोक्षणादिना व्यवधानादिति वाच्यम् । कुलालादिकृतेरपि चेष्टादिव्यवधाने तस्य घटकर्तृत्वाभावप्रसङ्गात् । ननु कृतेर्यस्मिन् कार्ये स्वजन्यमदृष्टमपेक्ष्यते तत्रैव सा स्वरूपोत्पत्तावदृष्टमपेक्षते दृष्टेनैव तदुपपत्तेरिति चेन्न—प्रोक्षणादेराग्नेयादिस्वरूपोपकारकतया तज्जन्यापूर्वस्यापि तत्रैव विनियोगात् । आगमिके च विनियोगे व्यतिरेकस्यानपेक्षितत्वात् तस्मात्कार्यानुकूलकृतिमत्त्वमेव कर्तृत्वव्यवहारमविचारितमूलं साधकं बाधकं वा पश्यामः । नचैवं कार्यानुकूलत्वमेव कर्तृत्वमिति दण्डादेरपि तथात्वं किं न स्यादिति वाच्यम् । कारकान्तरासंकीर्णकर्तृत्वस्यैकानुमितिविषयतया निरुच्यमानत्वात् । तस्माददृष्टाद्वार-

त्वविशिष्टकृतिशालित्वलक्षणकर्तृत्वसाधनस्याप्रयोजकत्वात्। बाधितविषयत्वात् सकर्तृकत्वमात्रसाधने सिद्धसाधनत्वाच्चैतदनुमानं महत्यामापदि पतितमिति मन्यामहे । अस्तु वाऽदृष्टाद्वारककृतिमत्त्वं कर्तृत्वं तथापि तादृशयोगिकृतिपूर्वकत्वेनार्थान्तरता । ननु योगिनां तादृशकृतिमत्त्वे प्रमाणं नास्तीति चेत्। सन्ति तावत्पुराणप्रसिद्धा योगिनस्त्वदभिमताश्च प्रसिद्धा च तेषां कृतिः। नचैवमानुमानिकेश्वरवादिमते ऽनुमानात् प्राक् कथमपि स सिद्धः तथा च धर्मिकल्पनात इति न्यायेन सर्वज्ञयोगिकृतेरेव परमाण्वादिविषयत्वं कल्पनीयम्। श्रूयते च पुराणादौ विश्वामित्रप्रभृतीनां जगत्सर्जनहेतुत्वम्। ननु योगिनोपि विना परमेश्वरं न सिद्ध्यन्ति योगिभावस्य तत्प्रसादाधीनत्वादिति चेन्न—विशिष्टकर्ममहिम्ना पूर्वपूर्वातिशयैश्वर्यसामर्थ्यादियुक्तयोगिप्रसादेनैवोत्तरोत्तरस्य त्रिशङ्कुप्रभृतीनां महापदप्राप्तिवत् योगिभावोपपत्तेः। ननु किं ते योगिनो नित्यज्ञानिनः किंवाऽनित्यज्ञानिनः, आद्ये नाममात्रे विवादः नित्यज्ञानिन एव परमेश्वरत्वात्, न द्वितीयः- सर्गाद्यकाले तेषां ज्ञानानुपपत्तेस्तत्कारणशरीराभावादिति चेन्न—संसारिज्ञानं प्रत्येव शरीरस्य कारणत्वात् । ननु लाघवाज्ज्ञानमात्रं प्रत्येव तत्कारणमस्त्विति चेन्न—नित्यज्ञानवादिनस्तव एतद्व्याप्त्यनुपपत्तेः। अस्मन्मते च स्वरूपज्ञानस्य नित्यत्वात्। नन्वनित्यज्ञानत्वावच्छेदेन शरीरं कारणमस्त्विति चेन्न—संसारिज्ञानत्वस्यैव तदवच्छेदकत्वात् नित्यज्ञानसिद्धेः पूर्वमनित्यत्वेन तद्व्यवच्छेदानुपपत्तेः। न च नित्यज्ञानस्यान्यतरप्रसिद्ध्यापि तद्विशेषणमर्थवदिति वाच्यं स्वार्थानुमानात् पूर्वं तदनुपस्थितेः । ननु जन्यत्वमात्रेण शरीरजन्यत्वमवच्छिद्यत इति चेन्न— कारणकार्योभयवृत्तिधर्मस्य कार्यतानवच्छेदकत्वात् । असंसारिज्ञानं तु प्रागेव सिद्धमिति तद्व्यवच्छेदार्थं संसारिविशेषणं तु युज्यत इति । न चैवं मनोजन्यत्वमपि तस्य न स्यादिति वाच्यम् भावकार्यतावच्छेदेना-

समवायिकारणजन्यत्वस्य क्लृप्तत्वेनान्यस्यासंभवात् मनोयोग एव तदिति तज्जन्यत्वसिद्धेः । न चैवमनन्तयोगिकल्पनाप्रसङ्गः, तेषां क्लृप्तत्वात् नित्यज्ञाने मानाभावाच्च । तच्च न तावद्व्याप्त्या सिद्ध्यति । कटादिकर्त्तुस्तदभावात् । नापि पक्षधर्मताबलात् ज्ञानमात्रजन्यत्वमादायापि हेतोः पक्षवृत्तित्वोपपत्तेः । ननु जन्यज्ञानस्य द्व्यणुकाद्युपादानागोचरस्य तदजनकत्वान्नित्यज्ञानं विना हेतोः पक्षवृत्तित्वमेवानुपपन्नमिति चेन्न नित्यज्ञानस्यापि योगिज्ञानस्येव परमाणुविषयत्वोपपत्तेः । नन्वशरीरिपरमेश्वरज्ञानस्यान्यत्र क्लृप्तकारणं मनआदिकं विनोत्पत्तिर्न संभवतीति चेत्तत्र न तावच्छरीरस्य ज्ञानमात्रकारणत्वमित्युक्तं मनः संयोगस्तु परमेश्वरस्यापि संभवत्येव । ननु स्वादृष्टाकृष्टं मन एव स्वसमवेतज्ञाने कारणमिति चेन्न— ज्ञानमात्रे स्वादृष्टाकृष्टं मनः कारणमिति वक्तुमशक्यत्वात् । नापि जन्यज्ञानमात्रे व्यावर्त्याप्रसिद्ध्या व्यर्थविशेषणतया स्फुरितत्वात् । लाघवान्मनः संयोगत्वेन कारणत्वोपपत्तेश्च । न चैवं परकीयमनः संयोगेनापि ज्ञानोत्पत्तिप्रसङ्गः । स्वशरीरसंयोगावच्छिन्नात्मप्रदेशे तत्संयोगे तस्येष्टत्वात् । अन्यत्र स्वशरीरसंयोगाभावेन तस्यानिष्टत्वात् । न च शरीरस्यापि शरीरत्वेनैव कारणत्वमित्यन्यशरीरावच्छिन्नात्मप्रदेशे ज्ञानं किं न स्यादिति तथा च स्वादृष्टाकृष्टमनःसंयोगादिविरहादेव न तत्र ज्ञानमिति वाच्यम् शरीरस्य कार्यतया दृष्टजन्यत्वस्य क्लृप्तत्वात् तज्जनकादृष्टस्य स्वकीयत्वविशेषणमात्रस्य कल्पनायाः मनस्यदृष्टाकृष्टत्वस्वकीयत्वकल्पनातो लघुत्वात् । नचैवं मनःसंयोगस्य कार्यतया स्वादृष्टजन्यत्वेन कारणत्वमिति वाच्यम् । परम्परयापि पुरुषार्थापर्यवसाय्युपेक्षाज्ञानमात्रकारणमनःसंयोगस्य द्विविधादृष्टजन्यत्वाभावेन तस्य तत्त्वेनातत्त्वात् । ननु यद्यस्य भोगजनकं तत्तदीयादृष्टाकृष्टमिति नियमात् मनसोपि तस्य तथात्वं वक्तव्यमिति चेन्न—जन्येष्वेवैतन्नियमात्तत्रैव कार्यवैचित्र्यप्रयोजकतया दृष्टवैचि-

ऽयस्य कल्प्यत्वेनादृष्टस्य कारणत्वान्नित्ये तु नायं नियमः । कालेश्वरपरमाण्वादिवत्तदुपपत्तेः । न च नियतभोगसाधनस्यादृष्टाकृष्टत्वनियम इति वाच्यम् । मनसोपि प्रतिनियतभोगसाधनत्वाभावात् साधारणभोगसाधनयोषित्पिण्डादेः परादृष्टजन्यत्वाच्च । न च मनसोऽसाधारणत्वाभावेऽन्तरानिर्गमेन मरणप्रसङ्गः । प्राणवियोगस्यैव मरणत्वात् बलवज्जीवनादृष्टेन मनोऽन्तरप्रवेशानन्तरमेवापरस्य निर्गमनोपपत्तेश्च । परमेश्वरस्य भोगाभावेन मनसोऽदृष्टाकृष्टत्वानपेक्षणाच्च । ततश्चासंसारिपरमेश्वरज्ञानस्य शरीरानपेक्षतया तदृष्टाकृष्टमनःशरीरयोरभावेपि मनःसंयोगादिकारणात्तु ज्ञानं जायेतेति न नित्यं ज्ञानं विना हेतोः पक्षधर्मत्वानुपपत्तिः । नतु कया प्रत्यासत्त्या मनः परमेश्वरे ज्ञानं जनयतीति चेदुच्यते सृज्यमानपदार्थप्रकारकज्ञानस्य प्राणिकर्माधीनत्वस्य वक्तव्यत्वात् । जीवादृष्टप्रत्यासन्नविषयज्ञानं परमेश्वरो मनो जनयति । न च व्यधिकरणमदृष्टं स्वाश्रयसंयुक्त एव फलं जनयतीति वाच्यम् । श्राद्धादिजन्यादृष्टे व्यभिचारात् । किं च यच्छरीरं साक्षात् स्वप्रयत्नाधिष्ठेयं तत्स्वादृष्टाकृदृष्टमिति स्वादृष्टाकृष्टत्वस्यैव स्वप्रयत्नाधिष्ठेयत्वप्रयोजकत्वे सत्यपि यथा परमेश्वरस्य सर्गाद्यकालीनाऽस्मदाद्यदृष्टाकृष्टशरीराधिष्ठातृत्वं वेदादिसंप्रदायान्यथानुपपत्त्या कल्प्यते एवं मनसः स्वादृष्टाकृष्टस्यैव स्वसमवेतज्ञानजनकत्वनियमेपि विलक्षणज्ञानकल्पनातो वरमस्यास्मदादिमनोजन्यत्वकल्पनम् । किंचानुमानिकेश्वरस्य ज्ञानमेव न सिद्ध्येत् । कुतस्तस्य नित्यत्वानित्यत्वचिन्ता । ननु कार्यं कर्तृजन्यमेव कर्त्ता चोपादानविषयज्ञानवानिति व्याप्त्या क्षित्यादेर्ज्ञानजन्यत्वमायाति । न च ज्ञानमनित्यमेवेति प्रतिकूलव्याप्तिविरोधे तत्संशय एव स्यान्न तु तन्निश्चय इति वाच्यम् । कार्यकारणत्वाभावप्रसङ्गानुकूलतर्कसहकृतेन कार्यत्वसकर्तृकत्वव्याप्तिज्ञानेन विरोधेन विपरीतव्याप्तेरेवाभावादिति

चेन्न—घटत्वादेरेव कर्तृजन्यतावच्छेदकत्वात्। ननु घटत्वादेः शरीरिकर्तृजन्यतावच्छेदकत्वेऽपि जन्यत्वस्य कर्तृमात्रजन्यतावच्छेदकत्वं वक्तव्यम् यद्विशेषयोः कार्यकारणभाव स्तत्सामान्ययोरपि बाधकं विना कार्यकारणभावस्योचितत्वादिति चेत् न विलक्षणज्ञानकल्पनस्यैव बलवद्बाधकत्वात्। किं च स्वेष्टसाधनताज्ञानमेव सर्वत्र कृतिसाध्ये कारणमिति कार्यात्तथैवानुमीयते। न च तत्परमेश्वरे संभवति तस्याभोक्तृत्वात्। ननु तस्याभोक्तृत्वेपि स्वेष्टसाधनताज्ञानमस्ति सर्वस्यैवेश्वरेच्छाविषयतया तदिष्टत्वादिति चेत्—न हि ममेच्छाविषयोऽयमितिज्ञानात् प्रवर्त्तते। अन्यस्येदमिष्टं तस्यैवेदं भूयादिति स्वेच्छाविषयत्वं तदिष्टज्ञाने सत्यपि मम किमनेनेति निवृत्तिदर्शनान्ममेदं सुखसाधनमिति ज्ञानादेव प्रवृत्तिदर्शनाच्च। ननूपादानविषयज्ञानमपि तत्त्वेन कारणमिति न तद्विषयज्ञानं भगवति सिद्ध्यतीति चेत् न हि तन्मात्रं कार्ये कारणं किन्तु स्वसुखसाधनत्वज्ञानमपि तदभावदशायां तस्मिन्सत्यपि कार्यानुदयदर्शनात् ततश्च परमेश्वरे तदुपादानविषयप्रत्यक्षमेव वक्तव्यं ततः परमेश्वरे तदसंभवनिश्चयात्तद्विषयमुपादानज्ञानमपि न कल्प्येत। ननु परमेश्वरस्य क्रियैव कार्ये हेतुर्न स्वेष्टसाधनताज्ञानमिति चेत्तर्हि सैव कारणमित्युपादानज्ञानमपि न कल्प्येत। क्लृप्तकारणभावस्योभयत्रापि तुल्यत्वात्। ननु स्वसुखसाधनत्वज्ञानस्य प्रवर्त्तकस्य परमेश्वरे बाधेप्युपादानज्ञानस्य बाधकाभावात्तत्सिद्ध्यति। न ह्यन्यबाधकेनान्यत् कारणतया क्लृप्तं त्यक्तुं शक्यते अतिप्रसङ्गादिति चेन्न। उपादानज्ञानस्यान्वयव्यतिरेकाभ्यां चिकीर्षाप्रयत्नौ प्रत्येव कारणत्वात् गौरवेण घटादिकार्यं प्रत्यपि कारणत्वकल्पनायोगात्। न हि प्रयत्ने सत्युपादानज्ञानादिव्यतिरेकेण घटादिव्यतिरेकोऽस्ति येन स्वतन्त्रान्वयव्यतिरेकाभ्यां तस्य घटादिकारणत्वमपि कल्प्येत। नचैवं तन्त्वादेरपि पटाद्यकारणत्वसङ्गः अन्त्यतन्तुसंयोगं प्रत्येव

तस्य हेतुत्वादिति वाच्यम् । तन्तुसंयोगस्य हेतुत्वे तन्तोरपि हेतुत्वस्य वक्तव्यत्वात् । तद्वच्चिकीर्षादेश्वरमकारणत्वाभावाच्च । अन्यथा तन्त्ववयवादेरपि पटकारणत्वप्रसङ्गाच्च । तत्रान्त्यतन्तुसंयोगं प्रत्येव तुर्यादेरन्वयादिना करणत्वेपि दोषभावाच्च । न चैककारणपरिशेषापत्तिः । अन्त्यतन्तुसंयोगस्थितिक्षणे तन्तुविनाशे पटानुत्पत्तेस्तेषां निमित्ततयादृष्टादीनां च हेतुत्वात् । न चैतावता पटार्थिनस्तदुपादानानुपपत्तिः कारणकारणेपि प्रवृत्तिदर्शनात् नचैतावता यागस्य स्वर्गकारणत्वक्षतिः । श्रुत्या तथैव बोधनात् तत्र व्यतिरेकस्यानपेक्षितत्वात् । ननु यस्योत्कर्षाद्यदुत्कर्षस्तस्य तत्र हेतुत्वं क्षीरदध्यादौ दृष्टमुपादानज्ञानोत्कर्षाच्च घटाद्युत्कर्ष इति तत्तत्र हेतुरिति चेन्न । ज्ञानोत्कर्षस्य कृत्युत्कर्षं प्रत्येव हेतुत्वात् । अत एव ज्ञानं कृतिहेतुरित्युच्यते । यदि पुनश्चिकीर्षायामप्युत्कर्षो वर्ण्येत । तदा ज्ञानं चिकीर्षां प्रत्येव हेतुश्चिकीर्षैव कृतिहेतुः साक्षात्कार्योत्कर्षहेतोरेव कारणत्वात् । अन्यथा धूमोत्कर्षादनुमित्युत्कर्षस्तन्त्ववयवोत्कर्षादपि पटोत्कर्ष इति धूमतन्त्ववयवानामप्यनुमितिपटादिहेतुत्वप्रसङ्गः । ननु तत्र परामर्शतन्त्वाद्युत्कर्षादेवानुमितिपटाद्युत्कर्षो न धूमाद्युत्कर्षादिति चेत्तर्हि प्रकृतेपि कृतिचेष्टोत्कर्षादेव घटाद्युत्कर्ष इति समम् । नन्विष्टसाधनताज्ञानस्यैव कृतिहेतुत्वादुपादानज्ञानं न कृतिहेतुरिति चेन्न । यागादेः श्रेयः साधनत्वज्ञानेपि तत्कृतेरनुदयात् ततः परमेश्वरेऽनित्यचिकीर्षादेरभावान्नोपादानज्ञानसिद्धिः । ननु माभूत्तत्कारणत्वेन तज्ज्ञानसिद्धिः कृतिविषयताप्रयोजकत्वेन तु तत्सिद्ध्यति । देवदत्तज्ञानविषयघटे तच्छून्ययज्ञदत्तकृतिविषयत्वादर्शनादिति चेन्न । घटस्य हि यज्ञदत्तकृत्यविषयत्वं तदभावादेव न तु ज्ञानविषयत्वाभावात् । तस्यां सत्यां तद्व्यतिरेके सत्येव तद्व्यतिरेकादर्शनात् । नन्वन्यविषयकृतत्सत्त्वकाले कथमिति चेत् । न हि सैव कृतिस्तस्यैव तद्विषयीकरोति किन्त्वन्यैवोत्पद्यतइत्युत्पत्तावेव तदपेक्षते । ननु स्वसमानाश्र-

यज्ज्ञानसमानविषयैव कृतिरिति चेन्न । कार्यकारणभावादिबाधक-तर्काभावेपि व्याप्तिवलात्तदनुमाने सुखद्वेषादीनामपि निरङ्कुशमनु-मानप्रसङ्गात्। लोके ज्ञानस्य स्वजनकेन्द्रियप्रत्यासत्त्याश्रयविषयत्वं नियतमिति साधु समर्थितं जन्यज्ञानं तस्मात्परिहरेश्वरस्य चेतन-त्वं स्वीकुरु वा ज्ञानेच्छाप्रयत्नानां कार्यत्वमिति सेयमानुमानिकेश्व-रवादिनामुभयतः पाशा रज्जुः। एवं च सति सविषयज्ञानमनित्यमेवेति सविषयज्ञानत्वावच्छेदेनावधृतव्याप्तिरपि परिरक्षिता स्यात्। यदि च परमेश्वरस्य प्रमाणविरुद्धमपि नित्यं ज्ञानं कुलधर्मवत् स्वीकुरुषे तदा नित्यं शरीरमपि स्वीक्रियतां किमेकत्र पक्षपातेन। शरीरं चात्र चेष्टाश्रयो विवक्षितः। तेन न सिद्धसाधनम्। ननु परमेश्वरस्य शरीर-मनुपलब्धिवाधितमिति चेन्न—इन्द्रादिशरीरवदस्मद्दृष्ट्ययोग्य-त्वात्। ननु यत्सावयवं तदनित्यं यच्छरीरं तत्सावयवमित्याद्यनेक-व्याप्तिविरुद्धं शरीरस्य नित्यत्वकल्पनमिति चेन्न—ज्ञाननित्यत्वेपि सविषयं ज्ञानमनित्यमेव जन्यमेवेत्यादिव्याप्तिविरोधस्य सत्त्वात्। ननु यत्कार्यं तज्ज्ञानजन्यमिति कार्यकारणभावग्राहकतर्कसहकृतया व्याप्त्या सहकृतकार्यत्वलिङ्गपक्षधर्मताज्ञानेन नित्यज्ञानोपस्थित्या ज्ञानानित्यत्वव्याप्तिरस्मदादिज्ञानविषयत्वेन संकोच्यत इति चेत्तर्हि यत्कार्यं तच्छरीरजन्यमिति जन्यत्वावच्छेदेन कार्यकारणभावग्राहक-तर्केण शरीरजन्यत्वावधारणात् क्षित्यादौ कार्यत्वलिङ्गं पक्षधर्मताव-लान्नित्यमुपस्थापयतीति तद्विरोधेन शरीरस्य जन्यत्वादिव्याप्तिरस्म-दादिशरीरविषयत्वेन नियम्यताम् । ननु सर्वस्यापि कार्यस्य न शरीरजन्यत्वनियमः । हस्तादिक्रियायां व्यभिचारादिति चेत्तर्हि ज्ञानमपि न सर्वत्र कारणम्। निर्विकल्पकज्ञाने ज्ञानजन्यत्वाभावात्। यदि च तद्व्यतिरिक्तत्वेन कार्यं व्यवच्छेदयसि तर्हि हस्तादिक्रिया-व्यतिरिक्तत्वेनापि कार्यं व्यवच्छिद्यताम्। ननु शरीरं न कार्यमात्रे कारणं कृत्यादिसंपादनेनान्यथासिद्धमिति चेत्तुल्यं ज्ञानेऽपि अस्तु वा

शरीरी तथापि तदेकत्व कथं सिद्ध्यति। ननु लाघवसहकृताद्व्याप्तिपक्षधर्मलिङ्गादेव तत्सिद्ध्यतीति चेन्न। लाघवेन घटलिङ्गात् कुलालानुमानेपि तदेकत्वसिद्धिप्रसङ्गात्। ननु तत्रापि लाघवेन तदेकत्वं सिद्ध्यत्येव परन्तु पश्चाद्बाध्यत इति चेत्तर्हि प्रकृते विविधविशेषस्य वहुकर्तृकत्वव्याप्त्या तादृशक्षित्यादेरपि वहुकर्तृकत्वानुमाने तदेकत्ववाधात्। ननु गोपुरादावप्येककर्तृकत्वेनैव कारणत्वं लाघवान्न वहुकर्तृत्वेनेति चेद् न नियमेन तादृशकार्येषु वहुकर्तृकतादर्शनाद्नौपाधिकत्वात्। किंचैकत्वं पक्षधर्मताबलादपि न सिद्ध्यति। तद्धि नित्यज्ञानत्वे तस्य सर्वविषयत्वे च सिद्धे पृथिव्यादेरेककर्तृकत्वसंभावनया सिद्ध्यति। जगत्कर्तुः किंचिज्ज्ञत्वानित्यज्ञानत्वादिनिश्चयदशायामनित्यज्ञानत्वादिसंशयदशायां वा तदेकत्वानिश्चयात् ज्ञाननित्यत्वादिज्ञानं च किं लाघवसहकृतव्याप्तिपक्षधर्मलिङ्गादुत कर्तृकत्वावगमात्। नाद्यः अनित्यसकलविषयज्ञानकल्पनेपि गौरवाभावात्। ननु नाशप्रतियोगित्वमनित्यत्वं गुर्विति चेन्न नाशाप्रतियोगित्वस्य नित्यत्वस्य ततोपि गुरुत्वात्। ननु सकलकालसम्बन्धित्वं भावरूपमेव नित्यत्वं सम्बन्धश्च क्वचित् कश्चिदिति न काव्याद्यव्याप्तिरिति चेत्तर्हि किञ्चित्कालसम्बन्धित्वमनित्यत्वमिति तुल्यमेव। नन्वेवं प्रध्वंसस्याप्यनित्यत्वापत्तिरिति चेन्न—सकलकालसम्बन्धित्वस्यापि तत्राभावात्तर्हि किमत्रोपतिष्ठतीति चेत् सविषयं ज्ञानमनित्यमेवेति व्याप्त्या नित्यत्वमेव युक्तम्। नन्वनित्यज्ञानकल्पनेऽनेकज्ञानं तत्कारणं च कल्पनीयमिति चेत्तस्यानित्यज्ञानसिद्धिद्वारकत्वेनानुमितिदशायामनुपस्थितत्वेन गौरवस्यादोषत्वात्। एतेन लाघवेन ज्ञानैकत्वावगमादनादिद्व्यणुकप्रवाहविषयस्यानादित्वेन नित्यत्वं नियतविषयताप्रयोजककारणजन्यत्वाभावादनियतविषयत्वेन सर्वज्ञत्वमपि सिद्ध्यतीति निरस्तम्। सविषयं ज्ञानं ज्ञानससामानाधिकरणमेवेति व्याप्त्यनुसंधानेन लाघवस्य बाधितत्वेन तदनेकत्वस्यैवानुमितिप्रसङ्गात्। न च

ज्ञानस्य जन्यत्वे सर्वविषयत्वानुपपत्तिः। भगवज्ज्ञानस्य जन्यत्वेपि नियतविषयज्ञानजनकबहिरिन्द्रियजन्यत्वानभ्युपगमात् । अन्यथा योगिज्ञानस्य सर्वविषयत्वानुपपत्तेः ननु जन्यस्य भगवज्ज्ञानस्य सर्वविषयत्वं केन निश्चीयत इति चेदजन्यस्य तस्य तत्केन निश्चीयत इति वक्तव्यम् । ननु नियतविषयत्वप्रयोजककारणजन्यत्वाभावादिति चेत् जन्येपि योगिज्ञाने सर्वविषयत्वदर्शनात्। बहिरिन्द्रियजन्यत्वाभावादिति चेत्तर्हि प्रकृतेपि तुल्यम्। किञ्च न तावत्कार्यत्वलिङ्गेन सर्वज्ञत्वं सिद्ध्यति तस्यैतद्व्याप्तिपक्षधर्मतान्यतराविषयत्वात्तद्व्यणुकादितदुपादानज्ञानमात्रेण हेतोः पक्षवृत्तित्वोपपत्तेः। न चेदमेव सर्वज्ञत्वं, तदविषयदृष्टान्तस्यापि सत्त्वेन तस्य पारिभाषिकत्वापातात् । नापि लाघवतर्कात्तत्सिद्धिः विपरीतत्वात् । ननु नियतविषयत्वप्रयोजकाभावेन तदुपनीयत इति चेन्न—नियतविषयत्वप्रयोजकाभावे तस्यानियतविषयत्वमेव सिद्ध्यति न तु सर्वविषयत्वं तस्याप्रयोज्यत्वाद्योगिज्ञानस्य तु विशुद्धधर्मप्रभावादेव सर्वविषयत्वसिद्धिः। नचानियतविषयत्वमेव ज्ञानस्य सर्वविषयत्वं परिच्छिन्नविषयत्वेपि कदाचित् किंचिद्विषयीकरोतीति संभवात् । नन्वेकस्य प्रतिभासदशायामपरस्याप्रतिभासे किं कारणमिति चेन्न—विनष्टेषु विषयेषु ज्ञानज्ञेययोः स्वरूपसम्बन्धाभावेन तदविषयत्वोपपत्तेः । ननु तज्ज्ञानं सम्बन्धमन्तरेणापि ज्ञेयं विषयीकरोतीति चेन्न—ज्ञानसम्बन्धित्वव्यतिरेकेण ज्ञानविषयत्वानिरूपणात् । ननु ज्ञानजन्यव्यवहारविषयत्वमेव ज्ञानविषयत्वमिति चेन्न—ज्ञानं स्वविषय एव व्यवहारं जनयतीति तस्य ततोऽन्यस्यैव वक्तव्यत्वात् । नन्वेवमप्यभावविषयत्वार्थं प्रतियोगिविषयत्वं ज्ञानस्य कल्पनीयमिति चेन्न—जन्ये हि विशिष्टज्ञाने विशेषणं प्रतीयते । तस्य तज्ज्ञानजन्यत्वात् जनकविषयस्य जन्यज्ञानविषयताङ्गीकारात्प्रतियोगिज्ञानाभावेनाभावस्यापि परमेश्वरज्ञानविषयत्वकल्पनाच्च । अत एव भगवज्ज्ञानं सर्वविषयमजन्य-

त्वादितिव्यतिरेकानुमानमप्रयोजकत्वेन निरस्तम् । सपक्षीभूतयोगिज्ञानावृत्तित्वेनासाधारणत्वाच्च । इन्द्रियाजन्यत्वहेतोः शरीराजन्यत्ववदसाधारणत्वाच्च । एतेन कर्त्रैकत्वावगमेन ज्ञाने सर्वविषयत्व नित्यत्व सिद्ध्यतीति प्रत्युक्तमन्योन्याश्रयाच्च । न च लाघवतर्कसहायानुमानात् कर्त्रैकत्वसिद्धिरित्युक्तम् । किञ्च लाघवात् कर्त्रैकत्वसिद्धौ कल्पान्तरीयः घटः कुलालजन्यः घटत्वात् संप्रतिपन्नवदित्यनुमानाल्लाघवात्तदेकत्वसिद्धिप्रसङ्गः । न चात्र बाधोऽस्ति । ननु घटत्वेनानेककर्तृत्वमनुमीयत इति चेन्न—कर्त्तुरनेककर्तृत्वेनाहेतुत्वात् । इदानींतनैककर्तृघटेषु व्यभिचाराच्च । ननु क्षित्यादिकर्तैकः क्षितिकर्तृत्वादिति तत्सिद्धिरिति चेन्न—सपक्षघटादिकर्तुर्व्यावृत्तेः । ननु क्षितिरेककर्तृका कार्यत्वात् घटवदिति तत्सिद्धिरिति चेन्न—ईश्वरवादिमते घटादेः साध्यविकलत्वात् । समानस्वभावैककर्तृकेति साध्यं वर्ण्यत इति चेद्व्यद्येकस्वभावैककर्तृकेति साध्यार्थः तदा नानेककर्तृकत्वव्यावृत्तिः । यदि च तुल्यस्वभावैककर्तृकत्वं तदा यद्यात्मत्वादिना तुल्यस्वभावत्वमर्थः तर्हि साध्यविकलो दृष्टान्तः । यदि किंचिज्ज्ञत्वसर्वज्ञत्वादिना तुल्यस्वभावत्वं तदानेककर्तृसिद्धिः । सर्वज्ञान्तरस्यावश्यकत्वात् । विचित्रकार्येऽनेककर्तृकत्वव्याप्तिविरोधाच्च । तस्मादनुमानादीश्वरसिद्धिरिति बालकानां मनोरथमात्रमिति तस्मात्कार्यलिङ्गानुमानात् न सर्वज्ञेश्वरसिद्धिः किन्त्वस्मदाद्यपेक्षयाऽधिकज्ञानवान् कश्चित्सिद्ध्यति । ततश्च तस्य सर्वपदार्थज्ञानाभावान्न बुद्धिपूर्वकृतत्वं शब्दार्थसम्बन्धस्येत्याह—

न खलु पाणिनिपिङ्गलसंज्ञया
व्यवहरन्ति तयोः स्मरणं विना ।
पदपदार्थपरस्परसंगतिं
निरमिमीत ततो न जगद्गुरुः ॥ २६३ ॥

मतिमतां प्रवरो वृषभध्वजः
कणभुगादिमुनिप्रवरप्रभुः ।
ननु धरादिजगद्रचनाबला-
दनुमितोऽनवखण्डितशक्तिकः ॥ २६४ ॥

पदापदार्थेति सार्द्धश्लोकेन । कणभुगादिमुनिप्रवरप्रभुः—कणादाक्षपादमुनिश्रेष्ठानां स्वामी धरादिजगद्रचनाबलादनुमितः पृथिव्यादिजगन्निर्माणलक्षणकार्यबलादनुमितः वृषभध्वजः शंकरः यतो मतिमतां प्रवरः बुद्धिमतामस्मदादीनां श्रेष्ठः अस्मदाद्यपेक्षयाऽधिकज्ञानवान् न तु अनवखण्डितशक्तिकः न त्वापरिच्छिन्नज्ञानैश्वर्यशक्तिकः ततः पदपदार्थपरस्परसंगतिः पदानि घटादिशब्दाः पदार्थाः घटादयः परस्परसंगतिः पदपदार्थयोरन्योन्यं वाच्यवाचकभावसम्बन्धः पदपदार्थसंकेतान्न निरमिमीत बुद्धिपूर्वान्निर्मित्तवानित्यर्थः । तर्हि भवन्मते वा सर्वज्ञ ईश्वरः केन सिद्धः कथं वा तस्मान्नामरूपतत्सम्बन्धाः संभूता इत्याशङ्क्य यः सर्वज्ञः सर्ववित् सत्यं ज्ञानमनन्तमित्यादिश्रुत्यैव सिद्धः ॥ २६३ ॥ २६४ ॥

ननु अनुमानान्निश्वासवदबुद्धिपूर्वमेव संभूता इत्याकाङ्क्षापूर्वकमाह—

अपि तु वैदिकवाङ्मनसातिगा-
नुदितलुप्तचिदेकरसात्प्रभोः ।
अभवदानकदुन्दुभिनन्दना-
दमतिपूर्वमिदं सकलं जगत् ॥ २६५ ॥

अपि तु वैदिकेति । सत्यज्ञानमनन्तमित्यादिना वेदेन लक्षणवृत्त्या गम्यो वैदिकः तत्र हेतुः—वाङ्मनसातिग इति । वाङ्मनसे अतिक्रान्तः

यतो वाच इतिश्रुतेः अनुदितलुप्तचिदेकरसः उत्पत्तिविनाशरहित चैतन्यैकस्वरूपः सत्यादिवाक्यलक्ष्यवाङ्मनसागोचरानुदितानस्तमितवोधस्वरूपादित्यर्थः । आनकदुन्दुभिनन्दनाद्वसुदेवेन पुत्रत्वेनाभिमन्यमानात् श्रीकृष्णादित्यर्थः । अनेन स्वस्य विष्णुभक्त्याधिक्यं द्योतितम् । अमतिपूर्वमबुद्धिपूर्वं निश्वासवदनायासेनेत्यर्थः । इदं परिदृश्यमानं सकलं नामरूपकर्मात्मकमित्यर्थः । तथा च भवदभिमतेश्वरस्यानुमानादसिद्धेस्तत्सिद्धिं विना च संकेतस्य तत्कृतत्वासिद्धेर्न शब्दार्थसम्बन्धः पौरुषेय इति भावः ॥ २६५ ॥

नन्वीश्वरस्य कार्यलिङ्गानुमानागम्यत्वेपि वेदकर्तृत्वेन तत्सिद्धिरितिव्याप्तिप्रदर्शनपूर्वकं प्रतिजानीते—

**ननु लौकिकवचसां नरमतिपूर्वकरचना**
**परिदृश्यत इति वैदिकवचसामनुमिनुमः ।**
**वचनं श्रुतिशिरसामपि नरधीकृतरचनं**
**वचनत्वत इव लौकिकजननिर्मितवचनम् ॥ २६६ ॥**

नन्विति । लौकिकवचसां काव्यादीनां नरमतिपूर्वकरचनाकालिदासादिपुरुषबुद्धिनिमित्तकनिर्माण इति कृत्वा अनुमिनुमः पुरुषबुद्धिपूर्वकत्वमितिशेषः । अनुमानप्रकारमाह—वचनमिति । श्रुतिशिरसामपि वचनं वेदवाक्यमपीत्यर्थः । नरधीकृतरचनं पुरुषबुद्धिकृता रचना निर्माणं यस्य तत्तथा वचनत्वतः वाक्यप्रमाणत्वादित्यर्थः । लौकिकजननिर्मितवचनमिवेति सम्बन्धः । वेदवाक्यानि पुरुषबुद्धिरचितानि वाक्यप्रमाणत्वात् कालिदासादिवाक्यवदित्यनुमानमिह विवक्षितम् ॥ २६६ ॥

नन्वेतावता कथमीश्वरसिद्धिः पक्षधर्मताबलादित्याह—

न च मादृशजनधीकृतरचनं श्रुतिवचनं
भवितुं क्षममिति वैदिकरचनाबलमिषतः।
अनुमीयत इह शूलभृदिति चेदिदमशुभं
नहि वैदिकवचसामभिभवनास्पदमनुमा॥ २६७॥

न चेति। न हि तदर्थज्ञानं विना तद्वाचकशब्दरचनं संभवति। न हि वेदार्थो वेदेन विनास्मदादिभिर्ज्ञातुं शक्यत इति न श्रुतिवचनमस्मदादिबुद्धिकृतनिर्माणमिति कृत्वा वैदिकरचनाबलमिषतः वेदशब्दनिर्माणमेव बलं तद्व्याजेन वेदरचनान्यथानुपपत्त्येत्यर्थः। शूलभृत्—ईश्वरः। नचागमबाधः। अनुमानविरोधे तस्यैव दौर्बल्यदित्यर्थः। अनुमानस्यागमबाधकत्वे नरशिरः कपालशुचित्वानुमानस्याप्यागमबाधकत्वं स्यादित्यतिप्रसक्त्या दूषयति—इदमशुभमिति। इदं वेदस्य पुरुषबुद्धिपूर्वकत्वानुमानमशुभमसमीचीनं तत्र हेतुः—नहीति। हि यतोऽनुमानं वैदिकवचसामभिभवनास्पदं बाधनिमित्तं न भवत्यत इत्यर्थः॥ २६७॥

ननु वैदिकवचसां बुद्धिपूर्वकत्वानुमाने कस्यागमस्य बाध इत्याशङ्क्यागममेव दर्शयति—

ब्रह्म स्वयम्भु परमात्मपदस्य वेदो
निःश्वासकल्प इति चापरमामनन्ति।
वाक्यं तदस्य मतिपूर्वकतानुमानं
सद्यो निरस्यति नचेदपबाधितं स्यात्॥ २६८॥

ब्रह्मेति। ब्रह्म वेदः स्वयमेव भवतीति स्वयम्भु अबुद्धिपूर्वकत्वेनापौरुषेयत्वादित्यर्थः। वाक्यान्तरमाह—परमात्मेति। परमात्मस्वरूपस्य-

मायोपाधिकपरमात्मन इत्यर्थः। परमात्मपदस्य वेदो निश्वासकल्प इत्यनेनास्य महतो भूतस्य निश्वसितमेतद्यदृग्वेद इत्यादिवाक्यमर्थतो-नुकृतमपरं वाक्यमिति सम्बन्धः। आमनन्ति अध्येतार इति शेषः। तद्वाक्यमस्य वेदस्य ब्रह्म स्वयं भु अस्य महत भूतस्येत्यादिवाक्यं वेदस्य बुद्धिपूर्वकत्वानुमानं न सहते। अन्यथा तस्य बाधितार्थत्व-प्रसङ्गात् न हि तद्युज्यते। ततश्च तद्वाक्यं तदनुमा न बाधेतैव किन्तु तदेव तां बाधत इत्यर्थः ॥ २६८ ॥

किं चेन्द्रो मायाभिरित्यादिना कूटस्थचिद्धातोर्ब्रह्मणो माया-मात्रेण जगत्सर्जनादिकं श्रूयते तद्विरुध्येत ब्रह्मणो वेदसृष्टौ बुद्ध्या-पेक्षायां अतस्तद्विरुद्धं च बुद्धिपूर्वकत्वानुमानमित्याह —

**सृजति रचति संहरति प्रभुः**
**सकलमेव निविश्य नियच्छति।**
**अमतिपूर्वमिति श्रुतिशासने**
**वद कथं मतिपूर्वकतानुमा ॥ २६९ ॥**

सृजतीति। निविश्य प्रतिबिम्बभावेन प्रविश्य नियच्छति नियमनं करोति अमतिपूर्वम् अबुद्धिपूर्वम्। अथवा—मतिर्बोधः। अमतिरज्ञानं तत्पूर्वमित्यर्थः। अस्य सृजत्यादिना प्रत्येकं सम्बन्धः। इत्यनेन प्रकारेण श्रुतिशासने श्रुत्या प्रतिपादने सति कथं मतिपूर्वकतानुमानं वेदस्येति शेषः न कथमपीत्यर्थः। किं च वेदमात्रस्य वाक्यत्वहेतुना बुद्धिमत्पुरुषमात्ररचितत्वसाधने इदानींतनवेदवाक्ये बुद्धिमदस्मदादि-रचितेऽशतःसिद्धसाधनम्। ननु स्वतन्त्रपुरुषजन्यत्वं साध्यत इति चेत् किमिदं स्वातन्त्र्यं किमीश्वरत्वमुत शब्दप्रमाणातिरिक्तप्रमाणेन शब्दार्थज्ञातृत्वम्—यद्वा स्वजन्यशब्दादन्यप्रमाणाद्वाक्यार्थपरिज्ञातृ

त्वम्। नाद्यः। दृष्टान्तस्य साध्यवैकल्याद्धेतोर्व्यभिचाराच्च। न द्वितीयः। पुराणादीनामर्थं ज्ञात्वा तद्विषयतया विरचितमुक्तकश्लोके कस्मिंश्चि द्व्यभिचारात्। न तृतीयः। सिद्धसाधनत्वादस्मदादेरपि कस्यचिन्मीमांसादिपरिशीलनवतः इदानीमुच्चार्यमाणस्वजन्यवेदातिरिक्तात्पूर्वश्रुतवाक्यात् वाक्यार्थज्ञानसत्त्वात्। ननु सर्गाद्यकालीनो वेदः पक्ष इति चेन्न। वेदार्थापरिज्ञान्यध्यापकप्रयुक्तवेदवाक्ये व्यभिचारात्। न च सर्गाद्यकालीनवेदत्वमेव हेतुः साधनविकलत्वाद्दृष्टान्तस्य। न च व्यतिरेकी, अप्रयोजकत्वात्। केवलोपाध्यायवत्सर्गाद्यकाले वेदप्रयोक्तुरपि स्वेन रच्यमानवाक्यस्यातिरिक्तप्रमाणेनार्थप्रतीतिं विनापि प्रयोगसंभवात्। तस्माद्भवत्पक्षे वाक्यत्वानुमानादपि न सर्वज्ञेश्वरसिद्धिरित्यर्थः। नन्वेवं सति कथं भवत्पक्षेपि शास्त्रयोनित्वेन तादृशेश्वरसिद्धिरिति चेद्वेदस्य सर्वार्थप्रकाशनशक्तिः स्वोपादानगततादृशशक्तिपुरस्सरा अर्थप्रकाशनशक्तित्वात् प्रदीपगततादृशशक्तिवत्। उपादानं च ब्रह्मेत्येवमनुमानात्तादृशेश्वरसिद्धिः। किं च न ह्यस्माभिस्त्वयेव केवलानुमानात्तादृशेश्वरसिद्धिर्वर्ण्यते किं तु यः सर्वज्ञ इत्यादिश्रुतिसिद्धे तस्मिन् संभावनामात्रमनुमानेन वर्ण्यते। अतो न भवत्साम्यमस्माकमिति द्रष्टव्यम्॥ २६९॥

तर्ह्यस्माकमपि वेदादेव तत्सिद्धिरिति चेन्न – अन्योन्याश्रय प्रसङ्गादित्याह—

**आप्तोक्तत्वप्रत्यये मानभावो**
**वेदस्यास्य ज्ञायते मानभावे।**
**विज्ञाते सत्याप्तपूर्वत्वसिद्धि-**
**रित्यन्योन्यापाश्रयत्वप्रसङ्गः॥ २७०॥**

आप्तोक्तत्वेति। अयमर्थः–वेदस्याप्तोक्तत्वेन प्रामाण्ये निश्चिते तस्माद्वेदादीश्वरसिद्धिर्वेदेन परमाप्तेश्वरे सिद्धे तत्प्रणीतत्वेन वेदप्रामाण्यसिद्धिरित्यन्योन्याश्रयप्रसङ्गात् न वेदादपि भवत्पक्षे ईश्वरसिद्धिरिति। ननु वेदस्याप्तोक्तत्वज्ञानं विनापि वेदादुत्पन्नज्ञानस्य यथार्थयोग्यताज्ञानजन्यत्वेन प्रामाण्यनिश्चयादीश्वरसिद्धिरिति चेन्न— वेदादुत्पन्नस्येश्वरगोचरज्ञानस्य नित्यज्ञानवदीश्वरसिद्धेः पूर्वं यथार्थयोग्यताज्ञानजन्यत्वस्यैव निश्चेतुमशक्यत्वात्। नन्वर्थापत्त्यैव तत्सिद्धिरिति चेन्न तादृशेश्वरं विनाऽनुपपद्यमानार्थाभावात् त्वया तत्प्रामाण्यानङ्गीकाराच्च। अत एव तन्मूलकारेणोपेक्षितमुपमानं च नियतविषयत्वान्नैवेश्वरसाधकम् अत एतदुपेक्षितम् ॥ ७० ॥

तथा च शब्दतदर्थसम्बन्धानां बुद्धिपूर्वरचितत्वपक्षे वेदप्रामाण्यनिश्चयस्याप्यनुपपत्तेः सर्वज्ञेश्वरस्याप्यसिद्धेः अबुद्धिपूर्वरचितत्वेन स्वत एव प्रामाण्यनिश्चयो वक्तव्यः एवं च सर्वज्ञेश्वरश्च सिद्ध्यतीत्यभिप्रायेणाह—

तस्मादेषा स्वप्रयुक्तप्रमाण-
भावज्ञाना वेदविद्याभ्युपेया।
प्रामाण्यं स्यात्स्वप्रयुक्तं च तस्या
वस्तुस्थित्या ज्ञप्तिवन्नान्यतस्तत् ॥ २७१ ॥

तस्मादिति। यस्मादाप्तोक्तत्वेन यथार्थयोग्यताज्ञानजन्यत्वेन वा प्रामाण्यनिश्चयेऽन्योन्याश्रयादिदोषः तस्मादेषा वेदविद्या वेदलक्षणा विद्या वेदजन्यविद्या वा स्वप्रयुक्तप्रमाणभावज्ञाना स्वेन स्वरूपेणैव प्रयुक्तं प्रमाणभावज्ञानं प्रामाण्यज्ञानं यस्यां सा तथोक्ता प्रामाण्यज्ञानस्य स्वप्रयुक्तत्वं नाम ज्ञानस्वरूपग्राहकप्रमाणादेव ग्राह्यत्वम्।

तथा च वेदविद्याया अपि प्रामाण्यं तत्स्वरूपग्राहकप्रमाणादेव गृह्यत इत्येवाभ्युपेयं न तु यथार्थयोग्यताज्ञानजन्यत्वादिनेत्यर्थः। नन्विदमनुपपन्नं यत् ज्ञानप्रामाण्यं ज्ञानस्वरूपग्राहकप्रमाणादेव गृह्यत इति तथात्वे तत्संशयानुपपत्तेः निश्चिते तस्मिन् संशयायोगात्, न च संशयस्थले प्रामाण्यं न ज्ञातमिति वाच्यम्—यावज्ज्ञानग्राहकग्राह्यत्वाभावप्रसङ्गात्, न च ज्ञानमपि न ज्ञातमिति वाच्यम्—तस्य स्वयं प्रकाशत्वेन स्वसत्तायां प्रकाशविरहानुपपत्तेरिति चेदुच्यते-प्रामाण्यं स्वत एव गृह्यते, न च संशयानुपपत्तिः;—निश्चितेपि दोषप्रावल्यात् संशयोपपत्तेः; दृश्यते हि स्फटिकादौ शौक्ल्यनिश्चयेपि जपाकुसुमादिदोषवलाल्लौहित्यप्रत्ययः। न च यथा तत्र लौहित्यप्रतिभासेपि श्वेतार्थी प्रवर्तते तथात्रापि संशये विद्यमानेपि प्रामाण्यनिश्चयात् अर्थे निष्कम्पा प्रवृत्तिः स्यादिति वाच्यम्। तत्र लौहित्यभ्रान्त्यनन्तरं श्वेतार्थी श्वैत्यमनुमाय प्रवर्त्तते न प्रथमोत्पन्नश्वैत्यज्ञानात् तस्य लौहित्यज्ञानेन नष्टत्वात् अत्र तु संशयदशायां प्रामाण्यस्य संदिह्यमानत्वात् प्रथमोत्पन्ननिश्चयात्मकप्रामाण्यज्ञानस्य च तदाश्रयस्य संशयेन विनष्टत्वात्। तल्लिङ्गाद्यप्रतिसंधानेन ज्ञानान्तरस्य चाभावात् कथं प्रवर्तेत। ननु प्रथमज्ञानसमानविषयकज्ञानान्तरात्प्रवृत्तिः स्यादिति चेन्न तस्यापि प्रथमज्ञानवत् प्रवलदोषवलेन संदिह्यमानप्रामाण्यतया तदनुपपत्तेः। ननूत्पन्नज्ञाने संशयो भवति न त्वनुत्पन्ने तस्य धर्म्यादिसापेक्षत्वात् तथा च ज्ञानस्य स्वप्रकाशरूपेणैवोत्पद्यमानतया प्रथमक्षणे प्रामाण्यस्य ज्ञातत्वात् द्वितीयक्षणे संशयोत्पत्तिवेलायां निष्कम्पप्रवृत्तिप्रसङ्ग इति चेत् तत्र तावत् संशयस्य हि निष्कम्पप्रवृत्तिप्रतिवन्धकत्वमन्वयव्यतिरेकसिद्धमुभयसंमतं च ततश्च संशयसामग्र्यपि निष्कम्पप्रवृत्तिप्रतिवन्धिका स्यात्। तत्प्रतिवन्धकज्ञानसामग्र्या अपि तत्प्रतिवन्धकत्वात्। तथा च प्रथमक्षणे प्रामाण्यनिश्चयस्य संशयसामग्रीप्रतिवन्धकत्वात् कथं

प्रवृत्तिः स्यात्। ननु निश्चयसामग्र्या एव प्रतिबन्धकत्वमिति चेन्न तथात्वे विशेषादर्शनसहकृतसंशयप्रतिबन्धकनिश्चयं प्रति तत्सामग्र्या अप्रतिबन्धकत्वेन संशयदशायां स्थाण्विन्द्रियसंयोगादिमतः स्थाणुत्वस्मृतिमतश्च स्थाणुप्रत्यक्षप्रसङ्गात्। न च तत्र विशेषदर्शनविरहात्तत्प्रत्यक्षविरहः। तस्य त्वन्मतेपि प्रत्यक्षमात्रेऽनपेक्षितत्वात्। अन्यथा सर्वस्यापि प्रत्यक्षस्य विशेषदर्शनजन्यत्वेन तत्र प्रामाण्यसंशयाभावप्रसङ्गात्। न च संशयसामग्र्याः प्रबलत्वेन तत्र संशयस्यैवोत्पत्तिरिति वाच्यम्। तथात्वे तस्याः प्रतिबन्धकत्वपर्यवसानात्। अप्रबलस्य तदनुपपत्तेः। न च संशयादिसामग्र्यसहकृतस्यैवात्ममनः संयोगादेर्निश्चयसामग्रीत्वमिति वाच्यम्। अत्रापि संशयतत्सामग्र्यसहकृतमेव ज्ञानं स्वाश्रयप्रामाण्यनिश्चये निष्कम्पप्रवृत्तौ वा हेतुरिति तुल्योत्तरत्वात्। किं च किन्निश्चिते वस्तुनि संशय एवानुपपन्न इत्युच्यते किं वा प्रामाण्यसंशयाजन्यसंशयोऽनुपपन्न इति। नाद्यः। प्रामाण्यसंशयाधीनार्थसंशयानुभवविरोधात् त्वयानभ्युपगमाच्च। द्वितीयेपि किं प्रामाण्यसंशयस्तत्त्वेनैव विषयसंशयहेतुः उत दोषत्वेन। नाद्यः। संशयचातुर्विध्यप्रसङ्गेनापसिद्धान्तापातात्। ननु ज्ञानविषयत्वादिसमानधर्ममाश्रित्य प्रामाण्यसंशयस्तत्त्वेन हेतुरिति चेन्न—एवमपि कारणवैलक्षण्यप्रयुक्तकार्यवैलक्षण्यस्यावश्यकत्वेन संशयत्रैविध्यभङ्गप्रसङ्गात्। द्वितीये प्रामाण्यसंशयादिवार्थेन्यस्मादपि दोषान्निश्चितेपि प्रामाण्ये कथं न संशय उदीयात् कारणतावच्छेदकावच्छिन्नयत्किञ्चित्सहकृतकारणान्तरस्यावश्यं कार्यजनकत्वात्। वस्तुतस्तद्दोषस्यैव घटसंनिकर्षस्येव कारणत्वेपि विशेष्यसन्निकर्षत्वादिवदनुगतस्य दोषत्वस्य कस्य चिद्वक्तव्यत्वात्। अन्यथा प्रतिसंशयादिकार्यवैजात्योपलम्भप्रसङ्गात्। ननु निश्चिते वस्तुनि प्रामाण्यसंशयं विना संशयो न दृश्यत इति चेन्न—अदर्शनस्यासिद्धेः। यतः केनचित्पुरुषेण सुहृदागमने कथिते श्रोता तद्वाक्यादर्थं प्रतिपद्य तज्ज्ञानं

प्रमाणं नवेति संशयं विनैव दोषबलादर्थसंशयं ब्रवीति किमेतत्स-त्यमुत नेति। किञ्च परतः प्रामाण्यग्रहपक्षेऽनवस्था स्यात्। तथाहि निष्कम्पा प्रवृत्तिस्तावदर्थसद्भावनिश्चयजन्येति सर्वसंमतम्। तत्र किं गृहीतप्रामाण्यमेव ज्ञानमर्थनिश्चयात्मकमुतागृहीतप्रामाण्यमेव। अन्त्ये कुत्रापि ज्ञानप्रामाण्यसंशयो न स्यात्। ज्ञानमात्रेणार्थसद्भावस्य निश्चितत्वात्। न ह्यर्थसद्भावे निश्चितेपि ज्ञानप्रामाण्यसंशयो युज्यते। तस्य तदभावघटितत्वात्। करतलामलकादिज्ञाने तद्दर्शनात् प्रामाण्यावधारणवैयर्थ्यप्रसङ्गाच्च। आद्ये प्रामाण्यगोचरज्ञानस्यापि स्वार्थ-प्रामाण्यनिश्चयार्थं प्रमाणग्रहापेक्षणादनवस्था। ननु यत्र ज्ञानप्रामाण्ये संशयः तत्र ज्ञानप्रामाण्यनिश्चयाधीनोऽर्थनिश्चयः यत्र तु स न करतलामलकादिज्ञाने तत्र ज्ञानं स्वत एवार्थनिश्चयरूपं न प्रामाण्या-वधारणमपेक्ष्येति नानवस्था न वा प्रामाण्यनिश्चयवैयर्थ्यमिति चेन्न—संशयोत्पत्तेः पूर्वं घटादिज्ञानेनार्थसद्भावे निश्चिते तज्ज्ञान-प्रामाण्यसंशयस्यैवानुपपत्तेः। न च संशयसामग्र्या प्रतिबद्धत्वात् तज्ज्ञानस्य नार्थसद्भावनिश्चायकत्वमिति वाच्यम्। धर्मिज्ञानादेरभावेन संशयसाग्रया एव तदाभावात्। अन्यथा करतलामलकज्ञानेपि तत्सं-शयप्रसङ्गात्। न च तस्याभ्यासदशापन्नज्ञानत्वादेव न तत्र तत्संशय इति वाच्यम्। ज्ञानस्यैव संशयविरोधित्वात्। अभ्यासदशापन्न-त्वस्याप्रयोजकत्वात्। अभ्यस्तविषयेपि क्वचिद् रज्ज्वादिज्ञाने दोष-प्राबल्यात् प्रामाण्यसंशयविपर्ययदर्शनात्। अनभ्यासदशापन्नज्ञाने-प्यप्रामाण्यकोटिस्मरणादिविरहदशायामर्थं निश्चित्य निष्कम्पप्रवृत्ति-दर्शनात्। तथा च प्रामाण्यावधारणानर्थक्यानवस्थयोरन्यतरापत्तिः सुदृढैव। किं च यत्र ज्ञानप्रामाण्यावधारणं प्रवृत्त्यङ्गमित्युच्यते तत्रापि कथं तदवधारणं किं समर्थप्रवृत्तिजनकत्वेन किं वा गुणजन्य-त्वेन। नाद्यः। प्रवृत्तेः पूर्वं समर्थप्रवृत्तिजनकत्वस्य दुरवधारणत्वात्। प्रवृत्त्यनन्तरं च प्रामाण्यावधारणस्य प्रवृत्त्यनङ्गत्वात्। ननु तस्मि-

न्विषये तत्प्रकारकतयोत्पन्नज्ञानान्तरस्य निष्कम्पप्रवृत्त्यर्थं तदवधारण-मिति चेत् । नूनमयं गुदाञ्जनेन चक्षुरलंकर्त्तुमिच्छति तदर्थत्वे वा न प्रामाण्यावधारणस्य तदर्थत्वमावश्यकसमर्थप्रवृत्तिजनकत्वज्ञानेनैव पूर्वस्मिञ् ज्ञाने जाते न तत्समानविषयकतत्प्रकारकज्ञानान्तरस्य समर्थप्रवृत्तिजनकत्वं संशयविरहिततया स्वत एव निष्कम्पप्रवृत्त्युपपत्तेः । ननु समर्थप्रवृत्तिजनकत्वनिश्चयेन तत्संशयविरहेऽप्यप्रामाण्यशङ्कानिराकरणार्थं प्रामाण्यनिश्चयोऽपेक्षणीय इति चेत् । न समर्थप्रवृत्तिजनकत्वनिश्चयादेवाप्रामाण्यशङ्काया अपि विरहोपपत्तेः । ननु समर्थप्रवृत्तिजनकत्वस्य प्रामाण्यव्याप्यत्वज्ञानं विना तच्छङ्कानिराकरणं न भवति तद्व्याप्यत्वज्ञाने च प्रामाण्यज्ञानमवश्यं भवेदिति चेन्न । यदि हि समर्थप्रवृत्तिजनकत्वे निश्चितेपि तस्य प्रामाण्यव्याप्यत्वानिश्चयादप्रामाण्यसंशयो भवतीत्युच्यते । कामं भवतु नह्ययं संशयः स्वतो निष्कम्पप्रवृत्तिविरोधी किन्तु समर्थप्रवृत्तिजनकत्वसंशयजननद्वारा तज्जनकत्वं च निश्चितमेवेति किमप्रामाण्यसंशयनिवृत्त्या । अस्तु वा तद्व्याप्यत्वज्ञानमपि तथापि न प्रामाण्यनिश्चयः प्रवृत्त्यङ्गमावश्यकप्रामाण्यव्याप्ययथार्थप्रवृत्तिजनकत्वप्रकारकज्ञानादेव प्रवृत्त्युपपत्तेः ।

ननु सामग्र्याः सत्त्वात् प्रामाण्यज्ञानमपि भवत्येवेति चेत् जायतां नाम न ह्येतावता तत्प्रवृत्त्यङ्गं भवति । केवलव्यतिरेकाभावात् । नापि गुणजन्यत्वेनेति द्वितीयः । प्रमात्वनिश्चयात्पूर्वं तस्यैव दुरवधारणत्वात् । तस्यैव तदवच्छेदकत्वात् । तस्मात्परतः पक्षे प्रामाण्यावधारणस्य वैयर्थ्यादिदोषात् । स्वतः पक्षे च संशयाद्युपपत्तेः । स्वत एव प्रामाण्यावधारणमिति सिद्धम् । एवमुत्पत्तावपि तस्य स्वतस्त्वमाह–प्रामाण्यं स्यादिति । वस्तुस्थित्येति । उत्पत्तितोपि तस्या विद्यायाः प्रामाण्यं वस्तुस्थित्यापि स्वप्रयुक्तं नान्यतः तस्मान्न वक्तृसमवेतयथार्थज्ञानादिप्रयोज्यं प्रामाण्यमित्यर्थः । ज्ञानं यदा स्वकारणादुत्पद्यते तदा तन्मात्रादेव प्रमा भूत्वैवोत्पद्यत इति भावः । तदनेन प्रामाण्यस्योत्पत्तौ

स्वतस्त्वं नाम ज्ञानजनकसामग्रीमात्रप्रयोज्यत्वमित्युक्तं भवति तत्र दृष्टान्तमाह—शक्तिवदिति । यथाप्रामाण्यज्ञानं जन्यज्ञानग्राहकसामग्रीमात्रजन्यं तद्वत्प्रामाण्यमपि ज्ञानजनकसामग्रीमात्रप्रयोज्यमित्यर्थः । नन्विदमनुपपन्नं यत्प्रामाण्यं ज्ञानजनकसामग्रीमात्रप्रयोज्यमिति तथात्वे प्रमाऽप्रमावैलक्षण्यानुपपत्तेः । कार्यवैलक्षण्यस्य कारणवैलक्षण्यप्रयोज्यत्वादितिचेदुच्यते प्रामाण्यं ज्ञानजनकसामग्रीमात्रप्रयोज्यमेव । न च कार्यवैजात्यानुपपत्तिः । अप्रमायाः दोपजन्यत्वात् प्रमाया दोपासहकृतसामग्रीजन्यत्वात्कार्यवैजात्योपपत्तेः । न च प्रमायां गुणः कारणं तद्सहकृतसामग्री अप्रमायां कारणमिति वैपरीत्यं किं न स्यादिति वाच्यम् । पित्तादिदोपोत्कर्षेण भ्रान्त्युत्कर्षदृष्टेः पित्तादेरवश्यं तत्र हेतुत्वात् । न चैवं सन्निकर्षगुणोत्कर्षेण प्रमोत्कर्षाद् गुणोपि प्रमायां कारणमिति वाच्यम् । सन्निकर्षे ह्युत्कर्षचतुष्टयसन्निकर्पत्वमेव तच्च पुरुषत्वेन गृह्यमाणभेदान्धकारस्थस्थाणवादावपि विद्यते । अन्यथा तद्गतपरिमाणस्याग्रहणप्रसङ्गात् । ततः सत्यपि सन्निकर्षविशेपे दोपसद्भावेन प्रमाया अदर्शनात् । दोपासाहित्ये तु तत्रैव तस्मादेव सन्निकर्पादुत्तरक्षणे प्रमाया दर्शनात् व्यभिचारान्न सन्निकर्पविशेपो गुणः प्रमायां कारणम् । नचान्यो गुणः स्तम्भादिज्ञाने वक्तुं शक्यते । अतिनिकटदेशवृत्तित्वं गुण इति चेत् न तस्य पूर्वमपि सत्त्वात् । ननु प्रौढप्रकाशो गुण इति चेन्न । तस्य विस्पष्टरूपवत् ज्ञानमात्रकारणत्वात् । ननु दोपाभाव एव गुण इति चेन्न । दोपाभावस्य प्रतिवन्धकाभावत्वेनाकारणत्वात् । न हि प्रतिवन्धकाभावोपि कारणं सामग्र्यां सत्यां कार्योत्पादविरोधिन एव प्रतिवन्धकत्वेन तदभावस्य सामग्र्यनन्तर्भूतत्वात् । अन्यथा कारणीभूताभावप्रतियोगित्वेन प्रतिवन्धकत्वं प्रतिवन्धकाभावत्वेन कारणत्वमित्यन्योन्याश्रयात् । तस्यावच्छेदकत्वमात्रेणापि कार्यवैजात्यसिद्धौ तत्कारणत्वकल्पनावैयर्थ्याच्च । अवच्छेदकस्य दार्ढ्यं च नियतान्वयव्यतिरेकित्वं चोपपद्यते । एतेन विशेष्य-

सन्निकर्षस्य विशिष्टप्रत्यक्षमात्रे कारणत्वेपि दोषाभावजन्यत्वात् धर्म्यंशज्ञानस्य नियतप्रमात्वमिति निरस्तम् । किंच प्रामाण्यं नाम ज्ञानत्वावान्तरजातिः सा चाश्रयत्वेन व्यक्तिमात्रमपेक्षमाणा स्वरसतो निखिलानुभवमाश्रयते । न चाप्रमायामपि तद्वृत्तिप्रसङ्गः । तस्याज्ञानत्वात् । न चैवं धर्म्यंशज्ञानस्याप्यप्रमात्वप्रसङ्गः जातेरव्याप्यवृत्तित्वानुपपत्तेरिति वाच्यम् । एकस्य दोषतदभावजन्यत्वानुपपत्त्या ज्ञानैकत्वासिद्धेः धर्मिज्ञानस्येन्द्रियसन्निकर्षजन्यत्वादारोप्यज्ञानस्य तदभावेन तदभावाच्च । तथा च कथं प्रामाण्यस्य परतस्त्वम् । यत्तु पुनर्विशेषदर्शनस्य विशेषणप्रमात्वेन विशिष्टप्रमाकारणत्वमिति प्रमायाः गुणजन्यत्वमिति तदसत् विशेषणप्रमां विनापि विशेषणस्मृत्या विशिष्टप्रमादर्शनात् । ननु संशयोत्तरविशिष्टप्रमायां विशेषणप्रमात्वेन हेतुत्वमिति चेन्न—तत्रापि विशेषादर्शनप्रयोजकदोषे निवृत्ते तदसहकृतसामग्र्यैव पुरुषत्वादिस्मरणसहितया तद्विशिष्टप्रमोत्पत्त्युपपत्तेः । अस्मन्मते विशेषणज्ञानस्यानपेक्ष्यत्वाच्च । तस्माज्ज्ञानप्रामाण्यमुत्पत्तितोपि स्वत एवेति सिद्धम् ॥ २७७ ॥

एवं ज्ञप्त्युत्पत्त्योः प्रामाण्यस्य स्वतस्त्वमुक्त्वा फलेपि स्वतस्त्वमाह—

**ज्ञप्त्युत्पत्त्योर्यद्वदेव प्रवृत्ता-**
**वस्या युक्ता मानता स्वप्रयुक्ता ।**
**वेदोत्थाया बुद्धिवृत्तेर्न हीय-**
**मुत्पाद्याऽन्यत् संविदे काङ्क्षतीति ॥ २७८ ॥**

ज्ञप्त्युत्पत्त्योरिति । प्रवृत्तिः प्रवृत्त्यनुकूला विषयाभिव्यक्तिः प्रामाण्यस्य स्वतस्त्वमेवं स्वत एव फलं जनयतीति तदंशेपि स्वत एव प्रामाण्य-

मित्यर्थः। तदेव व्यतिरेकमुखेनाह—न हीति। इयं बुद्धिवृत्तिः उत्पाद्या-न्यत् विषयाभिव्यक्तिलक्षणादुत्पाद्यादन्यत् संविदे विषयाभिव्यक्ति-लक्षणफलाय न काङ्क्षतीति कृत्वा स्वप्रयुक्ता मानतेति सम्बन्धः। उत्पद्यान्यदिति पाठे व्यस्तं पदं स्वोत्पत्तिव्यतिरेकेणान्यन्नापेक्षत इत्यर्थः॥ २७२॥

तस्मात् स्वतःप्रामाण्यादेव वेदप्रामाण्यसिद्धेरन्यथा च तदसंभ-वान्नामरूपकर्मात्मकस्य जगतोऽबुद्धिपूर्वकैव सृष्टिरित्युक्तमेव युक्तम्। ततश्च वेदस्य पौरुषेयत्वानुमानमागमबाधितं मिथ्यैवेत्युपसंहरति—

**विश्वं विष्णोरुत्पतन्नामरूपं**
**निश्वासादिप्रख्यमित्याह वेदः।**
**यत्तत्तथ्यं वर्त्मना वर्णितेन**
**तस्मान्मिथ्या पौरुषेयानुमानम्॥ २७३॥**

विश्वमिति। उत्पतत् जायमानं नामरूपं नामरूपकर्मात्मकं निश्वासा-दिप्रख्यं निश्वासेक्षणादितुल्यं वेदः अस्य महतो भूतस्येत्यादि वेदः विष्णोरुत्पन्ना तमरूपविश्वंनिश्वासादिप्रख्यमित्याह यत्तद्वर्णितेन वर्त्मना तथ्यं तस्मात्पौरुषेयानुमानम् ननु लौकिकवचसामित्यादि-नोक्तं पौरुषेयत्वानुमानं मिथ्या आगमबाधितविषयत्वादिति-सम्बन्धः॥ २७३॥

एवं च प्रथमपादोक्तानपेक्षत्वलक्षणप्रामाण्यं न सिद्ध्येदिति यदुक्तं तदपि परिहृतमिति परमप्रकृतमुपसंहरति—

**परिणामविवर्तयोरतः**
**परिक्लृप्तावपि वेदगोचरः।**

न च चोद्यलवोऽपि विद्यते
कथितेनैव पथाऽनपेक्षितः ॥ २७४ ॥

परिणामेति । परिणामविवर्त्तयोः परिक्लृप्तावपि परिणामाश्रयणेपि विवर्त्ताश्रयणेपि वेत्यर्थः। अत इत्यादौ योजनीयम्। यस्माद्बुद्धिपूर्वैव सृष्टिः अतः सकलस्यापि जगतो जन्यत्वे वेदस्यापि तदन्तर्भूतस्य जन्यतयानपेक्षलक्षणस्वतः प्रामाण्यं न स्यादिति वेदविषयेयच्चोद्यमुक्तं तस्य गन्धोपि नास्ति। उक्तेन मार्गेणाबुद्धिपूर्विकैव सृष्टिरित्युक्तप्रकारेणानपेक्षतायाः सत्त्वादित्यर्थः । तस्मात्कार्यकारणादिव्यवहारस्य मायामात्रत्वादीश्वरत्वसाक्षित्वादेश्च सापेक्षतया कल्पितत्वेन ब्रह्मस्वरूपत्वानुपपत्तेः सर्वविकल्पनारहितं नित्यशुद्धबुद्धमुक्तस्वभावमद्वितीयं ब्रह्म तत्पदलक्ष्यमिति सिद्धम् ॥ २७४ ॥

एवं पदद्वयोपादेयं लक्ष्यमर्थं प्रदर्श्य पदत्रयोपादेयमप्येकमेवेति दर्शयितुं पदद्वयलक्ष्यस्य पदद्वयवाच्यार्थसम्बन्धप्रदर्शनाय पदद्वयवाच्यं च दर्शयितुमादौ तच्छब्दसम्बन्धिपदार्थं सामान्यतो विभज्य दर्शयति—

उपाधिमौपाधिकमान्तरं चि-
दाभासनं चित्प्रतिबिम्बकं च ।
चिद्बिम्बमेवं चतुरः पदार्था-
न्विविच्य जानीहि तदर्थभाजः ॥ २७५ ॥

उपाधिमिति । तदर्थभाजः तच्छब्दस्यार्थमर्थत्वं भजन्त इति तदर्थभाजः तच्छब्दाभिधेयान् चतुरः पदार्थान् एवं विविच्य जानीहीति सम्बन्धः। एवंशब्दार्थमाह—उपाधिमिति । उपाधिरेकः पदार्थः औपा-

धिकमान्तरं चिदाभासनमेकः पदार्थः। औपाधिकम्–उपाधिजन्यम् आन्तरम्–उपाध्यन्तर्गतम् चिदाभासनं चैतन्यस्योपाधिसन्निधिवशादुपाधिस्थत्वन्नाम धर्मो जायते स एव चिदाभासो नामात एव निगमनावसरे दृष्टान्तदार्ष्टान्तिकयोरप्पात्रगतत्वं पुरःस्थत्वमित्युपाधिस्थत्वमेव। आभासस्थानमाह–आन्तरमित्यादिकं प्रतीत्यनुरोधेन द्रष्टव्यम्। चित्प्रतिविम्बनमित्येकः पदार्थः। आभासविशिष्टचैतन्यचित्प्रतिविम्वनमित्यर्थः। चिद्बिम्बमित्येकःपदार्थः आभासादिसम्बन्धरहितमनवच्छिन्नचैतन्यमात्रं चिद्बिम्बमित्यर्थः॥ २७५॥

एवं तत्पदसंबन्धिपदार्थं सामान्यतो विभज्य त्वंपदसम्बन्धिपदार्थमपि सामान्यतो विभजते—

**तथा त्वमर्थेऽपि चतुष्टयं तद्**
**विवेचनीयं निपुणेन भूत्वा।**
**मतिश्चिदाभासनमेवमस्यां**
**बिम्बं तदीयं प्रतिबिम्बकं च॥ २७६॥**

तथेति। तथा तत्पदार्थ इव त्वमर्थे त्वंपदार्थेपि तच्चतुष्टयं निपुणेन भूत्वा सावधानेन स्थित्वा विवेचनीयमिति सम्बन्धः। तदेव पदार्थचतुष्टयमाह—मतिरिति। मतिशब्द–उपाधिपरः अयमेकः पदार्थः। एवं चिदाभासनमित्यपरः पदार्थः। अत्रापि चिदाभासनं नामचैतन्यस्योपाधिस्थत्वमस्यामिति प्रतीत्यनुरोधेनेति द्रष्टव्यम्। स्त्रीलिङ्गनिर्देशस्तु मतिशब्दसन्निधानात्। विम्वमित्येकः पदार्थः शुद्धचैतन्यमित्यर्थः। तदीयं प्रतिविम्वं चैकःपदार्थः। तदीयं शुद्धचैतन्यसम्वन्धिप्रतिविम्वकमाभासविशिष्टचैतन्यमित्यर्थः॥२७६॥

एवं सामान्यतः पदद्वयसम्वन्धिपदार्थं विभज्य तत्पदार्थे उपाध्यादिस्वरूपं विशेषतो दर्शयति—

उपाधिरज्ञानमनादिसिद्ध-
मस्मिंश्चिदाभासनमीश्वरत्वम् ।
तदन्विता चित्प्रतिबिम्बकं स्या-
दुदीर्यते शुद्धचिदेव बिम्बम् ॥ २७७ ॥

उपाधिरिति । अज्ञानमिति सत्त्वप्रधानमज्ञानमुच्यते । अनादिसिद्धं शुद्धचैतन्येऽनादित्वेनाध्यस्तं तस्मिन् अज्ञाने ईश्वरत्वमीश्वरत्वप्रयोजकमित्यर्थः । अत्रापि तस्मिन्निति प्रतीत्यनुरोधेनोपाधिस्थत्वमीश्वरत्वप्रयोजकमित्यर्थः । तदन्विता आभासविशिष्टा । तदनेन शुद्धचैतन्याध्यस्तोपाधिसन्निधिवशात् तद्गतत्वेन प्रतीयमानं चैतन्यं प्रतिबिम्ब ईश्वर इति व्यवह्रियते । स एव तत्पदवाच्यार्थ इत्युक्तं भवति । बिम्बस्वरूपमाह उदीर्यते शुद्धचिदेवेति । शुद्धत्वं चाभासानन्वितत्वं तदनेन तत्पदलक्ष्यार्थो दर्शितो भवति ॥ २७७ ॥

इदानीं त्वंपदार्थेऽप्युपाध्यादिस्वरूपं विशेषतो दर्शयति--

उपाधिरन्तःकरणं त्वमर्थे
जीवत्वमाभासनमत्र तद्वत् ।
तदन्विता चित्प्रतिबिम्बमेव-
मनन्वितां तामिह बिम्बमाहुः ॥ २७८ ॥

उपाधिरन्तःकरणमिति । अत्रान्तःकरणे आभासनं चैतन्यस्यान्तःकारणस्थत्वमित्यर्थः । जीवत्वं जीवत्वव्यवहारप्रयोजकमित्यर्थः । तद्वत्-यथा चैतन्यस्याज्ञानस्थत्वमीश्वरत्वप्रयोजकं तद्वदित्यर्थः । तदन्विता जीवत्वव्यवहारप्रयोजकोपाधिस्थत्वलक्षणाभासान्विता तदनेनान्तः-

करणसन्निधिवशात् तत्स्थत्वेन प्रतीयमानं चैतन्यं प्रतिविम्बं जीवव्यवहारभाक् त्वंपदवाच्यमित्युक्तं भवति । विम्बस्वरूपमाह—एवमिति । यथा अज्ञानचिदाभासानन्विता चित् तत्पदार्थविम्बमेवमन्तःकरणचिदाभासानन्वितां चितं बिम्बमाहुरित्यर्थः । तदनेन त्वंपदलक्ष्यार्थो दर्शितः । अर्थात् पदद्वयलक्ष्यमप्येकमेवेत्युक्तं भवति ॥ २७८ ॥

एवं चातुर्विध्यं प्रदर्श्य बुद्धिसौकर्यार्थं पदद्वयार्थेऽपि हेयमुपादेयं च विभजते—

**उपाधिना सार्धमुपाधिजन्य-**
**मौपाधिकं सर्वमवेहि मिथ्या ।**
**भागं मृषा चित्प्रतिबिम्बकेऽपि**
**बिम्बं पुनः सत्यमशेषमेव ॥ २७६ ॥**

उपाधिनेति । अज्ञानमन्तःकरणं चोपाधिरज्ञानस्थत्वमन्तःकरणस्थत्वं च चिदाभासनं सर्वात्मना मिथ्यैवावेहि । न तत्र वाक्यार्थोपयोगित्वेनोपादेयांशोऽस्तीत्यर्थः । पदार्थद्वयं वाक्यार्थोपयोगित्वेनोपादेयं न भवतीत्युक्ते चित्प्रतिबिम्बादिकं किमुपादेयमेवेत्याशङ्क्य सत्यं न सर्वात्मना चित्प्रतिबिम्बमुपादेयं किंत्वंशेनेत्याह—भागमिति । चित्प्रतिबिम्बके उपाधिस्थत्वलक्षणाभासविशिष्टे चैतन्ये भागमाभासांशं मृषा अवेहीत्यनुषङ्गः । तर्हि किं बिम्बमप्यंशेनैवोपादेयं न किन्तु सर्वात्मनेत्याह—बिम्बं पुनरिति । उपाधिद्वयतत्स्थत्वलक्षणाभासद्वयानन्वितं चैतन्यमित्यर्थः । अशेषं सर्वात्मना सत्यमवेहीत्यनुषङ्गः । तथा च पदद्वयलक्ष्यमपि चिन्मात्रमितिसिद्धम् ॥ २७६ ॥

तदेतदुपाध्यादिचातुर्विध्यं नोत्प्रेक्षामात्रकल्पितं किन्तु लोकसिद्धमेवेति विवक्षन् लोकप्रसिद्धमुदाहरणमाह—

अप्पात्रमप्पात्रगतत्वमेव
मप्पात्रगोऽप्पात्रगताद्बहिश्च ।
दिवाकरो दिव्यवतिष्ठमानो
न शक्यतेऽपोहितुमिद्धतेजाः ॥ २८० ॥

अप्पात्रमिति । जलपात्रमित्यर्थः । अनेनोपाधिनिर्देशः । अप्पात्रगतत्वमित्याभासनिर्देशः । अप्पात्रग इति प्रतिबिम्बनिर्देशः । अप्पात्रगतत्वेन प्रतीयमानः अप्पात्रगतात् बहिरित्यादिना बिम्बनिर्देशः ॥ २८० ॥

तथा च यथोपाधितत्स्थत्वतदन्वितव्यतिरेकेण केवलं सूर्यबिम्बमस्ति न तु नेति शक्यं वक्तुं तद्वदुपाधितत्स्थत्वतदन्वितचैतन्यव्यतिरेकेण तदनन्वितं केवलचैतन्यं बिम्बमस्त्येव न निराकर्तुं शक्यमिति दार्ष्टान्तिकमाह—

पुरं पुरःस्थत्वमथो पुरःस्थं
पुराद्बहिः शुद्धमवस्थितं च ।
तथा परं ब्रह्म सुसूक्ष्मयाऽपि
धिया निराकर्तुमशक्यमेव ॥ २८१ ॥

पुरमिति । अज्ञानान्तःकरणलक्षणम् ॥ २८१ ॥

एवं प्रसङ्गागतं विचारं परिसमाप्य प्रकृतं न स्थानत इति सूत्रसिद्धं ब्रह्मणो निर्विशेषत्वं सिद्धमित्युपसंहरति –

न स्थानतोऽप्यस्ति परस्य तस्मा-
द्विशेषयोगः परमार्थरूपः ।

स्वतः पुनर्दूरनिरस्तमेव
परस्य तत्त्वस्य विशेषवत्त्वम् ॥ २८२ ॥

न स्थानत इति । तस्मादित्यादौ योजनीयमीश्वरत्वकारणत्वादेराविद्यकत्वं तच्छब्दार्थः । उक्तार्थः श्लोकः ॥ २८२ ॥

सर्वासामपि श्रुतीनां निर्विशेषब्रह्मपरत्वावगमात् निर्विशेषमेव ब्रह्म प्रतिपत्तव्यमिति "अरूपवदेव हि तत्प्रधानत्वादि" तिसूत्रसूचितां युक्तिं प्रपञ्चयति ।

श्रुतेश्च तात्पर्यमखण्डरूपे
परे पुरस्तादुपपादितं च ।
ततोऽपि तस्याद्वयरूपतोऽन्य-
द्रूपान्तरं कल्पयितुं न शक्यम् ॥ २८३ ॥

श्रुतेश्चेति । तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमित्यादिश्रुतेः परे परात्मनि पुरस्तात् प्रथमाध्याये ततः निर्विशेषब्रह्मणि वेदान्ततात्पर्यवर्णनात् अपि शब्दात् "न स्थानत" इति सूत्रोक्तयुक्तेश्चेत्यर्थः । तस्य परस्य ॥ २८३ ॥

ननु सविशेषश्रुतीनामपि सत्त्वात् कथमखण्डब्रह्मसिद्धिरित्याशङ्क्य तासामर्थवादत्वेनान्यपरत्वान्मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यतीति निषिध्यमाननिष्प्रयोजनसविशेषपरत्वानुपपत्तेश्च न निर्विशेषब्रह्मसिद्धिविघातकत्वमिति पूर्वोक्तमपि न्यायान्तरं वक्तुमाह—

भेदश्रुतिस्त्वन्यपरा समस्ता
समस्तवेदेषु न तत्पराऽसौ ।

अतत्परा तत्परवेदवाक्यै-

र्विरुध्यमाना गुणवाद एव ॥ २८४ ॥

भेदश्रुतिरिति । ऐश्वर्यादिविशेषश्रुतिः अन्यपरा विद्याप्रशंसापरा लोकसिद्धं विशेषानुवादेनाज्ञातनिर्विशेषब्रह्मप्रतिपादनपरा वा तत्परा भेदपरा असौ भेदश्रुतिः । ननु देवताधिकरणन्यायेन भेदश्रुतीनामपि प्रतीयमानार्थपरत्वं किन्न स्यात् । न तत्परनिर्विशेषप्रतिपादकवेद-वाक्यविरोधादतो गुणवादत्वमेव युक्तमित्याह– अतत्परेति । गुण-वादः—अविद्यमानार्थवादः ॥ २८४ ॥

ननु सविशेषवाक्यविरोधान्निर्विशेषवाक्यमेव गुणवादः किं न स्यादित्याशङ्क्य निर्विशेषवाक्यस्य फलवदज्ञातार्थज्ञापकत्वादनेक-विधन्यायानुगृहीतत्वाच्च विधित्वाद्विधिविरोधेऽर्थवादस्यैव गुणे त्व-न्याय्यकल्पनेति न्यायेनान्यार्थौचित्यान्न विधिबाधकत्वमित्याह—

न ह्यर्थवादा विधिभिर्विरुद्धा

विध्यर्थसंकोचकरा भवन्ति ।

किंतु प्रधानानुगुणं यदेषा-

मालम्बनं तत्खलु कल्पनीयम् ॥ २८५ ॥

न ह्यर्थवादा इति । विध्यर्थसंकोचकराः विध्यर्थबाधकाः तर्हि किं निरालम्बनत्वमेव तेषां प्रधानानुगुण्येन कथं चित्सालम्बनत्वं कल्प-नीयमित्याह—किन्त्वित्यादिना । एषां सविशेषश्रुतीनामालम्बनं विषयः अर्थवादानां यस्मिन्नर्थे परिगृहीते प्रधानानुगुण्यं भवति तत्परत्व-मेव कल्पयितुमुचितमित्यर्थः ॥ २८५ ॥

प्रधानविरोधे गुणस्यान्यार्थत्वमेव न तु प्रधानसंकोचकरत्वमित्येतत्पूर्वतन्त्रेपि सिद्धमित्याह—

**यथा ह्यजक्षीरविधेः समीपे**
**यज्जर्तिलादेः परिकीर्त्तनं तत् ।**
**प्रधानसंकोचभयादपास्य**
**स्वमर्थमासीद् गुणवाद एव ॥ २८६ ॥**

यथेति । अजक्षीरविधेरजक्षीरेण जुहोतीत्यस्य विधेः समीपे प्रकरणे जर्तिलादेः जर्तिलमित्यारण्यतिलनाम आदिपदेन गवीधुकस्य ग्रहणं तदुभयस्य यत्-परिकीर्त्यतेऽनेनेति परिकीर्त्तनं जर्तिलयवाग्वा वा गवीधुकयवाग्वा वा जुहुयादित्यादिजर्तिलादिवाचकवाक्यमित्यर्थः । तत्परिकीर्त्तनं प्रधानसंकोचत्वभयात् प्रधानस्य प्रकरणिनोऽजक्षीरहोमस्य बाधभयात् स्वमर्थमपास्य जर्तिलादिहोमरूपमर्थं विहाय गुणवादः अजक्षीरहोमस्तुतिपर एवासीदित्यर्थः । ॥ २८६ ॥

अजक्षीरेण जुहोतीत्यस्मिन् प्रकरणे जर्तिलयवाग्वा वा गवीधुकयवाग्वा वा जुहुयादिति श्रूयते तत्र जर्तिलादिवाक्यस्यापि स्वार्थविधायकत्वे जर्तिलयवाग्वादेरपि होमद्रव्यत्वाश्रयणेनोत्पत्तिविशिष्टस्याजक्षीरस्य विकल्पप्राप्त्या पाक्षिकबाधो भवेत् । न च तद्युज्यते । तस्य प्रकरणित्वात् जर्तिलादिहोमस्यानाहुतित्वेन निन्दितत्वेनाप्रकरणित्वात् । तथा च यथा प्रधानबाधभयात् जर्तिलादिवाक्यानां गुणवादेन अजक्षीरहोमस्तावकत्वमाश्रितं तद्वत्सविशेषवाक्यानामपि निर्विशेषवाक्यविरुद्धानां गुणवादेन स्तावकत्वमेव युक्तमित्याह—

**एवं सतीहापि विरुध्यमानं**
**वचो यदद्वैतपरैर्वचोभिः ।**
**तदस्तु गौणं यदि वा परस्य**
**मायाप्रसूतद्वयवादिमुख्यम् ॥ २८७ ॥**

एवं सतीति । प्रधानविरोधे गुणस्यान्यार्थत्वे सतीत्यर्थः । इह-वेदान्तेपि । अद्वैतपरैरस्थूलादिवचोभिर्विरुध्यमानं यद्वचः सविशेषश्रुतिः तद्गौणं गुणवाद एवास्तु । अथवा—सविशेषवाक्यमपि मायामयसविशेषपरं भवतु । न चैतावता प्रधाननिर्विशेषवाक्यविरोधः । तस्य वस्तुतो निर्विशेषपरत्वेनाविरोधात् । न च कल्पितार्थविषयत्वे वेदस्याप्रामाण्यमिति शङ्क्यं व्यवहारसमर्थार्थत्वेन प्रमेयबाधाभावात् । न च तत्र तस्य प्रयोजनाभावः । निषेध्यसमर्पकतया निर्विशेषैकवाक्यत्वेन कथंचित् फलवत्त्वात् । तथा च वाक्ये द्वयस्यापि मुख्यार्थत्वे संभवति अन्यतरस्य गौणार्थत्वकल्पनमयुक्तमित्यभिप्रेत्याह—यदि वेति । वच इत्यनुषङ्गः । परस्य ब्रह्मणो मायाप्रसूतद्वयवादिमायाजन्यविशेषपरं सत् मुख्यं मुख्यार्थमस्त्वित्यर्थः ॥ २८७ ॥

ननु भेदश्रुतेः स्वार्थपरत्वमिष्यते चेत्तर्हि तदर्थस्य वास्तवत्वमङ्गीक्रियतामिति चेत् सविशेषश्रुतीनां मायिकार्थपरत्वेनैव मुख्यार्थत्वं वक्तव्यम् । अन्यथा निर्विशेषश्रुतिराशीनां विना निमित्तं तत्पराणां भङ्गः स्यादित्याह—

**भेदश्रुतिः कल्पितमेव भेद-**
**मालम्ब्य मुख्यार्थवती भवित्री ।**
**अतत्परा तत्परवाक्यभङ्ग-**
**स्त्वतोऽन्यथा याति विना निमित्तम् ॥२८८॥**

भेदश्रुतिरिति। भवित्री भवितुं योग्या, इतोऽन्यथा वास्तवार्थपरत्वे इत्यर्थः। अतत्परादर्थवादरूपात् भेदवाक्यात् तत्परवाक्यभङ्गं निर्विशेष-ब्रह्मपरवाक्यभङ्गं निमित्तं विना बलवद्बाधकं विना याति प्राप्नोति निर्विशेषश्रुतिराशिरिति शेषः। भङ्ग इति पाठे आयातीति च्छेदः। ननु निष्प्रपञ्चश्रुतिरप्युपासनापरा किं न स्यादिति चेन्न तथात्वे पौनःपुन्येन प्रपञ्चनिषेधवैयर्थ्यादारोपेणापि तदुपपत्तेः। अभ्यासे हि भूयस्त्वमर्थस्येति न्यायेन निष्प्रपञ्चवाक्यस्य फलवत्स्वार्थपरत्व-मेवेति न तदन्यपरमिति॥ २८८॥

ननु भेदश्रुतीनामर्थवादत्वेन तत्परत्वाभावेप्युपासनावाक्यानां विधित्वेनार्थवादत्वाभावात् पुरुषार्थपरत्वाच्च तत्र श्रुतं सर्वगन्धादि-विशेषरूपं वस्तु सदेवेत्याशङ्क्याह—

**यदपि किंचिदुपासननिष्ठिता-**
**द्वचनतः प्रतिभाति परात्मनः।**
**सकलगन्धरसादिमयं वपु-**
**स्तदपि कल्पितभेदसमाश्रयम्॥ २८९॥**

यदपीति। उपासननिष्ठितादुपासनविषयात् वचनतः सर्वकर्मा सर्वकाम इत्यादिवाक्यात्परमात्मनस्तदपि किंचिद्वपुः स्वरूपं प्रति-भातीति सम्बन्धः। यच्छब्दार्थमाह सकलेति। सकलगन्धमयं सकल-रसमयम्, आदिपदेन सकलकर्मादिमयं चेत्यर्थः। तदपि तादृशं वपुरपि कल्पितभेदसमाश्रयं न तु वस्तुसदित्यर्थः। निरवयवस्य सकलगन्धा-दिपरिणामानुपपत्तेरित्यर्थः।॥ २८९॥

हेत्वन्तरमाह—

न खलु निर्गुणवस्तुपरं वचः
सगुणवाक्यविरोधनिमित्ततः ।
स्वविषयादपसारयितुं बला-
दतिबलिष्ठपदान्वयमिष्यते ॥ २९० ॥

न खल्विति । बलाद्बाधकं विनेत्यर्थः । अतिबलिष्ठपदान्वयम्–अतिबलिष्ठ तात्पर्यग्राहकानेकलिङ्गोपोद्बलितः पदान्वयो यस्य वस्तुपरवचसः तत्तथोक्तं सर्वगन्धादेर्वस्तुसत्त्वे हि परमपुरुषार्थनिर्गुणवाक्यार्थबाधः स्यात् । न च तद्युज्यते । तस्य तात्पर्यग्राहकानेकलिङ्गोपोद्बलितत्वेन प्रबलत्वादितरस्य तद्विहीनत्वेन दुर्बलत्वादारोपितविशेषैरुपासनोपपत्तेस्तत्त्वप्रमितेस्तथाभावायोगाच्चेत्यर्थः । विना निमित्तं बाधानुपपतेः ॥ २९० ॥

तस्मान्निर्गुणश्रुतिवचोभिः सिद्धनिर्विशेषमेव ब्रह्मस्वरूपं वास्तवमितिशोधिततत्पदार्थं दर्शयति—

तस्मात्तत्परवेदवाक्यगतिभिर्न्यायेन चाऽऽत्मप्रभं
सर्वद्वैतविवर्जितं विगलितध्वान्तं शिवं शाश्वतम् ।
प्रत्यग्रूपमरूपगन्धरसकं तच्छब्दवाच्यस्थितं
वाक्यार्थान्वयि लक्षितं भगवतो विष्णोः पदं गृह्यताम्
॥ २९१ ॥

तस्मादिति । सर्वश्रुतीनान्निर्विशेषब्रह्मपरत्वं दृग्दृश्ययोर्धर्मधर्मिभावानुपपत्तिश्च तच्छब्दार्थः । वाक्यगतिः–वाक्यव्यापारः, उपक्रमादिलिङ्गैर्वेदान्तवाक्यतात्पर्यपर्यालोचनयेत्यर्थः । न्यायेनौपाधिक-

स्योपाधेश्च मिथ्यात्वसाधनायोक्तन्यायेन प्रधानविरोधादिन्याय-विरोधेन चेत्यर्थः। आत्मप्रभं स्वप्रकाशं तच्छब्दवाच्यस्थितं तच्छब्दवाच्येऽज्ञानतत्स्थत्वलक्षणाभासविशिष्टप्रतिविम्बचैतन्येऽधिष्ठानत्वेनानुस्यूतमिति ब्रह्मस्वरूपलक्षणायाः सम्बन्धो दर्शितः। तत एव लक्षितं लक्षणावृत्त्या प्रतिपादितम् ॥ २९१ ॥

एवं शोधिते तत्पदलक्ष्ये प्रमाणत्वेन श्रुतिमुदाहरति—

**अशब्दमस्पर्शमरूपमव्ययं**
**तथाऽरसं नित्यमगन्धवच्च यत् ।**
**अनाद्यनन्तं महतः परं ध्रुवं**
**निचायनीयं पदमीदृशं हरेः ॥ २९२ ॥**

अशब्दमिति। महतः महतत्त्वात् परमव्यक्तं व्यावर्त्तयति—ध्रुवमिति। निचायनीयं ज्ञातव्यम् ॥ २९२ ॥

श्रुत्यन्तरमप्याह—

**भोक्ता भोग्यं प्रेरितारं च मत्वा**
**सर्वं प्रोक्तं त्रिविधं ब्रह्म मे तत् ।**
**जीवेशानौ सृज्यमानं जगच्च**
**शुद्धं ब्रह्मेत्याह वेदान्तवाक्यम् ॥ २९३ ॥**

भोक्तेति। श्रुत्यर्थमाह—जीवेशानाविति। जीवेशानजगद्रूपेण त्रिविधोपि प्रपञ्चः शुद्धब्रह्मात्मक एव न तु पृथक् सन् तथा च ब्रह्मैव परमार्थस्वरूपमित्यर्थः ॥ २९३ ॥

एवं पदार्थद्वये शोधिते शोधितपदार्थातिरिक्तवाक्यार्थाभावात् तावतैव कृतार्थतेति बुद्ध्वा शिष्ये तूष्णींभावमुपेयिषि परमकृपालुराचार्यः यद्यपि शोधितपदार्थान्न वाक्यार्थोऽतिरिच्यते तथापि न पदार्थज्ञानमात्रेण कृतार्थता तस्य परोक्षत्वेन प्रमाणाजन्यत्वेन चाविद्यानिवर्त्तकत्वायोगादतो वाक्यार्थप्रतिपत्त्यापि भवितव्यमिति स्वयमेवाह—

पदार्थबोधेन कृतार्थता न ते
मतिः परोक्षा हि पदार्थगोचरा ।
अतो महावाक्यनिबन्धनैव धी-
रबोधविच्छेदकरी भविष्यति ॥ २६४ ॥

पदार्थेति । कृतार्थता प्राप्तपुमर्थता नास्ति । तत्र हेतुः—मतिरिति । पदार्थगोचरमतेः पारोक्ष्यं तर्कादिनोत्पद्यमानत्वात् । फलितमाह—तत इति । यतः पदार्थगोचरमतेः परोक्षत्वेन पुमर्थसाधनत्वाभावः ततो महावाक्यनिबन्धना तत्त्वमादिवाक्यजन्यैव धीः अखण्डसाक्षात्कारः अबोधच्छेदकरी अज्ञानस्य विशेषेण छेदकरी निरन्वयनाशकरीत्यर्थः । तदुक्तं "तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः । अविद्या सहकार्येण नासीदस्ति भविष्यती"ति । ननु सत्यादिवाक्येनापि परिपूर्णब्रह्मप्रमितिजननात्तस्य च तत्त्वमादिवाक्यात्पूर्वमेव स्वार्थबोधकत्वात् किं तत्त्वमादिवाक्येनेति चेन्न । प्रत्यग्ब्रह्मैक्यापरिज्ञानविलसितानर्थस्य तदाकारप्रमितिं विना निवृत्त्ययोगात्सत्यादिवाक्यस्य च ब्रह्मप्रमितिजनकत्वेपि प्रत्यग्ब्रह्मैक्याकारप्रमितिजनकत्वाभावात् तत्त्वमादेश्च तदाकारप्रमितिजनकत्वान्न वैयर्थ्यम् । अत एव तस्यैव महावाक्यत्वं फलवत्प्रमितिजनकस्यैव महावाक्यत्वात् । नचैवं सत्यादिवाक्यस्य वैयर्थ्यमेव पदार्थशोधनद्वारोपयोगादिति भावः ॥ २६४ ॥

ननु तत्त्वमसिवाक्यस्यापि न फलवत्प्रमितिजनकत्वं तथात्वे तद्वाक्यं शृण्वतां स्त्रीशूद्रादीनामपि तदुत्पादप्रसङ्गात् । अयमात्मा ब्रह्मेत्यादिवाक्यान्तरस्यापि सत्त्वे तस्य प्रमितिजनकत्वायोगाच्च । न ह्येकस्मिन्नर्थेऽनेकवाक्यजन्यज्ञानं प्रमितिर्भवति किंत्वनुवाद एव । नचैकस्य तत्त्वमसिवाक्यमपरस्य चापरं प्रमितिजनकमिति शक्यं वक्तुं विशेषे प्रमाणाभावात् तत्सद्भावेपि श्रुतवाक्यानामपि बहूनां यथापूर्वं संसारोपलब्धेश्चेत्याशङ्क्याह—

**स्वाध्यायधर्मपठितं निजवेदशाखा-**
**वेदान्तभूमिगतमादरपालितं च ।**
**संन्यासिना परदृशा गुरुणोपदिष्टं**
**साक्षान्महावचनमेव विमुक्तिहेतुः ॥ २६५ ॥**

स्वाध्यायेति । उपनयनगुरुशुश्रूषासमिदाधानादिस्वाध्यायाध्ययनानुकूलो धर्मः स्वाध्यायधर्मस्तेन पठितमधीतं चोपनयनगुरुशुश्रूषादिपूर्वमधीतवाक्यमेव फलवत्प्रमितिं जनयति न श्रूयमाणमात्रं स्त्रीशूद्रयोश्चोपनयनाद्यभावात् "प्रणवं सावित्रीं यजुर्लक्ष्मीं स्त्रीशूद्राय नेच्छन्ति" स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा"इति निषेधाच्च। न विहिताध्ययनमस्तीति न तत्त्वमसिवाक्यश्रवणेन विद्योत्पत्तिरिति भावः। यदुक्तं पुरुषभेदेन तत्त्वमादिवाक्यं फलवत्प्रमितिं जनयतीत्यत्र प्रमाणाभाव इति तदसत् स्वस्वशाखागतत्वस्यैव नियामकत्वादित्याह—निजवेदशाखावेदान्तभूमिगतमिति । उचितं चैतत्तस्यैव प्रथमं पठ्यमानत्वेन प्रमितिजनकत्वात् । यदुक्तं श्रुतवाक्यानामपि यथापूर्वं संसारोपलब्धिरिति न वाक्यं फलवत्प्रमितिजनकमिति तदसत् विवेकादिहीनस्याश्रद्धादिना सकृत्पठितवाक्यात्तदसंभवेपि विवेकादिसाधनचतुष्टयवतः परमहंसपरिव्राजकस्य श्रद्धादिपूर्वमसकृदभ्य-

स्तद्वाक्यात्तदुत्पत्त्युपपत्तेरित्याह—आदरपालितं च सन्यासिन इति । आदर-पालितं श्रद्धयाभ्यस्तं संन्यासिन इति साधनचतुष्टयसंपन्नाधिकार्युपलक्षणम्। एवं करार्पितस्फटिकवत् साक्षाद्ब्रह्मानुभववता युक्तिकुशलेन गुरुणोपदिष्टमेव वाक्यं फलवत्प्रमितिसाधनं श्रोत्रियं ब्रह्मनिष्ठमिति गुरुविशेषणश्रवणात् न तु शास्त्रपाठादिना ब्रह्मविद्धन्मन्यमानेनोपदिष्टमित्यभिप्रेत्याह—परदृशा गुरुणोपदिष्टमिति । परदृशा ब्रह्मात्मापरोक्षज्ञानिना, महावचनं तत्वमादिमहावाक्यमेव विमुक्तिहेतुः विमुक्तिसाधनज्ञानहेतुः न तु पदार्थप्रतिपादकसत्यादिपदमात्रमित्यर्थः ॥२९५॥

महावाक्यादेव मुक्तिसाधनतत्त्वावगतिरित्यत्र प्रमाणमाह —

**नावेदविद्धि मनुते पुरुषं बृहन्त-**
**मित्याह वेदवचनं कथमन्यथैतत् ।**
**वाक्यान्तरं च कथमाह पुमांसमेनं**
**साटोपमौपनिषदत्वविशेषणेन ॥ २९६ ॥**

नावेदविदिति । वेदस्तत्त्वमादिवाक्यं, मनुते जानाति बृहन्तं त्रिविधपरिच्छेदशून्यं, नावेदविन्मनुते तं बृहन्तमिति वाक्यं महावाक्यात्मकवेदविद्वान् ब्रह्म न जानातीति दर्शयत् तस्यैव ब्रह्मप्रमितिसाधनत्वमाह। एतच्च पदार्थज्ञानमात्रस्यैव पुरुषार्थसाधनत्वेनोपपद्यते। तदिदमुक्तम्—कथमन्यथैतदिति । एतद्वचनमन्यथा महावाक्यं विनापि फलवत्प्रमितिसंभवे कथमुपपद्यतेत्यर्थः। वाक्यान्तरमप्यत्र प्रमाणमित्याह—वाक्यान्तरं चेति । तत्त्वौपनिषदमिति वाक्यं साटोपं ससंभ्रमं तत्त्वौपनिषदमित्यादिवाक्यमपि ब्रह्मात्मनो महावाक्यैकगम्यत्वे मानम्। अन्यथा कथं तद्वाक्यमौपनिषदत्वविशेषणेनैनं पुरुषं ब्रूयादित्यर्थः ॥ २९६ ॥

नन्वेदशब्दः सर्वस्मिन्वेदे वर्त्तते उपनिषच्छब्दोऽप्युपनिषन्मात्रे वर्तते तत्कथं महावाक्यस्य फलवज्ज्ञानसाधनत्वे इदं प्रमाणमित्याशङ्कयाह—

**उपनिषदिति वेद इत्यपीदं**

**समभिवदन्ति महावचो महान्तः ।**

**फलवदवगतिः स्यादन्तरेणैतदेकं**

**वचनमिति न शक्यं वक्तुमित्यादरोऽस्मिन् ॥ २९७ ॥**

उपनिषदितीति । महान्तः इदं महावच एव उपनिषदित्यपि वेद इत्यपि समभिवदन्ति । तथा च महावाक्यस्यैवोपनिषद्वेदशब्दत्वात् नोक्तदोष इत्यर्थः । ननु महतां वा वेदोपनिषच्छब्दयोर्महावाक्ये प्रयोगे कोऽयमाग्रहः तत्रैव तयोरवयवपदार्थस्य परिपूर्णत्वादित्याह— फलवदवगतिरिति । एतदेकवचनं महावाक्यमन्तरेण फलवती अवगतिः स्यादिति वक्तुं न शक्यमिति । अस्मिन्महावाक्ये आदरो महतां वेदोपनिषच्छब्दप्रयोग इति शेषः—एतदुक्तं भवति । फलवद्वित्तिसाधनं हि वेदशब्देन वेदयतीति व्युत्पत्त्यैवोच्यते । फलवज्ज्ञानस्यैव वेदनत्वात् तादृशवित्तिसाधनत्वं च महावाक्यस्यैवास्ति न त्वन्यस्य । एतदसन्निधावेव कर्मवाक्यानां फलवद्वित्तिजनकत्वभ्रान्तेः । एवमुपनिषच्छब्दोऽप्युपनिषीदतीति अतिसमीपप्रत्यग्ब्रह्मैक्यप्राप्त्या सकलानर्थनिदानं नाशयतीति व्युत्पत्त्या महावाक्य एव वर्त्तते । तस्यैवातिसमीपप्रत्यग्ब्रह्मैक्यप्रापकविद्याद्वारानिखिलानर्थविनाशकत्वादतस्तस्यैवोपनिषद्वेदशब्दवाच्यत्वं महान्तो मन्यन्त इति ॥ २९७ ॥

तथा च महावाक्ये एव वेदोपनिषच्छब्दौ वर्त्तते इति फलितमाह –

**उपनिषदिति शब्दो वेदशब्दश्च तस्मा-**
**च्छ्रुतिशिरसि निविष्टो योज्यतामत्र वाक्ये ।**
**अपरमखिलमस्यैवाङ्गभूतत्वहेतो-**
**रिह समभिनिविष्टं तद्गिरो वाच्यमासीत् ॥ २९८ ॥**

उपनिषदिति । महावाक्य एव तदर्थसद्भावस्तच्छब्दार्थः । अत्र वाक्ये तत्त्वमादिमहावाक्ये तर्हि कथं महावाक्यव्यतिरिक्तेषु वाक्येषु उपनिषदादिशब्दप्रयोगः उपचारादित्याह—अपरमिति । इह महावाक्यसन्निधौ समभिनिविष्टं समभिव्याहृतमपरं महावाक्यव्यतिरिक्तमखिलं सत्यादिवाक्यमस्य तत्त्वमादिमहावाक्यस्याङ्गभूतत्वहेतोर्महावाक्यार्थज्ञानोपयुक्तपदार्थशोधनेन तच्छेषत्वाद्धेतोरेव तद्गिरः वेदोपनिषच्छब्दस्य वाच्यमासीत्—प्रतिपाद्यमासीदित्यर्थः ॥ २९८ ॥

तत्त्वमस्यादिवाक्यमेव मुख्यो वेदोपनिषच्छब्दार्थः तदतिरिक्तं तु तच्छेषत्वेन तदर्थ इत्यत्र श्रौतं लिङ्गमाह—

**पित्रा तत्त्वमसीति बोधनमनु स्पष्टं विजज्ञाविति**
**च्छान्दोग्ये यदवोचदेतदिह नो लिङ्गं भवेज्ज्ञापकम् ।**
**सर्वत्रैव महागिरामुपनिषच्छब्दो भवेद्ग्राहको**
**वेदश्चायमतोऽन्यदस्य निकटे तेनात्र वेदादिगीः ॥ २९९ ॥**

पित्रेति । पित्रा-उद्दालकनाम्ना तत्त्वमसीति बोधनमनु तत्त्वमसीतिमहावाक्योपदेशं लक्ष्यीकृत्य तदनन्तरमित्यर्थः । विजज्ञौ ब्रह्मात्मतां ज्ञातवानित्यर्थः । एतद्वचनमिहास्मिन्नर्थे लिङ्गमित्यस्य व्याख्या ज्ञापकमिति । इह शब्दार्थमाह—सर्वत्रैवेति । महागिरां महावाक्यानां

ग्राहकः-वाचकः, अयं वेदः वेदशब्दश्च ग्राहक इत्यनुषङ्गः । अतो महावाक्यादन्यदस्य महावाक्यस्य निकटमेकवाक्यतापन्नं तेन येन निकटं तेनात्र महावाक्यातिरिक्ते वेदादिगीरित्यस्मिन्नर्थे लिङ्गमित्यर्थः । छान्दोग्ये हि पित्रोद्दालकेन "तत्त्वमसि श्वेतकेतो" इत्युपदिष्टे सत्यनन्तरमेव "तद्धास्य विजज्ञावि"ति श्रूयते । इदं च महावाक्यस्यैवाविद्यानिवृत्तिफलवत्प्रमितिजनकत्वेनोपनिषदादिशब्द वाच्यत्वे युज्यते । तस्मादुत्पन्नात्मज्ञानमेव लक्ष्यीकृत्य हेत्याश्चर्यावमर्शपूर्वं तत्प्रवृत्तेः । अतस्तत्रैव वेदादिशब्दो मुख्यः अन्यत्र तु तच्छेषत्वेनैव तत्प्रवृत्तिरित्यर्थः ॥ २९९ ॥

ननु महावाक्येप्युपनिषच्छब्दो न मुख्यः यतो ब्रह्मविद्यैव प्रत्यग्ब्रह्मैक्यविषयत्वेनाविद्यां निवर्त्तयन्ती उपनिषत् । तदुक्तं सुरेश्वराचार्यैः । "अत्र चोपनिषच्छब्दो ब्रह्मविद्यैकगोचरः । तत्रैव चास्य सद्भावादभिधार्थस्य तत्कुतः ॥ उपनीयेममात्मानं ब्रह्मापास्तद्वयं यतः । निहन्त्यविद्यां तज्जं च तस्मादुपनिषद्भवेदि"ति चेत्सत्यम् । तत्कारणत्वेन तन्निकटत्वादुपचारात्तत्रापि मुख्य इत्युच्यते इत्युपनिषच्छब्दस्य मुख्यार्थकथनपूर्वकमाह—

**उपनिषद्वचसा परमात्मधीः**
**सहजशक्तिवशेन निगद्यते ।**
**तदुपचर्य महागिरि वर्तते**
**निकटभावमपेक्ष्य तु मुख्यगीः ॥ ३०० ॥**

उपनिषद्वचसेति । सहजशक्तिवशेन रूढ्यावयवशक्तया चेत्यर्थः । महागिरि महावाक्ये वर्त्तत उपनिषद्वच इत्यर्थः । निकटभावं निकटत्वं च करणत्वेन ॥ ३०० ॥

तर्ह्यन्यत्राप्युपनिषदादिशब्दस्य मुख्यत्वं किन्न स्यादिति चेन्न-निकटत्वाविशेषेऽपि साक्षाद्विद्याकारणत्वेनातिनिकटत्वादितरस्य तु तदेकवाक्यतापन्नत्वेनैव तत्कारणत्वान्नैतादृशमपि मुख्यत्वमित्याह-

**उपनिषद्वचनाऽभिहिताऽऽत्मधी-**
**र्निकटवर्त्तिमहागिरि मुख्यवत् ।**
**उपनिषद्वचनं तदवान्तरे**
**वचसि गौणवदत्र विवक्ष्यते ॥ ३०१ ॥**

उपनिषद्वचननेति । उपनिषद्वचनेनाभिहिता याऽऽत्मधीः तस्या निकटवर्तिनी या महागीः तस्यामुपनिषद्वचनं मुख्यवद्विवक्ष्यते । अवान्तरे वचसि तद्-उपनिषद्वचनं गौणवन्मुख्यार्थगुणयोगाभावात्,न वस्तुतो गौणः मुख्यार्थत्वाभिमतमहावाक्यगतवाक्यत्वादिगुणयोगा-द्गौणवद्विवक्ष्यत इत्यर्थः ॥ ३०१ ॥

वेदत्वं पुनर्महावाक्यस्य मुख्यमेव महावाक्यादेव श्वेतकेतो-र्विद्योत्पत्तिश्रवणादित्याह—

**यतो महावाक्यत एव पुत्रो**
**विजज्ञिवानस्य पितुः सकाशात् ।**
**इति श्रुतं तेन स एव वेद-**
**स्तथाच सैवोपनिषच्च सिद्धा ॥ ३०२ ॥**

यत इति । विजज्ञिवान् ज्ञातवान् । अस्योद्दालकनाम्नः स इति विधेयापेक्षया पुंलिङ्गनिर्देशः । तथा च महावाक्ये वेदशब्दस्य

मुख्यत्वादुपनिषच्छब्दोपि तत्र मुख्य इत्याह—तथाचेति । सा स्त्रीलिङ्गनिर्देशः पूर्ववत् ॥ ३०२ ॥

तथा च महावाक्यादेव मुक्तिफलात्तत्त्वावगतिर्नान्यस्मादिति फलितमुपसंहरति—

**विना महावाक्यमतो न कश्चि-**
**त्पुमांसमद्वैतमवैति जन्तुः ।**
**ततः पदार्थावगमान्न मुक्ति-**
**र्घटिष्यते तस्य परोक्षभावात् ॥ ३०३ ॥**

विनेति । ततः यतो महावाक्यस्यैव वेदत्वमुपनिषत्त्वं च वेदादेवात्मज्ञानं संभवति नान्यस्मादत इत्यर्थः । तथा च पदार्थबोधमात्रान्न कृतार्थतेत्युक्तमपि सिद्धमिति परमप्रकृतमुपसंहरति ततः पदार्थेतेति ॥ ३०३ ॥

तर्हि पदार्थशोधनं व्यर्थं किमर्थं कृतमिति चेन्न—साक्षादुपयोगाभावेपि शोधितपदार्थज्ञानं विना परमपुरुषार्थसाधनवाक्यार्थज्ञानानुत्पादेन परम्परया सार्थकत्वादित्याह—

**पदार्थबोधं परिहृत्य वाक्यं**
**न शक्तमात्मानुभवावसानाम् ।**
**धियं समानेतुमपेक्षितत्वा-**
**दतः स यत्नेन निरूपितोऽभूत् ॥ ३०४ ॥**

पदार्थबोधमिति । वाक्यं–तत्त्वमादिवाक्यं समानेतुमुत्पादयितुं न शक्तमित्यत्र हेतुः । अपेक्षितत्वादिति । पदार्थबोधस्य वाक्यार्थज्ञानकारणत्वेनापेक्षितत्वात्सः–पदार्थबोधः ॥ ३०४ ॥

ननु पदार्थशोधने वाक्ये क उपकारो जातः यमपेक्ष्य वाक्यं स्वार्थप्रमितिं जनयेदिति चेत्—वाक्यार्थस्य संभावनाबुद्धिरेवेत्याह—

**तच्छब्दादवगतमद्वितीयमासी-**
**त्प्रत्यक्त्वं समधिगतं त्वमित्यनेन ।**
**प्रत्यक्त्वं न खलु विना द्वितीयमेवं**
**नाद्वैतं भवितुमलं विना प्रतीचा ॥ ३०५ ॥**

तच्छब्दादिति । तदिति पदेनावगतमासीदिति सम्बन्धः । प्रतीचा प्रत्यक्त्वेन तत्पदेन च ब्रह्मणोऽद्वितीयत्वमात्मनश्च प्रत्यक्त्वमेतच्च पदार्थशोधनेनाद्वितीयत्वादिविरोधिरूपान्तरपरित्यागेन प्रतीचो ब्रह्मत्वे ब्रह्मणश्च प्रत्यक्त्वेऽवगते संभवति प्रतीचः सकाशाद् ब्रह्मणोऽभिन्नत्वे तस्यानवच्छिन्नमहत्त्वलक्षणब्रह्मत्वानुपपत्तेः प्रतीचश्च ब्रह्मणः सकाशाद्भिन्नत्वे सर्वान्तरत्वलक्षणप्रत्यक्त्वानुपपत्तेः । तथा च प्रत्यक्त्वादिपरिज्ञानं विना ऽखण्डैकरसप्रत्यग्ब्रह्मैक्यलक्षणवाक्यार्थज्ञानानुत्पत्तेः । तत्संभावनाहेतुत्वेन पदार्थशोधनस्योपयोग इति भावः ॥ ३०५ ॥

नन्वेवमपि महावाक्यं व्यर्थं पदार्थशोधनात्मकविचाररूपतर्केणैवाद्वितीयत्वादिविरोधिसकलानात्मनिरासेन प्रत्यग्ब्रह्मैक्याकारबुद्धिजननात् अन्यथा वाक्यस्य तत्कृतोपकाराभावप्रसङ्गादित्याशङ्क्य यद्यपि विचारेण तादृशी बुद्धिरुपजायते तथापि तस्या बुद्धेः प्रमाणाजन्यत्वात्संभावनारूपत्वाद्व्याप्त्यादिसापेक्षत्वेन परोक्षत्वाच्च नाविद्यानिवर्त्तकत्वम् । तदुक्तं "सेयमद्वैतबुद्धिर्न तर्कमवतार्य परैरपनेये"ति; श्रुतिश्च "नैषा तर्केण मतिरापनेये"ति अपनेया प्रापणीयेत्यर्थः । अतस्तदर्थं वाक्येनापि भवितव्यमेवेत्यभिप्रेत्याह—

**तर्कप्रतीतिसमयेऽपि तदद्वितीयं**
**प्रत्यक् परिस्फुरति तत्प्रतिबिम्बितं सत् ।**
**वेदान्तवाक्यजनिताद्वयबुद्धिभूमि-**
**निष्ठं पुनः स्फुटतरं भवतीति भेदः ॥ ३०६ ॥**

तर्कप्रतीतिसमय इति । विचारजन्यप्रत्यग्ब्रह्माकारबुद्धिवृत्तिदशायामपि तत्प्रतिबिम्बितं तस्यां तर्कप्रतीतौ प्रतिबिम्बितं सत् तदद्वितीयं प्रत्यक् स्फुरति, वेदान्तवाक्यजनितात्ममतौ—तत्त्वमादिवाक्यजन्यात्माकारबुद्धिवृत्तौ, निविष्टं–प्रतिबिम्बितं, सदद्वयाभिन्नं प्रत्यक् स्फुटतरमसंदिग्धमपरोक्षं भवतीति भेदः । तयोर्बुद्धिवृत्त्योरिति शेषः ॥ ३०६ ॥

अयं विभागः किन्निमित्त इत्याशङ्क्य शुद्धितारतम्यनिमित्त इति सदृष्टान्तमाह—

**अधममध्यमशुद्धिनि दर्पणे**
**परमशुद्धिनि चाऽऽननमात्मनः ।**
**तरतमक्रमतः प्रतिभासते**
**तदिव तत्त्वमिह प्रतिपत्तिषु ॥ ३०७ ॥**

अधमेति । अथवा सकृदनुष्ठितविचारानन्तरमेव तत्त्वमादिवाक्यात्स्फुटतरं तत्त्वप्रतिपत्तिः किं न स्यादित्याशङ्क्य यथा आदर्शस्य कदाचिदिष्टकाचूर्णादिनिघर्षणेनाल्पशुद्धिः पुनरपि निघर्षणे ततोपि शुद्धिरित्येवं शुद्धितारतम्येन मुखादिकं तत्र स्पष्टं स्पष्टतरं च प्रतिफलति एवं सकृदनुष्ठितविचारेण पदार्थशोधने तत्त्वं सम्यङ् न

स्फुरति। किन्त्वसकृदभ्यस्तविचारेण सम्यक् पदार्थशोधने सत्येव तत्त्वं सम्यक् परिस्फुरतीति सदृष्टान्तमाह—अधमेति। तदिव—तद्वत्, प्रतिपत्तिषु—बुद्धिवृत्तिषु, तत्त्वम्—आत्मतत्त्वं, प्रतिभासत इत्यनुषङ्गः ॥३०७॥

नन्वेमपि महावाक्यं व्यर्थं तर्कस्याप्रमाणत्वेप्यनुमानस्य प्रमाणत्वात् तज्जन्यब्रह्माकारबुद्धेर्निश्चयरूपत्वाच्च पुमर्थसिद्ध्युपपत्तेरित्याशङ्क्यानुमानस्य साध्यविशिष्टपक्षगोचरज्ञानजनकतया भेदविषयत्वेनाखण्डाकारबुद्धिवृत्तिजनकत्वाभावात् तां विना चाविद्यानिवृत्त्यनुपपत्तेर्नानुमानादपि कृतार्थतेत्यनुमानलक्षणकथनपूर्वकमाह—

**एकदेशमुपलभ्य धर्मिण-**
**श्चैकदेशमपरं विजानते ।**
**धर्मिधीव्यवधिकारणादतो-**
**नानुमा ह्यनुभवाय वस्तुनः ॥ ३०८ ॥**

एकदेशमिति। एकदेशं-व्याप्यविशिष्टभागं, धर्मिणः—पक्षस्य, एकदेशं—व्यापकविशिष्टभागं, व्याप्यविशिष्टतया पक्षैकदेशदर्शनाद्व्यापकविशिष्टतया पक्षैकदेशदर्शनमनुमानमिति हि तल्लक्षणम्। तदुक्तं "ज्ञातसम्बन्धनियमस्यैकदेशस्य दर्शनात् एकदेशान्तरे बुद्धिरनुमानमबाधित"मिति। अतो धर्मिधीव्यवधिकारणात्—धर्मिविशिष्टधर्मिधीलक्षणव्यवधानकरणात्, नानुमानं वस्तुनोऽखण्डैकरसस्यानुभवाय समर्थमित्यर्थः। वाक्यं तु लक्षणयाखण्डं च वस्तु बोधयेदिति भावः। तस्मान्न पदार्थशोधनं व्यर्थं न वा तावतैव कृतार्थता किन्तु महावाक्यार्थज्ञानेनैवातो महावाक्येनापि भवितव्यमिति सिद्धम् ॥ ३०८ ॥

एवमुपपादितं पदार्थशोधनमुपसंहृत्य बुभुत्सानुरोधेन वक्तुं शिष्यस्य चोद्यावसरं दर्शयति—

एवं तावत्तत्वमर्थौ विशुद्धौ
बोद्धव्यं चेदन्यदप्यस्ति पृच्छ ।
यद्यद्बुद्धं तत्तदादाय तिष्ठे-
र्यच्चाबुद्धं तत्र चाऽऽधत्स्व चेतः ॥ ३०६ ॥

एवं तावदिति । स्वाभाविकबाहिर्मुख्यात् संभवत्यवगतेपि विस्मृतिरिति अविस्मरणे यत्न आस्थेय इत्याह—यद्यद्बुद्धमिति । आदाय मनसि निधायेत्यर्थः । वक्तव्यार्थे च मतिसमाधानं संपादयेत्याह—यच्चेति । अबुद्धं बोधव्यं चेत्यर्थः । आधत्स्व-अवधत्स्व । एवं शिष्य-आचार्येण दत्तावसरः पदार्थं ज्ञात्वा वाक्यार्थभूतब्रह्मात्मैक्यं तत्त्वमसीति वाक्यात् साक्षादनुबुभूषुस्तत्स्वरूपनिर्दिधारयिषया पृच्छतीत्याह—बुद्धेति । तदैक्यं तयोस्तत्त्वपदार्थयोरैक्यं वाक्यार्थनिष्ठात् तत्त्वमादेर्वाक्यादस्मानुभवविषयं कर्तुकाम इति सम्बन्धः । तच्छेषापन्नं तस्य महावाक्यस्य शेषभावापन्नं तस्य शेषभावापन्नवाक्यस्य सत्यादेः यद्यपि तत्पदलक्ष्यमद्वयं ब्रह्मदर्शितं तथापि तस्य स्वरूपं कीदृशमित्याकाङ्क्षायां सत्यज्ञानादिवाक्यात्तन्निर्णयो वक्तव्यः ततस्तत्परिमाणनिर्द्धारणार्थं पृच्छतीत्यर्थः ॥ ३०६ ॥

प्रश्नप्रकारमाह—

अद्याप्यवान्तरवचः परिमाणबोध-
वैकल्यमस्ति मम तेन महावचोऽपि ।
वाक्यार्थबुद्धिमनुभूतिफलावसानां
नोत्पादयत्यहरहः श्रुतमप्यशक्तेः ॥ ३१० ॥

अद्याप्यवान्तरेति । सत्यज्ञानाद्यवान्तरवाक्येयत्ताज्ञानराहित्यं ममास्ति ततः किं तत्राह तेनेति । अवान्तरवाक्येयत्ताबोधवैकल्येन

हेतुना महावाक्यं ह्यवान्तरवाक्येऽवधृतपदार्थस्वरूपैक्यमेव स्वप्रमेयमवबोधयति ततश्चावान्तरवाक्यपरिमाणानवगमे तदर्थस्वरूपनिर्णयायोगात् । अहरहरावर्त्यमानमपि तन्न स्वार्थमनुभावयितुं समर्थमित्याह--अशक्तेरिति ॥ २१० ॥

अवान्तरवच इत्युक्तमेव विभज्य पृच्छति—

विधिमुखेन परस्य निवेदकं
वचनजातमवान्तरसंज्ञितम् ।
यदपि भेदनिषेधमुखेन त-
त्परिमितिं प्रतिपादय मे प्रभो ॥ २११ ॥

विधिमुखेनेति । अवान्तरसंज्ञं यद्वचनजातं विधिमुखेन परस्य निवेदकं परब्रह्मस्वरूपप्रतिपादकं सत्यादिवाक्यं यदपि भेदनिषेधमुखेन परस्य निवेदकमस्थूलादिवाक्यं तत्परिमितिं तयोरवान्तरवाक्ययोः परिमाणं प्रतिपादयेत्यर्थः । किं यस्य महावाक्यस्य सन्निधौ यदवान्तरवाक्यं श्रुतं तदर्थमादायैव तस्मान्महावाक्यादर्थः प्रतिपत्तव्यः । किं वा शाखान्तरीयवाक्यमन्यत्रोपसंहृत्य । यद्याद्यस्तर्हि वाक्यार्थोऽव्यवस्थितः स्यात् अवान्तरवाक्यार्थस्य प्रतिशाखं विलक्षणत्वान्न हि शाखाभेदेन वा पुरुषभेदेन वा क्रियावाक्यार्थवत् वस्तुतत्त्वविषयवाक्यार्थो व्यवस्थितो भवितुमर्हति । अन्त्ये तु नायं दोषः । उपसंहारप्रकारस्तु न ज्ञायते । किं सर्वेषां वाक्यानामुपसंहारः किं वा प्रयोजनानुरोधेन यस्य कस्यचिदेवेति अतस्तत्परिमितिं प्रतिपादयेति भावः ॥ २११ ॥

एवं शिष्येण पृष्टः आचार्यः यद्वाक्यं ब्रह्मप्रतिपादकं यस्यां शाखायां न विद्यते अन्यत्र च विद्यते तत्तत्रोपसंहर्तव्यं न तु

सर्वं प्रयोजनाभावादित्यभिप्रेत्य गुणोपसंहारपादप्रतिपाद्यन्यायेनोत्तरमाह—

सकलवेदशिरःसु परात्मधी-
परवचःसु परापरबोधतः ।
अपुनरुक्तपदान्युपसंहर-
न्परिमितिं स्वयमेव तु वेत्स्यति ॥ ३१२ ॥

सकलवेदशिरःस्विति । परापरबोधतः परापरविद्याविभागज्ञानेनेत्यर्थः । प्रथमं परापरविद्याविभागं कृत्वा परविद्यागतेषु वाक्येषु मध्ये अपुनरुक्तपदान्युपसंहरन् स्वयमेव वाक्यपरिमाणं ज्ञास्यसीत्यर्थः ॥३१२॥

ननु श्रुतैरेव पदैर्वाक्यार्थो ब्रह्म प्रतीयतां किं पदान्तरोपसंहारेणेत्याशङ्क्य तथा सति परिपूर्णब्रह्मावगतिर्न स्यात् अतोवश्यमुपसंहारेण भाव्यमित्याह—

अपुनरुक्तपदानि विना यतो
न परिपुष्कलबुद्धिसमुद्भवः ।
अपुनरुक्तपदानि ततस्तत-
स्त्वमुपसंहर तत्त्वबुभुत्सया ॥ ३१३ ॥

अपुनरुक्तेति । ततस्ततः तत्तच्छाखातः । ननु सर्वशाखागतापुनरुक्तपदानामुपसंहारे शाखाया अनन्तत्वात् वाक्येयत्तापरिज्ञानायोगात् वाक्यार्थनिश्चयो न स्यादिति चेन्न नित्यशुद्धादीनां दशानामेव ब्रह्मस्वरूपतया तत्प्रतिपादकवाक्यानामेवोपसंहर्तव्यत्वात् अन्येषां च शिवादीनां विशेषणानामेष्वेव यथायथमन्तर्भूत-

त्वादेतद्दृशप्रतिपादकवाक्यानां च कतिपयशाखापर्यालोचनया सुज्ञेयत्वादिति भावः ॥ ३१३ ॥

नन्वपुनरुक्तपदोपसंहारे क्रियमाणे कदाचिदपरविद्यावगतवाक्यस्यापि प्रमादादुपसंहारः स्यादिति चेन्न—सादृश्यनिबन्धनत्वादुपसंहारस्य तस्य च परापरविद्ययोरभावादित्यभिप्रेत्य परापरविद्याविभागोपि प्रतिपत्तव्य इत्युक्तं स्मारयति –

**कुरु परापरवाक्यविवेचनं**
**तदनु शब्दसमाहरणं कुरु ।**
**प्रियशिरःप्रभृतीनि च यत्नवा-**
**नुपचितापचितानि परित्यज ॥ ३१४ ॥**

कुरु परेति । परापरविद्याविषयवाक्यविवेचनं तदनु तद्विभागप्रतिपत्त्यनन्तरं शब्दसमाहरणं परविद्यागतशब्दोपसंहरणं यत्पुनर्निर्गुणवाक्येपि निर्गुणवस्तुप्रतिपादने द्वारतयोक्तमपुनरुक्तपदं तदपि नोपसंहर्त्तव्यं तदर्थस्य वाक्यार्थान्तर्भावादित्याह प्रियशिरः प्रभृतीनीति । तस्य प्रियमेव शिरः मोदो दक्षिणः पक्ष इत्यादिनिर्गुणवाक्ये पठितं कथमेतत् त्याज्यमिति श्रद्धाजाड्यं विहाय परित्यजेत्याह—यत्नवानिति तेषां वाक्यार्थे अनुपयुक्तौ हेतुमाह उपचितेति उपचितापचितत्वं वृद्धिह्रासवत्त्वं विशेषापेक्षमतो निर्गुणे तदसंभव इत्यर्थः ॥ ३१४ ॥

ननु तानि कस्य धर्माः प्रतीयन्तां न तावदात्मन एवोपासनानि कीर्त्यन्त इति वक्तुं शक्यं निर्गुणविद्याप्रकरणस्थत्वादित्याशङ्क्यान्नप्राणमनोविज्ञानानन्दमयलक्षणपञ्चकोशद्वारेण ब्रह्मणः प्रतिपाद्यमानत्वादानन्दमयकोशस्यैव तानि धर्माः सन्ति ब्रह्मण्यप्युपरज्यन्ते न तु वस्तुतस्तद्धर्माः अतस्त्याज्यान्येव तानीत्याह—

उपचितापचितानि न निर्गुणे
प्रियशिरःप्रभृतीनि कदाचन।
निपुणधीरपि कश्चन योजये-
दपि तु कोशगुणाः कथिता अमी ॥ ३१५ ॥

उपचितेति। कोशगुणाः आनन्दमयकोशगुणाः तस्य च कोशत्वं कोश इव स्वरूपाच्छादकत्वादमीप्रियशिरस्त्वादयो धर्माः ॥ ३१५ ॥

एवं विधिवाक्यपरिमाणमुक्त्वा निषेधवाक्यपरिमाणमप्युक्तोपसंहरणपूर्वकमाह—

इति वचः परिमाणमुदीरितं
विधिवचःसु निषेधगिरां शृणु।
बहुनिषेध्यममूष्वपि तेन ता-
स्वपि समाहर पूर्ववदेव तत् ॥ ३१६ ॥

इतिवचः परिमाणमिति। विधिवचस्सु विधिमुखेन बोधकसत्यादिवाक्येषु विषये वचःपरिमाणमित्यनेन प्रकारेणोदीरितं निषेधगिरामस्थूलादिनिषेधवाक्यानां वचःपरिमाणं शृणु। अमूषु निषेधगीर्ष्वपि निषेध्यमानात्मजातं बह्वस्ति तेन निषेध्यानात्मबहुत्वेन हेतुना तासु निषेधगीर्ष्वपि पूर्ववदेव समाहर। अपुनरुक्तपदान्येवोपसंहरेत्यर्थः ॥ ३१६ ॥

पूर्ववदितिपदसूचितमर्थमेव दर्शयति—

अपुनरुक्तनिषेध्यनिषेधकृद्-
बहुपदाहरणं कुरु तास्वपि।

यदि पुनर्न समाहरणं भवे-

त्परिमितप्रतिषेधनमापतेत् ॥ ३१७ ॥

अपुनरुक्तेति । अपुनरुक्तानि च तानि निषेध्यनिषेधकृन्ति च तानि बहुपदानि यथोक्तानि तास्वपि-निषेधगीर्ष्वपि, अनुपसंहारे बाधकमाह—यदिपुनरिति । क्वचित् यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रमिति दृश्यादिनिषेधः श्रूयते । क्वचिदशब्दमस्पर्शमरूपमव्ययमिति शब्दादिनिषेधः श्रूयते । क्वचिदस्थूलमनण्वह्रस्वमदीर्घमितिस्थूलादिनिषेधः श्रूयते । तत्र यद्येकत्र श्रुतानां परत्रोपसंहारो न स्यात् तदा कतिपयानात्मवर्गस्यैव प्रतिषेधः स्यात् तथा च नैकान्ततो निष्प्रपञ्चं ब्रह्म भवेदिति भावः ॥ ३१७ ॥

ननु सत्यादिपदैरपि श्रुत्यर्थाभ्यां स्वरूपप्रतिपत्तिरनात्मव्यावृत्तिश्च क्रियते अस्थूलादिपदैश्च तदुभयं क्रियते अतः कथं विधिनिषेधभेद इत्याशङ्क्याह—

विधिवचस्युभयं तु पदे पदे

भवति संग्रहवर्जनरूपकम् ।

स्वकवपुः परिकल्पितरूपयो-

र्न तु निषेधवचःसु तथा मतम् ॥ ३१८ ॥

विधिवचसीति । उभयमित्येतद्विवृणोति । संग्रहवर्जनरूपकमिति । बोधनं व्यावृत्तिश्चेत्यर्थः । कस्य बोधनं कस्य व्यावृत्तिरित्यत्राह—स्वकवपुःपरिकल्पितरूपयोरिति । ब्रह्मस्वरूपस्य सत्यादेर्बोधनं तत्र कल्पितानृतादेर्व्यावृत्तिश्च । विधिवचसि पदे पदे भवतीत्यर्थः । निषेधवचःसु कृत्यद्वयं नास्ति । साक्षान्निषेधस्यैव प्रतिपाद्यमानत्वात् ब्रह्मणश्चा-

नुपपत्तिगम्यत्वाभावादित्यभिप्रेत्याह—न त्विति । तथाविधिवचोवत् ॥ ३१८ ॥

तदेव प्रपञ्चयति—

यदिह किंचिदबोधसमुद्भवं
तदखिलं प्रतिषेधति केवलम् ।
न तु किमप्युपगृह्य परे पदे
भगवतो निविशेत निषेधगीः ॥ ३१९ ॥

यदिहेति । इहात्मनि प्रतिषेधयतीत्यन्वयः केवलपदव्यावर्त्यमाह—न तु किमिति । उपगृह्योपादाय पदे स्वरूपे सत्यादिपदवत् निषेधवाक्यं ब्रह्मणि किमपि स्वरूपं नार्पयतीत्यर्थः ॥ ३१९ ॥

तर्हि विधिनिषेधयोरुपसंहारेपि विशेषः स्यादित्याशङ्क्य व्यापार एव विशेषो न तूपसंहारेपीत्याह—

इति विशेष इह प्रतिपादितो
विधिनिषेधगिरोरुभयोरपि ।
अपुनरुक्तपदाहरणं पुन-
र्विधिनिषेधवचःस्वविशेषितः ॥ ३२० ॥

इतीति । अनेन प्रकारेण विशेषः—निजात्मरूपबोधकनिषेधकत्वमनात्मनिषेधकत्वं चेति विशेषः ॥ ३२० ॥

अस्ति कश्चिन्निषेधवाक्योपसंहारे विशेषोपीत्याह—

श्रुतिपदैरुपसंहृतिशालिभि-
र्यदवशिष्टनिषेध्यनिषेधनम् ।
तदपि पूर्यमिहाभिमतं श्रुतेः
श्रुतपदान्युपलक्षणमेव हि ॥ ३२१ ॥

श्रुतिपदैरिति । उपसंहृतिशालिभिः उपसंहारयुक्तैः उपसंहृतैरिति यावत् अवशिष्टनिषेध्यनिषेधनमवशिष्टमनिषिद्धं यन्निषेध्यं तस्य निषेधनं निषेधप्रतिपादकवचनं पूर्यमध्याहर्तव्यं प्रपञ्चनिषेधसमये यद्यनात्मवस्तुबुद्धावारोहति तच्चेत्तत्र श्रुतेन शाखान्तरहृतेन वा पदेन विशेषतो न प्रतिषिद्धं भवेत् तदा तन्निषेधवचनमपि सामान्यतोऽनात्मनिषेधमहिम्ना विशेषतः कल्प्यं तच्च श्रुतेरभिमतमेवेत्यर्थः । किमर्थं तर्हि श्रुत्या तन्निषेधो न प्रदर्शितः यदि तन्निषेधनमिष्टं स्यादित्याशङ्क्य निषेध्यानां वहुत्वात् श्रुत्या दिङ्मात्रमेव प्रदर्शितमित्याह । श्रुतिपदानीति ॥ ३२१ ॥

विधिपदेषु त्वेवं न भवतीत्याह—

समुपसंहृतशब्दसमन्वितैः
श्रुतिपदैर्विधिवाक्यगतैः पुनः ।
समुपलक्ष्यतया न परात्मनः
किमपि रूपमिहाभ्यधिकं मतम् ॥ ३२२ ॥

समुपसंहृतेति । श्रुतसमुपसंहृतवाक्यप्रतिपाद्यरूपादधिकस्य रूपस्याभावात् न विधिवाक्यमुपलक्षणार्थमित्यर्थः ॥ ३२२ ॥

ननु किमितिरूपाभाव इत्याशङ्क्य वेदैकगम्यस्य ब्रह्मणस्तत्प्रमेयरूपातिरिक्तरूपान्तराभावात्तस्य च नित्यशुद्धत्वादेः श्रुतोपसंहृत-

वाक्याभ्यां सिद्धत्वाद्बुद्धिस्थे च तस्मिन् वाचकपदोपसंहारायोगाच्च नाश्रुतपदेन पूरणीयत्वमित्याह—

न खलु संस्तसंस्कृतशब्दयो-
रविषयः परमात्मन इष्यते ।
किमपि रूपममुत्र हि नास्ति नः
किमपि मानमतो न तदस्तिनः ॥ ३२३ ॥

न खल्विति । नेष्यत इत्यत्र हेतुः । अमुत्र हीति । अमुष्मिन्नात्मरूपे मानाभावादेव तद्रूपान्तरं नास्तीत्यर्थः ॥ ३२३ ॥

एवं परिपूर्णब्रह्मावगतये विधिनिषेधोभयवाक्यानामुपसंहरणीयत्वमुक्त्वा अन्यत्र श्रूयमाणानां पदानामन्यत्रोपसंहारे न्यायमाह—

गुणतया हि पदानि परात्मनो
विधिनिषेधवचस्स्ववतस्थिरे ।
गुणगणो गुणितन्त्रतया गुणी
भवति यत्र हि तत्र भवत्यसौ ॥ ३२४ ॥

गुणतयेति । परमात्मप्रमितिशेषत्वेनेत्यर्थः । असौ गुणगणः विधिनिषेधवाक्यगतानि पदानि परमात्मप्रमितिजनकत्वेन तद्गुणभावमुपगतानि सन्ति गुणिपरतन्त्रतया यत्र यत्र गुणी परमात्मा श्रूयते तत्र तत्र राजानमिव भृत्यस्तत्प्रतिपादकतया तमनुगतानि भवन्ति । अयमेवोपसंहारो नामेत्यर्थः ॥ ३२४ ॥

उभयविधपदोपसंहारप्रतिपादनमुपसंहरति—

विधिनिषेधवचः परिमाणत-
स्तव मया कथितं नयवर्त्मना ।
यदपरं तव वस्तु बुभुत्सितं
तदिह नः पुरतः प्रकटीकुरु ॥ ३२५ ॥

विधिनिषेधवच इति । शिष्यस्य चोद्यावसरं ददाति—यदपरमिति ॥३२५॥

एवमाचार्येण दत्तावसरः शिष्यः पृच्छति—

अन्तरङ्गबहिरङ्गसाधने
भेदतः कथय तद्बुभुत्सितम् ।
ज्ञानजन्मन इदं जिघृक्षितं
हेयमेतदिति चोपपत्तिभिः ॥ ३२६ ॥

अन्तरङ्गेति । तत्-अन्तरङ्गं बहिरंगं च साधनमिदमन्तरङ्गसाधनमिति इदं बहिरङ्गसाधनमिति विविच्योपपत्तिभिः कथयेत्यर्थः । प्रश्नान्तरमाह ज्ञानजन्मनइति । ज्ञानोत्पत्तये इदं साधनं जिघृक्षितं ग्रहीतुमिष्टं यावत्फलोदयमनुष्ठेयमेतत्साधनं हेयमिति शङ्काग्राहित्वेन कथयेत्यर्थः ॥ ३२६ ॥

तत्र हेयोपादेयप्रश्नस्योत्तरमाह—

अन्तरङ्गमपवर्गकाङ्क्षिभिः
कार्यमेव यतिभिः प्रयत्नतः ।
त्याज्यमेव बहिरङ्गसाधनं
यत्नतः पतनभीरुभिर्भवेत् ॥ ३२७ ॥

अन्तरङ्गमिति ॥ ३२७ ॥

आद्यप्रश्नस्योत्तरं प्रतिजानीते—

**उच्यते शृणु विविच्य साधनं**
**ज्ञानजन्मनि यदूचिवान्गुरुः ।**
**अन्तरङ्गबहिरङ्गभेदतः**
**शब्दशक्तिमनुसृत्य वैदिकीम् ॥ ३२८ ॥**

उच्यत इति । यद्वा अन्तरङ्गबहिरङ्गयोर्भेदज्ञानं किमर्थम् हेयोपादेयविभागसिद्धयर्थमित्याह ज्ञानजन्मन इति इदं जिघृक्षितम् इदं हेयमितिज्ञानसिद्धये इत्यर्थः । किमुपादेयं किं हेयमित्याकाङ्क्षायां स्मृत्यादिप्रसिद्ध्या कथयति—अन्तरङ्गमिति । एवं हेयोपादेयविभागज्ञानार्थमन्तरङ्गबहिरङ्गस्वरूपं विविच्य कथनीयमिति शिष्येण पृष्टो गुरुः पुरुषार्थपादसिद्धन्यायेनोत्तरं वक्तुं प्रतिजानीते—उच्यत इति । गुरुः परमहंसपरिव्राजकाचार्यो भगवान्भाष्यकारः वैदिकीं शब्दशक्तिमनुसृत्य विविदिषावाक्यसामर्थ्यं शान्तो दान्त इत्यादिवाक्यसामर्थ्यं चाश्रित्यान्तरङ्गबहिरङ्गभेदज्ञानजन्मनि यत्साधनमूचिवान् तद्विविच्योच्यते । शृण्विति योजना ॥ ३२८ ॥

अन्तरङ्गबहिरङ्गस्वरूपं लक्षणभेदेन विविच्य दर्शयति—

**यच्छ्रुतं विविदिषोदयाय त-**
**त्सर्वमेव बहिरङ्गसाधनम् ।**
**अन्तरङ्गमवगच्छ तत्पुन-**
**र्यत्परावगतिसाधनं श्रुतम् ॥ ३२९ ॥**

यच्छ्रुतमिति। तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेनेति वाक्येन यद्यज्ञादिसाधनं विविदिषोत्पत्तये श्रुतं तत्सर्वं बहिरङ्गसाधनमवेहि विविदिषाया अपि प्राग् भावित्वात् ज्ञानसाधनसमानकालीनत्वाभावाच्च यत्पुनः शान्त्यादि तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येदिति ब्रह्मात्मज्ञानहेतुत्वेन श्रूयते तत्सर्वमन्तरङ्गं विजानीहि ज्ञानसाधनश्रवणादिसमानकालीनत्वात् यावज्ज्ञानोदयमपेक्षितत्वाच्च। तथा च जिज्ञासानन्तरमप्यपेक्षितत्वं साधनस्यान्तरङ्गत्वं जिज्ञासोत्पत्तिमात्रापेक्षितत्वं बहिरङ्गत्वमित्युक्तं भवतीत्यर्थः ॥३२६॥

प्रकारान्तरेणाप्यन्तरङ्गबहिरङ्गयोर्लक्षणमाह—

यद्धि कारकतयाऽवगम्यते
दूरतस्तदिह साधनं धियः।
अन्तरङ्गमखिलं तु तत्पुन-
र्व्यञ्जकं भवति यत्परात्मनः ॥ ३३० ॥

यद्धीति। कारकत्वमदृष्टैकद्वारोपकारकत्वं दूरतः साधनं बहिरङ्गसाधनमित्यर्थः। व्यञ्जकत्वं दृष्टद्वारोपकारकत्वं यद्धियः कारकतयावगम्यते तद् दूरतः साधनं यत्परमात्मानो व्यञ्जकं तदखिलमन्तरङ्गमिति सम्बन्धः। तथा च दृष्टद्वारा विद्यासाधनमन्तरङ्गमदृष्टैकद्वारा तत्साधनं बहिरङ्गमिति लक्षणं वेदितव्यम् ॥ ३३० ॥

अन्तरङ्गबहिरङ्गसाधनयोर्लक्षणतो विविच्य कथनस्य फलमाह -

कारकस्य करणेन तत्त्वणा-
द्भिक्षुरेष पतितो भवेद्यथा।

**व्यञ्जकस्य परिवर्जनात्तथा**

**सद्य एव पतितो भवेदसौ ॥ ३३१ ॥**

कारकस्येति । कारकस्यादृष्टैकद्वारोपकारकवेदानुवचनदानजपतीर्थयात्रादेः भिक्षुः परमहंसपरिव्राजकः व्यञ्जकस्य दृष्टद्वारोपकारक श्रवणादितदुपकारकशान्त्यादेः असौ—भिक्षुः। एतदुक्तं भवति परमहंससंन्यासो ह्यात्मज्ञानप्रकरणे विधीयमानस्तदङ्गत्वेनैव विधीयते। अङ्गं चाधिकारिणैव कर्त्तव्यं न तदनधिकारिणा तेन च क्रियमाणं तदविहितमेव भवति। तथा च यथा ससाधनसर्वकर्मत्यागलक्षणपरमहंससन्याससंपन्नः श्रवणाद्यधिकारी सन्नपि कश्चिन्मन्दमतिः श्रद्धाजाड्येन गायत्र्यादिमन्त्रजपदेवालयादिनिर्माणतीर्थयात्रादिकर्मानुतिष्ठन् वेदमुच्चरन्निव शूद्रः पतितो भवेत् तथा ज्ञानसाधनश्रवणादिपरिवर्जनेनापि सोमयागं विना कृताग्नीषोमीयपश्वालम्भनेनेव पतितो भवेत्। तदुक्तम् "त्वंपदार्थविवेकाय सन्यासः सर्वकर्मणाम्। श्रुत्या विधीयते तस्मात्तत्त्यागी पतितो भवेदि"ति ततः परमहंसेन मुमुक्षुणा श्रवणादिविरुद्धमन्त्रजपतीर्थनिषेवणादिकं ब्रह्महत्यादिवत्परित्यज्य श्रवणतदुपकारिशान्त्यादिकं यावज्ज्ञानमवश्यमनुष्ठेयमिति ॥ ३३१ ॥

ननु विविदिषन्तीत्यत्र वेदनस्यैवेष्यमाणत्वेन कर्मतया प्रधानत्वात् तत्प्रत्येव वेदानुवचनादिकर्मणां साधनत्वमवगम्यते नेच्छां प्रति अतः कथं ज्ञानात्पूर्वं तत्त्यागः संभवतीति चेत्तत्राह—

**प्रत्ययार्थविषयं हि कर्मणा-**

**मुच्यते विविदिषेयुरित्यतः।**

न प्रकृत्यभिहितार्थवेदने

वेदवाचि विनियोगशासनम् ॥ ३३२ ॥

प्रत्ययार्थेति । प्रत्ययार्थः सन्वाच्येच्छा विषयो यस्य विनियोगशासनस्य तत्तथोक्तं सप्तम्यन्तः क्वचित्पाठः विविदिषेयुरिति । विविदिषन्तीत्यस्य लडन्तस्यार्थतोनुकारः विविदिषन्तीत्यस्माद्वचस इत्यर्थः। प्रकृतिर्विदिधातुः वेदवाचि तमेतमित्यादिवेदवाक्ये विनियोगशासनं विनियोगबोधनं तमेतमित्यादिवाक्ये हि विविदिषन्तीत्यस्मात् सन्प्रत्ययार्थेच्छायामेव वेदानुवचनादिकर्मणां विनियोगो बोध्यते। न विदिप्रकृत्यभिहितात्मज्ञानेपि तस्येष्यमाणत्वेन कर्मत्वे ऽपीच्छाया एव प्रत्ययार्थत्वेन प्राधान्यात् तथैव कर्मादीनां साधनत्वेनान्वयस्य युक्तत्वादित्यर्थः ॥ ३३२ ॥

नन्वप्रधानेनापि पदार्थानामन्वयो दृश्यते एकस्मिन् वाक्ये गुणप्रधानभावेन प्रयुक्तानां पदार्थानां परस्परान्वयनियमादिति चेत्सत्यम्। न सोपि प्रधानान्वयं विना भवति किन्तु प्रधानान्वयद्वारैव तन्निर्वाहाय भवति। न च यज्ञादीनां प्रकृत्यर्थान्वयाभावे प्रधानान्वयभङ्गोस्ति अतः प्रधानभूतेच्छयैव यज्ञादीनामन्वय इत्याह—

न प्रधानमपहाय वेदने-

नान्वयं व्रजति कर्मसाधनम् ।

संगतिर्भवति वेदनेच्छया

वेदनेन न तु कर्मणां क्वचित् ॥ ३३३ ॥

न प्रधानमिति । वेदनेनान्वाधानेनेत्यर्थः । कर्मशासनं कर्मेति वस्तुमात्रोपलक्षणम् । एवं प्रथमार्द्धेन सामान्यन्यायं प्रदर्श्योत्तरार्द्धेन तत्प्रदर्शनफलमाह—संगतिरिति । अन्वयः ॥ ३३३ ॥

ननु प्रत्ययार्थस्यैव प्राधान्ये को हेतुः प्रकृत्यर्थ एव प्रधानं किन्न स्यादित्याशङ्क्य प्रकृतिप्रत्ययौ प्रत्ययार्थमेव प्राधान्येन सह ब्रूत इति न्यायात् प्रत्ययार्थस्यैव प्राधान्यं सन्प्रत्ययस्य चेच्छायामर्थे विहितत्वादिच्छायाः प्रत्ययार्थत्वात् प्राधान्यं न वेदनस्य प्रकृत्यर्थस्येत्याह—

**न प्रधानमिह वेदनं भवे-**
**त्प्रत्ययार्थविषयां प्रधानताम् ।**
**उत्ससर्ज भगवान्निरङ्कुशं**
**येन पाणिनिरलङ्घ्यशासनः ॥ ३३४ ॥**

न प्रधानमिति । तत्र हेतुः—प्रत्ययार्थेति । उत्ससर्ज धातोः कर्मणः समानकर्तृकादिच्छायां वेतिसूत्रेणोत्सर्गन्यायादनुशिष्टवानित्यर्थः ॥ ३३४ ॥

ननु सर्वत्रोत्सर्गतः प्रत्ययार्थस्य प्राधान्येपीच्छायामपवादोऽस्त्विति चेन्न तददर्शनादित्याह—

**प्रत्यये सनि न चापवादकं**
**किंचिदप्युदितवानसौ मुनिः ।**
**येन तत्र गुणभावमुद्वहेत्-**
**प्रत्ययाभिहितमर्थवस्तुनः ॥ ३३५ ॥**

प्रत्यये सनीति। सन्प्रत्ययविषये सन्प्रत्ययार्थेच्छायामित्यर्थः। सन्प्रत्ययविधानस्थल इति वापवादकमुक्तन्यायस्येति शेषः। तत्र प्रकृत्यर्थं निमित्तीकृत्यासौ पाणिनिः अर्थवस्तु इच्छाख्यं वस्तु ॥३३५॥

नन्वपवादकानुक्तिरसिद्धा धातोः कर्मण इति प्रकृत्यर्थस्य सनर्थकर्मत्वाभिधानेन तं प्रति प्राधान्योक्तेरित्याशङ्क्य ष्यमाणत्वेन कर्मतयाऽर्थादेव प्रकृत्यर्थप्राधान्यप्रतिपादनात् तस्य च शब्दान्वयानुपयुक्तत्वात् तदुपयुक्तस्य च शब्दप्राधान्यस्याप्रतिपादनान्मैवमित्याह—

धातोः कर्मण इत्युवाच भगवान्यत्पाणिनिस्तत्पुन-
र्धात्वर्थस्य निवेदयत्यभिमतं प्रधान्यमायुष्मतः।
किन्त्वार्थं न तु शब्दगम्यमवदत्तेनापि तद्योत्द्यते
नोत्सर्गस्य विना निमित्तमपरं संकोचनं युज्यते ॥ ३३६ ॥

धातोरिति। अभिमतं प्राधान्यमन्वयोपयुक्तं प्राधानमित्यर्थः। अस्यैव विवरणान्न तु शब्दगम्यमवददिति। आयुष्मतः प्रमाणव्यापारानभिज्ञस्य तवेत्युपहासः। कीदृशं तर्हि तत्प्राधान्यमित्याकाङ्क्षापूर्वकमाह— किन्त्विति। आर्थं धात्वर्थस्येच्छाकर्मत्वानुपपत्तिगम्यमित्यर्थः ॥ ३३६ ॥

ननु कर्मत्वप्रयुक्तं यत्प्रकृत्यर्थप्राधान्यं तदार्थमेव किमिति गृह्यसे तत्राह—

धातोः कर्मण इत्युदीरणमिदं साधारणं दृश्यते
शाब्दार्थत्वविशेषसूचकतया न ह्यत्र सूत्रे पदम्।

**धात्वर्थस्य तु कर्मतावचनमत्रोच्चारितं केवलं**
**तत्त्वार्थेऽप्युपपद्यमानमधुना नोत्सर्गपीडाकरम् ॥ ३३७ ॥**

तेनापीति । यद्वा प्रकृत्यर्थस्य कर्मत्वप्रयुक्तस्यापि प्राधान्यस्याङ्गीकारे इच्छाप्राधान्यं न स्यात् एकस्मिन् वाक्यार्थे एकस्यैव प्रधानत्वात् तथाचान्वयसिद्धर्थं तत्प्राधान्यस्य शाब्दत्वमपि वक्तव्यमेव । अन्यथा तत्सूत्रं नोपपद्येतेत्याशङ्क्यैकस्मिन्नपि वाक्यार्थे शाब्दार्थप्राधान्यद्वय-स्याविरोधात् न प्रकृत्यर्थप्राधान्यस्यान्वयसिद्ध्यर्थं तस्य शाब्दत्वापत्तिः न वा तस्यार्थवत्वे सूत्रानुपपत्तिरित्याह—तेनापीति । प्रकृत्यर्थार्थप्रा-धान्येनापीत्यर्थः । तद्धातोःकर्मण इति प्रकृत्यर्थकर्मत्वप्रतिपादकवचनं योक्ष्यते युक्तं भविष्यतीत्यपवादकाभावेप्युत्सर्गवाधो भवत्विति वक्तुं न शक्यं न्यायविरुद्धत्वादिति फलितमाह नोत्सर्गस्येति । उत्सर्गस्य-प्रत्ययार्थप्राधान्यविषयोत्सर्गन्यायस्य निमित्तं वाधकमपरं कर्मत्व-प्रयुक्तप्रकृत्यर्थप्राधान्यातिरिक्तं संकोचनं वाधनमतिप्रसङ्गादिति भावः । ननु प्रकृत्यर्थप्राधान्यस्यार्थिकत्वप्रतिपादनपदाभावात् कथं तस्य तत्त्वन्निश्चीयत इत्याशङ्क्य शाब्दत्वसूचकविशेषणस्याप्यभावात् कर्मत्वमात्रस्यैव तत्राभिधानात्तस्य चार्थिकप्राधान्येप्युपपन्नत्वान्नौ त्सर्गिकप्रत्ययार्थप्राधान्यभङ्गेन शाब्दत्वं कल्पयितुं युक्तमित्यभिप्रेत्यो-क्तमेव विशदयति । धातोः कर्मण इत्युदीरितमिति उदीरितमुदीरणं साधारणं धात्वर्थप्राधान्यस्य शाब्दत्वार्थत्वसाधारणं शाब्दार्थत्वविशेषसूचक-तया शाब्दत्वार्थत्वलक्षणविशेषसूचकत्वेन प्रकृतिधात्वर्थप्राधान्यस्येति शेषः । कर्मतावचनं कर्मत्वप्रतिपादकं धातोः कर्मण इति वचनमत्रसूत्रे तत्कर्मतावचनमार्थे प्रकृत्यर्थप्राधान्य इति शेषः । उत्सर्गपीडाकरमौ-त्सर्गिकप्रत्ययार्थप्राधान्यापवादकमित्यर्थः ॥ ३३७ ॥

इच्छाया एव प्राधान्यं शाब्दमित्यस्य सूचकमप्यस्मिन् सूत्रे-ऽस्तीत्याह—

**इच्छायामिति सूत्रकारवचनं प्राधान्यपक्षे भवे-**
**दिच्छार्थस्य समञ्जसं न खलु तत्सन्प्रत्ययार्थे गुणे।**
**धात्वर्थे ननु सन् भवेदिति वदेदिच्छा गुणश्चेद्भवे-**
**दिच्छायामिति वक्ति तेन वदति प्रधान्यमिच्छागतम् ॥**
**॥ ३३८ ॥**

इच्छायामितीति। धातोः कर्मणः समानकर्तृकादिच्छायां वेत्यत्रेच्छायामिति सूत्रकारवचनम् इच्छार्थस्येच्छारूपार्थस्य तत्सूत्रकारवचनं गुणेऽप्रधाने सूत्रकारो हि पाणिनिः इषिसमानकर्तृकादिषिकर्मणो धातोरिच्छायां वाच्यायां सन् प्रत्ययो भवतीत्याह। इदं च सन्वाच्येच्छायाः प्राधान्य एव संगच्छते नत्वप्राधान्ये प्रकृतिप्रत्ययौ गुणविशिष्टं प्रधानमर्थं ब्रूत इति न्यायेन प्रधानस्यैव वाच्यत्वात् यदि च सनर्थस्येच्छाया अप्राधान्यं सूत्रकारस्य विवक्षितं भवेत्तदा धातोरिच्छाकर्मणः समानकर्तृकाद्वेत्येव सूत्रं प्रणीय इष्यमाण धात्वर्थ एव सनं विदध्यादिच्छायामिति च पृथग्वर्ति अतस्तस्येच्छागतमेव प्राधान्यं संमतं तथा चोत्सर्गन्यायेन प्रत्ययार्थेनैव यज्ञादीनामन्वय इति भावः। नन्वौत्सर्गिकप्रत्ययार्थप्राधान्यस्यापि क्वचिद्बाधो दृष्टः अश्वेन जिगमिषतीत्यत्रेष्यमाणगमनेनैवाश्वस्य साधनेनान्वयदर्शनात् तद्वदत्रापीष्यमाणज्ञानस्यैव साध्यतया साधनाकाङ्क्षायां यज्ञादीनां तत्प्रत्येव साधनत्वेनान्वयो वक्तव्य इति चेन्न तत्र हि गमनेच्छायाः कथमप्यश्वसाध्यत्वानुपपत्त्या बलवद्बाधकबलेन गमनस्य साक्षादश्वसाध्यत्वसम्भवाच्च। इष्यमाणगमनसाधनत्वमश्वस्य बोध्यते प्रकृते तु न तथा यज्ञादेरप्रमाणत्वेन ज्ञानसाधनत्वासंभवात् परम्परया साधनत्वसंभवे च तत्प्रथमभावितदिच्छां प्रत्येव साधनत्वौचित्यात्। तत्साधनत्वं विना ज्ञानसाधनत्वस्याप्ययोगात् ॥ ३३८ ॥

नन्विच्छाया विषयसौन्दर्यलभ्यत्वान्न यज्ञादिसाध्यत्वमिति चेत्तुल्यं ज्ञानेपि तस्यापि प्रमाणप्रमेयपरतन्त्रस्य साक्षाद्यज्ञादिसाध्यत्वाभावात् तस्मादौत्सर्गिकप्रधान्यबाधकाभावादाशयशुद्धिद्वारा विविदिषां प्रत्येव यज्ञादेः साधनत्वं श्रौतमित्युपसंहरति—

**तस्मात्कर्म समस्तमेव तु भवेच्चिदिच्छाजनेः साधनं**

**शास्त्रेणोक्तमतः समस्तमपि तद्यत्नेन हेयं यतः ।**

**द्रष्टव्यत्वमनूद्य साधनतया यत्तत्प्रतीचः श्रुतं**

**वेदान्तश्रवणादिकं भवति तत्कर्त्तव्यमावश्यकम् ॥३३९॥**

तस्मादिति । इच्छाजनेर्विविदिषोत्पत्तेः कर्मणां विविदिषासाधनत्वेन ज्ञानं प्रति वहिरङ्गत्वसाधनफलमाह—अतःसमस्तमपीति । तद् -वेदानुवचनदानजपादिकर्म, यत्नेन श्रद्धाजाड्यं विहाय किं तस्य कर्त्तव्यमिति सम्बन्धः । द्रष्टव्य इत्यत्र प्रकृत्यर्थात्मदर्शनमित्यर्थः । साधनतया—दर्शनसाधकतया । यच्छब्दार्थमाह—वेदान्तश्रवणादिकमिति । आदिपदेन मनननिदिध्यासने शान्त्यादिकं च गृह्यन्ते । आत्मा वा अरे द्रष्टव्यः आत्मानं पश्येदिति आत्मदर्शनमनूद्य तत्साधनत्वेन श्रोतव्यो मन्तव्यो निदिध्यासितव्यः शान्तो दान्त इत्यादिना यच्छ्रवणादि साधनं विधीयते तदवश्यमपरोक्षात्मदर्शनकामेन यतिना कर्तव्यमित्यर्थः ॥ ३३९ ॥

नन्विदमात्मदर्शनं किंकरणकं किमुपकरणकमित्याकाङ्क्षायां सुखप्रतिपत्त्यर्थं विभज्य दर्शयति ।

**वेदान्तवाक्यमिह कारणमात्मबोधे**

**हेत्वन्तराणि परिपन्थिनिबर्हणानि ।**

**यज्ञादिकानि दुरितं क्षपयन्ति बुद्धे-**

**स्तत्त्वंपदार्थविषयं तम उत्तराणि ॥ ३४० ॥**

वेदान्तवाक्यमिति । तत्त्वमादि वाक्यं कारणं करणं हेत्वन्तराणि यज्ञादीनि श्रवणादीनि च परिपन्थिनिवर्हणानि विद्योत्पत्तौ तत्फलाविद्या निवृत्तौ च प्रतिवन्धनिरासीनि कस्य किं प्रतिवन्धनिरासित्वमित्याकाङ्क्षायां यज्ञादीनां विद्योत्पत्तिप्रतिवन्धनिरासित्वं श्रवणादीनां च तत्फलप्रतिबन्धनिरासित्वमित्याह—यज्ञादिकानीति । बुद्धेरन्तः करणस्य दुरितं विविदिषोत्पत्तिप्रतिवन्धनद्वारा ज्ञानोत्पत्तिप्रतिवन्धकं पापादृष्टं क्षपयन्ति नाशयन्ति । उत्तराणि विविदिषानन्तरवर्तीनि श्रवणादीनि तत्त्वंपदार्थविषयं तम अज्ञानं क्षपयन्ति । तथा चात्मज्ञाने तत्त्वमादिवाक्यं करणं यज्ञश्रवणादिकं तूपकारकं तत्रापि यज्ञादिकं विविदिषोत्पत्तिप्रतिवन्धकदुरितादृष्टनिर्वहणद्वारोपकरोति श्रवणादिकं तु पदार्थद्वयविषयाज्ञाननिर्वहणद्वारोपकरोतीत्युक्तमित्यर्थः ॥ ३४० ॥

ननु चिदेकरसब्रह्मात्माश्रयविषयमज्ञानमेकमेव तच्च वाक्यार्थज्ञानेनैव निरस्यं तत्कथं तदतिरेकेणान्तरङ्गसाधननिरस्यं तत्त्वंपदार्थविषयाज्ञानं पृथगुच्यत इत्याशङ्क्य सत्यं स्थूलदृष्ट्यनुरोधेनैव तदुक्तम् । उत्तमबुद्धीनान्त्वज्ञानमेकमेव ब्रह्मात्मसाक्षात्कारेणैव निवर्त्यं नान्तरङ्गसाधनेनेत्याह—

तत्त्वंपदार्थविषयं तम इत्यपीद-
मर्वागवस्थजनदृष्टिमपेक्ष्य गीतम् ।
अज्ञानमुत्तमदृशां पुनरेकमेव
संसारमूलमपवर्गफला च विद्या ॥ ३४१ ॥

तत्त्वंपदार्थविषयमिति । अर्वागवस्थजनदृष्टिमर्वाचीनप्राणिदृष्टिमविवेकिदृष्टिमिति यावत् । गीतमुक्तम् । उत्तमदृशां विवेकिनमपवर्गफलाअविद्यानिवृत्तिफला, विद्या-ब्रह्मात्मसाक्षात्कारः ॥ ३४१ ॥

किं तर्ह्यन्तरङ्गसाधनकृत्यं पदार्थविषयासंभावनादिनिवृत्तिरित्याह—

**अज्ञानसंशयविपर्ययरूपकाणि**
**ब्रह्मात्मबुद्धिजननप्रतिबन्धकानि।**
**तत्त्वंपदार्थविषयाणि निवर्तयन्ति**
**ह्यावृत्तिमन्ति मननश्रवणादिकानि ॥ ३४२ ॥**

अज्ञानेति। अज्ञानं तात्पर्यादिज्ञानाभाव. असंभावनादि वासनादार्ढ्यं वा। संशयः अहं ब्रह्म वा न वेत्येवमादिरूपः। विपर्ययः अहं कर्तेत्येवमादिरूपः। बुद्धिपदेनाविद्यानिवृत्तिफलशिरस्कबुद्धिरुच्यते। ननु किं सकृदेव श्रवणाद्यनुष्ठेयं तत्राह—आवृत्तिमन्तीति। पुनः पुनरनुष्ठानमावृत्तिः दीर्घकालादरनैरन्तर्यानुष्ठितानीत्यर्थः। तत्र श्रवणादिस्वरूपपरिज्ञानं विना तदनुष्ठानायोगात् ॥ ३४२ ॥

कानि तानि श्रवणादीनीत्याकाङ्क्षायामादौ श्रवणस्य लक्षणमाह—

**शब्दशक्तिविषयं निरूपणं**
**युक्तितः श्रवणमुच्यते बुधैः।**
**वस्तुवृत्तविषयं निरूपणं**
**युक्तितो मननमित्युदीर्यते ॥ ३४३ ॥**

शब्दशक्तीति। शक्तिपदं तात्पर्यस्याप्युपलक्षणं वेदान्तानां शक्तितात्पर्यावधारणं श्रवणमित्यर्थः। युक्तितः उपक्रमादिभिः। इदं च तात्पर्यावधारणे हेतुः। मननलक्षणमाह—वस्तुवृत्तेति। वस्तु ब्रह्माख्यं तस्य वृत्तं स्वरूपं तद्विषयं निरूपणं चिन्तनं युक्तितः आरम्भणाद्य-

धिकरणसिद्धन्यायैः वेदान्तैः श्रुतस्य वस्तुनो युक्तितोऽनुचिन्तनं मनन-मित्यर्थः ॥ ३४३ ॥

निदिध्यासनलक्षणमाह—

**चेतसस्तु चितिमात्रशेषता**
**ध्यानमित्यभिवदन्ति वैदिकाः ।**
**अन्तरङ्गमिदमित्थमीरितं**
**तत्कुरुष्व परमात्मबुद्धये ॥ ३४४ ॥**

चेतस इति । चेतसस्तत्त्वमादिवाक्यजन्यवृत्तिमदन्तः करणस्य चितिमात्रशेषता ब्रह्मात्मैक्यविषयता विजातीयप्रत्ययमकृत्वा अहं ब्रह्मास्मीति ब्रह्मात्मविषयप्रत्ययप्रवाहो निदिध्यासनमित्यर्थः । एवं शान्त्यादिलक्षणमपीन्द्रियनिग्रहादिकं तत्र तत्रोक्तमुपजीव्यमन्तरङ्ग साधनं न यज्ञादिवत्त्याज्यं किन्तु यावत्फलोदयमनुष्ठेयमित्याह— अन्तरङ्गमिति । तत्-अन्तरङ्गसाधनम् ॥ ३४४ ॥

निदिध्यासने पक्षान्तरमाह —

**श्रवणमननबुद्ध्योर्जातयोर्यत्फलं त-**
**न्निपुणमतिभिरुच्चैरुच्यते दर्शनाय ।**
**अनुभवनविहीना यैवमेवेति बुद्धिः**
**श्रुतिमननसमाप्तौ तन्निदिध्यासनं हि ॥ ३४५ ॥**

श्रवणेति । श्रवणमननबुद्ध्योः जातयोर्यत्फलं तद्दर्शनाय भवतीति निपुणमतिभिरुच्यत इति सम्बन्धः । एतदेव विशदयति—अनुभवन-

विहीनेति । श्रुतमननसमाप्तं श्रुतं श्रवणं दीर्घकालादरनैरन्तर्यानुष्ठानेन श्रवणमननपरिपाके सतीत्यर्थः । अनुभवनविहीना साक्षात्कारत्वरहिता या एवमेवेति बुद्धिः अहं ब्रह्मैवेति निर्णयात्मिका बुद्धिः तदेव निदिध्यासनं नाम अस्मिन् पक्षे श्रवणमननयोरेवानुष्ठेयत्वम् । निदिध्यासनं तु दीर्घकालमनुष्ठितश्रवणमननफलरूपनिर्णया बुद्धिर्यदा भवति तदेव साक्षात्कारो भवतीति नानुष्ठेयं पूर्वस्मिन् पक्षे तु निदिध्यासनमपि पृथगनुष्ठेयमिति भेदः ॥ ३४५ ॥

तदेवमन्तरङ्गबहिरङ्गसाधनानां प्रतिबन्धकनिरासित्वमेव । तन्निराससहकृतवेदान्तमहावाक्यमेव फलवत्साक्षात्कारं जनयतीत्युपसंहरति—

**पूर्वाण्यदृष्टपरिपन्थिनिबर्हणानि**
**दृष्टं हरन्ति च विरोधिनमुत्तराणि ।**
**वाक्यं निरस्तसकलप्रतिबन्धकं स-**
**दात्मानमद्वयमखण्डमबुद्धमाह ॥ ३४६ ॥**

पूर्वाणीति । विविदिषा पूर्वभावीनि यज्ञादिबहिरङ्गाणि दृष्टं विरोधिनमसम्भावनादिप्रतिबन्धकम्, उत्तराणि अन्तरङ्गाणि ॥ ३४६ ॥

एवं बहिरङ्गसाधनसमुपार्जितबुद्धिशुद्धेः अन्तरङ्गसाधनमसकृदनुतिष्ठतः संन्यासिनः किमस्मिन्नेव जन्मनि विद्योत्पत्तिः किं वा कर्मफलवज्जन्मान्तरेपीत्याकाङ्क्षायामित्याह—

**यज्ञादिक्षपितसमस्तकल्मषाणां**
**पुत्रादित्रयगतसङ्गवर्जितानाम् ।**

**संशुद्धे पदयुगलार्थतत्त्वमार्गे**

**प्रायेणोद्भवति हि जन्मनीह विद्या ॥ ३४७ ॥**

यशादीति । पुत्रादित्रयगतसङ्गवर्जितानां पुत्रवित्तलोकैषणाशून्यानां परमहंससंन्यासिनामिति यावत् । संशुद्धे पदयुगलार्थतत्त्वमार्गे पदद्वयार्थ एव तत्त्वमार्गः आत्मतत्त्वप्राप्त्युपायः आत्मतत्त्वप्रतिपत्त्युपायभूततत्त्वंपदार्थे सम्यक् शोधिते सतीत्यर्थः । इह-जन्मन्यसकृत् साधनानुष्ठानजन्मनि, प्रायेणेत्यनेन सकलप्रतिबन्धके निरस्ते इह भवति अन्यथा तु जन्मान्तरेपीति सूचितम् ॥ ३४७ ॥

तदेव विशदयति—

**अत्रैव जन्मनि भवेदपवर्गदायि**

**वाक्यप्रसूतमनुभूतिफलावसानम् ।**

**ज्ञानं निवारकनिमित्तवशादमुष्मि-**

**ञ्जन्मन्यपीति वचनादवगम्यते हि ॥ ३४८ ॥**

अत्रैवेति । साधनानुष्ठानवत्येव निवारकनिमित्तवशादागामिदेहारम्भकारब्धकर्मशक्तिलक्षणज्ञानोत्पत्तिप्रतिबन्धकनिमित्तवशात् अमुष्मिन् जन्मनि जन्मान्तरेपि तदनुभवावसानं ज्ञानं भवतीत्यवगम्यते । यदि प्रारब्धकर्मणो देहान्तरारम्भककर्मशक्तिर्न भवेत्तदा श्रवणादिसाधनपौष्कल्ये सति तस्मिन्नेव जन्मनि विद्योत्पत्तिर्भवति यदि तादृशी शक्तिर्विद्यते तदा साधनपौष्कल्येपि तत्प्रतिबद्धत्वान्न विद्योत्पत्तिः किन्तु जन्मान्तरे प्रतिबन्धविगममपेक्ष्य भवतीत्येवंव्यवस्थायां लिङ्गमाह—वचनादिति । वचनप्रतिपन्नार्थसामर्थ्या—दित्यर्थः ॥ ३४८ ॥

किं च तद्वचनं यदर्थसामर्थ्यादेवमङ्गीक्रियते तदाह—

**ज्ञानोत्पत्तिं वामदेवस्य गर्भे**
**श्रुत्वा विद्भः साधनं प्राच्यमस्य ।**
**योगभ्रष्टस्येत्यवष्टम्भतोऽपि**
**विज्ञातव्यं साधनं प्राच्यमस्य ॥ ३४६॥**

ज्ञानोत्पत्तिमिति । प्राच्यं प्राग्भवीयं गर्भे वसन्नेव गर्भस्थो वामदेवः प्रतिपेदे अहमनुरभवं सूर्यश्चेत्यादिना गर्भस्थस्यैव वामदेवस्य विद्योत्पत्तिः श्रूयते । न च तदा साधनानुष्ठानं तस्य संभवति । अतः प्राग्भवीयमेव साधनजातं तस्य तदानीं विद्यामुत्पादयतीति वक्तव्यम् । प्राग्भवीयसाधनस्य च परिपुष्कलस्य प्रतिबन्धकं विना फलविलम्बानुपपत्तेः । प्रतिबन्धकस्य चान्यस्याभावात् प्रारब्धकर्मणो देहान्तरारम्भकशक्तिविशेष एव प्रतिबन्धकः कल्प्यत इत्यर्थः । तदुक्तम् 'आगामिप्रतिबन्धस्तु वामदेवे समीरित' इत्यागामिप्रतिबन्धो जन्मान्तरहेतुः । प्रारब्धावशेष इत्यर्थ इति तद्व्याख्यानं प्रतिबन्धकवशात् जन्मान्तरेपि फलं भवतीत्यत्र गीतावचनमपि प्रमाणमाह— योगेति । साधनमनुष्ठानप्रतिबन्धकवशात् फलमप्राप्य मृतो योगभ्रष्टः तद्विषया स्मृतिस्तथा अस्य वामदेवस्य जन्मान्तरे विद्यासाधनवत इति वा । "पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते । शुचीनां श्रीमतां गेहे योगभ्रष्टोभिजायत" इत्यादियोगभ्रष्टस्मृत्यापि जन्मान्तरीयसाधनं जन्मान्तरीयविद्यामुत्पादयतीति ज्ञायत इत्यर्थः ॥ ३४६ ॥

ननु दृष्टफलस्य श्रवणस्य जन्मान्तरीयफलसम्बन्धो ऽनुपपन्न इति चेन्न—प्रतिबन्धके सति जन्मान्तरीयफलसम्बन्धे दृष्टफलत्वानुपपत्त्यभावात् यथा चित्रायागस्य दृष्टफलस्यापि कदाचिज्जन्मान्तरीयफलत्वमित्याह—

चित्रादिवद्भवति साधनजातमस्य
ज्ञानप्रसूतिकरमित्यवगच्छ सर्वम् ।
अभ्यग्रशुष्यदखिलौषधिकस्य पुंसो
वृष्टिप्रदेष्टिरधिकारवशादिहैव ॥ ३५० ॥

चित्रादिवदिति । आदिपदेन पुत्रेष्टिर्गृह्यते । अस्याधिकारिणः सर्वं साधनजातमिति सम्बन्धः । तर्हि कारीर्यपि कदाचिज्जन्मान्तरीयवृष्टिफला स्यान्नेत्याह—अभ्यग्रेति । अभ्यग्रमिदानीं शुष्यन्तः अखिलौषधयो यस्य स तथा तस्य पुंसः अधिकारवशादिष्टिः कारीरीष्टः इहैव वृष्टिप्रदेति सम्बन्धः । कारीरीविधिवाक्यशेषे ह्योषधीनामाप्यायमानत्वश्रवणात् शुष्यत्सस्यसंजीवनकाम एव कारीरीष्टावधिकारीति तदौषधिपुष्टिरेव कारीरीफलं न सामान्येनौषधिपुष्टिमात्रं फलमतो न जन्मान्तरे तत्फलसंभवः । इह फलादर्शने साधनवैकल्यमेव तत्र कल्पनीयं श्रवणादिकं तु चित्रादिवत् फलसाधनमात्रं न त्वैहिकफलसाधनम् । अतः प्रतिबन्धकबलात् कालान्तरेऽपि ज्ञानजन्मनि न विरोध इत्यर्थः ॥ ३५० ॥

एवमन्तरङ्गबहिरङ्गसाधने तयोर्ज्ञानसाधनत्वप्रकारं चोक्त्वा तयोरनुष्ठानेऽपि विशेषं वदन्नादौ बहिरङ्गसाधनं फलाभिसन्धिविधुरमीश्वरार्पितमेव चित्तशुद्धिद्वारा विविदिषासाधनम् । अन्यथा तस्य कर्मणा पितृलोक इति श्रुतिप्रतिपन्नपितृलोकादिसाधनत्वमेवेति विशेषमाह—

बहिरङ्गसाधनमशेषगुरोः
परमेश्वरस्य चरणाम्बुजयोः ।

**नियमात्समर्पितमशेषमघं**

**विनिहन्ति बुद्धिनिलयं सुमहत् ॥ ३५१ ॥**

बाहिरङ्गेति । बुद्धिनिलयम्-अन्तःकरणनिष्ठम् । अन्तरङ्गे तु नैतदित्याह—न तथेति । तथा बहिरङ्गवदीश्वरार्पणबुद्ध्यनुष्ठितत्वेनोपलब्धिजनेः ज्ञानोत्पत्तेः, अन्तरङ्गमेवाह—शमदमप्रभृतीति । शमोऽन्तरिन्द्रियनिग्रहः दमो बहिरिन्द्रियनिग्रहः आदिपदेनोपरतितितिक्षासमाधानश्रद्धाश्रवणादीनां ग्रहणम् ॥ ३५१ ॥

अन्तरङ्गबहिरङ्गवदीश्वरार्पितत्वेनोपकारकं न भवति चेत्तर्हि कथमुपकारकम् ? अनुष्ठानमात्रेणेत्याह—

**न तथान्तरङ्गमुपलब्धिजने-**

**रुपकारकं शमदमप्रभृति ।**

**तदनुष्ठितं परमहंसजनैः**

**परमात्मतत्त्वमुपलम्भयति ॥ ३५२ ॥**

तदनुष्ठितमिति । तदन्तरङ्गमनुष्ठितमनुष्ठितमेव सदुपलम्भयति नत्वीश्वरार्पितं सदित्यर्थः । ननु बहिरङ्गे भगवत्समर्पणमुत्कर्षकारणमस्ति अत्र तादृशमुत्कर्षकारणं नास्तीत्याशङ्क्य सम्यक्परमहंसानुष्ठितत्वमुत्कर्षकारणमित्याह—परमहंसजनैरिति । उपलम्भयति बोधयति ॥ ३५२ ॥

बहिरङ्गाणां भगवत्समर्पणे भगवद्वचनं प्रमाणमाह—

**भगवाननादिनिधनः कृपया**

**हरिरेतदाह जगदेकहितः ।**

सकलं समर्प्य मयि युक्तमनाः
कुरु कर्म शुद्धिकरमित्यसकृत् ॥ ३५३ ॥

भगवानिति । अनादिनिधन आद्यन्तरहितः "यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् । यत्तपसि कौन्तेय तत्कुरुष्व मदर्पणम्॥ शुभाशुभफलैरेव मोक्ष्यसे कर्मबन्धनै"रित्यादिना भगवान् निखिलकर्मणां ब्रह्मार्पणं तादृशानामेव परिपन्थिनिवर्हणत्वं च दर्शयतीत्यर्थः ॥३५३॥

नैवमन्तरङ्गसाधनस्य ब्रह्मार्पणं दर्शितमतस्तदनुष्ठानमात्रेणैव ज्ञानसाधनमित्याह—

न तथान्तरङ्गफलसंन्यसनं
क्वचिदूचिवानत इदं विदितम् ।
अनपेक्ष्य तत्फलपरित्यजनं
परमात्मनिश्चयफलं तदिति ॥ ३५४ ॥

न तथेति । तथा वहिरङ्गफलत्यागकीर्तनवदन्तरङ्गफलसंन्यसनमन्तरङ्गस्य फलस्य संन्यसनमीश्वरेऽर्पणं नोचिवान् भगवानिति शेषः । भगवदनुक्तिरतः शब्दार्थः । इदंशब्दार्थमाह—अनपेक्ष्येति । तत्फलपरित्यजनं तस्मिन्नीश्वरेऽर्पणं परमात्मनिश्चयफलमिति बहुव्रीहिः तत् अन्तरङ्गसाधनम् ॥ ३५५ ॥

वहिरङ्गाणां भगवत्समर्पणे मनः शुद्धिकरत्वमित्यत्रोपपत्तिरप्यस्तीत्याह—

अपि च बन्धनहेतुतया श्रुतं
समसमीक्षणकौशलशालिनः ।

भवति शुद्धिकरं न च बन्धकृ-
द्भवति कर्म तथा घटते हि तत् ॥ ३५५ ॥

अपि चेति। बन्धनहेतुतया श्रुतं कर्मेति सम्बन्धः। समसमीक्षणकौशलशालि समं ब्रह्म पण्डिताः समदर्शिन इत्यत्र समशब्दस्य ब्रह्मपरत्वे स्थिते तत्समीक्षणेन कौशलशालिब्रह्मार्पणबुद्ध्यानुष्ठानेन सामर्थ्ययुक्तं सदित्यर्थः। समसमीक्षणकौशलशालिन इत्येकं वा पदं ब्रह्मसमीक्षणे सामथ्ययुक्तस्य पुरुषस्याऽस्य च सामर्थ्यं भगवदर्पणं कर्म पुण्यात्मकमपि बन्धहेतुतया श्रूयते पुण्यो वै पुण्येन कर्मणा भवतीत्यादौ तत्र यदि कर्म अपरित्यक्तफलं स्यात्तदा संसार हेतुतया अशुद्धस्य तस्य शुद्धिहेतुत्वं न घटते न हि पङ्केन पङ्कप्रक्षालनं भवति। भगवदर्पणे तु तेन शुद्धत्वाच्छुद्धिकरमेव भवति न बन्धकृदित्यर्थः। तदुक्तं "यज्ञार्थात् कर्मणो ऽन्यत्र लोकोऽयं कर्मबन्धन" इति। ननु बन्धहेतोः कर्मणः फलत्यागमात्रेण कथं शुद्धिहेतुत्वमित्याशङ्क्य "योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धय" इत्यादिस्मृतेः प्रमाणसिद्धत्वान्मैवमित्याह—तथेति। तथा—भगवदर्पणे सति, तत्कर्म घटते, हि—शुद्धिकरं भवति हीत्यर्थः॥ ३५५ ॥

अन्तरङ्गाणां च बन्धहेतुतया क्वचिदप्यनवगमात् ज्ञानहेतुत्वावगमाच्च स्वतः शुद्धत्वान्नेश्वरार्पणापेक्षेत्याह—

यदिह साधनमात्मधियः श्रुतं
न च फलान्तरहेतुतया श्रुतम्।
शमदमादिकमत्र तु कौशलं
किमपि काङ्क्षितमस्ति न सिद्धये ॥ ३५६ ॥

यदीति । इह वेदान्ते यत् शमदमादिकमात्मधियः साधनं श्रुत फलान्तरहेतुतया च न श्रुतमिति सम्बन्धः अत्र शमदमादिके कौशल-मनुष्ठानव्यतिरेकेण पुरुषसामर्थ्यमीश्वरार्पणमित्यर्थः ॥ ३५६ ॥

नन्वीश्वरार्पणबुद्ध्यानुष्ठेयं चेत्तर्हि कथ कर्त्तव्यमित्याकाङ्क्षाया-मुक्तार्थाध्यायानुवादपूर्वकं तदाह—

**उक्तं साधनजातमत्र सकलं विद्यासमुत्पत्तये**
**यस्मिन् कर्मणि वैदिकेन विधिना नुन्नः परिव्राजकः ।**
**कर्तृत्वाद्युपमर्दनेन भवता विद्यानुकूलात्मना**
**कर्त्तव्यं तदशेषतस्तदनु ते विद्याविपाकं व्रजेत् ॥ ३५७ ॥**

उक्तमिति । अत्रास्मिन्नध्याये विद्यासमुत्पत्तये साधनजातवैरा-ग्यदार्ढ्यश्रवणादिशान्त्यादिकं सकलमुक्तं साधनं विशिनष्टि यस्मिन्निति । यस्मिन्कर्मणि साधने वैदिकेन विधिना परिव्राजकः परम-हंसयतिः नुन्नः नियुक्तः तत्साधनजातमुक्तमिति सम्बन्धः । वहिरङ्गसाधनस्याप्युपलक्षणमेतत् । कथं कर्त्तव्यमित्यस्योत्तरमाह — कर्तृत्वादीति । कर्तृत्वाद्यभिमानवाधेन विद्यानुकूलात्मना विद्यानुकूल आत्मान्तःकरणं यस्य भवतः स तथोक्तः । असौ स्वरूपं यस्य कर्तृ-त्वाद्युपमर्दनस्येति वा तच्छ्रवणादिसाधनमशेषतः सर्वं तदनु तथा-नुष्ठितश्रवणाद्यनन्तरं विपाकं फलपर्यन्ततां विद्या हि साध्यतया शेषि-भूता अकर्त्रात्मानमेव विषयीकरोति तदानुकूल्येन श्रवणादिकमपि कर्तृत्वाद्यभिमानं परित्यज्याकर्तृभावनापूर्वकमेव कर्त्तव्यम् । अन्यथा शेष्यनुत्पादप्रसङ्गात् । कर्तृत्वाद्यभिमानराहित्येन श्रवणादौ कृते विद्यापि फलपर्यवसाना भवति अतस्तथैव कर्त्तव्यम् । अत्र चामानि-त्वमदम्भित्वमित्यादयो धर्मा अपि सूचिताः ॥ ३५७ ॥

ननु नुन्नः परिव्राजक इत्यत्र श्रवणादौ परिव्राजकोऽधिकारीत्युक्तं तर्त्कि स एवाधिकारी तर्हि विवेकादिसम्पन्नैर्गृहस्थादिभिरनुष्ठितं श्रवणादिकं व्यर्थं स्यादित्याशङ्क्य न केवलं तस्यैवाधिकारः किन्तु गृहस्थादीनामपि परन्तु तैरनुष्ठितं श्रवणादिकं कदाचित् संन्यासमासाद्यैवासंभावनादिनिवृत्तिद्वाराफलवद्धियां जनयति न तु तं विना अतो न व्यर्थमित्याह—

**वानप्रस्थगृहस्थनैष्ठिकजनैरन्यैश्च वर्णाश्रमैः**
**कर्त्तव्यध्वनिषेवितं भवति वै जन्मान्तरे पाचकम्।**
**विद्यायाः श्रवणादिलक्षणमिदं न ह्येतदेषां क्वचि-**
**च्छास्त्रेण प्रतिषिद्धमीक्षितमिदं शूद्रस्य दृष्टं यथा ॥३५८॥**

वानप्रस्थेति। जनशब्देन ब्राह्मणो विवक्ष्यते वर्णपदेन क्षत्रविशौ आश्रमपदेनोपकुर्वाण इति भेदः। कर्त्तव्यं साधनं सुनिषेवितं सादरं वैराग्याद्यमानित्वादिपूर्वमनुष्ठितमित्यर्थः। वैशब्दोऽवधारणे। जन्मान्तर इति परमहंससंन्यासकालोपलक्षणम्। पाचकं—परिपाकहेतुः। वानप्रस्थगृहस्थनैष्ठिकजनैरन्यैश्च वर्णाश्रमैः सुनिषेवितमिदं श्रवणादिलक्षणं कर्त्तव्यम्। जन्मान्तर एव विद्यायाः पाचकं भवतीत्यन्वयः। ननु ज्ञानसाधनश्रवणादौ गृहस्थादीनां वा कथं प्रवृत्तिः प्रापकाभावादित्याशङ्क्य श्रवणस्य दृष्टफलत्वेन सामान्यतो गृहस्थादीनामप्यधिकारप्राप्तेः। तस्य च शूद्रादेरिव निषेधाभावेनापवादाभावात् प्रवृत्तिः संभवतीत्यभिप्रेत्याह—न हीति। एतत्—श्रवणादिकमेषां गृहस्थादीनाम्, इदं—श्रवणादिनिषेधनम् ॥ ३५८ ॥

ननु यदि गृहस्थादीनामधिकारे सत्यपि तैः सम्यगनुष्ठितं श्रवणादिकं जन्मान्तर एव फलवद्धियां जनयति तर्हि परमहंसानुष्ठितं

कथमस्मिन्नेव जन्मनि जनयेदित्याशङ्क्य संन्यासस्यापि सर्वश्रुतिस्मृतिषु विद्यासाधनत्वेन श्रुतत्वात्सौकर्येण श्रवणाद्यनुष्ठानोत्कर्षस्यापि संभवात् तस्य च गृहस्थादावभावान्न तस्मिन् जन्मनि विद्योत्पत्तिः परमहंसे च तत्संभवात् तस्य तस्मिन्नेव जन्मनि प्रारब्धलक्षणपूर्वोक्तप्रतिबन्धकाभावे विद्योत्पत्तिः संभवतीत्याह—

**सर्वश्रुतिस्मृतिवचोभिरयं परिव्राड्-**
**मुण्डः शुचिः परमहंस इति प्रसिद्धः।**
**ज्ञानाय साधनधनेषु नियुज्यमानः**
**प्रायेण बुद्धिपरिपाकमवाप्स्यतीह ॥ ३५६ ॥**

सर्वश्रुतिस्मृतिवचोभिरिति । वक्ष्यमाणश्रुतिस्मृतिवचोभिः इदं च ज्ञानाय साधनगणेषु नियुज्य इत्यत्र सम्बध्यते । साधनगणेषु श्रवणादिषु परिव्राड् मुण्डः शुचिः परमहंस इति प्रसिद्धः । अथ परिव्राड् विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोहिभैक्षाणः सपरमहंसो नामेति परिव्राट्त्वादिना प्रसिद्धः अयं परिव्राजकः अधिकारी इह साधनानुष्ठानजन्मन्येव प्रायेण प्रतिबन्धकाभावे सति बुद्धिपरिपाकमवाप्स्यतीत्यर्थः ॥ ३५६ ॥

ननु संन्यासस्य विद्यापरिपाकहेतुत्वं न संभवति तं विनापि जनकयाज्ञवल्क्यादीनां फलवद्विद्योदयश्रवणात् अतः कथं गृहस्थादीनां जन्मान्तर एव बुद्धिपरिपाक इति चेन्न—जनकादीनामपि जन्मान्तरे संन्यासपूर्वकश्रवणाद्यनुष्ठानसंभवात् न च कल्पकाभावः ज्ञानोद्देशेन संन्यासविधानस्यैव तस्य कल्पकत्वात् अन्यथा तद्विधिवैयर्थ्यप्रसङ्गादित्यभिप्रेत्याह—

जन्मान्तरेषु यदि साधनजातमासी-
त्संन्यासपूर्वकमिदं श्रवणादिरूपम् ।
विद्यामवाप्स्यति जनः सकलोऽपि यत्र
तत्राऽऽश्रमादिषु वसन्न निवारयामः ॥ ३६० ॥

जन्मान्तरेष्विति । सकलोपि क्षत्रियादिरपि ॥ ३६० ॥

संन्यासस्य विद्यापरिपाकसाधनत्वे श्रुतिप्रमाणमाह—

वेदान्तविज्ञानसुनिश्चितार्थाः
संन्यासयोगाद्यतयः शुद्धसत्त्वाः ।
ते ब्रह्मलोकेषु परान्तकाले
परामृताः परिमुच्यन्ति सर्वे ॥ ३६१ ॥

वेदान्तेति ॥ ३६१ ॥

इतिहासमपि संन्यासकर्त्तव्यतायां प्रमाणमाह—

नैतादृशं ब्राह्मणस्यास्ति वित्तं
यथैकता समता सत्यता च ।
शीलं स्थितिर्दण्डनिधानमार्जवं
ततः ततश्चोपरमः क्रियाभ्यः ॥ ३६२ ॥

नैतादृशमिति । एकता-एकबुद्धिः, शीलम्-आचारः, दण्डनिधानम्-इन्द्रियनिग्रहः, ततस्ततः क्रियाभ्यः परमः-सकलकर्मत्यागलक्षणपरमहंससंन्यास इत्यर्थः ॥ ३६२ ॥

संन्यासस्यैवानर्थनिवृत्तिहेतुत्वे प्रमाणमाह—

यतो यतो निवर्तते ततस्ततो विमुच्यते ।
निवर्त्तनाद्धि सर्वतो न वेत्ति दुःखमण्वपि ॥ ३६३ ॥

यतो यत इति । सर्वतो निवर्तनं संन्यासः ॥ ३६३ ॥

सर्वं संन्यस्यात्मैव ज्ञातव्य इत्यत्र भारतवचनमप्युदाहरति —

किं ते धनेन किमु बन्धुभिरेव वा ते
किं ते दारैर्ब्राह्मण यो मरिष्यसि ।
आत्मानमन्विच्छ गुहां प्रविष्टं
पितामहास्ते क्व गताः पिता च ॥ ३६४ ॥

किं ते धनेनेति । धनादिसाध्यकर्मणां बन्धे हेतुत्वात् तत्सर्वं संन्यस्य आत्मानं विजिज्ञासस्वेत्यर्थः ॥ ३६४ ॥

संन्यास एव परमपुरुषार्थसाधनमित्यत्र स्मृतिमाह —

अर्थस्य मूलं निकृतिः क्षमा च
कामस्य रूपं च वयो वपुश्च ।
धर्मस्य यागादि दया दमश्च
मोक्षस्य सर्वोपरमः क्रियाभ्यः ॥ ३६५ ॥

अर्थस्य मूलमिति । तस्मात् संन्यासस्य बुद्धिपरिपाकहेतुत्वेन तं विना फलवद्विद्योदयासंभवात् सर्वबहिरङ्गसाधनं संन्यस्य संसारदोषदर्शनेन विवेकवैराग्यदार्ढ्यं सम्पाद्य यावद्ब्रह्मात्मैक्यबुद्धिपरिपाकं शान्त्यादिभिः सह तत्त्वंपदार्थपरिशोधनरूपश्रवणादिकं कर्तृत्वाद्यभिमानराहित्येनानुतिष्ठेदिति सिद्धम् ॥ ३६५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यजगन्नाथाश्रमश्रीचरणचरण-
परिचरणप्राप्तविद्यानिखिलविद्वज्जनमनोहर श्रीनृसिंहाश्रम-
विरचितायां संक्षेपशारीरकव्याख्यां तत्त्वबोधिनी-
समाख्यायां साधनाख्यस्तृतीयोऽध्यायः
समाप्तः ॥

# संक्षेपशारीरकम्

## श्रीमत्सर्वज्ञमुनिविरचितम्

श्रीमन्नृसिंहाश्रमविरचितया तत्त्वबोधिन्याख्यया टीकया सहितम्

---

वाराणसेयराजकीयसंस्कृतमहाविद्यालयन्यायशास्त्राध्यापकेन न्यायव्याकरणाचार्य मीमांसाशिरोमण्युपाधिकेन श्रीसूर्यनारायणशर्मशुक्लेन संशोधितम्

---

( पञ्चमो भागः )

---

THE

# SAṂKṢEPA ŚĀRĪRAKA

OF SARVAJÑĀTMA MUNI

WITH

# TATTVABODHINĪ

OF NṚSIṂHA ĀŚRAMA

---

EDITED BY

SŪRYA NĀRĀYAṆA ŚUKLA,

NYĀYA VYĀKARAṆĀCHĀRYA,

Professor Govt. Sanskrit College, Benares.

---

1941.

श्रीविश्वेश्वरः शरणम्।

अयि विपश्चिदपश्चिमाः सहृदयधुरीणा मुमुक्षवो विद्वांसः?

विदितमेवेदं तत्रभवतां भवतां यत् "आस्तिकनास्तिकप्रभेद-भिन्नाः समेऽपि दार्शनिकाः प्रतिकूलवेदनीयतया हातुमिष्टस्य शोक-मोहलक्षणसंसाररूपबन्धस्य निवृत्तये यतमानाः "ऋते ज्ञानान्न-मुक्ति" रितिश्रुत्युपोद्बलितस्वानुभवयुक्तिभ्यां तत्त्वज्ञानमेव तदुपाय-मवधारयन्ति, तत्र तत्त्वस्य द्वैतत्वाद्वैतत्वसंशये "तत्र को मोहः कः शोक एकत्वमनुपश्यत" इति श्रुतिप्रतिपन्नमद्वैतमेव परमार्थ इति अद्वैतविदां शून्याद्वयविज्ञानाद्वयशब्दाद्वयब्रह्माद्वयवादिनां सुदृढो विश्वासः, तेष्वपि "एकमेवाद्वितीयं ब्रह्म' इति श्रुतिप्रतिपन्नः परमर्षिवादरायणप्रणीतब्रह्मसूत्रसंदब्धन्यायसमर्थित औपनिषदो ब्रह्माद्वयवाद एव परां कोटिमाटीकते इत्यस्माकमास्तिकानां चरमा विश्वासभूमिः, अत एवास्तिकजनजीवातुना भगवता लोकशंकरेण शंकरेण भगवत्पादश्रीशंकराचार्यरूपेणावतीर्य वादरायणप्रणीतब्रह्म सूत्रोपरि प्रसन्नगम्भीरं शारीरकभाष्यापराभिधानं शांकरभाष्यं नाम-भाष्यमभाषि इति" ॥

तस्यैव शांकरभाष्यस्य अर्थतस्तात्पर्यश्च व्याख्यानाय प्रवृत्तेषु पञ्चपादिकाभामतीप्रकटार्थविवरणरत्नप्रभादिषु ग्रन्थेषु एकतरमु-क्तानुक्तचिन्तात्मकं तात्पर्यतो व्याख्यानं शारीरकभाष्यवार्तिकापरा-भिधानं श्रीसर्वज्ञात्ममुनिप्रणीतं संक्षेपशारीकं नाम ग्रन्थरत्नमिदं यन्मुद्रयित्वा श्रीमतां करकमलयोरुपहर्तुमिच्छामि।

यद्यपि अनेकाभिर्व्याख्याभिः सहितमनेकत्र वहुवारं प्राप्तमुद्रण-मिदं संक्षेपशारीरकं तथापि उपलब्धटीकापेक्षया प्राचीनया प्रमेय-वहुलया गम्भीरया वृहत्परिमाणया श्रीपरमहंसपरिव्राजकाचार्य श्रीनृसिंहाश्रमप्रणीतया तत्त्वबोधिनीत्याख्यया श्रीपर्वतस्वामिपुस्त-

कालयादुपलब्धया अन्यत्र पुस्तकालयेषु अदृष्टपूर्वया सहितं न क्वापि मुद्रितमिति तद्व्याख्यासहितस्य संक्षेपशारीरकस्य मुद्रणमेतद्दिदृक्षासंजातामुत्कण्ठामपनयेद्दार्शनिकविदुषामित्येतावतैव कृतकृत्यप्रयत्नो विदुषां कृपाभाजनं स्यामित्यात्मानं बहु संभावये।

उपलभ्यमानाः संक्षेपशारीरकटीकाः—

तत्त्वबोधिनी—श्रीनृसिंहाश्रमकृता एका

सारसंग्रहः—श्रीमधुसूदनसरस्वतीकृता द्वितीया

अन्वितार्थप्रकाशिका—श्रीरामतीर्थकृता तृतीया

सुबोधिनी—पुरुषोत्तममिश्रकृता चतुर्थी

हित्वाहेयमुपादेयमुपादाय विचारतः।
प्रायेण पूर्वटीकानामिहार्थः प्रकटीकृतः।

इति सारसंग्रहस्थात्पद्यात् अन्या अपि काश्चन संक्षेपशारीरकस्य टीका आसन्निति प्रतीयते तत्रैका विश्ववेदकृता अपरा च प्रत्यग्विष्णुकृता इति।

विशेषाद्विश्ववेदस्य प्रत्यग्विष्णोश्च बुद्धयोः।
व्याख्यानं श्रद्धयाऽलेखि गुरूणां तौ हि नो गुरू॥

इति तत्रत्यादेव पद्यात् प्रतीयते।

"सिद्धान्तदीपोक्तिमवेक्ष्य मूलशास्त्रम्"

इति रामतीर्थकृतान्वितार्थप्रकाशिकास्थात् पद्यात् सिद्धान्तदीपाभिधमपि एकं व्याख्यानमासीत् तत् विश्ववेदकृतात् प्रत्यग्विष्णुकृताद्वा व्याख्यानादतिरिक्तमनतिरिक्तं वेति संशयो यावदुपलम्भमवतिष्ठते।

एवं व्याख्यानबाहुल्यदर्शनात्संक्षेपशारीरकस्य पूर्वं भूयान् पठनपाठनादौ प्रचार आसीदित्यनुमीयते।

संक्षेपशारीरककर्तुः समयादिः—

संक्षेपशारीरकस्य कर्ता सर्वज्ञात्ममुनिः श्री देवेश्वराचार्यशिष्यः मनुवंशोद्भवे आदित्याभिधे राजनि भुवं शासति आसीदित्येतावन्मात्रं-

"श्रीदेवेश्वरपादपङ्कजरजः संपर्कपूताशयः
सर्वज्ञात्मगिराङ्कितो मुनिवरः संक्षेपशारीरकम्।
चक्रे सज्जनबुद्धिवर्द्धनमिदं राजन्यवंशे नृपे
श्रीमत्यक्षतशासने मनुकुलादित्ये भुवं शासति"

इति संक्षेपशारीरकचतुर्थाध्यायद्विषष्टिमितात्पद्यादवगम्यते। अयं च देवेश्वराचार्यो भगवत्पादशंकराचार्यशिष्येषु अन्यतमः सुरेश्वराचार्य एव येन—नैष्कर्म्यसिद्धिः, तैत्तरीयोपनिषद्भाष्यवार्तिकम्, बृहदारण्यकोपनिषद्भाष्यवार्तिकम्, दक्षिणामूर्तिस्तोत्रवार्तिकं मानसोल्लासाख्यम्, पञ्चीकरणवार्तिकम्, काशीमृतिमोक्षविचारश्चेति षड्ग्रन्थाः प्रणीताः। "शिलालेखादिषु चोलवंशीया राजानो मनुवंशोद्भवत्वेन प्रसिद्धाः तस्मिँश्च वंशे आदित्यनामानस्त्रयो राजानः प्रसिद्धास्तेषु सर्वप्रथमः आदित्यः परान्तकस्य पिता आसीत् यस्य शासनकालः ईशवीयदशमशताब्द्याः पूर्वार्द्ध इति स एव संक्षेपशारीरककर्तुः सर्वज्ञात्ममुनेः समयः इति श्री महामहोपाध्याय गोपीनाथ कविराज - महोदया न्यरूपयन्नच्युतग्रन्थमालाप्रकाशितशांकरभाष्यभूमिकायाम्।

वस्तुतस्तु सर्वज्ञात्ममुनिप्रणीतप्रमाणलक्षणग्रन्थस्य समाप्तौ—

"श्रीदेवेश्वरपादपद्मरजसा सद्यः पवित्रीकृतः
सर्वज्ञात्ममहामुनिः प्रकरणं चक्रे त्रिकाण्डीगतम्
यस्त्वेतत्पुरुषोऽवगच्छति स वै भूमण्डले पण्डित-
स्तद्धत्तार्किकदुर्विदग्धदमने दक्षो मुमुक्षुर्भवेत्।
श्रीश्रेष्ठानन्दपादशिष्याः श्रीदेवानन्दपादाः

श्रीदेवानन्दपादशिष्याः श्रीदेवेश्वरपादाः

श्रीदेवेश्वरपादशिष्याः श्रीसर्वज्ञात्मपादाः

तदीया कृतिः—

प्रमाणलक्षणं समाप्तम् ।"

इति मद्रास सूचीपत्रे ( मद्रास का डिस्कप्टिव् कैटलाग जिल्द २८ परिशिष्ट पृ० संख्या १०३७२ पुस्तकसंख्या १५७१६ ) लेखात् देवेश्वराचार्यो देवानन्दशिष्यः श्रीशंकराचार्यशिष्यात्सुरेश्वराचार्याद्भिन्न एवेति सिद्ध्यति। श्रीनृसिंहाश्रमश्रीचरणा अपि "देवेश्वराख्य-गुरुचरणारविन्दरजसाम्" इति संक्षेपशारीरकप्रथमाध्यायाष्टम-श्लोकव्याख्याने लिखन्तः सुरेश्वराचार्याद्देवेश्वराचार्यस्य भेदमेवाभिप्रयन्ति। यत्तु "देवेश्वरस्य—सुरेश्वराचार्यस्य ········ सुरपदस्थाने देवपदप्रयोगः साक्षाद्गुरुनामाग्रहणाय" ( १ अ ८ श्लो० ) इति श्रीमधुसूदनसरस्वतीस्वामिनो लेखनं यच्च तत्समकालिकस्य श्रीकृष्णतीर्थस्वामिशिष्यरामतीर्थस्य "इदानीं साक्षात्स्वगुरुं सुरेश्वराचार्य-मभिपूजयति" इति संक्षेपशारीकव्याख्यायामन्वितार्थप्रकाशिकायां लेखनं तदुभयमपि भ्रान्तिमूलकं प्रमाणलक्षणग्रन्थसमाप्तिनिर्दिष्ट-गुरुपरम्पराविरोधात्।

गुरुं प्रकाशयेद्धीमानित्यभियुक्तोक्त्या साक्षाद्गुरुनामग्रहणस्य शिष्टाचारपरम्परायां प्रचलिततया भङ्ग्या गुरुनामग्रहणस्यानुचितत्वाच्च।

किं च देवेश्वराचार्यस्य सुरेश्वराचार्यत्वे देवेश्वराचार्यस्तुति प्रसङ्गेन सुरेश्वराचार्यकृत्यनुल्लेखः सर्वज्ञात्ममुनेरशोभन इवेति न देवेश्वराचार्यः सुरेश्वराचार्यः किन्तु अन्य एव प्राचीनवेदान्तग्रन्थेषु सुरेश्वराचार्यवचनोद्धरणमिव संक्षेपशारीरकवचनोद्धरणाभावः तथा-विधप्राचीनत्वे वाधक इति सर्वज्ञात्ममुनिः तृतीयस्य चोलवंशीयस्य आदित्यस्य शासनकाले वभूव यस्य समयो ई० द्वादश-

शताब्द्याः परार्द्धं इति प्रतीयते न तु त्रयोदशी शताब्दी तदानीं चोल-नृपाणां शक्तेर्ह्रासात्। चोलवंशीय दक्षिणभारतनृपतिनिर्देशात् सर्वज्ञात्ममुनिर्दाक्षिणात्य इति प्रतिभाति।

श्री नृसिंहाश्रमस्वामिनः समयादिः।

अद्वैतसिद्धौ मधुसूदनसरस्वतीस्वामिनः अप्पयदीक्षितेन्द्रं सर्वतन्त्र स्वतन्त्राः अप्पयदीक्षिता इति लिखन्ति अप्पयदीक्षिताश्च सिद्धान्तलेशसंग्रहे श्री नृसिंहाश्रमप्रणीतामद्वैतदीपिकामुदाहरन्ति इति वेदान्ततत्त्वविवेकश्च श्रीनृसिंहाश्रमस्वामिना पुरुषोत्तमपुरे १६०४ वि० १५४७ ई० सं० लिखित इति तत्त्वविवेकसमाप्तौ लिखितम् ततस्त्रयोऽपीमे समकालीना इति सिध्यति इति ई० षोडशी शताब्दी नृसिंहाश्रमस्वामिनः समयः।

एतेन मधुसूदनसरस्वतीस्वामिनः अप्पयदीक्षिताच्चायं नृसिंहाश्रमो वृद्ध इति सिद्धम्।

नृसिंहाश्रमस्वामिना प्रणीता ग्रन्थाः अद्वैतदीपिका, भेदधिक्कारः, पञ्चपादिकाटीकावेदान्तरत्नकोषः, पञ्चपादिकाविवरण टीका—विवरणभावप्रकाशिका, तत्त्वदीपनटीका—तत्त्वदीपनभाव प्रकाशिका, नृसिंहविज्ञापना, संक्षेपशारीरकव्याख्या तत्त्वबोधिनी, वेदान्ततत्वविवेकश्चेति अष्टौ।

श्री जगन्नाथाश्रमोऽस्य दीक्षागुरुर्गीर्वाणेन्द्रसरस्वती च विद्यागुरुः अस्य शिष्याः नारायणाश्रमो भट्टोजिदीक्षितः रङ्गोजिभट्टः वेदान्तपरिभाषाकारगुरुर्वेङ्कटनाथश्च। नानादीक्षितोऽपि नृसिंहाश्रमशिष्यः नृसिंहाश्रमः शतवर्षजीवी आसीदिति प्रसिद्धिः।

अप्पयदीक्षितस्य नर्मदातटे नृसिंहाश्रमेण समागमः संजातः ततः प्रभृति अद्वैतसिद्धान्ते श्रद्धावान् बभूव दीक्षितेन्द्र इत्यपि किंवदन्ती वेदान्तसिद्धान्तमुक्तावलीकारशिष्येण नानाजीदीक्षितेन नृसिंहसर्व-

स्वंनाम नृसिंहाश्रमचरितं लिखितं यत्पुस्तकं काशीसरस्वतीभवनस्थे अतिप्राचीनसंग्रहे वे० न० ६५ काव्यकोशसंग्रहे वर्तते पत्र सं० १११ लि० का० १६८२ विक्रमसंवत्सरः ।

येषामदम्योत्साहेनायं ग्रन्थः प्रकाशमुपगतस्तेषां वाराणसेय राजकीयसंस्कृतमहाविद्यालयाध्यक्ष संस्कृतसाहित्यप्रतिष्ठैकजीवित प्राच्यप्रतीच्योभयदर्शननिष्णात डा० श्री मङ्गलदेव शास्त्रि एम० ए० महोदयानां करकमलयोरुपहृत्यादो ग्रन्थरत्नं श्री विश्वनाथादर्थये सर्वविधामेषामुन्नतिमिति ।

ग० सं० का०
काशी ।

इति सूर्यनारायणशर्मशुक्लः ।

---

# संक्षेपशारीरकप्रथमाध्यायस्थ-

## विषयाणामनुक्रमणिका ।



### शिष्यस्य प्रश्नाः ।

## गुरोरुत्तराणि ।

## द्वितीयाध्यायस्थ-

### विषयाणामनुक्रमणिका ।

# तृतीयाध्यायस्थ-

## विषयाणामनुक्रमणिका ।



# चतुर्थाध्यायस्थ-

## विषयाणामनुक्रमणिका ।



इति संक्षेपशारीरक-

विषयानुक्रमणी समाप्ता ।

---

# संक्षेपशारीरकस्य श्लोकाद्यचरणप्रतीकवर्णानुक्रमः।

## आ

समाप्तोऽयं संक्षेपशारीरकस्य श्लोकाद्यचरणप्रतीकवर्णानुक्रमः ।

---

॥ श्रीगणेशाय नमः ॥

# सटीके संक्षेपशारीरके

## चतुर्थोऽध्यायः ।

—:○※○:—

अबोधोऽपि भवेद्बोधो यद्बोधात् पुरुषेप्सितः ।
अचिराद्देहविश्लेषस्तस्मै नृहरये नमः ॥

एवं साधनस्वरूपनिर्णयानन्तरं साध्यविषयिणीं जिज्ञासां दर्शयति—

**उक्तसाधनसमुद्भवा सती**
**किं प्रयच्छति फलं मुमुक्षवे ।**
**प्रत्यगात्ममतिरत्र मे मन-**
**स्यर्थिता समुपजायतेऽधुना ॥ १ ॥**

उक्तसाधनेति । तृतीयाध्यायोक्तश्रवणादिसाधनात्समुद्भवो यस्याः प्रत्यगात्ममतेः सा तथोक्ता किं कीदृशं फलं प्रयच्छति किमितरवादिभिरभ्युपेतसाध्यरूपमुक्तिफलं प्रयच्छति उत तद्विलक्षणमित्यर्थः । अत्र एतस्मिन्नर्थे अर्थिता बुभुत्सा अत्राप्युत्तरग्रन्थस्थं निर्णयं कुर्वित्येतत्संबध्यते ॥ १ ॥

बुभुत्सान्तरमप्याह—

**किं निरस्तसहकारिकारणा**
**केवलैव फलमर्पयेन्मतिः ।**

बाह्यसाधनसहायसंपदा
वान्विता फलविधायिनी भवेत् ॥ २ ॥

किं निरस्तेति । एतच्च केवलेत्यस्य विवरणम् । बाह्यसाधनसमुच्चितायाः फलहेतुत्वमुत केवलाया इत्यर्थः ॥ २ ॥

एतदप्यहमवैतुमुत्सहे निर्णयं कुरु कृपाविधेयधीः ।
एतदेव हि दयालुलक्षणं यद्विनेयजनबुद्धिवर्धनम् ॥ ३ ॥

एतदपीति । एतदप्यवैतुं बोद्धुमुत्सह इत्यर्थः । कृपाविधेयधीरित्याचार्यं प्रति संबोधनम् । नन्वियं साधनजिज्ञासा तृतीयाध्याय एव कर्तुमुचितेति चेन्न साधनस्यैव तत्र विचारितत्वात् । यद्यपि पुरुषार्थपादे ज्ञानस्यापि पुरुषार्थसाधनत्वमुक्तं तथापि तज्ज्ञानस्य क्रत्वर्थत्वनिरासेन पुरुषार्थत्वप्रतिपादनप्रसङ्गादुक्तमिति न विरोधः कश्चिद्बहुशः प्रश्नकरणेनाचार्यस्य कोपो माभूदिति तं प्रसादयति एतदेवेति । एतच्छब्दार्थमाह— यदिति । विनेयः शिष्यः ॥ ३ ॥

आत्मज्ञानफलं कीदृशमितिप्रश्नस्योत्तरमाह--

उच्यते न तमसो निवृत्तितः
किंचिदस्ति परमात्मधीफलम् ।
अन्यदल्पमपि साधनान्तरं
न व्यपेक्ष्य फलदायिनी च धीः ॥ ४ ॥

उच्यते इति । तमसः सविलासाविद्यायाः निवृत्तितोऽन्यत् किंचित्परमात्मधीफलं नास्तीति सम्बन्धः । अविद्यानिवृत्तिरेवात्मज्ञानस्य फलं न तु वैशेषिकादिमत इव वस्तु-

भूतस्य कस्य चिदुत्पत्तिर्निवृत्तिर्वा इत्यर्थः । यद्यपि तमोनिवृत्तिः स्वयमपुरुषार्थः सुखदुःखप्राप्तिपरिवर्जनयोरन्यतरत्वाभावात् तथापि तमसः सकलानर्थनिदानतया तन्निवृत्तावेव तदात्यन्तिकनिवृत्तिरिति भवत्यविद्यानिवृत्तिः पुरुषार्थः । यद्यप्यानन्दावाप्तिराप्यात्मज्ञानफलं तथापि तस्य नित्याप्तस्याप्राप्तभ्रान्तिध्वंसमात्रमेव ज्ञानेन संपाद्यते इति आनन्दावाप्तिरप्यज्ञाननिवृत्तावेव सिध्यतीति सैव फलमित्युक्तम्। ननु कस्याज्ञानस्यात्मज्ञानेन निवृत्तिः किं वाद्यन्तराभिमतप्रागभावरूपाज्ञानस्य उत भावरूपाज्ञानस्य—नाद्यः तन्निवृत्तेरपुरुषार्थत्वात् निखिलानर्थनिदानाज्ञानस्य सत्त्वात्, न द्वितीयः अनादिभावरूपस्य तस्य निवृत्त्यनुपपत्तेः । ननु वैशेषिकादिमते अनादिभावरूपस्यापि श्यामस्य निवृत्तिर्दृष्टेति चेन्न तस्याप्यसंप्रतिपत्तेः। न चानादेरपि प्रागभावस्य निवृत्तिरिव भावरूपस्यापि तस्य निवृत्तिरस्त्विति वाच्यम् भावविनाशस्य समवाय्यसमवायिविनाशप्रप्रयोज्यत्वेन तदभावे तदनुपपत्तेः अन्यत्रादृष्टत्वाच्च । नन्वनादिभावो न निवर्त्यत इति समान्यव्याप्तिः अज्ञानं ज्ञाननिवर्त्यमिति विशेषव्याप्तिविरोधेनाज्ञानातिरिक्तानादिभावविषया भविष्यतीति चेन्न ज्ञानप्रागभावनिवृत्तिव्यतिरेकेण लोके भावरूपाज्ञाननिवृत्तेरप्रसिद्धत्वात्। न चास्मन्मते अज्ञानस्य भावविलक्षणत्वात् अभाववैलक्षण्यमात्रेणैव भावत्वव्यवहारात् प्रागभाववन्निवृत्तिः स्यादिति वाच्यम् तर्ह्यभावविलक्षणत्वेनात्मवत्तदनुपपत्तेः तस्मादज्ञाननिवृत्तिरात्मज्ञानफलमित्येतदसङ्गतमिति चेत्—उच्यते अनादिभावरूपमप्यज्ञानं ज्ञानेन निवर्त्यते। न चानादिभावरूपस्यात्मवन्निवर्त्यत्वानुपपत्तिः आत्मनः सहानवस्थानलक्षणविरोध्यसंसृष्टत्वेनैवानिवर्त्यत्वात् अज्ञानस्य च ज्ञानलक्षणस्वविरोधिसंसृष्टत्वात् । ननु भावपदार्थस्य समवाय्यसमवायिनाशस्थितिविरोधित्वं तथा चाज्ञानेऽपि न विरोधिसंसर्गोऽस्तीति चेत् न प्रागभावादिनिवृत्त्यनुरोधेन नियमेन निवृत्तिप्रतियोग्यसमान-

कालीनस्थितिकस्यैव तत्प्रतियोगिविरुद्धत्वात् । ज्ञानस्य च तादृशत्वात् । किंच घटज्ञानेन घटाज्ञानं नष्टमित्यनुभवेन 'ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः' इत्यादिस्मृत्या चाज्ञानस्य ज्ञाननिवर्त्यत्वे सिद्धे प्रागभावरूपाज्ञानस्य निवृत्तेर्ज्ञानरूपत्वेन ज्ञानस्य निवर्तकत्वानुपपत्तेः प्रतियोगिज्ञानातिरिक्ताया निवृत्तेरननुभवाच्च अनादिभावरूपाज्ञानमेव ज्ञाननिवर्त्यमिति यदज्ञानं तज्ज्ञाननिवर्त्यमिति विशेषव्याप्तिः यदनादिभावरूपं तन्न निवर्त्यत इति सामान्यव्याप्तिं स्वविषयादज्ञानादपसारयत्येव । न च भावविनाशस्य समवाय्यादिनाशजन्यत्वनियमः आद्यशब्दनाशे व्यभिचारात् । न च द्रव्यनाशस्य तथा नियम इति वाच्यम् अज्ञानस्य द्रव्यत्वासिद्धेः द्रव्यत्वे च यथा गुणनाशे अनुगतं किंचिन्नाशकारणं नास्ति तथा द्रव्यनाशे ऽपि क्वचित्समवाय्यादिनाशः क्वचिदन्यदित्यननुगतमेव कारणमस्तु । नन्वनुगतकारणे संभवति बाधकं विना तत्त्यागो न युक्त इति चेत् न 'तरति शोकमात्मवित्' 'तरत्यविद्यां विततम्' ज्ञानेन तु तदज्ञानम्' इत्यादिश्रुतिस्मृत्योर्ज्ञानेनाज्ञानं नष्टमित्यबाधितानुभवस्य च बाधकस्य सत्त्वात् किं च ज्ञानजन्यनिवृत्तित्वस्य समवाय्यादिनाशाजन्यत्वव्याप्तेर्निवर्तकज्ञानत्वस्य समवाय्यादिनाशासहकृतत्वव्याप्तेश्च संशयादिनिवृत्तौ विशेषदर्शने च दृष्टत्वेन अनुभवादिसिद्धज्ञानजन्याज्ञाननिवृत्तेरपि समवाय्यादिनाशाजन्यत्वस्य तज्जनकज्ञानस्य च तदसहकृतत्वस्य वक्तव्यत्वेन कार्यद्रव्यनाश एव समवाय्यादिनाशजन्यत्वनैयत्यं वक्तुमुचितं न तु द्रव्यनाशमात्रे । नचैतन्नियमानुरोधेन ज्ञानजन्यगुणनिवृत्तौ गुणनिवर्तकज्ञान एव च उक्तनियमः किं न स्यात् विनिगमकाभावादिति वाच्यम् ज्ञानस्य श्रुत्याद्यवगताज्ञाननिवृत्तिकारणताभङ्गस्यैव विनिगमकहेतोः सत्त्वात् किं च न तावत् समवायिकारणनाशस्य द्रव्यनाशहेतुत्वं सत्यपि तन्तौ पटविनाशात् । ननु यत्र तन्तुनाशात्पटनाशः तत्र स हेतुरिति चेत् न तस्यापि त्वन्नये ऽसम-

वायिनाशसंपादकतयाऽन्यथासिद्धत्वात् पटो दह्यत इति प्रतीत्या साक्षादेवाग्निसंयोगस्य पटनाशहेतुत्वावगमाच्च अत एव नासमवायिनाशस्यपि द्रव्यनाशहेतुत्वं मुद्गरेण घटो भग्नः हस्तेन पटश्छिन्नः इति मुद्गरादेरेव घटादिनाशहेतुत्वानुभवाच्च तस्मात्समवाय्यादिनाशस्याप्रयोजकत्वाद्विरोधिसंसर्गस्यैव विनाशकारणत्वावगमात् निवृत्तिप्रतियोग्यसमानकालस्थितिकस्यैव प्रतियोगिविरुद्धत्वात् तादृशविरोधिसंसर्गस्य चात्मन्यभावात् अनादिभावरूपेऽप्यज्ञाने च सत्त्वात्तन्निवृत्तिरुपपद्यते इति अज्ञाननिवृत्तिः परमात्मधीफलमित्यत्र न काचिदनुपपत्तिरिति सिद्धम्। द्वितीयप्रश्नस्योत्तरमाह—अल्पमपीति। साधनान्तरं ज्ञानातिरिक्तं कर्मोपासनं वेत्यर्थः। फलदायिनी फलमविद्यानिवृत्तिः अज्ञाननिवृत्तेरेव ज्ञानफलत्वात् न तज्जननेऽन्यापेक्षेत्यर्थः॥ ४॥

ननु ज्ञानस्याज्ञाननिवृत्तिरेव फलं सा च ज्ञानमात्रादेव भवतीत्येतत्कुत्र दृष्टं येन तद्वदत्रापि सैव फलमित्युच्यतेत्याकाङ्क्षायां लोके दृष्टमित्याह—

**शुक्तिकाविषयबुद्धिजन्मनः**
**शुक्तिकागततमोनिवृत्तितः।**
**नापरं किमपि दृश्यते फलं**
**नापरं च सहकारि कारणम्॥ ५॥**

शुक्तिकेति। शुक्तिकाविषयोत्पन्नज्ञानस्येत्यर्थः॥ ५॥

ननु भवतु लोके यथा तथा आत्मज्ञानस्य तु नाविद्यानिवृत्तिः फलं दुःखोपप्लुतविज्ञानसंताननिवृत्त्यादेरेव वादिभिः फलत्वेनोपवर्णनात् तस्यैव मोक्षत्वाच्च किं च शास्त्रीयसाधनं केन चिदुपकृतमेव

स्वफलं जनयतीत्याग्नेयादौ दृष्टम् अतः कर्मादिकमपि ज्ञानसहकारि-वक्तव्यमित्याशङ्कां दार्ष्टान्तिकप्रदर्शनव्याजेन परिहरति—

एवमात्मनि तमोनिवृत्तितो
नान्यदस्ति परमात्मधीफलम् ।
नाप्यपेक्ष्य सहकारि कारणं
किंचिदात्ममतिरर्पयेत्फलम् ॥ ६ ॥

एवमिति । यथा शुक्तिकाज्ञानस्य शुक्तिकागततमोनिवृत्तिव्यतिरेकेणान्यफलान्तरं नास्ति नापि तद्भावे सहकार्यन्तरम् एवं परमात्मज्ञानस्यापि परमात्मगततमोनिवृत्तिव्यतिरेकेणान्यदुःखनिवृत्त्यादिकं फलं नास्ति नापि सहकार्यपेक्षेत्यर्थः ।

अयं भावः न तावदुपप्लुतविज्ञानसंतानोपरमो ज्ञानफलं मोक्षः संतानस्य संतानिव्यतिरिक्तस्य ज्ञानोपरम्यस्य कस्यचिदभावात् संतानिन एव तत्त्वे अनुक्षणं लीयमानतया संसारदशायामविमुक्तयापत्तेः संतानिनश्च ज्ञानस्य स्थायित्वे अपसिद्धान्तापातात् ज्ञानसंतानस्यात्मत्वेन तदुच्छेदस्यापुरुषार्थत्वप्रसङ्गाच्च न हि स्वोच्छेदाय कस्य चिद्वाञ्छा समुपजायते। ननु विषयाकारेणोपप्लुतविज्ञानसन्तानस्यैवोपरमो मोक्षः न त्वालयविज्ञानसंतानस्येति चेन्न-आलयविज्ञानसंतानव्यतिरेकेण विषयाकारविज्ञानसंतानस्यासंभवात् ज्ञानद्वययौगपद्यायोगात् । नन्वेकस्मिन्संतान एव ज्ञानयौगपद्यासंभवः न तु संतानभेदेऽपीति चेत् न विषयाकारविज्ञानसंतानस्यालयविज्ञानसंतानाद् भिन्नत्वे पुरुषान्तरसंवेदनवत् अप्रत्यक्षत्वेन तदुपप्लवस्याप्यप्रत्यक्षतापत्त्या तत्संबन्धा-

भावाच्च तन्निवृत्तेरपुरुषार्थत्वापातात् आलयविज्ञानसन्तानेऽपि कर्तृत्वाद्युपप्लवसंभवेन तदुच्छेदस्यापि वक्तव्यत्वाच्च ।

नाप्यनुपप्लुतचित्तसंतानोदयो ज्ञानफलं मोक्षः तत्र किं दण्डायमानस्थायिनि संतानेऽनुपप्लवमात्रं ज्ञायते किं वानुप्लवविशिष्टसंतानान्तरे नाद्यः अपसिद्धान्तापातात् क्षणिकस्य च तस्यानुपप्लवाधारत्वायोगात् न द्वितीयः उपप्लुतसंतानादस्यान्यत्वे बन्धमोक्षयोर्वैयधिकरण्यापत्तेः। एकत्वे चानुपप्लुतस्योपप्लुताभिन्नत्वेन मोक्षस्यापुरुषार्थत्वप्रसङ्गात् ।

नापि दुःखनिवृत्तिरात्मज्ञानफलं मोक्षः तत्र किं दुःखनिवृत्तिमात्रं तत्फलमुतात्यन्तिकतन्निवृत्तिः आद्येऽपि सकलदुःखनिवृत्तिः उत कतिपयदुःखनिवृत्तिः नाद्यः सुषुप्तिप्रलयादावपि मुक्तिप्रसङ्गात् । ननु तदा सकलदुःखध्वंसो नास्ति अनागतदुःखध्वंसाभावादिति चेत् न उत्पन्नस्यैव ध्वंसप्रतियोगित्वात् न द्वितीयः संसारदशायामपि तत्सत्त्वात् द्वितीये दुःखनिवृत्तेरात्यन्तिकत्वं किं नित्यत्वम् उत दुःखासमानकालीनत्वं किंवा दुःखप्रागभावासमानाधिकरणत्वमुत दुःखप्रागभावासमानकालीनत्वं नाद्यः संसारदशायामपि मुक्तिप्रसङ्गात् तदानींतनदुःखनिवृत्तेरपि नित्यत्वात् द्वितीयेऽपि किं परकीयदुःखासमानकालीनत्वमुत स्वकीयदुःखासमानकालीनत्वं नाद्यः मुक्तानामप्यमुक्तिप्रसङ्गात् द्वितीये यत्किंचित्स्वकीयदुःखासमानकालीनत्वम् उत सकलदुःखासमानकालीनत्वम् नाद्यः संसारदशायां जाग्रत्यपि मुक्तिप्रसङ्गात् तस्या अप्यनागतदुःखासमानकालीनत्वात् न द्वितीयः सुषुप्तिप्रलयादावपि मुक्तिप्रसङ्गात् तृतीयेऽपि यत्किंचिद्दुःखप्रागभावासमानाधिकरणत्वम् उत स्वकीयदुःखप्रागभावासमानाधिकरणत्वं नाद्यः संसारदशायामपि मुक्तिप्रसङ्गात् तदानीं-

तनदुःखनिवृत्तेरपि परकीयदुःखप्रागभावासमानाधिकरणत्वात् न द्वितीयः असंभवात् प्राक्प्रध्वंसाभावयोरैकाधिकरण्यनियमेन दुःखनिवृत्तेः दुःखप्रागभावसमानधिकरणत्वात् तुरीयेऽपि किं यत्किंचिद्दुःखप्रागभावासमानकालीनत्वमुत सकलतदभावासमानकालीनत्वम् । नाद्यः संसारदशायामपि मुक्तिप्रसङ्गात् तत्राप्यतीतप्रागभावासमानकालीनत्वात् । न द्वितीयः—इदानींतनदुःखध्वंसस्यापि विनष्टदुःखप्रागभावसमानकालीनत्वाभावेन सकलदुःखप्रागभावासमानकालीनत्वसत्त्वेन मुक्तिप्रसङ्गात् । ननु संसारदशायां दुःखप्रागभावसमानकालीनत्वस्यापि संभवेन यावद्दुःखप्रागभावासमानकालीनत्वं नास्तीति चेन्न यावन्तो दुःखप्रागभावास्तत्समानकालीनत्वराहित्यं हि तदर्थः तच्चैकस्मिन्दुःखप्रागभावे विनष्टेऽपि यावदर्थाभावात् संभवत्येव निखिलदुःखप्रागभावसमानकालीनत्वस्य क्वचिदप्यप्रसिद्धत्वेन तदभावस्यासंभवाच्च । नन्वात्मनि निखिलदुःखप्रागभावस्यानादेः सत्त्वात् तत्समानकालीनत्वं तत्समानाधिकरणत्वं च आत्मत्वादौ प्रसिद्धमिति चेन्न—तत्र तत्समानाधिकरणत्वप्रसिद्धावपि तत्समानकालीनत्वस्यासंभवात् दुःख प्रवाहस्यानादित्वेन निखिलदुःखप्रागभावानामेकदाऽवृत्तेः एतादृशदुःखध्वंसस्य विचारात्पूर्वमज्ञातत्वेन मुमुक्षकामनाविषयत्वानुपपत्तेश्च । तत्प्रकारकज्ञानं विना तत्प्रकारककामनानुपपत्तेः ।

न च स्वसमानाधिकरणस्वसमानकालीनदुःखप्रागभावासहचरितं यद्दुःखं तत्प्रतियोगिध्वंसत्वं मोक्षत्वमिति वाच्यम् स्वपदेन यत्किंचिद्दुःखमात्रविवक्षायामसहचरितत्वपदेनासमानाधिकरणत्वविवक्षायां यज्ञदत्तात्मनिष्ठतादृशदुःखप्रागभावासमानाधिकरणसंसारिदेवदत्तदुःखनिवृत्तावतिव्याप्तेः असहचरितपदेनासमानकालीनत्वविवक्षायां शुकादिमुक्तावव्याप्तिः तदीयचरमदुःखध्वंसस्य

तादृशयज्ञदत्तदुःखप्रागभावसमानकालीनत्वात्स्वपदेन मोक्ष्यमाणात्मसमवेतचरमदुःखविवक्षायां चासंभवः तत्समानाधिकरणतत्समानकालीनदुःखप्रागभावस्यासंभवेन तत्सहचरितदुःखाभावस्याभावात् स्वपदेन मोक्ष्यमाणात्मसमवेतदुःखमात्रविवक्षायामप्यसंभव एव चरमदुःखस्यापि स्वपदार्थान्तर्गतत्वेन तत्समानकालीनप्रागभावाभावात् मोक्ष्यमाणेदानींतनदुःखविवक्षायां यत्किंचिद्दुःखं स्वशब्दार्थमादाय तदनन्तरभाविदुःखध्वंसेऽतिव्याप्तिः चरमदुःखविवक्षायां चरमत्वस्य मोक्षप्रतियोगित्वेनात्माश्रयात् तत्त्वज्ञानकालीनत्वस्य दुःखान्तरेऽपि सत्त्वात्। ननु तत्त्वज्ञानजन्यदुःखत्वं चरमदुःखत्वमिति चेत् न तत्त्वज्ञानस्य मोक्षसाधनत्वात् दुःखसाधनत्वे मानाभावात्। ननु तत्त्वज्ञे चरमदुःखमुत्पद्यते न त्वन्यत्रेत्यत्यन्वयव्यतिरेकावेव प्रमाणमिति चेन्न न हि चरमदुःखं नामेदानींतनमरणकालीनदुःखविजातीयं किंचिदस्ति किन्तु निरुक्तलक्षणविशिष्टत्वमेव तच्च दुःखप्रागभावाभावादेवेत्यर्थसिद्धमिति न नीलघटत्वादिवत् कार्यतावच्छेदकं येन तत्त्वज्ञानं कारणं स्यात्। ननु तत्त्वज्ञानं विना कायव्यूहाभावात् युगपद्भोगसंभवेन निखिलप्रागभावाभावः संभवतीति चेत् न मिथ्याज्ञानप्रागभावानां परिच्छिन्नतया तत्त्वज्ञानं विनापि प्रतियोग्युत्पत्त्या क्षयसंभवात् अपरिमितत्वे च तत्त्वज्ञानेऽपि तत्क्षयानुपपत्तेः ज्ञानवैयर्थ्यात् अनागताधर्माद्यभावे उपार्जितानां च कतिपयजन्मभिर्भोक्तुं शक्यत्वाद्विनापि तत्त्वज्ञानं दुःखप्रागभावासहचरितत्वोपपत्तेः। ननु मिथ्याज्ञानोच्छेदार्थं मिथ्याज्ञानवासनोच्छेदार्थं वा तत्त्वज्ञानं स्वीकर्तव्यमिति चेत् न वासनापि हि मिथ्याज्ञानोत्पादनद्वारा संसारहेतुः मिथ्याज्ञानं च प्रागभावाभावादेव न भवतीति किं तदुच्छेदेन कालेन वा चरमभोगजन्यसंस्कारवत्तदुच्छेदसंभवात् तथा चात्माश्रयः मोक्षस्य तत्त्वज्ञानसाध्यत्वेनापुरुषार्थत्वाच्च।

नापि स्वसमानाधिकरणदुःखप्रागभावासहवृत्तिदुःखध्वंसो

मोक्ष इति तल्लक्षणं दु,खप्रागभावासमानकालीनत्वं हि दुःखप्रागभावासहवृत्तित्वं तदसमानाधिकरणत्वविवक्षायामनन्वयादसंभवाच्च तद्यदि यत्किंचिद्दुःखप्रागभावासमानकालीनत्वं लक्षणार्थः तदातिव्याप्तिः निखिलदुःखप्रागभावविवक्षायामसंभवः निखिलदुःखप्रागभावसमानकालीनत्वस्यैव प्रतियोगिनोऽप्रसिद्ध्या तदभावघटितलक्षणस्यासंभवात् सर्वस्यापि दुःखस्य तत्तद्ध्वंसस्य निखिलदुःखप्रागभावासमानकालीनत्वेनातिव्याप्तेश्च। ननु यदेतादृशप्रागभावसमानकालीनत्वं तत्र तत्र प्रसिद्धं तत्सामान्याभावो यावत्तादृशाभावो वा लक्षणार्थ इति चेन्न—असिद्धेः अग्रहाच्च किं चान्यत् प्रागभावस्य प्रतियोगिजनकत्वमते हि ब्रह्महत्यादिजन्यदुःखविशेषप्रागभावः सर्वात्मन्यस्तीति वक्तव्यम्। अनादौ संसारे सर्वेषां ब्रह्महत्यादिसम्भवात् तत्संभवे च तज्जन्यदुःखस्य चावश्यकत्वात्। तत्र च प्रागभावस्य कारणत्वात् प्रागभावाभावे प्रायश्चित्तवैफल्यात् तस्य त्वत्पक्षे प्रागभावपरिपालनफलत्वात्। तथा च येन केनचित् दैवात् ब्रह्महत्या न कृता तस्य तत्त्वज्ञानान्मोक्षो न स्यात् तदीयदुःखध्वंसस्य दुःखप्रागभावासमानकालीनत्वाभावात्। ननु तद्दुःखप्रागभावोऽपि कायव्यूहदशायां दुःखं जनयतीति चेन्न। तद्धेतुब्रह्महत्यादेरभावात्। ननु पापान्तरमासाद्य दुःखं जनयतीति चेन्न। पटप्रागभावस्य दण्डादिनेव ज्योतिष्टोमजन्यस्वर्गप्रागभावस्याश्वमेधापूर्वेण सह प्रातियोग्यजनकत्ववत् ब्रह्महत्याजन्यनिरतिशयदुःखप्रतियोगिकप्रागभावस्य क्षुद्रतरपापेन प्रतियोगिजनकत्वानुपपत्तेः। नचात्मान्तरे ब्रह्महत्यामासाद्य दुःखं जनयतीति वाच्यम्। प्रागभावस्य स्वसमानाधिकरणप्रतियोगिजनकत्वात्। न च प्रतियोग्युत्पत्तिं विना प्रागभावनाशः। यदि च कचित् दैवात् प्रागभावो नास्ति। तत्रापि तत्संशयान्न बह्वायाससाध्ययोगादिप्रवृत्तिः स्यात् अन्यस्मिन्मते तु नायं दोषः। प्रागभावाभावात्। प्रागभावस्यासत्त्वेपि संशयात् प्रवृत्त्यनुपपत्तेः।

प्रागभावसत्त्वे त्वदभिमतदुःखध्वंसाभावात्। प्रागभावस्य प्रतियोगिजनकत्वन पुनरावृत्तिप्रसङ्गाच्च नायं मोक्षः साधुः।

एतेन स्वसमानाधिकरणदुःखासमानकालीनो दुःखध्वंसो मोक्ष इति निरस्तं प्रागभावसत्त्वेऽग्रे दुःखोत्पत्तेरावश्यकत्वात्। नच यदैवंभूतो ध्वंसस्तदा स मोक्ष इति वाच्यम्। मोक्षस्यानित्यत्वप्रसङ्गात्। सुषुप्त्यादावतिव्याप्तेश्च जीवन्मुक्तावव्याप्तिः। न च सा मुक्तिरेव न भवतीति वाच्यम्। तत्रापि मुक्तिव्यपदेशानुभवयोः सत्त्वात्।

केचित् दुःखेनात्यन्तं विमुक्तश्चरतीति श्रुतिबलात् दुःखात्यन्ताभावो मोक्ष इति वदन्ति। तदसत्। स्वात्मनि दुःखात्यन्ताभावानुपपत्तेः परकीयदुःखात्यन्ताभावस्य मोक्षत्वे संसारदशायामपि मुक्तिप्रसङ्गः।

ननु दुःखात्यन्ताभावानामप्यन्यत्र विद्यमानानां स्वीयनिखिलदुःखध्वसे सति स्वस्मिन् सम्बन्धो भवति स एव मोक्ष इति चेन्न तद् ध्वंसाश्रये तदत्यन्ताभावसंबन्धानुपपत्तेः। अत्यन्ताभावस्य प्रतियोगिप्राक्प्रध्वसाभावासमानदेशत्वनियमात् प्रलयेपि मुक्तिप्रसङ्गाच्च। अत्यन्ताभावस्य नित्यसिद्धतया ज्ञानवैयर्थ्यापाताच्च। श्रुतिः स्वात्मनो वस्तुतो दुःखसंसर्गं निषेधति किंच दुःखाभावलक्षणमोक्षस्य सुखरहिततया तुल्यायव्ययत्वेनापुरुषार्थत्वप्रसङ्गः।

ननु सुखमपि दुःखानुषक्तत्वाद्धेयमेव अतः कथं सुखस्य पुरुषार्थत्वमिति चेन्न। हेयत्वे सुखत्वविरोधात् उपादेयस्यैव सुखत्वात्। ननु योगप्रभावात् कायव्यूहनिर्माणेन जीवन्मुक्तिदशायां सकलसुखानुभवोस्तीति चेन्न। एवमेव वैदेहमुक्तेरपुरुषार्थत्वप्रसङ्गात्। न च जीवन्मुक्तस्यापि सकलसुखोपभोगः संभवति। योगिनामेव मुक्तिरिति नियमाभावात्। "तद्यो यो देवानां प्रत्यबुध्यत स एव

तदभवत् तथर्षीणां तथा मनुष्याणामि"ति मुक्त्यविशेषश्रुतेः। एतस्यामवस्थायां कैवल्यमीश्वरस्यानीश्वरस्य चेति पातञ्जलवचनाच्च। प्रतिनियतदेशकालफलानां कर्मणां योगिभिरपि युगपद् भोक्तुमशक्यत्वाच्च। अन्यथा चोदनाप्रामाण्यप्रसङ्गात्।

ननु नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपीत्यादिस्मृत्या कर्मणां भोगादेव क्षयो भवति भोगश्च न क्रमेण संभवतीति युगपत् वक्तव्य इति चेन्न। तद्वचनस्याकृतप्रायश्चितकर्मविषयत्ववत् प्रारब्धकर्मविषयत्वात्। अन्यथा प्रायश्चित्तवैफल्यप्रसङ्गात्।

नन्वकृतप्रायश्चितानामेव तथेति चेत्तर्हि सर्वकर्मणां भोगनियमाभावे सिद्धे प्रायश्चितादिवात्मज्ञानादपि आरब्धेतरकर्मणां निवृत्त्युपपत्तेः क्षीयन्ते चास्य कर्माणीति श्रुतेः ज्ञानाग्निः सर्वकर्माणीतिस्मृतेश्च प्रारब्धस्य च ज्ञानोपजीव्यस्य तन्निवर्त्यत्वानुपपत्तेः। किं च ज्ञायमानमेव पुरुषार्थो वक्तव्यः न त्वज्ञायमानं भूनिहितनिध्यादेः पुरुषार्थत्वादर्शनात्। न च दुःखनिवृत्तिः केन चित् ज्ञातुं शक्यते। मोक्षदशायां ज्ञानाभावात् अन्यथा ज्ञानवैफल्यापत्तेश्च।

ननु भोगजन्यकर्मनाशे ज्ञानमपि हेतुरिति चेन्न। अन्यतः क्लृप्तादेव तदुपपत्तेः। ज्ञानस्य चान्यथासिद्धत्वाच्च। न च कर्मप्रागभावासहकृतकर्मध्वंसं प्रति ज्ञानमपि हेतुरिति वाच्यम्। ज्ञानं विनापि प्रागभावलयसंभवेन तद्विशिष्टस्यापि तस्य नीलघटवत् प्रकारान्तरेण सिद्धत्वात्।

ननु न सर्वदा ज्ञायमानत्वं पुरुषार्थत्वे प्रयोजकमहिकण्टकादिदुःखनिवृत्तेरपुरुषार्थत्वप्रसङ्गात्। सर्वदा तद्ज्ञानाभावात्। किं तु ज्ञायमानत्वमात्रं तच्च प्रकृतेपि संभवति। विनश्यदवस्थशरीरोत्पन्न-

ज्ञानेन योगजधर्मप्रभावेन वर्त्तमानागतदुःखनिवृत्तेरपि ज्ञायमानत्वसंभवादितिचेद्भवेदेवं यदि योगिनामेव मुक्तिरिति नियमः। न त्वेतदस्ति। अयोगिनां मुक्तौ कथमनागतदुःखनिवृत्तिज्ञानं भवेत्। योगिनो वा आगामिन्या मुक्तेर्वर्त्तमानत्वेनानुभवायोगात्। आगामित्वेन तदनुभवस्यापुरुषार्थत्वाच्च। ननु न दुःखाभावज्ञानं पुरुषार्थतोपयोगि किन्तु विविक्षतदुःखाभावत्वं तस्यैव प्रार्थ्यमानत्वात्। ननु च भूनिखातनिध्यादेः पुरुषार्थत्वस्याज्ञानदशायामदर्शनात्। ज्ञानदशायां च तद्दर्शनात् ज्ञानमपि पुरुषार्थ इति चेन्न। धनं हि न स्वतः पुरुषार्थः किन्तु सुखसाधनत्वेन तत्साधनत्वं च तस्य भक्षणादिद्वारा ज्ञानेन वेति निखातधनस्य भक्षणादिद्वाराभावात् तज्ज्ञानमेव सुखसाधनमिति ज्ञानमन्यथासिद्धम्।

ननु सुखानुभवदशायां व्यासङ्गादिकं न सहत इति सुखानुभवोऽपेक्ष्यत इति चेन्न। तस्य सुखविच्छेदहेतुत्वेन तद्द्वयोपपत्तेरिति चेदुच्यते। अस्ति हि सुप्तस्य पुरुषस्य प्रबोधके प्रद्वेषः स पुरुषार्थविच्छेदनिमित्त इति वक्तव्यः अन्यस्यानिष्टस्य तेनाकृतत्वात्। न चोत्थानमेवानिष्टं तस्यापि हि तत्साधनत्वात्। अत एवोत्थानस्यानुष्ठानादिद्वाराप्रबलसुखसाधनत्वाभिमानिनः कस्य चिदुत्थापकाभिनन्दनं दृश्यते। स च स्वापे विच्छिद्यमानः पुरुषार्थः सुखदुःखाभावो वोभयथाप्यात्मस्वरूप एवान्यस्य तदाभावात्। तयोश्चात्मस्वरूपयोरविच्छेद इति न पुरुषार्थविच्छेदः स्यात् तथा चाविद्यावृत्त्यधीनतद्विकल्पानुभवविच्छेदनिमित्त एव प्रद्वेष इति सुखदुःखानुभवयोरपि पुरुषार्थताप्रयोजकत्वं वक्तव्यम्। अत एव सुखस्यावश्यवेद्यत्वकल्पनमर्थवत् दुःखस्याप्यनित्यत्वसिद्धये तत्कल्पनम्। किं च दुःखाभावस्यैव पुरुषार्थत्वे तदत्यन्ताभावः किमिति तथा न भवेत् प्रत्युत कैमुतिकन्यायेन परमपुरुषार्थः स्यात्। एवं च परमेश्वरोपि नित्यतप्तः स्यात्। तथा च तज्ज्ञानस्यैवापुरुषार्थत्वे घटादिरपि नित्यतृप्तः स्यात्।

ननु प्रतियोगिदुःखसमानाधिकरणदुःखाभावत्वप्रयोजकमिति चेत् । हन्तैवं दुःखमपि पुरुषार्थः तदुपलक्षितस्य तत्त्वेऽन्ताभावेपि तथात्वापत्तिः । ननु जन्यदुःखाभावः पुरुषार्थ इति चेत् तत्किं तज्जन्यत्वमपि पुरुषार्थतायां प्रयोजकं तस्य सुखदुःखाभावतत्साधनान्यतमत्वाभावात् प्रागभावस्य तदभावाच्च । तस्मात् दुःखध्वंसादिप्रार्थना तस्यापरोक्षज्ञानविषयत्वनिश्चयादिति तस्यापि पुरुषार्थतेति । किं च ज्ञायमानावस्थायामेव सुखं दुःखाभावो वा पुरुषार्थो भवति । कण्टकादिजन्यदुःखध्वंसोपि ज्ञानदशायामेव पुरुषार्थः । तथा च दुःखाभावलक्षणस्य मोक्षस्य सर्वदा ज्ञानासंभवात् अपुरुषार्थतैव अतो न तदर्था मुमुक्षुप्रवृत्तिर्भवेत् सुखरूपत्वे तु मोक्षस्य तस्य ज्ञानाभिन्नत्वादस्ति सदा प्रकाशः । किं च सुखमेव सर्वत्र पुरुषार्थो न दुःखाभावः ।

ननु वैपरीत्यं किन्न स्यादिति चेत्तर्हि सुखस्य कुत्रोपयोगः दुःखविनाश इति चेत् दुखस्य त्रिक्षणावस्थायितया स्वयमेव नाशसंभवात् दुःखधारायां तथैव दर्शनात्तर्हि तद्द्वारा निवृत्तावेवोपयोग इति चेन्न । तत्सामग्रीविनाशादेव तदुपपत्तेः । तस्यां सत्यां सुखस्याप्यनुत्पादात् सुखं शयानस्य स्रक्चन्दनवनिताद्युपबृंहितस्याकस्मादेवपुत्राङ्गसंश्लेषेण कृतार्थोहमिति बुद्धिदर्शनाच्च न दुःखाभावे सुखस्योपयोगः नापि दुःखाभावाभिव्यक्तावुपयोगः । धर्मिप्रतियोगिज्ञानस्यैव तदभिव्यञ्जकत्वात् दुःखाभावस्य तु सति दुःखे जाग्रदादौ स्वरूपसुखानुभवादर्शनात् सति तु तस्मिन् स्वापे तदनुभवदर्शनादन्वयव्यतिरेकाभ्यां प्रतिबन्धकाभावत्वेन सुखाभिव्यञ्जकतयाऽन्यथासिद्धत्वमस्त्येव आनन्दस्य चात्मरूपत्वं प्रत्यक्षलिङ्गवचनानीत्यत्र निर्णीतमतः सुखमेव पुरुषार्थः ।

ननु स्वसमवेतसुखमेव पुरुषार्थो न सुखमात्रं पुरुषान्तरसुखे तस्त्वादर्शनात् सुखं मे स्यादितिप्रार्थनादर्शनाच्च अतः कथं स्वरूप-

सुखस्य पुरुषार्थत्वमिति चेन्न। लाघवात् स्वसुखस्यैव पुरुषार्थत्वात् समवायस्य सुखदुःखप्राप्तिपरिहारयोरन्यतरत्वाभावेनापुरुषार्थत्वात्। अप्रार्थ्यमानत्वाच्च। स्वसुखमिति च स्वसम्बन्धिसुखमुच्यते। सम्बन्धश्चाभेद एवेति न समवायावकाशः। न चाभेदसुखं मे स्यादिति प्रार्थनानुपपत्तिः। तस्याः सुखाभिव्यञ्जकान्तःकरणवृत्तिविशेषविषयत्वात्। अभिव्यक्तस्यैव सुखस्य पुरुषार्थत्वेन तदभिव्यञ्जकोपाधेरपि प्रार्थनाविषयत्वोपपत्तेः। किं च सुखं मे स्यादिति प्रार्थनापि सुखमेव विषयीकरोति न तु भेदं सम्बन्धं वा तयोरपुरुषार्थत्वात्। तर्हि परकीयसुखेपि प्रार्थना स्यादिति चेत् किं परस्य सुखं स्यादिति प्रार्थना भवेदिति ब्रूषे किं वा परकीयमपि सुखमस्य पुरुषार्थः स्यादिति। नाद्यः महतां तथैव दर्शनात्। न द्वितीयः। स्वेनापरोक्षतयानुभवितुं शक्यस्यैव सुखस्य स्वात्मानं प्रति पुरुषार्थत्वात्। परकीयसुखस्य चातथात्वात्। दुःखाभावः पुरुषार्थ इति वदताप्येवमेव वक्तव्यत्वात्। दुखाभावस्य च परात्मव्यावृत्तसम्बन्धस्यैतस्मिन्नभावात् स्वरूपविशेषाभावात्। तथा च सुखप्रर्थनाया अपरोक्षानुभवयोग्यसुखविषयत्वात् मे इतिषष्ठ्यर्थानुभवस्य ममात्मेत्यादिवदौपचारिकत्वात् स्वरूपसुखस्य च ज्ञानाभिन्नस्यापरोक्षतयानुभवितुं शक्यत्वात्। विवेकिनां परमानन्दो भूयासमिति प्रार्थनादर्शनाच्च। स्वरूपसुखस्य पुरुषार्थत्वे न कदाचिदनुपपत्तिः।

एतेन दुःखप्रागभावपरिपालनं मोक्षः प्रकृतिपुरुषविवेकग्रहात् चिदात्मनो विविक्ततयाऽवस्थानं मुक्तिरिति च प्रत्युक्तं सुखस्यैव पुरुषार्थत्वात्।

सुखाभिव्यक्तिर्मोक्ष इति तु मतं यद्यनभिव्यक्तिभ्रान्तिध्वंसपरं तदास्मदिष्टमेव यद्यभिव्यक्तिर्नाम प्रागसत उत्पत्तिरित्येवं परं तदा मोक्षस्यानित्यत्वप्रसङ्गः जन्यत्वात्। शरीरं विना तदुत्प-

त्ययोगाच्च तस्मात् दुःखनिवृत्त्युपप्लुतज्ञानोपरमादेरपुरुषार्थत्वेनात्मज्ञानफलत्वानुपपत्तेः । अविद्यानिवृत्तेश्च पुरुषार्थत्वसंभवात् लोकानुरोधेनाज्ञाननिवृत्तिरेवात्मविद्याफलं तत्र च न सहकार्यपेक्षेति ॥ ६ ॥

ननूद्गीथवाग्धेन्वादिविद्याया अविद्यानिवृत्तिव्यतिरेकेण साध्यफलकत्ववदात्मविद्याया अपि वैदिकविद्यात्वात् अविद्यानिवृत्तिव्यतिरेकेण फलवत्त्वमस्त्विति चेन्न वैलक्षण्यादित्याह—

**ब्रह्मज्ञानं प्रमाणं भवति दृढमिदं नात्र कश्चिद्विवादो**
**ब्रह्मात्मा चैकरूपो न च बहुरसकस्तत्परत्वाच्छ्रुतीनाम् ।**
**एवं सत्यद्वयात्मप्रमितिफलमिह द्वैतमूलापनुत्ति-**
**र्नह्यज्ञानापनुत्तेरधिकमपि फलं किंचिदस्ति प्रमाणात् ॥७॥**

ब्रह्मज्ञानमिति । दृढं निःसन्दिग्धं तदेव व्यतिरेकमुखेनाह—नात्रेति । अत्र ब्रह्मज्ञानं प्रमाणमित्यत्र ब्रह्मविद्या हि निर्दुष्टतत्त्वमादिवेदवाक्यजन्यत्वात् यथाभूतार्थवस्तुविषयत्वाच्च प्रमाणं वाग्धेन्वादि विद्या तु नैवमारोपितवस्तुविषयत्वेनायथार्थत्वादित्यर्थः ननु तत्त्वमस्यादिवाक्यस्य संपदादिपरत्वात् तज्जन्यं ज्ञानमयथाभूतमेव विचित्रगुणस्य परमेश्वरस्य तद्विरुद्धस्य जीवस्य चैक्यानुपपत्तेरित्याशङ्क्याह—ब्रह्मात्मेति । एकरूपः चैतन्यानन्दैकरसः न तु बहुरसको न वस्तुतो विचित्रगुणः तत्र हेतुः—तत्परत्वाच्छ्रुतीनामिति । सकलवेदान्तानामुपक्रमादिभिश्चैतन्यैकरसब्रह्मपरत्वावगमादित्यर्थः । तथा चारोपितगुणस्य वास्तवैक्यविरोधित्वाभावान्न सम्पदादिपरत्वमतस्तज्जन्यज्ञानं प्रमाणमेवेति भावः । ततश्च प्रत्यक्षादिवत् प्रमाणत्वादविद्यानिवृत्तिमात्रफलकत्वमेव वक्तुं युक्तम् । अन्यथा प्रमाणत्वव्याघातात् । वाग्धेन्वादिविद्यानां तु पुरुषेच्छाधीनत्वेन च

मानसक्रियारूपत्वेन चोदनाप्रमाणकत्वात्। अविद्यानिवृत्तिव्यतिरेकेण साध्यफलकत्वमेवेत्यभिप्रेत्य फलितमाह—एवं सतीति। ब्रह्मज्ञानस्यैकरसब्रह्मविषयतया प्रमाणत्वे सतीत्यर्थः। द्वैतमूलापनुत्तिः-सकलानर्थनिदानाज्ञाननिवृत्तिः। तदेव व्यतिरेकमुखेनाह—न हीति। प्रमाणस्याभिव्यञ्जकत्वस्वभावादज्ञाननिवृत्तिरेवाभिव्यक्तिस्तत्फलम्। अन्यथा प्रमाणत्वव्याघातादित्यर्थः। प्रमाणत्वादेव ब्रह्मज्ञानस्य न कर्मादिसहकार्यपेक्षेति भावः॥ ७॥

किं च किन्निष्कामतयानुष्ठितं कर्म ज्ञानस्य सहकारि उत फलकामनयानुष्ठितम्, नाद्यः तेषां विविदिषायां विनियुक्तत्वेन ज्ञानात् पूर्वमेव त्यक्तत्वात्, द्वितीयस्तु दूरनिरस्तः अन्यार्थमनुष्ठितस्यान्यसाधनत्वानुपपत्त्या ज्ञानस्य तदपेक्षानुपपत्तेरित्याह—

**निरभिसन्धिसमर्पितमच्युते**
**विहितमिष्टफलादपि निर्गतम्।**
**यदपि कर्म तदप्यवधीरितं**
**यदि धिया न तया परमर्थ्यते॥ ८॥**

निराभिसन्धीति। फलाभिसन्धिशून्यं यथा भवति तथा अच्युते समर्पितं परमेश्वरार्पणबुद्ध्यानुष्ठितमित्यर्थः। अत एवेष्टफलात् स्वर्गादेरपि निर्गतं स्वर्गादिफलशून्यमित्यर्थः। अवधीरितं त्यक्तं तया धिया परमात्मधिया अपरं स्वविध्युद्देशे फलान्तरसाधनत्वेनावगतं तत्कामनयानुष्ठितं च ज्योतिष्टोमादिकमित्यर्थः॥ ८॥

ननु विद्यां चाविद्यां च यस्तद्वेदोभयं सहेति श्रुत्या निरभिसन्ध्यनुष्ठितकर्मणां ज्ञानसहायेन मोक्षहेतुत्वश्रवणात् कथं कर्मणां ज्ञानसहकारित्वनिरास इति समुच्चयवादिनो मतं दूषयति—

समविषयसमुच्चयो न युक्तो
न हि जगदस्ति धियः प्रसूतिकाले ।
क नु बत विहितक्रियासमूहः
कथमिव तत्र समुच्चयोपपत्तिः ॥ ६ ॥

समेति । किं ज्ञानकर्मणोः समप्राधान्येन मोक्षहेतुत्वं किं वा कर्मप्राधान्येन अथवा ज्ञानप्राधान्येन न सर्वथापीत्याह–समविषयसमुच्चयो-न युक्त इति । कुत इति चेत् किं ज्ञानकालानुष्ठितैः कर्मभिर्ज्ञानस्य समुच्चयः किं वा ज्ञानात्पूर्वमनुष्ठितैः। अन्त्येपि किं कर्म साक्षान्मोक्षं जनयति, उतापूर्वद्वारा, नाद्यः—ज्ञानकालानवस्थायिनस्तथात्वा-नुपपत्तेः, न द्वितीयः अपूर्वफलस्य कालनियमे प्रमाणाभावेन मोक्षस्य नियमेन विद्यासमानकालीनतावेदकश्रुतिविरोधादित्यभिप्रेत्य प्रथमं दूषयति । नहीति । जगदिति । पशुव्रीहिपुरोडाशादिकर्मसाधनं विवक्ष्यते ब्रह्मात्मसाक्षात्कारकालेऽविद्याया निवृत्तत्वेन तत्कार्यव्रीहिपुरोडाशा-द्यभावात् कर्म न संभवति । तत्रैवं सति कथं समुच्चयोपपत्तिः न कथमपीत्यर्थः । श्रुतिश्चाविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुत इति वाक्यशेषेऽविद्याशब्दवाच्यकर्मणो मृत्युतरणलक्षणबुद्धिशुद्धिमेव फलत्वेन प्रतिपादयति न तु समुच्चयमित्यर्थः ॥ ६ ॥

किं च ज्ञानोद्देशेन कर्मत्यागविधानादपि न कर्मणां ज्ञानेन समु-च्चयसम्भवः, अन्यथा ज्ञानोद्देशेन विविदिषासंन्यासविधानानुपपत्तेः, विविदिषायाः पूर्वमनुष्ठितस्य विविदिषार्थत्वात् तदनन्तरं च कर्मसा-धनपुत्रभार्यादेरभावेन कर्मासंभवादित्यभिप्रेत्याह—

अपि च परमहंसस्त्यक्तसर्वैषणः स-
न्ननुभवफलविद्यां साधनैर्यद्यवाप ।

कथमिव पुनरत्र प्राप्तिरस्ति क्रियाया
भवतु तदपवर्गो विद्ययैवैकयाऽस्य ॥ १० ॥

अपि चेति । त्यक्तसर्वैषणः त्यक्तपुत्रवित्तलोकैषणः तत्साध्यबहिरङ्गकर्मत्यागवानित्यर्थः । अनुभवफलविद्यामवगतिपर्यन्तज्ञानमित्यर्थः । साधनैः श्रवणाद्यन्तरङ्गसाधनैः पुनः परमहंससन्यासानन्तरमस्याधिकारिणः । फलितमाह—भवत्विति । कर्मप्राप्त्यभावस्तच्छब्दार्थः । अस्याधिकारिणः ॥ १० ॥

ननु ज्ञानस्यापि पुरुषार्थहेतुत्वमसिद्धं मानाभावात् । न च निचाय्य तं मृत्युमुखात् प्रमुच्यत इत्यदिना ज्ञानस्य फलहेतुत्वश्रवणान्न प्रमाणाभाव इति वाच्यम् । देहव्यतिरिक्तात्मज्ञानस्य कर्माङ्गत्वेनाङ्गफलश्रुतेः पर्णताफलवचनवदर्थवादत्वात् । न च तस्य कर्माङ्गत्वग्राहकाभावः मन्त्रार्थवादसिद्धपारलौकिकफलार्थकर्मविधिसामर्थ्याख्यलिङ्गस्यैव तद्ग्राहकत्वात् । तथा चात्मज्ञानस्य कर्माङ्गत्वात् कर्मणां च पुरुषार्थसाधनत्वस्यान्यत्र क्लृप्तत्वात् कर्मैवापवर्गपुरुषार्थसाधनं न ज्ञानमित्याशङ्क्याह—

यस्य प्रयोगविधिरस्तिपरिग्रहीता
द्वारैदमर्थ्यविनिवेदकमस्य सर्वम् ।
श्रुत्यादिमानमिह नास्ति तदात्मबुद्धौ
तस्मादियं भवतु नः पुरुषार्थभूता ॥ ११ ॥

यस्येति । यस्यावहननप्रोक्षणादेः प्रयोगविधिरिति ग्राहकावस्थः प्रधानविधिरेवाभिधीयते । तस्यैव स्वशेषत्वेन स्वसन्निधिपाठे तत्पदार्थग्राहकत्वात् परिग्रहीता मत्प्रकरणपठिताः सर्वेऽपि मदर्था इति

स्वशेषत्वेन, ग्राहकः द्वारैदमर्थ्यविनिवेदकं नियोगशेषितायां द्वारस्यैदमर्थ्यस्य व्रीह्यादिशेषत्वस्य विनिवेदकं बोधकं श्रुत्यादीत्यादिपदेन लिङ्गवाक्यप्रकरणस्थानसमाख्या गृह्यन्ते। यस्य परिग्रहीता प्रयोगविधिरस्ति। अस्य श्रुत्यादि मानं सर्वं द्वारैदमर्थ्यविनिवेदकमिति सम्बन्धः। तच्छ्रुत्यादिमानमिहात्मबुद्धावसङ्गात्मज्ञान इत्यर्थः। इदमत्राकूतम्। किं देहव्यतिरिक्तात्मज्ञानमात्रं कर्माङ्गमुच्यते। उताशनायाद्यतीतात्मज्ञानम्। न द्वितीयः। तस्य कर्माङ्गत्वग्राहिश्रुत्यादिमानाभावादर्थविरोधाच्च। नाद्यः। तस्यापि तद्ग्राहिप्रमाणाभावात्। ननु कर्मविधिसामर्थ्याख्यं लिङ्गं प्रमाणमस्तीति चेन्न। केवलविधेः व्यतिरिक्तात्मज्ञानं विना अनुपपत्त्यभावात्। देहात्मवादेपि कथं चिद्विधिसंभवात्। किंच श्रुत्यादयो हि प्रोक्षणादीनां सामान्यतो ग्राहकेण स्वीयत्वेन ग्रहणे सत्यपूर्वेण प्रयोजनप्रयोजनिभावेनान्विताभिधाने सति कथं तच्छेषभावं भजेरन्नित्याकाङ्क्षायां व्रीहिपुरोडाशद्वारेतिद्वारैदमर्थ्यमात्रमावेदयति ग्राहकश्च नियोगः स्वसन्निधिपठितमेव स्वीयत्वेन गृह्णातीत्युत्सर्गः। क्वचित्पुनः पर्णमयीत्वादौ प्रकरणपाठाभावेऽपि क्रत्वव्यभिचारिजुहूसम्बन्धात् ग्राहकेण ग्रहणं न चात्र प्रकरणैक्यमस्ति कंचित् क्रतुमारभ्यात्मज्ञानस्यानाम्नात् नाप्यव्यभिचारितक्रतुसम्बन्धः कर्त्रात्मज्ञानस्य लौकिकवैदिकक्रियासाधारणत्वात् तस्माद्व्यतिरिक्तात्मज्ञानमात्रस्यापि ग्राहकग्रहणाभावात् लिङ्गादेरप्यभावात् न कर्माङ्गत्वं किन्तूपकारकत्वमेव धनार्जनादिवत् ततश्च फलश्रुतेरर्थवादत्वाभावात् कर्मणां च पुरुषार्थसाधनत्वस्य निरस्तत्वात् विद्यैव केवलाऽविद्यानिवृत्तिलक्षणपरमपुरुषार्थसाधनमिति॥ ११॥

ननु ज्ञानसाध्याविद्यानिवृत्तिः सती असत्युभयात्मिकोभयविलक्षणा वा। आद्ये तस्या आत्मनोऽन्यत्वे द्वैतापत्तिः, अनन्यत्वे च

नित्यसिद्धत्वात् ज्ञानानर्थक्यप्रसङ्गः, द्वितीये नरविषाणादिवज्जन्यत्वानुपपत्तिः अपुरुषार्थत्वप्रसङ्गश्च, तृतीये विरोधः पक्षद्वयोक्तदोषप्राप्तिश्च, चतुर्थेऽनिर्वचनीयस्याविद्यात्मकत्वेन तदनिवृत्तिरेव प्राप्ता प्रतियोगितदभावयोरेकरूपत्वासंभवात् न घटाभावो घटो भवतीति चेन्न–पञ्चमप्रकारत्वाभ्युपमादिति मतान्तरमनुसृत्य परिहरति—

**सदसत्सदसद्विकल्पित-**
**प्रतिपक्षैकवपुर्निवर्त्तनम्।**
**तमसोऽभ्युपगम्यतेऽन्यथा-**
**नुपपत्त्यापतनैकहेतुनः ॥ १२॥**

सदसदिति। सच्च असच्च सदसच्च विकल्पितमारोपितम् अनिर्वचयश्च सदसत्सदसद्विकल्पितानि तत्प्रतिपक्षं तद्विलक्षणमेकं वपुः स्वरूपं यस्य तत्तथा निवर्त्तनं निवृत्तिः तमसो निवर्त्तनमिति सम्बन्धः अविद्यानिवृत्तेरुपन्यस्तपक्षचतुष्टयविलक्षणरूपपञ्चमप्रकारत्वेऽर्थापत्तिरेव प्रमाणमित्याह— अन्यथानुपपत्त्येति। अन्यथानुपपत्तेः अविद्यानिवृत्तेः पञ्चमप्रकारत्वं विना अनुपपत्तेरापतनं प्राप्तिरेक एव हेतुः। तस्मात् सदादिप्रकारेषु दोषस्योक्तत्वादित्यर्थः ॥ १२ ॥

नन्वस्मिन्नपि पक्षे दोषः समान इति चेत् किं पक्षचतुष्टयोक्तदोषान्यतमस्यापत्तिरिति दोषसाम्यं किं वा पञ्चमप्रकारत्वस्यात्यन्ताप्रसिद्धिरेव दोष इति नाद्य इत्याह—

**सदसत्सदसद्विकल्पित-**
**प्रतिबद्धा न भवन्ति वर्णिते।**

परमात्मतमोनिवर्तनेऽ-

नुपपत्तिप्रतिभासवृत्तयः ॥ १३ ॥

सदसत्सदसद्विकल्पितप्रतिबद्धा इति । सत् असत् सदसत् अनिर्वचनीय-पक्षसम्बन्धिन्य इत्यर्थः । इदं चानुपपत्तीत्यत्र सम्बध्यते । अनुपपत्ति-प्रतिभासरूपा वृत्तयः अनुपपत्तिप्रतिभासा इत्यर्थः । वर्णिते पञ्चमप्र-कारत्वेनोपवर्णिते । न द्वितीयः लोकेऽत्यन्ताप्रसिद्धस्याप्यनुपपत्त्या अपूर्ववत्कल्प्यत्वसंभवात् । दृष्टपक्षचतुष्टयविलक्षणत्वमात्ररूपत्वाच्च । पञ्चमप्रकारत्वस्य न किंचिद् दूषणमित्यर्थः ॥ १३ ॥

एवमविद्यानिवृत्तेः सदादिप्रकारापेक्षया पञ्चमप्रकारत्वमुक्त्वा भेदाभेदादिविकल्पप्रकारेणाप्युक्तरीत्या पञ्चमप्रकारत्वमित्याह—

चितिभेदमभेदमेव वा

द्वयरूपत्वमथो मृषात्मताम् ।

परिहृत्य तमो निवर्तनं

प्रथयन्ते खलु मुक्तिकोविदाः ॥ १४ ॥

चितीति । चैतन्ये द्वयरूपत्वं भिन्नाभिन्नरूपत्वं मृषात्मतां भिन्ना-भिन्नविलक्षणत्वमनिर्वचनीयत्वं मुक्तिकोविदाः इष्टिसिद्धिकारादयः पूर्वाचार्याः ॥ १४ ॥

अस्मिन्पक्षेऽविद्यानिवृत्तेः सत्त्वाभावेन कथंचित्पुरुषार्थत्वमुप-पादनीयम् । अनिर्वचनीयत्वस्याप्यभावेन कथंचिदद्वितीयत्वव्याकोपः परिहरणीयः तत्र प्रमाणाभावश्च । न चान्यथानुपपत्तिः प्रमाणं तस्याः सत्त्वेप्यनुपपत्त्यभावात् । न च द्वैतापत्तिः । तस्या आत्माभिन्नत्वात् । नचैवं सति नित्यसिद्धत्वेन साध्यत्वाभावाज्ज्ञानवैयर्थ्यमिति

वाच्यम् । ज्ञाने सत्यविद्यानिवृत्तिरूपात्मस्फुरणं तदभावे तदस्फुरण-मित्येतावतैवोपचारात् साध्यत्वोक्तेरित्येतत्सर्वं मनसि निधाय स्वाभिमतं पक्षमाह—

**अथवा चितिरेव केवला**
**वचनोत्पादितबुद्धिवर्त्मना ।**
**परमात्मतमोनिवृत्तिगी-**
**र्विषयत्वं समुपैत्युपाधिना ॥ १५ ॥**

अथवेति । न च कथं केवलस्यात्मनोऽविद्यानिवृत्तिपदवाच्यत्व मिति शङ्क्यम् स्वतोऽसंभवेपि वृत्त्युपाधिद्वारा तत्संभवोपपत्तेरित्याह—वचनेति । इदं चोपाधिनेति सम्बध्यते । वर्त्मपदं वृत्तिपरं तत्त्वमादि-वाक्यजन्यान्तःकरणवृत्तिलक्षणेनोपाधिनेत्यर्थः । आत्मैवाविद्यानि-वृत्तिः स एवाखण्डाकारवृत्तिलक्षणं तटस्थं प्रवृत्तिनिमित्तमासाद्या-विद्यानिवृत्तिपदवाच्यत्वमुपैतीत्यर्थः ॥ १५ ॥

नन्वज्ञाननिवृत्तिमात्रस्य चैतन्यात्ममात्रत्वमनुपपन्नं शुक्तिकाग-ताज्ञाननिवृत्तेस्तदभावात् न हि शुक्तिकायां चैतन्यमस्ति । अतः सर्वत्रानुगतं चैतन्यादन्यदेवाज्ञाननिवृत्तिपदवाच्यमङ्गीकर्त्तव्यमित्या-शङ्क्य शुक्तिकादेरपि चैतन्यविवर्त्तत्वेन तत्रापि चैतन्यस्य सत्त्वाद-ज्ञानस्य च शुक्त्यवच्छिन्नचैतन्य एव विद्यमानत्वात् शुक्तिकाकारान्तः करणवृत्त्युपाधिना तटस्थभूतेन प्रवृत्तिनिमित्तेन तद्गतचैतन्यमेव तत्रा-प्यज्ञाननिवृत्तिपदवाच्यमिति न काचिदनुपपत्तिरित्याह—

**शुक्तिकाविषयबुद्धिजन्मना**
**प्रत्यगात्मचितिरेव केवला ।**

**शुक्तिकागततमोनिवृत्तिरि-**
**त्युच्यते दृतिहरिः पशुर्यथा ॥ १६ ॥**

शुक्तिकेति । चक्षुरादिजन्यशुक्तिकात्वगोचरान्तःकरणवृत्तिलक्षणात् तटस्थप्रवृत्तिनिमित्तादित्यर्थः । तटस्थं प्रवृत्तिनिमित्तमादाय शब्दवाच्यत्वे दृष्टान्तमाह—दृतीति । यथाश्वादिः पशुः पशुत्वलक्षणतटस्थप्रवृत्तिनिमित्तेन दृतिहरिरित्युच्यते तद्वदित्यर्थः ॥ १६ ॥

दृष्टान्तं स्पष्टयति—

**वाचको हरणकर्त्तुरिष्यते**
**शब्द एष हि दृतेर्मनीषिभिः ।**
**केवलं तु पशुता निमित्ततां**
**बाह्यतः स्थितवती व्रजेदियम् ॥ १७ ॥**

वाचक इति । दृतेर्हरणकर्त्तुरिति सम्बन्धः । एष शब्दः दृतिहरिशब्दः मनीषिभिः पाणिन्यादिभिः इयं पशुतेति सम्बन्धः निमित्ततां प्रवृत्तिनिमित्ततां बाह्यतः स्थितवती वाच्यमननुप्रविष्टैव सतीत्यर्थः । दृतिहरणकर्तृत्वं हि दृतिहरिशब्दवाच्यं हरतेर्दृतिनाथयोः पशाविति सूत्रेण दृतिशब्दे उपपदे हरतेर्धातोः कर्तरीन्प्रत्ययविधानात् तत्र च मनुष्यादौ तत्प्रयोगो माभूदिति पशाविति स्मरणात् पशुत्वेन प्रवृत्तिनिमित्तेन नियम्यमानं तत्पशावेव वर्त्तते । निमित्तभूतं पशुत्वं च वाच्याद्बहिरेव तिष्ठति न तु वाच्यकोटौ प्रविशति तस्य पशुपदसिद्धत्वादिति यथाङ्गीक्रियत इत्यर्थः ॥ १७ ॥

दार्ष्टान्तिकमाह—

एवमेव तु तमोनिवृत्तिगीः
शुक्तिकाविषयबुद्धिजन्मना ।
बाह्यतः स्थितवतैव हेतुना
प्रत्यगात्मचिति वर्त्ततेऽञ्जसा ॥ १८ ॥

एवमेवेति । हेतुना प्रवृत्तिनिमित्तेन प्रत्यागात्मचितिशुक्तिकावच्छिन्नचैतन्ये विषय इत्यर्थः । तथा च लोकेप्यज्ञाननिवृत्तेश्चैतन्यमात्रत्वादज्ञाननिवृत्तिमात्रस्य चैतन्यात्मत्वे न किंचिदनिष्टमिति भावः ॥ १८ ॥

ननु चैतन्यात्ममात्रस्याविद्यानिवृत्तित्वे संसारदशायामपि तस्मिन् तत्प्रयोगः स्यादित्याशङ्क्य प्रयोगस्य प्रवृत्तिनिमित्तसमानकालीनत्वात् तस्य च वाक्योत्थबुद्धिवृत्तिरूपस्येदानीमभावात् न तस्मिन् तत्प्रयोग इत्येतत् सदृष्टान्तमाह—

उत्पन्नशुक्तिमतिरात्मचितिर्यथैव
शुक्तेस्तमोहतिरिति प्रतिपन्नमेवम् ।
आत्माऽपि जातनिजबुद्धिरबोधहानि-
रुच्येत केवलचिदेकरसो न पूर्वम् ॥ १९ ॥

उत्पन्नेति । उत्पन्ना शुक्तिमतिः शुक्तित्वगोचरा मतिर्यस्याः सा तथोक्ता आत्मचितिः शुक्त्यवच्छिन्नात्मचितिः जातनिजबुद्धिः वाक्याज्जाता निजाकारा बुद्धिवृत्तिर्यस्य स तथोक्तः यथा शुक्त्यवच्छिन्नं चैतन्यं शुक्त्यज्ञाननिवृत्त्यभिन्नमपि शुक्त्याकारवृत्तौ सत्यामेव शुक्त्यज्ञाननाशपदवाच्यं न तु तत्पूर्वं तथा च चिदेकरस आत्माप्यखण्डाकारबुद्धिवृत्तौ सत्यामेवाज्ञाननिवृत्तिपदवाच्यः न तु तत्पूर्वमित्यर्थः ॥१९॥

ननु लोके वा कथं वाच्ये सति तत्पदप्रयोगाभाव इत्याशङ्क्य वाच्ये सत्यपि प्रवृत्तिनिमित्ताभावेन तत्प्रयोगाभावे दृष्टान्तमाह—

दृतिहरणकरत्वं पुंसि चान्यत्र चेदं
दृतिहरिरिति लोके नोच्यते वर्तमानम् ।
अनधिकविकलं सत्कथ्यते तत्पशुस्थं
दृतिहरिरिति शिष्टैर्बाह्यहेतोः पशुत्वात् ॥ २० ॥

दृतिहरणकरत्वमिति । दृतिहरणकर्तृत्वमन्यत्र मूषिकादौ पुंसि वा अन्यत्र वा वर्त्तमानमिदं दृतिहरणकरत्वं दृतिहरिरिति नोच्यत इति सम्बन्धः । पुरुषादौ विद्यमानं दृतिहर्तृत्वं दृतिहरिशब्दवाच्यं न भवति प्रवृत्तिनिमित्ताभावादित्यर्थः । तर्हि कुत्र विद्यमानं तद्वाच्यमित्याकाङ्क्षायां पशौ विद्यमानमित्याह—अनधिकेति । पशुत्वान्यूनानतिरिक्तवृत्तीत्यर्थः । तत् दृतिहरणकर्तृत्वं तत्र विद्यमानस्य तद्वाच्यत्वे हेतुमाह—बाह्यहेतोरिति । बाह्यभूताद्धेतोः प्रवृत्तिनिमित्तात् ॥ २ ॥

दार्ष्टान्तिकमाह—

अयमपि परमात्मा प्रत्यगात्मस्वभावो
वचनजनितबुद्धेः प्राक् स्वरूपे स्थितोऽपि ।
न खलु विषयभावं ध्वान्तविच्छेदवाचो
व्रजति हि तदुपाधेर्बुद्धिवृत्तेरभावात् ॥ २१ ॥

अयमिति । स्वरूपेऽविद्यानिवृत्त्यभिन्नप्रत्यगात्मस्वरूपे ध्वान्तविच्छेदवाचः अविद्यानिवृत्तिपदस्य तस्या ध्वान्तविच्छेदवाच उपाधेः प्रवृत्तिनिमित्तस्येत्यर्थः ॥ २१ ॥

ननु निवृत्तिनाशादिशब्दोऽभाववाचकः कथं भावचैतन्यवाचक इत्याशङ्क्य केवलनाशादिशब्दस्याभाववाचकत्वेऽप्यज्ञानपदेन समस्तस्य तस्य वृत्त्युपाधिना भाववाचकत्वमेव नाभाववाचकत्वम्, प्रसिद्धा हि शब्दानां समासबलादर्थान्तरे वृत्तिरित्यभिप्रेत्याह—

**अज्ञानदाह इति नैकपदं समासा-**

**त्पूर्वोत्तरे खलु पदे पदतामुपेतः।**

**ज्ञानोदयं तटगतं समुपाददान-**

**स्तस्मात्तमोहतिरवोऽत्र चिति प्रवृत्तः॥ २२॥**

अज्ञानदाह इति। दाहो नाशः नैकपदं स्वत इति शेषः। समासात् षष्ठीसमासात्पूर्वोत्तरे पदेऽज्ञानपदं नाशपदं च पदतामैकपद्यमुपेतः प्राप्तः ततः किं तत्राह—ज्ञानोदयमिति। 'तस्मादि'त्यादौसम्बन्धनीयम्। यतः समासवशादैकपद्यप्राप्तिः तस्मात्तमोहतिरवः अज्ञाननाशशब्दः ज्ञानोदयमखण्डाकारवृत्त्युदयं तटगतं तटस्थितं समुपाददानः सन् अत्र चिति केवलात्मनि विषये प्रवृत्त इत्यर्थः। नन्वेवं सति घटादिनाशादिपदानामभाववाचकत्वं न स्यात् तेषामपि केवलनाशपदादन्यत्वात्, न च तदिष्टमेवेति वाच्यम्, तथात्वे केवलनाशपदस्याभाववाचकत्वानुपपत्तेः, तस्याभावादिति चेत्सत्यम्। अत्र हि केवलात् समस्तस्याभावपदस्य जन्यपदात् समस्तपदस्य तस्यार्थान्तरवृत्तिरिवार्थान्तरवाचकत्वमविरुद्धमित्येतावन्मात्रं विवक्षितम्। वस्तुतस्त्वज्ञानवाचकपदेन समस्तस्य नाशादिपदस्यैव भाववाचकत्वमिति विवक्षितम्। अत एव तमोहतिरव इत्युक्तमिति भावः॥ २२॥

समासवशात् शब्दानामर्थान्तरे वृत्तिः कुत्र प्रसिद्धेत्याकाङ्क्षायां हतिहरिशब्द एवेत्याह—

अत्राप्यसौ द्दतिहरिः पशुरित्यखण्ड-
शब्दो न खल्वभिमतोऽवयवार्थयोगात् ।
धातुश्च वाचकतया हरतिः प्रसिद्धो
ह्रीन्प्रत्ययश्च हरतेः परतः प्रसिद्धः ॥ २३ ॥

अत्रापीति । द्दतिहरिः पशुरित्यत्रापीति सम्बन्धः । असौ शब्द इति सम्बन्धः । द्दतिहरिशब्द इत्यर्थः । अखण्डः समासेनैकपद्यमापन्न एव सन्नभिमतः स्वार्थवाचकत्वेनाभिमतः नत्ववयवार्थयोगादित्यर्थः । द्दतिहरिशब्दस्याप्यवयवार्थमनपेक्ष्याखण्डतयैव वाचकत्वं वक्तव्यम् । अन्यथातिप्रसङ्गः स्यादित्याह—धातुरिति । हरतिः धातुरिति सम्बन्धः हृञ् हरणे इति धातुः वाचकतया हरणवाचकत्वेन प्रसिद्धः । हरति-धातोः परतः प्रयुक्त इन्प्रत्ययश्च कर्तृवाचकत्वेन प्रसिद्धः । तथा चावयवार्थेनार्थवत्त्वे मनुष्यादावपि तच्छब्दप्रयोगः स्यात् । ततः समासादैकपद्येन विशिष्टार्थवृत्तिर्वक्तव्या तद्वदत्रापीत्यर्थः । तस्मादविद्यानिवृत्तिरात्मैवेति न विरुद्धमिति सिद्धम् ॥ २३ ॥

नन्वात्मज्ञानमुत्पन्नमविद्यां निवर्त्तयति उत्पद्यमानं वा । नाद्यः । ज्ञानमोक्षयोः समानकालीनत्वश्रुतिविरोधात् सहावस्थितयोर्निवर्त्यनिवर्तकभावानुपपत्तेश्च । न द्वितीयः । कार्यकारणभावस्य पूर्वापरभावनियमादित्याशङ्क्य पक्षद्वयेपि न दोष इत्याह—

उद्यन्निरस्यति तमश्च तदुद्भवं च
वेदावसानवचनादथ चोदितः सन् ।
ऐकात्म्यवस्तुविषयोऽनुभवोऽत एव
कंचित्सहायमनपेक्ष्य निवर्त्तकोऽसौ ॥ २४ ॥

उद्यन्निति । उद्यन् जायमानः अथवेत्यनास्थायाम् । ऐकात्म्यवस्तुविषयोऽनुभव. वेदावसानवचनादुद्यन् अथवोदितः सन् तमश्च तदुद्भवं च निरस्यतीति सम्बन्धः । न चोदितपक्षे उक्तदूषणावकाशः ज्ञानस्थितिकाले भवतोपि मोक्षस्य ज्ञानसमानकालीनत्वात् एकस्मिन् काले सहस्थित्यभावाच्च । नाप्युद्यन्पक्षे उक्तदोषावकाशः । अविद्यानिवृत्तिशब्देन हि वृत्तिसमानकालीनात्मैवोच्यते अन्यस्य तदभिधेयस्याभावात् । तत्समानकालीनत्वं च ज्ञानोत्पत्तिकालेपि संभवति । ज्ञानाभावेऽज्ञानानुवृत्तिः ज्ञानदशायां तु न तदनुवृत्तिरित्येतावतैवाविद्यानिवृत्तेर्ज्ञानसाध्यतोपचारात् । तदुक्तमाचार्यैः "तत्कैवल्यमतः साध्यमुपचारात् प्रचक्षत" इति भावः । अत एवान्यानपेक्षत्वमपि ज्ञानस्य फले संगच्छत इत्याह—अत एवेति । जायमानस्य जातमात्रस्य वा ज्ञानस्याविद्यानिवर्त्तकत्वमतः शब्दार्थः सहायं कर्मादिलक्षणम्, असौ ऐकात्म्यवस्तुविषयानुभवः ॥ २४ ॥

उत्पद्यमानस्योत्पन्नस्य वैकात्म्यविषयप्रकाशस्य तमोनिवर्तकत्वे सर्वानुभवसिद्धं दृष्टान्तमाह—

**दीपस्तमस्तिरयतीह भवन्नुतस्वि**
**द्भूत्वा क्षणोऽप्यवधिमात्रमपेक्ष्य नात्र ।**
**कश्चिद्विवादपदवीमुपयाति वादी**
**तद्वत्प्रतीच्यवगतौ तमसोऽपहन्त्र्याम् ॥ २५ ॥**

दीप इति । तिरयति तिरस्करोति निवर्त्तयतीत्यर्थः । इह लोके भवन् जायमानः । एतच्च प्रतीत्यनुरोधेनोक्तमुतस्वित् उतेत्यर्थः । अत्रास्मिन्नर्थे तथा च प्रकाशस्य स्वोत्पत्तौ स्वस्थितौ वा अन्यानपेक्षतया तमोनिवर्त्तकत्वस्य लोकेऽविप्रतिपन्नत्वान्नात्र विवदनीय

मिति दार्ष्टान्तिकमाह—तद्वदिति। प्रदीपवत् प्रतीच्यवगतौ प्रत्यग्विषयावगतौ तमसोपहन्त्र्यां तमसो निवर्त्तनशीलायामखण्डाकारवृत्तेरन्यानपेक्षतया तमोनिवर्त्तकत्वे न कश्चिद्विवदेदित्यर्थः। तथा चात्मविषयाखण्डाकारवृत्तिः प्रकाशः अन्यनिरपेक्षतया तमो निवर्त्तयति प्रकाशत्वात् प्रदीपवदिति विवक्षितम्॥ २५॥

नन्वात्मधीरन्यसापेक्षा फलं प्रयच्छति साधनत्वात् यागवदिति प्रत्यनुमानमाशङ्क्य कारकत्वमुपाधिमभिप्रेत्याह—

उत्पत्तिरेव हि धिया स्वफलं प्रदातु-
माकाङ्क्षिता न च ततोऽपरमर्थनीयम्।
यत्कारकं तदिह काङ्क्षति जन्ममात्रा-
दन्यन्न धीः किमपि काङ्क्षति जन्म लब्ध्वा॥२६॥

उत्पत्तिरेव हीति। ततोऽपरमुत्पत्तेरन्यदिह स्वफलप्रदाने काङ्क्षति अपेक्षते अन्यद् दृष्टमदृष्टं वा व्यापारम्॥ २६॥

भगवज्जैमिनीयसूत्रपर्यालोचनयापि न ज्ञानस्योत्पन्नस्य स्वफलेऽन्यापेक्षेत्याह—

प्रत्यक्षसूत्र इदमेव निवेदयिष्यन्
न्यायेन जैमिनिरुवाच विदग्धबुद्धिः।
सत्संप्रयोग इति तत्र हि बुद्धिजन्म-
शब्दस्य नान्यदिह किंचन कृत्यमस्ति॥ २७॥

प्रत्यक्षसूत्र इति। तत्संप्रयोग इति प्रत्यक्षसूत्र इति सम्बन्धः इदं ज्ञानस्य फलेऽन्यानपेक्षत्वमेवोवाचेति सम्बन्धः। निरूपयिष्यन् प्रत्यक्षलक्षणं निरूपयिष्यन् न्यायेन ज्ञानस्यापि स्वफले व्यापारापेक्षायां सोपि व्यापारः किं ज्ञानात्मकः उत् स्फुरणात्मकः। आद्येऽनवस्था द्वितीये तदेव फलं कुत्र व्यापारोऽपेक्ष्यत इति न्यायेन। ननु तस्मिन् सूत्रे सत्संप्रयोगे सति यद्बुद्धिजन्म तत्प्रत्यक्षमित्येतावन्मात्रं प्रतीयते ननु तत्रान्यानपेक्षत्वमपीत्याशङ्क्य सामर्थ्यात्तदपि प्रतीयत इत्याह—तत्र हीति। सूत्रे तत्र हि जन्मपदग्रहणसामर्थ्यादयमर्थः प्रतीयते तस्य प्रयोजनान्तराभावात्। अन्यथा या बुद्धिः सा प्रत्यक्षमित्येव प्रत्यक्षलक्षणं स्यात्। तावन्मात्रेणादुष्टत्वात्। तस्याज्जैमिनिः प्रत्यक्षज्ञानं स्वोत्पत्तिमात्रेण विषयाभिव्यक्तिहेतुरिति मन्यत इत्यर्थः। तथा चाखण्डाकारवृत्तिरन्यनिरपेक्षमेव सकलानर्थनिदानमज्ञानन्निवर्त्तयतीति सिद्धम्॥ २७॥

ननु सा वृत्तिः केन निवर्त्यते किं स्वेनैव। उतान्येन नान्त्यः। अनवस्थानात्। नाद्यः स्वस्य स्वनिवर्तकत्वायोगादिति चेत् किं स्वस्य स्वनिवृत्तौ कारणत्वमित्यनुपपन्नमित्युच्यते किं वाह्यमात्रस्य। नाद्यः। पूर्वभावित्वेन प्रतियोगिनोपि स्वनिवृत्तौ कारणत्वस्य सर्वैरप्यङ्गीकारात् एतावदेवास्माभिः कल्प्यते आत्मसाक्षात्कारत्वेनापि वृत्तिः स्वनिवृत्तौ कारणमिति। न द्वितीयः। कारणाविद्यानिवृत्तेरपि कारणत्वात्। अथवा युगपदेव विद्याऽविद्यां निवर्त्तयति। अविद्या विद्यां न च तन्निवर्त्यस्य तन्निवर्त्तकत्वानुपपत्तिः लोकेऽपि दृष्टत्वादित्याह —

**वेदान्तवाक्यजनिता मतिवृत्तिरेव**

**मुत्पत्तितः सकलमेव भवार्णवाम्बु।**

पीत्वा स्वयं च खलु शाम्यति दग्धलोह-

पीतं यथाम्बु चितिमेव तु शेषयित्वा ॥ २८ ॥

वेदान्तेति । सकलं कारणसहितं तर्ह्यात्मनोपि निवृत्तिर्नेत्याह—चितिमेवेति । यथा लोहसम्बद्धो वह्निः स्वसंसृष्टजलं नाशयित्वा स्वयमपि तेनैव नश्यति तन्नाशे कारणान्तरानुपलब्धेः एवमखण्डाकारवृत्तिलक्षणमहानलोपि चिन्मात्रशेषं यथा भवति तथा सविलासाविद्यावनं दग्ध्वा स्वयमपि तेनैव शाम्यति नश्यतीत्यर्थः ॥ २८ ॥

ननु मुक्तेर्ज्ञानसाध्यत्वेप्यनित्यत्वप्रसङ्गो दुर्वारः तथाहि मुक्तिरनित्या फलत्वात् स्वर्गवदित्याशङ्क्य तत्र सत्प्रतिपक्षमाह—

कूटस्थनित्यैव तु मुक्तिरेषा

विद्याफलत्वादिह यद्यदेवम् ।

तत्तत्तथा दृष्टमशेषमेव

यथा हि शुक्त्यादिपदार्थसंविद् ॥ २९ ॥

कूटस्थेति । अविकारिनित्येत्यर्थः । एव कारेण परिणामिनित्यत्वं वार्यते । विद्याफलत्वात्—प्रमाणफलत्वात् । इह लोके यद्यदेव विद्याफलं तत्तदशेषं तथैव दृष्टमिति सम्बन्धः । कूटस्थनित्यत्वेनेत्यर्थः । कुत्र दृष्टमित्यत्राह—यथा हीति । शुक्त्यादिपदार्थसंवित्-शुक्त्यादिपदार्थस्फुरणमर्थाच्चानित्यत्वानुमाने क्रियाफलत्वमुपाधिरिति सूचितम् ॥ २९ ॥

ननु शुक्तिसंविदोपि प्रमाणजन्यत्वेनानित्यत्वात् दृष्टान्तस्य साध्यवैकल्यमित्याशङ्क्य परिहरति—

जन्मादिषड्भावविकारहीना
शुक्त्यादिवस्तूपनिविष्टसंवित्।
न प्रागभावाद्यनुभूतिरस्याः
स्वतः प्रमाणादपि युज्यते हि ॥ ३० ॥

जन्मादीति। जायते अस्ति वर्द्धते परिणमते अपक्षीयते विनश्यतीत्येवं षड्भावविकाररहिता शुक्त्यादिवस्तूपनिविष्टसंवित् शुक्त्यादिगतस्फुरणं शुक्त्यादिसंविदः कूटस्थात्मरूपत्वात् प्रमाणान्वयव्यतिरेकयोश्च प्रमाविषयसम्बन्धाद्युपक्षयात् जन्यत्वे जडतया स्फुरणत्वानुपपत्तेश्च न सा जन्येत्यर्थः। किं च प्रागभावादिमत एवोत्पत्त्यादिकं संभवति। न च स्फुरणस्य प्रागभावसम्बन्धो विनाशसम्बन्धो वा शक्यावगमः। तथाहि किं स्फुरणप्रागभावादिस्तेनैव गृह्यते। उत तद्व्यतिरिक्तप्रमाणेन। नाद्यः। स्वप्रकाशस्यापि तस्य स्वसम्बन्धग्राहकत्वेन स्वसत्ताकाले प्रागभावविनाशयोरभावेन तद्ग्राहकत्वानुपपत्तेरित्याह—नेति। अस्याः शुक्तिसंविदः। न द्वितीय इत्याह—प्रमाणादपीति। स्वव्यतिरिक्तप्रमाणादपि प्रागभावाद्यनुभूतिर्न युज्यत इत्यर्थः ॥ ३० ॥

कुतो न युज्यत इत्याशङ्क्य किं प्रमाणेन संविदमबुद्ध्वा तत्प्रागभावं गृह्णाति उत बुद्ध्वा नाद्य इत्याह—

अबुध्यमानो नहि संविदं त-
त्सम्बन्धि किंचित्प्रतिपत्तुमीशः।
न बुध्यमानोऽपि तथा तदा हि
न संविदेषा विषयत्वहेतोः ॥ ३१ ॥

अबुध्यमान इति। अजानन् पुरुष इतिशेषः। तत्सम्बन्धिसंवित्-सम्बन्धिकिंचित्प्रागभावादिसंविद् ग्रहणाभावे प्रागभावादेस्तदीयत्वग्रहानुपपत्तेर्विशेषणाविषयिण्या विशिष्टबुद्धेरदर्शनाच्चेति भावः। न द्वितीय इत्याह—न बुध्यमान इति। मानेनेति शेषः। संविदमित्यनुषङ्गः। संविदं प्रमाणेन जानन्नपि न तथा तत्सम्बन्धिकिंचित् प्रतिपत्तुं नेश इत्यर्थः। नन्वस्मिन्पक्षे विशेषणसंवित्ज्ञानसत्वात् कथं नेश इत्याशङ्क्य भवेदेवं यदि संविदः प्रमाणेन ग्रहणं संभवेत् तदेव न संभवति तथात्वे ज्ञानविषयत्वेन जडत्वापत्तेरित्याह—तदेति। संविदो ज्ञानविषयत्वे ॥ ३१ ॥

ननु तर्हि कूटस्थनित्यत्वानुमानेऽजन्यत्वमुपाधिरित्याशङ्क्य तेनैव हेतुनास्यापि साधनात् साधनव्यापकत्वमित्यभिप्रेत्याह—

जन्या न मुक्तिर्घटते कुतश्चि-
द्विद्याफलत्वादिति पूर्वहेतोः।
यद्याद्धि जन्यं जगति प्रसिद्धं
तत्तन्न विद्याफलमम्बरादि ॥ ३२ ॥

जन्या नेति। मुक्तिर्न जन्या विद्याफलत्वात् शुक्तिसंविद्वदित्यर्थः। तत्र व्यतिरेकव्याप्तिमप्याह—यद्यदिति ॥ ३२ ॥

नन्वत्र कर्माजन्यत्वमुपाधिरित्याशङ्क्य तदप्यनेनैव साधयाम इत्याह—

मोक्षस्वरूपो विफलक्रियोऽसौ
विद्याफलत्वादिह यद्यदेवम्।

तत्तत्तथा दृष्टमशेषमेव
यथैव रज्ज्वादितमोनिवृत्तिः ॥ ३३ ॥

मोक्षस्वरूप इति । अविद्यानिवृत्तिलक्षणमुक्तिस्वरूपो ऽसावात्मा आत्मभिन्नाविद्यानिवृत्तिलक्षणमोक्ष इत्यर्थः । विफलक्रियः विफला-क्रिया यस्मिन् अविद्यानिवृत्त्यसिन्नात्मनि स तथोक्तः क्रियासाध्यो न भवतीत्यर्थः । अविद्यानिवृत्तेः कर्मसमुच्चितज्ञानसाध्यत्वेपि ज्ञान-फलत्वस्य विद्यमानत्वान्नान्यतरासिद्धिर्हेतोरिति ध्येयम् । एवं विद्याफलं तथा कर्मासाध्यत्वेन ॥ ३३ ॥

ननु मुक्तेः सायुज्यादिरूपत्वात्तस्य चोपासनादिक्रियासाध्य-त्वात्कथमक्रियाफलत्वमित्याशङ्क्यात एव न सायुज्यादेर्निःश्रेयसत्व-मित्याह—

सायुज्यादि विवादगोचरपदं निःश्रेयसं नो भवे-
त्कार्यत्वादिह यद्यदीदृशमदो निःश्रेयसं नेच्छितम् ।
यद्वत्कुड्यघटादि तादृशमिदं तस्मादिदं तादृशं
युक्तं कल्पयितुं न तद्विसदृशं तादृङ्न दृष्टं यतः ॥ ३४ ॥

सायुज्यादीति । सायुज्यपदेन वस्तुतोऽन्यस्य जीवस्य परेणैक्यम-त्यन्तं तत्सादृश्यं वा विवक्ष्यते आदिपदेन सालोक्यादिग्रहणम् । इह लोके ईदृशं कार्यम् अदस्तत् इदं सायुज्यादिकं च तादृशं कार्यं तस्मात्कार्यत्वात् इदं सायुज्यादि तादृशं कुड्यादिवदनिःश्रेयसं न तद्विसदृशमनिःश्रेयसकुड्यादिविलक्षणं कल्पयितुं न युक्तम् । अप्रयोज-कत्वं निराकरोति—तादृङ् न दृष्टमिति । कार्यं सन्निःश्रेयसं न दृष्टं यत इत्यर्थः । कार्यस्य घटादेः स्वर्गादेश्च निःश्रेयसत्वादर्शनात् दृष्टस्यैव

कल्पयितुं युक्तत्वाच्च। न सायुज्यादेः क्रियासाध्यस्य निःश्रेयसत्वं कल्पयितुं युक्तमित्यर्थः ॥ ३४ ॥

नन्वेष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत इति निःश्रेयसस्य साध्यत्वश्रवणात् कथं तन्निराकरणमिति चेत् तत्र किं जीवस्य परमात्मभावलक्षणन्निःश्रेयसं साध्यमुत भेदप्रपञ्चनिवृत्तिलक्षणम् आद्येपि किमुत्पद्यमानं परमात्मभावलक्षणं निःश्रेयसं सदुतासन्नोभयथापि सदसतोरात्मनरशृङ्गयोरिवोत्पत्त्यनुपपत्तेरित्याह—

सदसदुद्भवनं न विमुक्तता
सदसदुद्भवनानुपपत्तितः।
सदसतोर्नशनं न विमुक्तता
सतसतोर्नशनानुपपत्तितः॥ ३५ ॥

सदसदुद्भवनमिति । सतो वाऽसतो वा परमात्मभावस्योद्भवनमुद्भवः न विमुक्तता सतो वाऽसतो वा उद्भवनानुपपत्तेरित्यर्थः। अत एव न सदसदात्मकत्वमपि तस्य संभवतीति ध्येयम्। द्वितीयेपि किं निवर्त्यमानो भेदः प्रपञ्चः सन्नसन्वा नोभयथाप्यात्मनरशृङ्गवत् सदसतोर्निवर्त्यत्वानुपपत्तेरित्याह—सदसतोरिति। नशनं नाशः अत एव सदसदात्मत्वमप्यनुपपन्नमिति ध्येयम् ॥ ३५ ॥

नन्वहंकारस्य चैतन्याभेदवदनिर्वचनीयस्यैव परमात्मभावस्योत्पत्तिरिति चेत्तत्राह—

न च तमोमयजन्म विमुक्तता
न हि तदिष्टमनिष्टतरं हि तत्।

**न खलु कल्पितजन्म विमुक्तता**

**समुपगच्छति तद्वितथं यतः ॥ ३६ ॥**

न च तमोमयजन्मेति । अविचनीयस्योत्पत्तिः न मुक्तता । तत्रानङ्गीकारमेव दूषणमाह—न च तदिष्टमिति । तत्-अनिर्वचनीयजन्म, अङ्गीकारेपि दूषणमाह—अनिष्टतरं हि तदिति । तद्-अनिर्वचनीयजन्म । अनिष्टत्वमेव दर्शयति । न खल्विति । कल्पितजन्म-अनिर्वचनीयोत्पत्तिः तद्-अनिर्वचनीयजन्म । अनिर्वचनीयस्यावस्तुत्वेन मुक्तेरपुरुषार्थत्वप्रसङ्गादित्यर्थः ॥३६॥

नन्वनिर्वचनीयस्यैव भेदप्रपञ्चस्य निवृत्तिरिति चेत्तर्हि त्वदिष्टन्न सिद्ध्यति किन्त्वस्मदिष्टमेव सिद्ध्यतीत्याह—

**अथ तमोमयविश्वविकल्पना-**

**विलयनात्मकमभ्युपगम्यते ।**

**सकलदूषणजातविवर्जितं**

**तदिह मोक्षपदं न निवार्यते ॥ ३७ ॥**

अथेति । यदि मोक्षपदं मोक्षस्वरूपं तमोमयविश्वविकल्पनाविलयनात्मकमाविद्यकप्रपञ्चनिवृत्त्यात्मकमभ्युपगम्यत इति सम्बन्धः । तन्मोक्षस्वरूपं तथा चाविद्यानिवृत्तिस्वरूपत्वान्मुक्तेस्तस्याश्च नित्यात्मस्वरूपत्वेन क्रियासाध्यत्वानुपपत्तेर्न क्रियासाध्या सायुज्यादिमुक्तिः किं तु ज्ञानसाध्यात्माभिन्नाविद्यानिवृत्तिरेवेति भावः । तर्ह्यभिनिष्पत्तिश्रुतेः कोऽर्थ इति चेत् संप्रसादाभिधेयत्वंपदार्थतत्पदार्थपरिज्ञानेन वाक्यार्थस्वरूपपरिज्ञानमेवेति गृहाण । अन्यथा मुक्तेः मोक्ष्यमाणसंप्रसादपदाभिधेयजीवस्वरूपत्वाभिधायित्वेन रूपेणेत्येतद्विरोधादिति द्रष्टव्यम् ॥ ३७ ॥

नन्वविद्यानिवृत्तेर्ज्ञानसाध्यत्वेप्यनुपपत्तिस्तुल्या तथा हि। किं ज्ञानमविद्यां सर्वात्मना निवर्त्तयति उत सावशेषम् नाद्यः। सद्य एव शरीरपातप्रसङ्गेन जीवन्मुक्तिशास्त्रस्याप्रामाण्यप्रसङ्गात्। न द्वितीयः अज्ञानविरोधिनो ज्ञानस्य सावशेषं तन्निवर्तकत्वानुपपत्तेरित्याशङ्क्याद्यौ प्रथमं पक्षमादत्ते—

**सम्यग्ज्ञानविभावसुः सकलमेवाज्ञानतत्संभवं**
**सद्यो वस्तुबलप्रवर्त्तनमरुद्व्यापारसंदीपितः।**
**निर्लेपेन हि दंदहीति न मनागप्यस्य रूपान्तरं**
**संसारस्य शिनष्टि तेन विदुषः सद्यो विमुक्तिर्ध्रुवा ॥ ३८ ॥**

सम्यग्ज्ञानेति। सम्यग्ज्ञानमात्मसाक्षात्कारः स एव विभावसुः वह्निः वस्तुबलप्रवर्त्तनमरुद्व्यापारसंदीपितः सन्नित्यर्थः। सद्यः स्वसत्ताकाल एव सकलमेवाज्ञानतत्कार्यसकलमपि निर्लेपेन निरवशेषेण सर्वात्मनेदं च दन्दहीतीति पङ्क्त्यर्थस्य विवरणम्। निरवशेषमित्येतदेव व्यतिरेकमुखेनाह—न मनागिति। अस्याज्ञानतत्कार्यलक्षणस्य संसारस्य मनागीषदपि रूपान्तरं न शिनष्टि परिशिनष्टि। फलितमाह—तेनेति। येन सर्वात्मना ज्ञानादज्ञानतत्कार्यदाहस्तेन सद्यः ज्ञानकाल एव विमुक्तिः विशेषेण मुक्तिः विदेहमुक्तिरित्यर्थः ॥ ३८ ॥

नन्वेवं सति तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्य इति विदुषोपि प्रतीक्षाप्रदर्शकं जीवन्मुक्तिशास्त्रं पीड्येतेति चेत्तत्राह—

**जीवन्मुक्तिप्रत्ययं शास्त्रजातं**
**जीवन्मुक्ते कल्पिते योजनीयम्।**

**तावन्मात्रेणार्थवत्त्वोपपत्तेः**

**सद्यो मुक्तिः सम्यगेतस्य हेतोः ॥ ३९ ॥**

जीवन्मुक्तिप्रत्ययमिति । जीवन्मुक्तेः प्रत्ययो येन तत्जीवन्मुक्तिप्रत्ययं जीवन्मुक्तिप्रतिपादकमित्यर्थः । तावन्मात्रेण कल्पितजीवन्मुक्तिप्रतिपादनमात्रेणार्थवत्त्वोपपत्तेः । जीवन्मुक्तिशास्त्रस्येति शेषः । तस्य हेतोः तस्माद्धेतोः । एतदुक्तं भवति । शास्त्रं हि ब्रह्म वेद ब्रह्मैव भवतीत्यादिकं विद्यामुक्त्योः समानकालीनत्वमेव दर्शयति । तत्र च कस्यचित्पुरुषस्य विद्यायाः मरणकालीनत्वनियमाभावात् कथं विद्यानन्तरमेव विमुक्तिरिति शङ्का माभूदिति जीवतोपि विद्यामङ्गीकृत्य अमानित्वादिमुक्तधर्मयोगेनोपचारान्मुक्तिं बोधयति न तु सावशेषनाशेन मुख्यां मुक्तिं तावन्मात्रेणैव तस्य शास्त्रस्यार्थवत्त्वसंभवान्न्यायविरोधेन मुख्यार्थपरिग्रहस्यानुचितत्वान्न्यायविरोधश्च ज्ञानस्याविद्यकभेदप्रपञ्चमात्रविरोधिनः सावशेषतया तन्निवर्त्तकत्वानुपपत्तिरेव । ननु प्रारब्धकर्मणा प्रतिबद्धत्वात् ज्ञानं शरीरादि न निवर्त्तयतीति चेन्न । कारणाविद्यानिवृत्तौ कार्यस्यावस्थानानुपपत्तेः । ननु तदानुगुण्येन कारणमपि किंचिदवशेषयति तदंशे प्रारब्धकर्मणा ज्ञानस्य प्रतिबद्धत्वादिति चेत् भवेदेवं यदि प्रारब्धं कर्म विद्येत तदेव नास्ति तस्याप्यविद्याकार्यत्वेन ज्ञानेन निवृत्तत्वात् । ननूपजीव्यत्वात् प्रारब्धकर्म न ज्ञानं निवर्त्तयतीति चेत् । किं ज्ञानं स्वोत्पत्तौ प्रारब्धकर्मोपजीवति किं वा स्वस्थितौ अथवा स्वकार्ये । नाद्यः ज्ञानस्य दृष्टप्रमाणफलत्वेनादृष्टोपजीवित्वाभावात् । न द्वितीयः । ज्ञानस्य स्वाश्रये त्रिक्षणावस्थायित्वेन तेन विनापि तदुपपत्तेः । न तृतीयः । ज्ञानकार्यतमोनिवृत्तौ तदनपेक्षणात् । ननु ज्ञानस्य देहजन्यत्वात् तस्य च प्रारब्धाधीनत्वात् परम्परया ज्ञानं प्रारब्धमुपजीवतीति चेत् तर्ह्यविद्याया अपि तादृशोपजीव्यत्वसंभवेनाणुमात्रस्याप्यनिवृत्तिप्रसङ्गात् । नन्व

विद्यासाधारणकारणमिति चेत्तर्हि देहप्रारब्धयोरपि तत्समानं श्रुतिरपि "क्षीयन्ते चास्य कर्माणी"त्यविशेषेण कर्मक्षयं दर्शयति तस्माद्विद्यायाः स्वोदयमात्रेण निरवशेषसंसारमूलाज्ञाननिवर्त्तकत्वात् न कथंचिदपि जीवन्मुक्तिशास्त्रं स्वार्थपरमिति न तत्पीडेति ॥ ३९ ॥

ननु न्यायविरोधेन जीवन्मुक्तिशास्त्रस्य स्वार्थपरत्वाभावो वर्णयितुं न शक्यः न्यायविरोधस्य परिहर्त्तुं शक्यत्वात्। तथा हिअप्रतिबद्धं हि ज्ञानं स्वकार्यं जनयति अन्यथा विचारं विनोत्पन्नज्ञानस्याप्यविद्यानिवर्त्तकत्वप्रसङ्गात् प्रतिबन्धश्च क्वचित् कश्चिद्भवति। देवदत्तकरदाहप्रतिबन्धककर्मणो यज्ञदत्तकरदाहप्रतिबन्धकत्वादर्शनात् ज्ञानं चारब्धकर्मणा प्रवलेन प्रतिबद्धं कथमविद्याया सर्वात्मना नाशं जनयेत्। ननु प्रारब्धकर्मणः प्रतिबन्धकत्वमेव न संभवतीतिचेत् किं क्वचिदपि प्रारब्धं कर्माप्रतिबन्धकं किं वा ज्ञान एव। नाद्यः—क्षुद्रस्यापि प्रारब्धकर्मणः महत्तरानारब्धकर्मप्रतिबन्धकत्वदर्शनात्, अन्यथा राजन्यादिदेहे वर्त्तमानस्याश्वमेधादिकमनुतिष्ठतस्तदानीमेव तत्फलभोगप्रसङ्गात्, अनेकदेहारम्भकस्य च कर्मणः केषु चिद्देहेष्वारब्धेषु तस्यैव नियमेन देहान्तरारम्भकत्वदर्शनाच्च, अन्यथा विद्यायाश्चरमदेहभाविन्या मध्ये कर्मान्तरव्यवधानेन च चरमदेहासंभवात् कस्यापि मुक्त्यर्थं प्रवृत्त्यनुपपत्तेः, चरमदेहो हि एकस्मादेवानेकफलात् कर्मणोयद्देहानन्तरं देहान्तरं नारभ्यते स एव तत्र च देहे विद्योत्पत्यर्थं श्रवणादिप्रवृत्तिः तदारम्भककर्मफलमध्ये कर्मान्तरव्यवधानाभावनिश्चय एव संभवति अन्यथा तद्देहस्य कल्पान्तरानन्तरभावित्वशङ्कया श्रवणादौ प्रवृत्त्यनुपपत्तेः तस्मान्न प्रारब्धन्न किंचिदपि प्रतिवध्नातीति वक्तुं शक्यम्। द्वितीये किं प्रारब्धस्य विद्याप्रतिबन्धकत्वे तस्याः स्वसमानकालीनमुक्तिसाधनत्वं श्रुत्या त्यज्यत इत्युच्यते। अथवा विद्याया विद्यात्वादेव प्रतिवध्यत्वानुपपत्तिरिति। न द्वितीयः। विद्यात्वस्याकिंचित्करत्वात् असंभावनादिभिस्तस्याप्रतिवध्यत्व-

दर्शनाच्च । न प्रथमः । अस्माभिरपि विद्यासमकालमेवाविद्यानिवृत्त्यङ्गीकारात् । कथं तर्हि जीवन्मुक्तिरिति चेन्न—प्रारब्धप्रतिबन्धबलेनाविद्यालेशवशात्तदुपपत्तेः । तस्मात्तस्य तावदेव चिरं भूयश्चान्ते विश्वमायानिवृत्तिरित्यादिशास्त्रानुरोधेन विदुषोपि किंचित्कालं देहावस्थितिरस्तीति पूर्वस्मिन्नरुच्या पक्षान्तरमाह—

**यद्वा विद्वद्भोचरं योजनीयं**

**तस्याविद्यालेशवत्त्वोपपत्तेः ।**

**तस्याभीष्टा निर्निमित्ता निवृत्ति-**

**र्यद्वा विद्यासंततिर्हेतुलेशः ॥ ४० ॥**

यद्वेति । योजनीयं जीवन्मुक्तिशास्त्रमिति शेषः । तस्य विदुषः । ननु स लेशः केन निवर्त्यते किंज्ञानेन उतान्येन केनचित् । नाद्यः ज्ञानस्य तत्समानकालीनस्य तन्निवर्त्तकत्वानुपपत्तेः । देहवियोगकाले ज्ञानसद्भावनियमाभावाच्च । न द्वितीयः—तददर्शनादित्याशङ्क्य भावरूपनिवृत्तिकारणाभावेप्यभावरूपं तदस्तीत्याह—तस्येति । लेशस्य निर्निमित्ता भावरूपनिमित्तहीनेत्यर्थः । यथा स्वर्गानुकूलतया कल्पितस्यापूर्वस्य तत्कार्यस्वर्गभोगविनाश्यत्वं कल्प्यत इत्यर्थः । नन्वनादिसिद्धाविद्यालेशस्य कथं प्रारब्धनाशमात्रान्निवृत्तिः भावरूपमपि तन्निवृत्तिकारणं किंचिद्वक्तव्यमित्यभिनिविशमानं प्रति तदपि किंचिद्वक्तुं शक्यत इत्याह—यद्वेति । विद्यासंततिः संतन्यमानविद्यासंस्कार इति यावत् । हेतुलेशः अल्पकारणं लेशनिवृत्ताविति शेषः । हेतुलेशमिति पाठे तु विद्यासंततिः हेतुलेशं हेतोरज्ञानस्य लेशं प्रतिनिवर्त्तिकेत्यध्याहारेण योजनीयम् । अस्मिन् पक्षे संस्कारद्वाराविद्यानिवर्त्यत्वं लेशस्येति द्रष्टव्यम् । संस्कारश्चाविद्यालेशात् तन्नाशेन वा विनश्यति । ननु विद्यासंस्कारस्यापि लेशसमानकालीनस्य कथं

तन्निवर्त्तकत्वमिति चेन्न । निवर्त्यसमानकालीनस्यापि प्रतिबन्धक-क्षये तन्निवर्त्तकत्वोपपत्तेरिति भावः ॥ ४० ॥

ननु कोऽयमविद्यालेशः किमविद्यैव किंवा अविद्याया अंशः नोभयथापि जन्मान्तरलक्षणानर्थहेत्वविद्यायास्तदंशस्य वा अनुवृत्तत्वे मुक्तेः अनुपपत्तेरित्याशङ्क्य अत एव न तदुभयमपि किन्तु प्रारब्ध फलमात्रसम्पादनपटीयानवस्थाविशेष एव लेश इत्याह--

**जीवन्मुक्तिव्यापृतेः प्रापको य-**
**स्तस्याविद्यालेशगन्धादिभाषा ।**
**नाविद्याया नापि भागस्य तस्या-**
**स्तस्मिन्पक्षे दुर्घटत्वाद्विमुक्तेः ॥ ४१ ॥**

जीवन्मुक्तीति । जीवन्मुक्त्यवस्थायां या व्यापृतिः देहयात्रानुकूला तस्याः प्रापको हेतुः यः अवस्थाविशेषस्तस्यावस्थाविशेषस्यैवाविद्यालेशगन्धादिभाषा–अविद्यालेश इत्यविद्यागन्ध इति आदिपदेनाविद्याच्छायेति संज्ञा नत्वविद्यायाः नापि तस्याः अविद्याया भागस्य जन्मान्तरसम्पादनसामर्थ्यांशस्य तत्रोभयत्रापि हेतुः—तस्मिन्पक्ष इति । जीवन्मुक्तेरप्यनर्थहेत्वविद्यायास्तद्भागस्य वानुवृत्तिपक्षे विमुक्तेर्विदेहमुक्तेरेव दुर्घटत्वादित्यर्थः ॥ ४१ ॥

ननु भाष्यकारैः संस्कारवशात्किञ्चित्कालं शरीरादिप्रतिभासोनुवर्तत इति संस्कारस्यैव जीवन्मुक्तिहेतुत्वमुक्तं तत्कथमवस्थाविशेषस्य तद्धेतुत्वमुच्यत इत्याशङ्क्य संस्कारशब्देनापि बाधिताविद्यापरपर्यायावस्थाविशेष एवोच्यत इति तद्ग्रन्थपूर्वापरपर्यालोचनया ज्ञातव्यमित्याह –

गन्धच्छायालेशसंस्कारभाषा
विज्ञातव्या भाष्यकारीयतन्त्रे ।
स्वाविद्याया बाधितायाः प्रतीतिः
पौर्वापर्येणार्थमालोच्य बुद्ध्या ॥ ४२ ॥

गन्धच्छायेति । भाष्यकारीयतन्त्रे भाष्ये बुद्ध्या पौर्वापर्येणार्थमालोच्य प्रतीतेरात्मसाक्षात्काराद्बाधितायाः अविद्याया एव गन्धच्छायालेशसंस्कारभाषा गन्ध इति छायेति लेश इति संस्कार इति च भाषा विज्ञातव्येति सम्बन्धः । भाष्यकारो हि अकर्त्रात्मबोधो मिथ्याज्ञानबाधेन कर्माण्युच्छिनत्ति बाधितमपि मिथ्याज्ञानं द्विचन्द्रादिज्ञानवदिति बाधितानुवृत्त्यैवाज्ञानस्य शरीरादिप्रतिभासहेतुत्वं दर्शयति अविद्यायाश्च बाधितानुवृत्तिर्नाम उक्तावस्थाविशेष एव । तथा च संस्कारादिशब्दैरविद्यावस्थाविशेष एवोच्यत इति न किंचिदमुपपन्नमित्यर्थः ॥ ४२ ॥

ननु मुक्तावप्यविद्यालेशेन संसारदर्शनमित्येतदत्यन्तं व्याहतमिति चेत् किमेवं वदतो जीवन्मुक्तिरेव नास्तीति विवक्षा किं वा तस्य संसारदर्शनं नास्तीति । अथवा अविद्यादिलेशो नास्तीति न सर्वथापि सर्वस्यापि विद्वदनुभवसिद्धत्वादित्याह—

जीवन्मुक्तिस्तावदस्ति प्रतीते-
र्द्वैतच्छाया तत्र चास्ति प्रतीतेः ।
द्वैतच्छाया रक्षणायास्तिलेश-
स्तस्मिन्नर्थे स्वानुभूतिः प्रमाणम् ॥ ४३ ॥

जीवन्मुक्तिस्तावदिति । द्वैतच्छायेत्यनेन देहादिद्वैतस्य बन्धकरत्वराहित्यमुक्तम् । तत्र जीवन्मुक्तौ द्वैतच्छायारक्षणाय द्वैतच्छायानिर्वाहाय

कारणं विना कार्यानुपपत्तेरित्यर्थः। लेशः अविद्यालेशः, तस्मिन्नर्थे-लेशोऽस्तीत्यस्मिन्नर्थे ॥ ४३ ॥

ननु ब्रह्मात्मैक्यसाक्षात्कारेणाविद्यामात्रविरोधिना सकलसंसार-निदानाज्ञाने निवृत्ते कथं विदुषि तदनुवृत्तिः। न च विद्यायाः शेष-प्रारब्धकर्मणा प्रतिबद्धत्वान्न सर्वात्मना विद्यानिवर्त्तकत्वमिति वाच्यम् प्रारब्धस्याप्यविद्याकार्यत्वेन क्षीयन्ते चास्य कर्माणीति निवृत्तिप्रति पादनात् निवृत्तौ प्रतिबन्धकत्वानुपपत्तेः। न च सा श्रुतिः प्रारब्धेतर-कर्मविषयेति वाच्यम्। एवमप्यविद्यालेशनिवृत्तिप्रसङ्गात्। प्रति-बन्धकविगमे तस्मादेव वा तज्जातीयाद्वा कारणात् कार्योत्पत्तिनियमा-दित्याशङ्क्य न तत्प्रतिबन्धबलाद्विद्यायाः सर्वात्मनाऽविद्यानिवर्त्तकत्वा-भावं ब्रूमः किन्तु सर्वात्मना विरोधाभावादेव विरोधो हि कार्यबल-कल्प्यः यथाकार्यमेव वक्तव्यः विदुषि च द्वैतच्छायानुवृत्तिश्रुतिस्मृति-विद्वदनुभवसिद्धा। तथा च तत्कारणत्वेनाविद्यालेशस्यापि वक्तव्य-त्वान्न विद्याया अविद्यालेशेन विरोधः किन्त्वंशान्तरेणैवेति न किंचिद-निष्टमित्यभिप्रेत्याह --

ब्रह्मात्मत्वं सान्तरायं पुरस्ता-
द्बोधोत्पत्तौ ध्वस्तमोहान्तरायम्।
यद्यप्येवं द्वैतलेशानुवृत्तेः
प्रत्यक्त्वान्मोहलेशोऽभ्युपेयः ॥ ४४ ॥

ब्रह्मात्मत्वमिति। सान्तरायं सव्यवधानमविद्यावृतमिति यावत् पुरस्ताद्बोधोत्पत्तेः पूर्वं ध्वस्तमोहान्तरायं निवृत्ताविद्याव्यवधानं यद्यपि ब्रह्मात्मत्वं पुरस्तादविद्यावृतं सद्बोधोत्पत्तौ निवृत्ताविद्यं भवति। एवमेवमपीत्यर्थः ॥ ४४ ॥

तस्माज्जीवन्मुक्तिशास्त्रस्य प्रतीयमानार्थे बाधकाभावात् प्रामाण्यं सुदृढमित्युपसंहरति—

**तस्माज्जीवन्मुक्तिरूपेण विद्वा-**

**नारब्धानां कर्मणां भोगसिद्धै।**

**स्थित्वा भोगं ध्वान्तगन्धप्रसूतं**

**भुक्त्वात्यन्तं याति कैवल्यमन्ते॥ ४५॥**

तस्मादिति। ध्वान्तलेशानुवृत्तिस्तच्छब्दार्थः ध्वान्तगन्धप्रसूतं अज्ञानलेशकार्यम् अत्यन्तं-निरवशेषम्, अन्ते—प्रारब्धभोगक्षये॥ ४५॥

उक्तेऽर्थे प्रमाणत्वेन श्रुतिं दर्शयति—

**क्षरं प्रधानममृताक्षरं हरः**

**क्षरात्मानावीशते देव एकः।**

**तस्याभिध्यानाद्योजनात्तत्त्वभावा-**

**द्भूयश्चान्ते विश्वमायानिवृत्तिः॥ ४६॥**

क्षरमिति। नश्वरं तस्येश्वरस्य योजनम्—ब्रह्माभेदसाक्षात्कारः। अन्ते-प्रारब्धकर्मक्षये, विश्वमायानिवृत्तिः-प्रतिभासिकमायाया अपि निवृत्तिः, तस्मान्मुक्तेः ज्ञानसाध्यत्वेनुपपत्त्यभावाज्ज्ञानसाध्याविद्या-निवृत्तिरेव मोक्षः न तु क्रियासाध्यसायुज्यादिरिति भावः॥ ४६॥

ननु तयोर्ध्वमायन्नमृतत्वमेति तेऽर्चिषमभिसंभवन्तीत्यादिना-मुक्तेरर्चिरादिमार्गगमनादिसाध्यत्वं प्रतीयते कथं ज्ञानसमानकाली-नत्वमितिचेन्न—तस्याः श्रुतेर्निर्गुणविद्याविषयत्वाभावात् किमत्र प्रमाणमिति चेद् ब्रह्मादीनां मुक्तिश्रवणान्यथानुपपत्तिरित्याह—

ब्रह्मादीनामस्ति मुक्तिःश्रुतिभ्य-
स्तेषामेषा नार्चिराद्या गतिर्वः ।
तस्मादस्या निर्गुणब्रह्मविद्या-
सम्बन्धित्वं नैषितव्यं भवद्भिः ॥ ४७ ॥

ब्रह्मादीनामिति । हिरण्यगर्भविराट्प्रभृतीनां श्रुतिभ्यः सहायमीक्षांचक्रे यन्मदन्यन्नास्ति कस्मान्नु बिभेमि तद्यो यो देवानां प्रत्यबुध्यत इत्यादिश्रुतिभ्यः ब्रह्मणा सह ते सर्व इत्यदिस्मृतेश्चेति द्रष्टव्यम् । ननु ब्रह्मादीनां मुक्तिरस्तीत्येतावता कथं मुक्तेर्गमनादिसाध्यत्वाभावः तत्राह—तेषामिति । ब्रह्मादीनां वः युष्माकं मतेपीत्यर्थः । ब्रह्मादीनामपि हि विद्यया मुक्तिः श्रूयते स्मर्यते च न च तेषां भवन्मतेप्यर्चिरादिमार्गगमनमस्ति स एतान् ब्रह्म गमयतीति श्रुत्या मार्गस्य ब्रह्मलोकपर्यन्तत्वावगमात् कार्यं बादरिरस्य गत्युपपत्तेरितिपरमर्षिसूत्राच्चेत्यर्थः । फलितमाह—तस्मादिति । ब्रह्मविद्ब्रह्मादीनां गत्यसंभवस्तच्छब्दार्थः अस्या-अर्चिरादिगतेः ॥ ४७ ॥

किं च परविद्यावतः प्राणोत्क्रान्तिनिषेधबलादपि नार्चिरादिमार्गश्रुतेर्निगुणविषयत्वमित्याह—

प्राणोत्क्रान्तिर्नास्ति मूर्धन्ययैषां
नाड्या तस्माद्यत्र यत्रैव विद्या ।
तत्रैव स्यान्मुक्तिरित्यभ्युपेयं
गत्युत्क्रान्ती तेन विद्यान्तरेषु ॥ ४८ ॥

प्राणोत्क्रान्तिरिति । मूर्धन्यया मूर्धसम्बन्धिन्या नाड्येति सम्बन्धः सुषुम्ना नाड्येत्यर्थः । एषां निर्गुणविद्यावतां न तस्य प्राणाः उत्क्राम-

न्तीत्यादिना परब्रह्मविदुषः शारीराद्बहिः प्राणोत्क्रान्तेर्निषिद्धत्वात्तदभावे चार्चिरादिमार्गासंभवात् तयोर्ध्वमायन्निति तस्यास्तदधीनत्वावगमात् न परलोकगमनादिसाध्या मुक्तिः किं तु यत्र ब्रह्मविद्या तत्रैव तत्काल एव ब्रह्मविद्यामात्रसाध्या मुक्तिः ब्रह्मविदाप्नोति परं ब्रह्मैव सन् ब्रह्माप्येति अत्र ब्रह्म समश्नुत इत्यादिश्रुतेरित्याह—तस्मादिति । यत्र यस्मिन्देहेऽर्चिरादिगतेः प्राणोत्क्रान्तेश्च श्रूयमाणायाः का गतिरित्याशङ्क्याह—गत्युत्क्रान्तीति । निर्गुणविद्यायां गत्याद्यभावस्तच्छब्दार्थः विद्यान्तरेषु सगुणविद्यासु ॥ ४८ ॥

इतोपि केवलविद्यासाध्या मुक्तिरित्याह --

**देवादीनां नास्ति कर्माधिकारो**
**विद्या तेषां केवला मुक्तिहेतुः ।**
**पारम्पर्यात्कर्मणामुक्तहेतो-**
**र्विद्याङ्गत्वं सर्ववर्णाश्रमाणाम् ॥ ४९ ॥**

देवादीनामिति । देवादीनामपि मुक्तिः श्रूयते न च तेषां कर्मास्ति । उपनयनाद्यभावेन कर्माधिकाराभावात् अस्ति च देवताधिकरणन्यायेन विद्यायामधिकारः अतस्तेषां केवलविद्ययैव मुक्तौ तन्न्यायेनेतरेषामपि सैव मुक्तिहेतुरित्यर्थः । तर्ह्यस्माकमपि न कथमपि कर्मापेक्षा स्यात् । देवादिष्वदर्शनादित्याशङ्क्यास्माकं शुद्धिद्वारा परम्परयोपयोगात्तदपेक्षा देवानां तु न तथा तेषां स्वतः शुद्धाशयत्वात् । न ह वै देवान् प्रायं गच्छतीति श्रुतेस्तेषामपि जन्मान्तरीयकर्मणो वा मुक्त्युपपत्तेरित्याह—पारम्पर्यादिति । कर्मणां पारम्पर्येण मुक्तिहेतुत्वाद्विद्याङ्गत्वमित्यन्वयः । वर्णाश्रमेति देवानामप्युपलक्षणम् ॥ ४९ ॥

ननु कर्माधिकृतानामस्माकं कर्माणि मुक्तिसाधनान्येव किं न स्युरिति चेन्न । मुक्तेः साधनवैचित्र्येण वैचित्र्यप्रसङ्गात् । न च तेषां

मुक्तिहेतुत्वे प्रमाणमपि दृश्यते। ननु दृश्यते हिरण्यदामृतत्वं भजन्ते। कर्मणैव हि संसिद्धिमास्थिता जनकादय इति चेत्सत्यम्। मुक्तिहेतुत्वमात्रं श्रूयते न तु साक्षात् परम्परया तु तद्धेतुत्वे अस्ति प्रमाणमित्याह—

पारम्पर्यं शुद्धिहेतुत्वहेतो-
र्यज्ञादीनां श्रूयते स्मर्यते च।
साक्षादेषां मोक्षहेतुत्वमेव-
मन्विच्छन्तोऽप्यागमान्न प्रतीमः॥ ५० ॥

पारम्पर्यमिति। शुद्धिहेतुत्वहेतोः शुद्धिहेतुत्वाद्धेतोः शुद्धीतिविविदिषाया अप्युपलक्षणम् श्रूयते तमेतमित्यादौ स्मर्यते "योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये। कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्तते। वेदानुवचनं यज्ञो ब्रह्मचर्यं तपो दमः। श्रद्धोपवासः स्वातन्त्र्यमात्मनो ज्ञानहेतव" इत्यादौ तस्मान्निरस्तनिखिलानर्थव्रातनिरतिशयानन्दचैतन्यात्मकब्रह्मतयावस्थानमेव मोक्षः स च विद्यामात्रसाध्य इति सिद्धम्॥ ५० ॥

अयं चार्थः सकलश्रुतिस्मृतिन्यायकोविदभगवद्भाष्यकारेणैव दर्शितो मुमुक्षुवे तुभ्यमुपदिष्टः न तूत्प्रेक्षामात्रकल्पित इति शिष्यविश्वासार्थं संप्रदायमूलतां दर्शयति—

इति बहुश्रुतभाषितमुच्चकैः
श्रुतिशिरोवचनानुगतं महत्।
समुपदिष्टमिदं कृपया मया
प्रियमतीव हितं च मुमुक्षवे॥ ५१ ॥

इतीति । अथवा शारीरकार्थविषयावगतिप्रधानमित्युपक्रम्य स्वतन्त्रप्रकरणकरणे प्रक्रमाननुगुणता स्यादित्याशङ्क्य नेदं स्वतन्त्रं प्रकरणं किन्तु भाष्यार्थब्रह्मसंस्पर्शित्वात्तदर्थावगतिप्रधानमेवेति प्रक्रमैकरूपं प्रदर्शयन्नुपसंहरति इतीति। इति अनेन प्रकारेण समन्वयादिप्रदर्शनपूर्वकमित्यर्थः। बहुश्रुतभाषितं बहुश्रुतो भगवान् भाष्यकारः तेन भाषितम् । उच्चैः स्पष्टं श्रुतिशिरोवचनानुगतमित्यनेन भाष्यकारप्रणीतामरुकादिवन्न मूलप्रमाणशून्यं किन्तु प्रमाणमूलमेव अत इदमत्यन्तं श्रद्धेयमिति सूचितम् । अथवा तत्त्वमादिश्रुतिवाक्यार्थस्यैव मया व्युत्पादितत्वात् तस्यैव च भाष्यार्थत्वादयमपि भाष्यार्थ एवेति सूचितं महत् ब्रह्म तस्योपदेशविषयत्वे हेतुः प्रियमिति स्वर्गादिभ्यो वैलक्षण्यमाह—अतीव हितमिति । अथवा भाष्योक्तमपि श्रुतिवचोनुगतमप्यल्पप्रयोजनं चेन्न मुमुक्षूपादेयं तत्राह अतीव हितमेतादृशब्रह्मोपदेशो स्वस्य प्रवृत्तिबीजं दर्शयन्नद्यतनानपि गुरून् शिक्षयति कृपयेति । नित्यवत् स्वानन्दतृप्तेन मया कृपयैव तुभ्यमुपदिष्टं न द्रविणादिलोलुपतयेत्यर्थः ॥५१॥

एवं परमकृपालुनाचार्येण सप्रमाणकं सोपपत्तिकं ससाधनं सप्रयोजनं च तत्त्वमादिवाक्यार्थे ब्रह्मात्मैक्योपदिष्टे शिष्योपि गुरूपदिष्टार्थमनुभवन् कृपयोपदेष्टुराचार्यस्यारण्यरुदितशङ्कया खेदो माभूदिति प्रकरणार्थोपसंहारव्याजेन स्वस्य तदुपदिष्टब्रह्मविद्याफलप्राप्तिप्रदर्शनेनैव तं तोषयतीत्यभिप्रेत्याह—

**एवं समन्वयविरोधनिरासविद्या-**
**निष्पत्तिसाधनफलानि गुरोः क्रमेण।**
**विज्ञाय वेदफलमात्मनि सर्वमेव**
**पश्यन्नुवाच कृतकृत्यमतिः स शिष्यः ॥५२॥**

एवमिति । समन्वयश्च विरोधनिरासश्च विद्यानिष्पत्तिसाधनं च फलं चेति तथोक्तानि अनेनाध्यायचतुष्टयार्थः क्रमेण दर्शितः । गुरोरिति पञ्चमी । गुरोः सकाशादित्यर्थः । वेदफलं वेदजन्यज्ञानफलं ब्रह्मभावमिति यावत् तस्यैव सर्वरूपत्वात् सर्वमित्याह । यद्वा पुरुषार्थ-पर्यवसायिवेदफलस्वर्गादिसुखस्य सर्वस्याप्यनवधिकात्मानन्दलेश-त्वात् तादृशात्मानन्दप्राप्तौ तदंशरूपस्वर्गादिसुखं सर्वं तत्रैवान्तर्भूत-मित्याह वेदफलमिति । वैदिकं सर्वं फलमित्यर्थः । अत एव कृतकृत्यमतिः कृत्यं सर्वं कृतमिति मतिर्यस्य स तथोक्तः । श्रूयते हि परिपूर्णानन्दात्म-ज्ञानात्कृतकृत्यता "आत्मानं चेद्विजानीयादयमस्मीति पुरुषः । किमिच्छन् कस्य कामाय शरीरमनु संज्वरेदि"त्यादौ । स्मर्यते च "आत्मलाभान्न परं विद्यत" इति ॥ ५२ ॥

शिष्यस्य वचनमेवाह—

**विद्याविग्रहमग्रहेण पिहितं प्रत्यञ्चमुच्चैस्तरा-**
**मुत्कृष्योत्तमपुरुषं मुनिधिया मुञ्जादिषीकामिव ।**
**कोशात्कारणकार्यरूपविकृतात्पश्यामि निःसंशयं**
**क्वासीदस्ति भविष्यति क्व नु गतः संसारदुःखोदधिः**
**॥ ५३ ॥**

विद्याविग्रहमिति । चैतन्यस्वरूपमग्रहेण पिहितं देहादिविलक्षण-स्तत्साक्षिस्वप्रकाशस्वरूप एवाहमित्यज्ञानेनावृतमुत्तमपुरुषं परमात्म-भूतं प्रत्यञ्चं मुनिधिया मननादिसंस्कृतधिया कारणकार्य-रूपविकृतात् कारणरूपाज्ञानात् कार्यरूपाद्विकाराच्च कोशात् कोश-वदाच्छादकीभूतान्नप्राणमनोविज्ञानानन्दमयादुच्चैस्तरां स्पष्टमुत्कृष्य विविच्य पश्यामीति सम्बन्धः । विवेचने दृष्टान्तः—मुञ्जादिषीकामिवेति ।

मुञ्जस्तृणविशेषः पूर्वमपि प्रत्यगात्मदर्शनमस्तीति ततो वैलक्षण्यमाह निः संशयमिति । एतादृशानुभवफलमनर्थनिवृत्तिमपि दर्शयति—कासीदस्तीति ॥ ५३ ॥

एवं त्वंपदलक्ष्यानुभवं तत्फलसंसारनिवृत्तिं च प्रदर्श्य इदानीं तत्पदलक्ष्यानुभवं तत्फलपरमानन्दावाप्त्यादिकं च दर्शयति—

पश्यामि चित्रमिव सर्वमिदं द्वितीयं
तिष्ठामि निष्कलचिदेकवपुष्यनन्ते ।
आत्मानमद्वयमनन्तसुखैकरूपं
पश्यामि दग्धरशनामिव च प्रपञ्चम् ॥ ५४ ॥

पश्यामीति । चित्रम्—आश्चर्यं तत्र हेतुः—कूटस्थेति । असङ्गकूटस्थचैतन्यैकरसमपि स्वतो गगनप्रसूनायमानमिदं द्वैतमभूदिति चित्रमित्यर्थः । अनन्ते—अपरिच्छिन्ने । ननु परिच्छिन्नस्य तव कथमपरिच्छिन्नरूपत्वं तत्राह—आत्मानमिति । आत्मत्वादेव परिच्छिन्नतायाः कल्पितत्वात्तस्याश्चानवच्छिन्नानन्दात्मज्ञानेन निरस्तत्वान्नोक्तदोष इत्यर्थः-तर्हि कथं प्रपञ्चप्रतीतिः लेशानुवृत्त्येत्याह-दग्धरशनामिति । रशना रज्जुः यद्वा चित्रमिवार्थक्रियाशून्यं तस्यैव व्याख्या दग्धरशनामिति ॥ ५४ ॥

इदानीं वाक्यार्थानुभवं तत्फलं देहाद्यभिमानराहित्यं च दर्शयति—

अद्वैतमप्यनुभवामि करस्थबिल्व-
तुल्यं शरीरमहिनिर्ल्वयनीव वीक्षे ।
एवं च जीवनमिव प्रतिभासमानं
निःश्रेयसोऽधिगमनं च मम प्रसिद्धम् ॥ ५५ ॥

अद्वैतमिति। ऐक्यमित्यर्थः। अहिनिर्ल्वयनीवत् सर्पत्वक् यथा सर्पस्य परित्यक्तायां त्वचि नाभिमानः। तन्निष्ठकण्टकादिबन्धनादिना वा न दुःखादि तथा ब्रह्मात्मैक्यमनुभवतो मम न देहादावभिमानः तद्गत-मानावमानादिना वा न हर्षशोकावित्यर्थः। देहाभिमानराहित्यफल-माह-एवं चेति। देहाभिमानाभावे सति जीवनमनादिसुखदुःखानुभवः न वस्तुतः देहसम्बन्धाभावात् किन्तु जीवनमिव प्रतीतिमात्रं प्रतिभासनं तत्त्वज्ञानमपि न वस्तुतः प्रमातृत्वाभावात् किं तु तदिव प्रतीतिमात्रं निःश्रेयसप्राप्तिरपि न वस्तुतः कालत्रयेपि देहसम्बन्धाभावेन बन्धाभावात् किंतु तदिव प्रतीतिमात्रमिति प्रसिद्धं सिद्धमित्यर्थः। तथा च बद्धो मुक्तो विद्वानित्येतत्प्रतिभामात्रमित्यर्थः। तथा श्रुतिः न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः। न मुमुक्षुर्नवै मुक्त इत्येषा परमार्थते"ति ब्रह्मविद्वचनं च "बन्धमोक्षौ न विद्येते नित्यमुक्तस्य चात्मनः" इति चोपपद्यत इति भावः॥ ५५॥

एवं स्वानुभवं प्रदर्श्याचार्य महीकरणाय विद्यां प्रशंसति—

**अद्वैतबाधकमभून्मम यद् द्वितीय-**
**मद्वैतमस्य बत बाधकमेव जातम्।**
**मोहाद् द्वितीयमपबाधकमस्य विद्या-**
**सामर्थ्यतो द्वयनिबर्हणमद्वितीयम्॥ ५६॥**

अद्वैतेति। अस्य द्वैतस्य। ननु कथमद्वैतस्य द्वैतबाध्यत्वं तथा सति द्वैतवदद्वैतमपि मिथ्या स्यात् किंचाद्वैतं द्वैतबाधकमित्येतावता कथं विद्याप्रशंसा तत्राह-मोहादिति। अस्याद्वैतस्य द्वयनिबर्हणं द्वैतनिवर्तकं

विद्यमानमप्यद्वैतं मोहाद् द्वैतबाधितमिव प्रतीयते न तु वस्तुतो बाधितमतो न द्वैतवन्मिथ्यात्वापत्तिः अद्वैतं च विद्यासामर्थ्यादेव द्वैतं बाधते न स्वतः अन्यथा पूर्वमपि द्वैतबाधकत्वप्रसङ्गात्। अतो विद्याप्रशंसाप्यस्तीति भावः ॥ ५६ ॥

ननु विद्यासामर्थ्यात् द्वैतनिवृत्तिरित्येतावता न कश्चिदाचार्यस्योत्कर्षः प्रतीयत इत्याशङ्क्यान्वयव्यतिरेकाभ्यामनर्थनिवृत्तिफलकविद्याया आचार्याधीनत्वावगमादाचार्यस्योत्कर्षोऽस्तीत्यभिप्रेत्याह—

**आश्चर्यमद्य मम भाति कथं द्वितीयं**
**नित्ये निरस्तनिखिलाशिवचित्प्रकाशे ।**
**आसीत्पुरेति किमिमाः श्रुतयो न पूर्वं**
**येन द्वितीयमभवत्तिमिरप्रसूतम् ॥ ५७ ॥**

आश्चर्यमद्येति। अद्य भवत्सङ्गेन द्वैतनिवृत्तिदशायाम्। आश्चर्यमभिनीय दर्शयति कथमित्यादिना। आश्चर्यं द्योतयितुं निरस्तेति। निरस्तं निखिलमशिवं दुःखात्मकमद्वैतं यस्मिन् चित्प्रकाशे स तथोक्तः पुरा भवत्सङ्गात् पुरा निरस्तनिखिलद्वैते मयि पुरा कथमिदं द्वैतमासीदित्येतदद्याश्चर्यं भातीत्यर्थः। अद्येत्यनेनाचार्यसंपर्कस्यान्वय उक्तः पुरेत्यनेन व्यतिरेक उक्तः। ननु तत्त्वमादिश्रुतिश्रवणव्यतिरेकेणैव द्वैतप्रतीतिर्नाचार्यसन्निधिव्यतिरेकेणेत्याशङ्क्य तस्याध्ययनकालमारभ्याहरहर्विद्यमानत्वात् न तद्व्यतिरेकप्रयुक्ता सेत्याह—किमिमा इति। पूर्वं भवत्सङ्गात्पूर्वमिमाः इदानीं विद्याहेतवस्तत्त्वमादिश्रुतयः न किं न श्रुताः किं येन श्रवणाभावेन मायाप्रसूतं द्वैतं भवेत् तादृशं श्रवणं नास्तीति काक्वा सूच्यते ॥ ५७ ॥

अतः सतीष्वपि तासु तावन्मात्रेण द्वैतनिवर्त्तकविद्यानुदयात् श्रीमच्छ्रीपादारविन्दरजःसंपर्के सति ,तादृशविद्योदयात् श्रीमन्त एवोत्कृष्टा इत्याचार्यं मही करोति —

त्वत्पादपङ्कजसमाश्रयणं विना मे
सन्नप्यसन्निव परः पुरुषः पुराऽऽसीत् ।
त्वत्पादपद्मयुगलाश्रयणादिदानीं
नासीन्न चास्ति न भविष्यति भेदबुद्धिः ॥ ५८ ॥

त्वत्पादेति । सन् विद्यमानोपि असन् अविद्यमान इव ॥ ५८ ॥

ननु स्वार्थं प्रवृत्तेन मया काकतालीयन्यायेन दैववशोत्पन्नया विद्यया तव संसारो नष्टः अतः कथं मत्संपर्कादेव तव विद्या तत्राह—

यस्मात्कृपापरवशो मम दुश्चिकित्सं
संसाररोगमपनेतुमसि प्रवृत्तः ।
त्वत्पादपङ्कजरजः शिरसा दधान-
स्त्वामाशरीरपतनादहमप्युपासे ॥ ५९ ॥

यस्मात्कृपापरवशइति । दुश्चिकित्सं तत्त्वज्ञानमहाभेषजपानं विना अपरिहार्यमपनेतुं निवर्त्तयितुं स्वार्थं प्रवृत्तस्यातिदुष्करसंसारापसरणपर्यन्तं व्यापारानुपपत्तेः कृपयैव प्रवृत्तोसीत्यर्थः । ततश्च भवत्कृपावशात् कृतकृत्योप्यहं देहपातपर्यन्तं भवच्छ्रीचरणारविन्दसेवापर एवासे। अन्यथा कृतघ्नत्वप्रसङ्गात् "यावदायुस्त्रयो वेद्या वेदान्तो गुरुरीश्वरः । आदौ विद्याप्रसिद्ध्यर्थं कृतघ्नत्वापनुत्तय" इतिस्मृतेरित्याह

त्वत्पदेति । अनेनाचार्यसकाशाद्विद्याप्राप्त्यनन्तरं निरुपाधिपरदुःखप्रहाणपरायणगुरुप्रीत्यर्थं तदुपदिष्टार्थानुभवप्रदर्शनं कर्त्तव्यम् । विद्यानन्तरं देहपानपर्यन्तं गुरुसेवा च कर्त्तव्येति सूचितम् ॥ ५६ ॥

एवं "शक्तो गुरोश्चरणयोर्निकटे निवासान्नारायणस्मरणतश्च निरन्तरायः । शारीरकार्थविषयावगतिप्रधानं संक्षेपतः प्रकरणं करवाणि हृष्यन्नि"ति प्रतिज्ञातमर्थं सप्रपञ्चमुपपाद्योपसंहरति—

**संक्षेपशारीरकमेवमेत-**
**त्कृतं परिव्राजकमुक्तिहेतुः ।**
**गुरुप्रसादात्परिलभ्य तत्त्वं**
**त्रयीशिरस्तत्त्वनिवेदनाय ॥ ६० ॥**

संक्षेपशारीरकमिति । 'संक्षेपशारीरकम्' इति ग्रन्थनाम शारीरकार्थस्य संक्षेपतः प्रतिपादकत्वात् संक्षेपशारीरकम् एवं समन्वयादिप्रतिपादनरूपेणाधिकारिणोनेनाव्यवहितमुख्यप्रयोजनं दर्शितं मुख्यत्वद्योतनार्थं परिव्राजकग्रहणम् । अव्यवहितं चाह-त्रयीशिरस्तत्त्वनिवेदनाय-त्रयीशिरोभिस्तात्पर्येण प्रतिपाद्यब्रह्मज्ञानाय ॥ ६० ॥

ननु ब्रह्मज्ञानाय प्रकरणं कृतमित्यनुपपन्नं पुरुषापराधशतसंकुलतेत्यत्र प्रकरणस्यासंभावनादिनिवृत्तिफलकत्वप्रतिपादनादित्याशङ्क्य पारम्पर्येण तत्फलकत्वमित्येतावतैवोक्तं साक्षात् फलन्त्वसम्भावनानिवृत्तिरेवेत्युपक्रमैकरूप्यं दर्शयति श्रोतॄणामस्मिन्नियमेन प्रवृत्तिसिद्ध्यर्थं नान्यशास्त्रे—

**अविरलपदपङ्क्तिः पद्मनाभस्य पुण्या**
**चरणकमलधूलिग्राहिणी भारतीयम् ।**

**घनतरमुपघातं श्रेयसः श्रोतृसंघा-**
**त्सुरसरिदिव सद्यो मार्ष्टु माङ्गल्यहेतुः ॥ ६१ ॥**

अविरलेति। इय प्रकरणात्मिका भारती सुरसरित् गङ्गेव श्रोतृसंघात् घनतरमुपघातं मार्ष्ट्विति सम्बन्धः। तस्या विशेषणानि—अविरलेत्यादीनि। अविरलाऽनतिस्फुटा पदपङ्क्तिः पदसमूहो यस्यां सा तथोक्ता गभीरार्थपदवृन्दकेत्यर्थः। जलनिक्षिप्तपदपङ्क्तेरस्पष्टत्वात् सुरसरिदपि अविरलपदपङ्क्तिर्भवति। पुण्या परिशुद्धा दोषनिवर्हण-समर्थेति वा तत्र हेतुः—पद्मनाभस्य चरणकमलधूलिग्राहिणीति। पद्मनाभस्य सत्त्वप्रधानमायाप्रतिबिम्बितचैतन्यस्य चरणं पदमधिष्ठानं तदेव कमलमानन्दरूपत्वेन कमनीयत्वात्तस्य धूलिः एकदेशः एकदेशत्वं चाखण्डाकारवृत्तिप्रतिफलनात् तं गृह्णातीति तथोक्ता तथा च निर्दुष्ट-परमेश्वरविषयत्वात् भारत्याः पाठमात्रेण दोषनिवर्हणसामर्थ्य-मित्यर्थः। अथवा अनेन भारत्याः पद्मनाभस्य श्रीपादारविन्दे समर्पणं सूचितम्। सुरसरित्पक्षे तु प्रसिद्ध एवार्थः। अत एव माङ्गल्यहेतुः शुभहेतुः उपघातमसभावनादिप्रतिबन्धं सुरसरित्पक्षे पापं श्रोतृसंघात् श्रवणा-नुष्ठातृपुरुषसमूहात् सुरसरित्पक्षे गङ्गादिशब्दश्राविसमूहात् मार्ष्टु शुद्धीं करोतु निवर्त्तयत्वित्यर्थः। निवर्त्तनस्य फलमाह—श्रेयस इति। मोक्षसाधनात्मज्ञानायेत्यर्थः ॥ ६१ ॥

इदानीमस्य ग्रन्थस्य निपुणगुरुप्रासदमूलत्वेन संप्रदायाधि-गतत्वं द्योतयन्नत्यन्तमादर्त्तव्यत्वं दर्शयति—

**श्रीदेवेश्वरपादपङ्कजरजःसंपर्कपूताशयः**
**सर्वज्ञात्मगिराऽङ्कितो मुनिवरः संक्षेपशारीरकम्।**

चक्रे सज्जनबुद्धिवर्धनमिदं राजन्यवंश्ये नृपे
श्रीमत्यक्षतशासने मनुकुलादित्ये भुवं शासति ॥ ६२ ॥

श्रीदेवेति । कर्तृगौरवादस्यादर्त्तव्यत्वं दर्शयति—सर्वज्ञात्मेति । या गीः तयाङ्कितः लक्षितः सर्वज्ञात्माख्यो मुनिवरो यतिरित्यर्थः । चक्रे कृतवान् । कलौ प्रायशो जनाः अर्थनिर्दुष्टतामपश्यन्तः प्रणेतृगौरवमेव पश्यन्तः चिरंतनमपि ग्रन्थमद्यतनत्वबुद्ध्योपेक्षेरन्निति मत्वा ग्रन्थस्य चिरकालीनत्वज्ञापनाय चिरकालीनराजसम्बन्धमाह—राजन्यवंश्येति । अथवा ग्रन्थस्य प्रसिद्धराजकालीनत्वे प्रदर्शिते प्रसिद्धस्य राज्ञो निपुणविद्वत्कुशलताकुलत्वेनायं ग्रन्थस्तैः परीक्षित एवेति तत्र मन्दानां विश्वासार्थमाह— राजन्येति । अथवा राज्ञोऽत्यन्तकुपितत्त्वेन तद्यशो वर्द्धनाय तन्नाम ग्रन्थे दर्शयति–राजन्येति । अक्षतशासने अखण्डितप्रतापे मनुकुलादित्य इति नृपनाम ॥ ६१ ॥

इदानीं मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते वहुमङ्गला ग्रन्थाः फलाय भवन्तीति न्यायेन मध्येपि हरिशंकरादिपदग्रहणेन मङ्गलं सिद्धवत्कृत्यान्तेपि विष्णुं नमस्कुरुते—

भुजङ्गमाङ्गशायिने विहङ्गमाङ्गगामिने ।
तुरङ्गमाङ्गभेदिने नमो रथाङ्गधारिणे ॥ ६३ ॥

भुजङ्गमेति । शेषभोगशायिने विहङ्गमाङ्गगामिने गरुड़गामिने तुरङ्गमाङ्गभेदिने केशिसंज्ञकासुरहन्त्रे रथाङ्गधारिणे चक्रधारिणे श्रीविष्णवे नमः नमस्कारोस्त्विति ॥ ६३ ॥

यज्जिज्ञासा मुमुक्षोर्हिततमफलदा यस्य चिह्नं विवित्तौ
विश्वाख्यो यः श्रुतीनां श्वसनपवनवद्योनिराम्नायराशेः ।

तात्पर्येण प्रवृत्तिर्यत इदमखिलं ज्योतिषां ज्योतिरात्मा
गृह्णातु श्रीनृसिंहः स तु शुभमशुभं वाग्बलिं वाङ्मयं मे।
श्रीमज्जगन्नाथगुरोरनुग्रहः प्रविश्य मां योजयदत्र कर्मणि।
अतो ग्रहग्रस्तमनुष्यवन्मे प्रवृत्तिरेषेति बुधाः क्षमध्वम्॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यजगन्नाथाश्रमश्रीचरणचरणपरि-
चरणप्राप्तविद्यनिखिलविद्वज्जनमनोहरश्रीमन्नृसिंहाश्रमश्रीचरण
विरचितायां संक्षेपशारीरकव्याख्यायां तत्त्वबोधिनी
समाख्यायां फलाख्यश्चतुर्थोऽध्यायः समाप्तः॥

**समाप्तं चेदं सटीकं संक्षेपशारीरकम्।**

---

# प्रथमाध्यायशुद्धिपत्रम् ।

| अशुद्धम् | शुद्धम् | पृ० | प० |
|---|---|---|---|
| तद्विषया | तद्विषया | ७ | १६ |
| ब्रह्मा ब्रह्म स्याद्यतो | ब्रह्माब्रह्म स्यादतो | ८ | १० |
| स्वरूपसाध्य | स्वरूपस्वाध्य | ,, | १२ |
| त्यक्स्वरूपं | प्रत्यक्स्वरूपं | ,, | १८ |
| भोक्ता | भोक्तृ | ,, | ,, |
| न ब्रह्म | न हि ब्रह्म | ९ | ३ |
| ब्रह्मणो ज्ञाना | ब्रह्मणोऽज्ञाना | १० | १६ |
| विभागो अवास्तव | विभागोऽवास्तव | १३ | १७ |
| उद्गिरेयुः | उद्गिरेयुः उद्भावयेयुः | २१ | ७ |
| यथार्थत्वेना | स्यथार्थत्वेना | २५ | ३ |
| भिप्रेत्य | मित्यभिप्रेत्य | ,, | १० |
| न्यायतः | नान्यतः | ३१ | ३ |
| दस्ति | दस्ति च | ३५ | ३ |
| ज्ञनवादि | ज्ञानवादि | ४० | ८ |
| परिकल्पित | परिवर्जित | ४६ | १५ |
| गच्छति | गच्छन्ति | ४७ | ४ |
| ब्राह्मण्यजात | ब्राह्मण्यजाति | ४९ | ३ |
| तत्रायमाक्षेपः | तत्रैवमाक्षेपः | ५१ | ६ |
| वस्तुविन्याधते | वस्तुन्यवाधिते | ,, | १८ |
| ऽहंकारेऽऽधारे | ऽहंकारे आधारे | ५२ | ६ |
| हंकारेऽऽधारस्या | हंकारे आधारस्या | ५३ | १७ |
| रेव वाध्यास | रेवाध्यास | ५८ | १५ |
| हंकारस्या | हंकारस्याप्य | ५९ | ४ |
| मर्थान्तःकरणा | मर्थादन्तःकरणा | ६० | ६ |
| आदिपदेन ज्ञाना | आदिपदेनाज्ञाना | ६१ | ५ |
| किंचिदव्यवहित | किंचिद्व्यवहित | ,, | १४ |
| तिरिक्तज्ञाना | तिरिक्ताज्ञाना | ७० | ११ |
| मोहस्पृश्य | मोहस्य दृश्य | ७१ | ६ |

| अशुद्धम् | शुद्धम् | पृ० | प० |
|---|---|---|---|
| मोक्षविरह | मोहविरह | ,, | १४ |
| प्रकल्पनयपी | प्रकल्पनमपी | ,, | २० |
| परक्ता | परक्तां | ,, | २२. |
| स्वत्मान | स्वात्मान | ७२ | ७ |
| स्वज्ञान | स्वाज्ञान | ,, | ८ |
| मुमुक्षु पुरुषार्थः | मुमुक्षुपुरुषार्थः | ७७ | १७ |
| क्रियापुरुषेच्छया | क्रियाः पुरुषेच्छया | ८० | १० |
| निदानज्ञानस्य | निदानाज्ञानस्य | ८२ | ५ |
| वैराग्यसंभवे न | वैराग्यसंभवेन | ८४ | ५ |
| साध्ये तदेकफले | साध्ये पुरुषः परमात्मा तद्विविदिषा तज्ज्ञानेच्छा तन्मात्रसाध्ये तदेकफले | ८५ | ५ |
| ऽ प्रसिद्धः | ऽसिद्धः | ,, | ५ |
| भोगो नत्वारब्ध | भोगेन प्रारब्ध | ,, | १६ |
| परमात्मनः | परात्मनः | ९० | १४ |
| त्वात्मान | त्वात्मन | ९१ | १२ |
| प्रवृत्तिनिवृत्तिषु | प्रवृत्तिषु निवृत्तिषु | ९३ | २० |
| अत्रोच्यते | अस्योच्यते | ,, | २२ |
| साधारण | साधारणस्य | ,, | २४ |
| प्रापको हेतु | प्रापकौ हेतू | १०० | ३ |
| पुत्रेषणायाश्च वित्तेषणायाश्च | पुत्रैषणायाश्च वित्तैषणायाश्च | १०३ | ६ |
| लोकेषणाया | लोकैषणायाश्च | १०३ | ७ |
| नित्वृत्त्यो | निवृत्त्यो | १०५ | ११ |
| नियमत्वप्रसङ्गः | नियममात्रभङ्गप्रसङ्गः | १०८ | ५ |
| किमैक्ये । | किमैक्ये | ११० | १२ |
| स्वर्गादिरादेणात्म | स्वर्गादिरागिण आत्म | १११ | ६ |
| नोपालब्ध्यभावः | नोपलब्ध्यभावः | ,, | १५ |
| वुद्धिशुद्धि | वुद्धिशुद्धिं | ,, | १६ |
| पटुहर | पटुतर | ,, | २३ |
| करणाशङ्का | करणशङ्का | ११३ | १८ |

| अशुद्धम् | शुद्धम् | पृ० | प० |
|---|---|---|---|
| विपये | विषये वा | ११४ | १६ |
| परोक्ष्य | पारोक्ष्य | ,, | २१ |
| पारोक्ष्यापरोक्ष | पारोक्ष्यापरोक्ष्य | ११६ | २२ |
| जनेन | जनने | ११९ | १० |
| सर्वं प्रमाण | सर्वप्रमाण | १२२ | २४ |
| ब्रह्मणो विषयत्व | ब्रह्मणोऽविषयत्व | १२३ | ६ |
| न्यदर्शनात् | न्वयदर्शनात् | १२४ | ८ |
| सत्येव | सन्त्येव | ,, | २० |
| मानान्तरेण ज्ञात | मानान्तरेणाज्ञात | १२५ | ३ |
| नहीतु | ग्रहीतु | ,, | १२ |
| उपाधि | उपाधिमत् | १३० | १० |
| स्तटस्थ | तटस्थ | ,, | ११ |
| वासत्यप्रकाशन | वासत्प्रकाशन | १३२ | १ |
| न प्रमेयोऽपि | न्वप्रमेयेऽपि | १३३ | ४ |
| धीजनसामर्थ्यं | धीजननसामर्थ्यं | १३५ | ७ |
| निसृतान्तःकरण | निःसृतान्तःकरण | ,, | १३ |
| यज्ञनयति | यद्यज्ज्ञनयति | १३६ | १८ |
| तज्ज्ञानं परोक्षमेव | तज्ज्ञानमप्यपरोक्षमेव | १३८ | ५ |
| तस्यानुपपत्तेः | तस्या अनुपपत्तेः | १४१ | १७ |
| भाग्यस्य | भागस्य | १४५ | २ |
| दानाय्यनादि | दानयनादि | ,, | १८ |
| तद्विशेषतया | तद्विशेष्यतया | १४६ | १३ |
| द्विरवत्तदेवता | द्विरवत्त | १४८ | ११ |
| पुंप्रवृत्तेः | पुंस्प्रवृत्तेः | १५३ | ३ |
| वाक्यानां | वाक्यं | ,, | १३ |
| धात्वर्थविषयः | धात्वर्थविषयः किन्तु | १५६ | १८ |
| कृतिसाधनत्व | कृतिसाध्यत्व | १५७ | १० |
| तद्वा | तदा | १६० | ७ |
| कायलुसंसर्गिणि | कार्यसंसर्गिणि | १६२ | १६ |
| खोलिङ्गादि | खलु लिङ्गादि | ,, | १७ |

| अशुद्धम् | शुद्धम् | पृ० | प० |
|---|---|---|---|
| नियमेन | नियमने | १६५ | १८ |
| संसृष्टबुद्धिजनने | संसृष्टबुद्धिजनने-तादात्म्य-बुद्धिजनने | १६७ | १२ |
| गोचरविषयः | गोचरो विषयः | १७२ | १८ |
| प्रयोजनसमाना | प्रयोज्यसमाना | १७३ | ४ |
| परिर्जनतः | परिवर्जनतः | १७५ | १९ |
| लाक्षणिकप्रवृति | लाक्षणिकवृति | ,, | २२ |
| तत्त्वंशब्दोभय | तत्त्वंशब्दयोरुभय | १७६ | १६ |
| लक्षणयोभय | लक्षणाया उभय | ,, | १८ |
| विभागादि | विभागादे | १७७ | ५ |
| रविध | रविरोध | १७९ | ८ |
| आदेयांशे | आदेयँशे | १८० | १ |
| आदेयांशइति | आदेयँश इति | ,, | ५ |
| तच्चन्यं | तज्जन्यं | ,, | १८ |
| उभयपदस्य | उभयपदस्था | १८२ | २३ |
| प्रथमपठितत्वं च | प्रथमपठितत्वं | १८३ | ११ |
| विरुद्धमित | विरुद्धमित्याह | १८५ | २२ |
| नुपत्ति | नुपपत्ति | १८८ | २१ |
| गुणन्यायेन | गुणान्वयेन | १८९ | ३ |
| नुपपत्तिव्याख्यात | नुपपत्तिर्व्याख्यात | १९२ | ११ |
| वाक्याभेद | वाक्यभेद | १९४ | १४ |
| केवले | केवलेऽपि | १९५ | २२ |
| चामुख्या | मुख्या | १९९ | ४ |
| तात्वं | तत्त्व | २०० | २४ |
| शेपपदार्थ | अशेषपदार्थ | २०२ | ८ |
| मखण्डार्थनिष्ठं | मखण्डार्थनिष्ठं | २०४ | ८ |
| वचस्यपलब्ध | वचस्युपलब्ध | २०६ | २१ |
| सम्वन्धो | संवन्धो | २०८ | ४ |
| वुद्धपदवीं | वुद्धिपदवीं | ,, | ५ |
| कित्ववच्छेदकस्य | किंचावच्छेदकस्य | ,, | २२ |

| अशुद्धम् | शुद्धम् | पृ० | प० |
|---|---|---|---|
| दृष्टान्त ब्रह्मणादे | दृष्टान्तः ब्राह्मणादे | २१० | ३ |
| सिद्धस्त्वात् | सिद्धत्वाद् | ,, | ५ |
| योषितादौ | योषिदादौ | ,, | ५ |
| चिन्ननवद् | चिन्तनवद् | ,, | ६ |
| चितारस्थं | चित्तारस्थ्यं | २११ | १६ |
| किंच | किं | २१२ | १२ |
| लक्ष्ये वा | लक्ष्ये | २१५ | २१ |
| संवन्धितया | संवन्धिता | २१६ | १ |
| भेदाभेदाद्ध | भेदो भेदाद्ध | २१८ | १७ |
| मुपाददानेति | मुपाददाना इति | २२० | २० |
| पदार्थैकरसो | पदार्थ एकरसो | २२१ | ११ |
| तात्पर्यस्यै | तात्पर्यार्थस्यै | ,, | २४ |
| मनुगच्छन्तं | मनुपगच्छन्तं | २२४ | १ |
| वचसामेकार्थे | वचसामर्थे | २२६ | ६ |
| न हि तयोरिति | नतु तयोरिति | २३३ | ७ |
| वुभुत्सितमर्थ | वुभुत्सितमर्थं | ,, | १८ |
| पृष्टे | पृष्टे तत्— | २३४ | १८ |
| बोधकत्वसंभवः | बोधकत्वासंभवः | २३५ | १४ |
| प्रकर्षप्रकाशा | प्रकर्षः प्रकाशा | २३६ | १७ |
| स्वरूपज्ञानान्तरीय | स्वरूपज्ञाननान्तरीय | २३७ | १३ |
| सिद्धत्येव | सिद्धत्येवेति | २३७ | १६ |
| वुभुत्सितार्थत्वा | वुभुत्सितत्वा | ,, | २३ |
| जातिचन्द्रस्यै | जातिः चन्द्रस्यै | ,, | २५ |
| ज्ञाते | ज्ञाते विशेषतोऽज्ञाते | २३८ | ५ |
| प्रकृष्टस्य प्रकाश | प्रकृष्टप्रकाश | २४० | २२ |
| चन्द्रत्वादनतिरेकेण | चन्द्रत्वाद्व्यतिरेकेण | ,, | २३ |
| न च वाच्यत्वज्ञाना | न च चन्द्रपदवाच्यत्वज्ञाना | ,, | २४ |
| निमो | नियमो | २४६ | ६ |
| आत्ममनो | आत्मा मनो | ,, | २२ |
| चैतन्यावच्छेदक | चैतन्यावच्छेदकत्व | २४७ | १४ |

| अशुद्धम् | शुद्धम् | पृ० | प० |
|---|---|---|---|
| त्मेक्षितत्वे | त्मेक्षितृत्वे | २४६ | ६ |
| तेनासौ | नासौ | ,, | २१ |
| उत्सारयद्भिः | उत्सारयद्भिः अपसारयद्भिः | २५३ | १६ |
| आकर्णकत्वा | आकार्णकत्वा | २५४ | १७ |
| स्पष्टमुक्तिफलां | स्पष्टं मुक्तिफलां | २५६ | ५ |
| दृष्टे | दृष्टं | २६२ | ५ |
| प्रमाययत् | प्रमापयत् | २६३ | २४ |
| सिद्धत्वात् | सिद्धत्वात् तत् | २६४ | ३ |
| स्वरूपेण सिद्धस्य | स्वरूपेणासिद्धस्य | ,, | १६ |
| पदार्थद्वयवादाय | पदार्थद्वयमादाय | २६६ | २१ |
| परिगृहीतादेय | परिहृतानादेय | २७० | १४ |
| यन्मूलनाय | यन्मूलोन्मूलनाय | २७२ | ६ |
| व्यवहारास्पद | व्यवहारात्पद | २८० | १४ |
| सवितेप्यादौ | सवितेत्यादौ | २८१ | १४ |
| काचिन्न क्षतिः | काचिन्न नः क्षतिः | २८२ | १४ |
| प्रमाणसामान्य | प्रमाणसामान्यलक्षण | २८३ | ८ |
| गृहीतुं | ग्रहीतुं | २८८ | ४ |
| परस्थितेर्व्युत्पतिः | परस्थिते व्युत्पत्तिः | ,, | ७ |
| ग्निरर्थ इति | ग्निरर्थ इति गम्यते | २८६ | १० |
| तन्न वेदान्ता | तन्न न वेदान्ता | २६० | ८ |
| प्रमाणात्प्रमेय | प्रमाणादप्रमेय | ,, | २२ |
| निसंदिग्धं | निःसंदिग्धं | २६१ | ६ |
| नेव | नैवं | २६३ | ३ |
| अज्ञातवस्तु | अज्ञातं वस्तु | २६५ | ११ |
| वेदान्तेषु पुनः | वेदान्तेषु न | ३०० | ६ |
| निश्रयसं | निःश्रेयसं | ,, | १३ |
| योग्यत्वाच्चाति | योग्यत्वात्। न | ३०४ | २१ |
| र्दशम | र्दशम | ३०६ | १८ |
| कित्वज्ञान | किंच ज्ञान | ३११ | १५ |
| विपयास्य | विषयस्य | ,, | २५ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| न च श्रुतौ | ननु श्रुतौ | ३१४ | ६ |
| रजसस्तम: | रजस्तम | ३१५ | ८ |
| देववद्त्त | देवदत्त | ३१७ | ३ |
| संसर्गभाव | संसर्गाभाव | ,, | ६ |
| तेजोवत्य | तेजस्विन्य | ,, | १४ |
| ,, | ,, | ,, | १६ |
| प्रोढा | प्रौढा | ,, | १६ |
| जगत्कारणत्वेन | जगत्कारणत्वे | ३२१ | १६ |
| वदन्ति | प्रवदन्ति | ,, | २३ |
| प्रपञ्चपरिमाणो | प्रपञ्चपरिणामो | ३२२ | १३ |
| मद्भेद: | मतभेद: | ३२४ | ४ |
| प्रमाणिकत्वाद् | प्रामाणिकत्वाद् | ३२५ | १२ |
| च्छब्दात्तत्तद्बुद्धि | च्छब्दतत्तद्बुद्धि | ३२७ | ४ |
| पशुफलं | पशु: फलं | ,, | २३ |
| क्रियातुत्वेहे | क्रियाहेतुत्वे | ३३२ | ७ |
| न प्रति | न न प्रति | ३३५ | ६ |
| सर्वजनान | सर्वजनीन | ,, | १७ |
| भावाद्दि तेन | भावात्। एतेन | ३३६ | २२ |
| रोहादामु | रोहदामु | ३४६ | ७ |
| तद्भूषण | तद्भूषण | ३४८ | १२ |
| तत: | तत: प्रवर्तकवाक्यस्य | ३४९ | २० |
| व्युत्पत्तिर्नि | व्युत्पत्ति नि | ३५१ | ७ |
| समयस्य | सामर्थ्यस्य | ३५२ | २ |
| पूर्वक्षते: | पूर्वत्वक्षते: | ,, | २५ |
| फलकारणतया | फलकरणतया | ३५४ | १३ |
| रन्वयी | रन्वयो | ,, | २२ |
| यो | श्रेयो | ३६२ | १६ |
| चैवमनुमिते | न चैवमनुमिते | ३६६ | १९ |
| शब्दत्व | शाब्दत्व | ३६७ | २४ |
| तदायत्ततज्ज्ञान | तदा तत्तज्ज्ञान | ३६८ | ७ |

| अशुद्धम् | शुद्धम् | पृ० | प० |
|---|---|---|---|
| पदार्थगोचर | पदार्थागोचर | ३७४ | १२ |
| शब्दत्व | शाब्दत्व | ३७६ | २ |
| चान्यत्र | चात्र | ,, | ११ |
| ग्रहणाथ | ग्रहणार्थ | ,, | १३ |
| वर्जिता क्रिय | वर्जितक्रिय | ,, | १६ |
| तत्प | तत्पद | ३७६ | ६ |
| परेषां | अत्र परेषां | ,, | ११ |
| मिदं च | मिदमिति च | ३८२ | ३ |
| पुरुषार्थविषत्व | पुरुषार्थविषयत्व | ३८४ | ८ |
| स्वर्गात्मा | स्वर्गात्मता | ,, | १० |
| भाव्यन्तरा | भाव्यान्तरा | ३८५ | ६ |
| केवलपदात् | केवलात्पदात् | ,, | २१ |
| नन्वत्रैव | नन्वन्यत्रैव | ३६० | २१ |
| ब्रह्मावगमने | ब्रह्मावगमेन | ३६५ | १५ |
| करणी | करिणी | ४०० | ८ |
| मात्रस्ततः | मात्रं ततः | ४०२ | ५ |
| करणी | करिणी | ,, | १० |
| नायौगिकत्व | नैयोगिकत्व | ४०४ | १७ |
| दूषयिष्यनन्येन | दूषयिष्यन्नन्येन | ,, | १६ |
| वाची धातु | वाचिधातु | ४०५ | ४ |
| आदिगत्वेन | अदिगतेन | ,, | ५ |
| पपत्तेः। उक्ततया | पपत्तेरुक्ततया | ४०६ | २ |
| सिद्धेव पान | सिद्धेवापान | ,, | ५ |
| तदाक्यं | तद्वाक्यं | ४०७ | ७ |
| यानना | यातना | ,, | ७ |
| नियोगनियोग | नियोग | ,, | १० |
| निवृत्तियोग | निवृत्तिनियोग | ४११ | ८ |
| वलवदनिष्ठा | वलवदनिष्टा | ,, | २० |
| प्रसक्तेभ्रान्ति | प्रसक्तेर्भ्रान्ति | ४१२ | १० |
| ऽर्थोपद्दतः | ऽर्थोपहतः | ४१४ | ७ |

| अशुद्धम् | शुद्धम् | पृ० | प० |
|---|---|---|---|
| द्विशिष्टसाधन | विशिष्टेष्टसाधन | ,, | १२ |
| निवृत्तिप्रयोग | निवृत्तिनियोग | ४१६ | ७ |
| भक्षणादिन | भक्षणादिनः | ४२२ | ८ |
| प्रत्यक्ब्रह्म | प्रत्यग् ब्रह्म | ४२९ | ३ |
| दखलं | दखिलं | ४३० | ५ |
| त्रिकं द्वयं | त्रिकद्वयं | ४३२ | १ |
| प्यनूद्यत्वं | प्यनूद्यमानत्वं | ४३३ | ७ |
| मनूद्यत्व | मनूद्यमानत्व | ,, | १० |
| यागनिनिष्ठं | यागनिष्ठ | ,, | २० |
| सम्भवं | संभवः | ४३५ | ४ |
| पराणमपि | पराणामपि | ,, | ६ |
| वेदवचस्ता | वेदवचसस्ता | ४३६ | १६ |
| संसृष्टार्थ | संसज्यार्थ | ४३८ | ४ |
| रूप्याज्ञानमिति | रूप्यज्ञानमिति | ,, | ५ |
| अविभिन्नं | अभिन्नं | ,, | ६ |
| माङ्गिफलेन | मङ्गिफलेन | ४३९ | १० |
| ध्ययने दर्शना | ध्ययने ऽदर्शना | ४४० | १ |
| क्त्वारभम | क्त्वारम्भ | ,, | १७ |
| तस्याध्यान | तस्याधान | ,, | १९ |
| नानन्तर्य | आनन्तर्य | ४४९ | १२ |
| विषयत्वत्कुण्ठी | विषयत्वात्कुण्ठी | ४५२ | १८ |
| कदेशः श्रेयसो | कदेशश्रेयसो | ४५३ | १३ |
| वेदान्तैरवान्तर | वेदान्तैरेवावान्तर | ४५६ | २१ |
| पदार्थावबोध | पदार्थान्वयबोध | ४६० | ५ |
| पदस्थार्थत | पदस्यार्थत | ,, | १८ |
| स्तर्हीति | तर्ह्हीति | ४६१ | ४ |
| परिनिष्ठितनिष्ठं | परिनिष्ठितनिष्ठम्-अभव्यार्थनिष्ठं | ,, | ५ |
| संबन्धाय | संबन्धार्थे | ,, | १७ |
| प्रभाकर | प्राभाकर | ४६४ | १९ |
| गौरव | कल्पनागौरव | ४६९ | २२ |

| अशुद्धम् | शुद्धम् | पृ० | प० |
|---|---|---|---|
| वाक्यस्य | वाक्यस्थ | ४७१ | ६ |
| युक्तसंभाविता | युक्तिसंभाविता | ,, | १८ |
| निविघ्नं | न विघ्नः | ४७२ | १६ |
| निवर्त्यो | निर्वर्त्यो | ४७४ | १८ |
| निवर्त्यत्वं | निर्वर्त्यत्वं | ,, | ,, |
| निवर्तना | निर्वर्तना | ४७५ | १२ |
| पादानादिति | पादानमानादिति | ,, | १६ |
| निलय | निलयं | ४७७ | ६ |
| ब्रह्मणोहनवच्छिन्न | ब्रह्मणोऽनवच्छिन्न | ,, | १६ |
| स्वधाध्याया | स्वाध्याया | ४७८ | ११ |
| करणैकत्वं | कारणैकत्व | ४७६ | १६ |
| पदार्थान्वय | पदार्थानन्वय | ४८० | ४ |
| न्नतात्पर्य | नतत्तात्पर्य | ,, | ५ |
| नवयापातः | नन्वयापातः | ४८३ | ४ |
| वगीत | विगीत | ४८८ | ७ |
| पूर्वोक्तं प्रसिद्ध | पूर्वोक्तां प्रसिद्धि | ४८६ | १३ |
| संकीर्तिते | संकीर्तनं | ,, | १८ |
| ण्णोरणा | ण्णोरणा | ४६२ | ४ |
| मच्छिन्न | मवच्छिन्न | ४६३ | ५ |
| ताटस्थं | ताटस्थ्यं | ४६५ | ११ |
| स्युपहितस्य | प्युपहितस्य | ४६६ | ५ |
| प्रकाशत्वे | परप्रकाशत्वे | ,, | १६ |
| तलः | ततः | ,, | १७ |
| दश | दृश | ,, | २० |
| यतो | हि यतो | ५११ | १६ |
| वाकयस्थ | वाक्यस्य | ५१६ | १० |

४६६ पृष्ठे २२ पङ्क्तौ "रित्यर्थ" इत्यनन्तरं "विशेषणसिद्धौ हि विशिष्टसिद्धिर्भवति न च करणीभूतस्य सोमस्य सिद्धिरन्यतोऽस्ति ततो विशिष्टविधिसामर्थ्यादेव तत्सिद्धिरित्यर्थः" इति त्रुटिः ।

इति प्रथमाध्यायस्य शुद्धिपत्रम् ।

# द्वितीयाध्यायशुद्धिपत्रम् ।

| अशुद्धम् | शुद्धम् | पृ० | प० |
|---|---|---|---|
| प्रत्यक्षादिबाधकमुक्त्वा | प्रत्यक्षादिबाधमुक्त्वा | ५२२ | १८ |
| ज्ञानयो | नानयो | ५२३ | १३ |
| अयं | अयं तु | ,, | १७ |
| प्रमाण्यं | प्रामाण्यं | ५२५ | ४ |
| बाधकत्वं मित्या | बाधकत्वमित्या | ,, | ६ |
| विद्वदपसद | विद्वदपसदः | ५२६ | १७ |
| तद्गोचर | तद्गोचर | ,, | २३ |
| प्रमाणबाधित | प्रमाणाबाधित | ५२७ | ६ |
| ,, | ,, | ,, | ,, |
| घटदे | घटादे | ,, | २२ |
| वस्तुतत्वानवच्छिन्न | वस्तुतत्त्वस्यानवच्छिन्न | ५३० | ६ |
| समानगुण | समानगुणवद् | ,, | २० |
| सहकृद्बुद्धे | सहकृतबुद्धे | ५३१ | १५ |
| विषयत्वप्रयोजकत्वादि | विषयत्वमप्रयोजकत्वादि | ५३३ | १७ |
| जनकत्वेन च | जनकत्वेन | ५३४ | २३ |
| फलितत्वा | फलित्वा | ५३५ | ४ |
| विलक्षत्वा | विलक्षणत्वा | ५३६ | १७ |
| धरावाहिक | धारावाहिक | ,, | १६ |
| कदापि | कदाचित् | ५३८ | १३ |
| मानवृत्ते | मानप्रवृत्ते | ५३६ | ३ |
| व्यवहारिकत्व | व्यावहारिकत्व | ५४० | १२ |
| प्रमाण्याभावेन | प्रामाण्याभावेन | ५४१ | ४ |
| सत्यामिथ्या | सत्यमिथ्या | ,, | ६ |
| लिङ्गविपरिणामेन | लिङ्गविपरिणामेन | ,, | २० |
| स्वाप्नाद्विशेषः | स्वप्नाद्विशेषः | ५४२ | २० |
| नैव तमनुतिष्ठेत् | तमनुतिष्ठेत् | ५४३ | ४ |
| विदारिणपटुः | विदारणपटुः | ,, | २३ |
| स्वप्रकाशस्थ | स्वप्रकाशकूटस्थ | ५४६ | २४ |

| अशुद्धम् | शुद्धम् | पृ० | प० |
|---|---|---|---|
| दोषजन्यत्वो | दोषजन्यत्वे | ५४९ | १५ |
| प्रत्यभिज्ञाविषयं | प्रत्यभिज्ञाविषयः | ५५० | १ |
| विज्ञान ? ततौ | विज्ञानसंततौ | ,, | ४ |
| प्रमात्रादिभेदा | प्रमात्रादिभेदाभेदा | ५५१ | ६ |
| प्रतीतिकत्व | प्रातीतिकत्व | ,, | २० |
| तत्त्वमादिवाक्यं | तत्त्वमस्यादिवाक्यं | ५५३ | १४ |
| व्यवहारिकत्व | व्यावहारिकत्व | ५५४ | १२ |
| दर्शनाः | दर्शना- | ५५५ | १० |
| यस्याम् | यस्य तम् | ,, | १६ |
| नित्यबोधेनानासिद्धि | नित्यबोधेनानादिसिद्ध | ५६० | |
| विरोधिस्वभावात् | विरोधिस्वभावत्वात् | ,, | १७ |
| निर्त्यनानात्वान्ना | निवर्त्यमानत्वान्ना | ५६० | २१ |
| तेन | तेन परिपीडितं | ५६१ | ८ |
| प्रत्यक्तत्त्वं | प्रत्यक्तत्त्वं तदेव च घटादीनां तत्त्वं | ५६५ | १ |
| घटादिप्रमाण्यस्य | घटादिप्रामाण्यस्य | ५६६ | ४ |
| जैमितिः | जैमिनिः | ५६८ | ६ |
| दूरप्रसरित | दूरप्रसारित | ५७१ | १ |
| अहे | अर्हे | ५७२ | २२ |
| प्रत्यक्षादे | न प्रत्यक्षादे | ५७३ | १५ |
| दुर्निरूपत्वाभावत्त- | दुर्निरूपत्वाभावात्त- | ५७४ | १६ |
| तत्त्वावेदन | तत्त्ववेदन | ५७५ | २० |
| परार्थसत्त्वा | परमार्थसत्त्वा | ५७२ | २३ |
| तर्ह्यनेन | तद्धानेन | ५७६ | २४ |
| दरप्रमायाः | दपरप्रमायाः | ५८० | १४ |
| भ्युगम | भ्युपगम | ५८२ | १८ |
| विरोधनुत्येति | विरोधनुत्या इति | ५८२ | २० |
| कर्मोप्रसना | कर्मोपासना | ५८३ | ११ |
| आरम्भणाद्यधिकरणे | आरम्भणाद्यधिकरणे | ५८३ | २१ |
| परिणाति | परिणति | ५८४ | १५ |

| अशुद्धम् | शुद्धम् | पृ० | प० |
|---|---|---|---|
| शङ्क्यायां | शङ्कायां | ५८७ | ७ |
| नुपन्नत्वा | नुपपन्नत्वा | ५६० | ७ |
| किंचिद्भिना | कंचिद्भिंना | ५६० | १६ |
| पूर्वक्षणस्थायित्व | पूर्वक्षणावस्थायित्व | ५६१ | ६ |
| स्थायित्या | स्थायित्वा | ,, | १० |
| तस्यापि | तस्यापि | ,, | १५ |
| द्रव्यवदिदं | द्रव्यवदिदं परिदृश्यमानं | ५६२ | १२ |
| परिमाणु | परमाणु | ५६६ | ७ |
| सप्रपञ्चमिति | सप्रपञ्चमिति ब्रह्मणि | ६०० | ८ |
| सप्रपञ्च | सप्रपञ्चत्व | ६०१ | ५ |
| जीवाः | जीवाः तत्र च | ६०३ | २ |
| दृष्टिविलया | दृष्टिविलया | ,, | ७ |
| भ्यासादशाया | भ्यासदशायां | ६०५ | ६ |
| एता दृष्टयो | एता दृष्टयो | ६०६ | १७ |
| मुमुक्ष्वैकत्वा | मुमुक्ष्वेकत्वा | ६०७ | ६ |
| अयमपेक्ष्य | त्रयमपेक्ष्य | ६०६ | १४ |
| कन्योद्वहन न्यापातः | कन्योद्वहनन्यायापातः | ६११ | २१ |
| शब्दः | शब्दाः | ६१२ | ७ |
| व्यावहारिकप्रामाण्यं | व्यावहारिकप्रामाण्यं च | ६१३ | ५ |
| वाधान्न | बाधाभावान्न | ६१३ | ६ |
| प्रमाणदोषजन्य | प्रमाणदोषाजन्य | ६१३ | १० |
| सत्यं घटादिजनकस्य | सत्यघटादिजनकस्य | ६१४ | ११ |
| त्याशङ्क्य | त्याशङ्कां | ६१६ | ६ |
| प्रतियते | प्रतीयते | ६२१ | १८ |
| विनाऽपि | विना च | ६२८ | २ |
| कल्प्यते | कल्पते | ,, | ३ |
| शौल्क्येन | शौल्क्ये न | ६३० | १३ |
| तद्ग्रहण | तद्ग्रहण | ,, | १४ |
| प्रकाट्य | प्राकट्य | ६३३ | ६ |
| विनाशत्व | विनाश्यत्व | ६३५ | २२ |

| अशुद्धम् | शुद्धम् | पृ० | प० |
|---|---|---|---|
| चाद्वितीयावेदक | चाद्वितीयत्वावेदक | ६३६ | १७ |
| मुन्मृद्ग | मुन्मृद्व | ६३७ | ११ |
| पूर्वोत्पन्नसंजात | पूर्वोत्पन्नमसंजात | ,, | १५ |
| सर्वमानीय | सर्वमत्रानीय | ६३८ | ६ |
| विधिः | विधिः कर्मैव विधिः | ,, | १६ |
| शङ्कयायां | शङ्कायां | ६४२ | ७ |
| त्ववधानेन | त्वव्यवधानेन | ६४५ | ८ |
| निर्वर्तयत्येव | निवर्तयत्येव | ६४६ | २२ |
| भस्करः | भास्करः | ६४७ | २ |
| गणाः ग्रहगणाः | गणः ग्रहगणः | ,, | ४ |
| महाशास्त्र | महाशास्त्र | ६४८ | ६ |
| प्रसिद्धस्य | प्रसिद्धस्य हि | ,, | १८ |
| हेतुत्वेनोक्तेः | हेतुत्वोक्तेः | ६५१ | १७ |
| शङ्क्यं | शक्यं | ६५३ | १६ |
| मुक्ताव्यवस्था | मुक्तव्यवस्था | ६५४ | १० |
| वेदने | वेदना ने | ,, | १५ |
| तत्र चान्तः | तत्रान्तः | ६५५ | ४ |
| करणावच्छिन्नस्य | करणावच्छिन्नस्यवा | ,, | ५ |
| रभ्यु | रप्यभ्यु | ,, | ८ |
| एकस्मिन्नपि | एकस्मिन्नपि जन्मनि | ,, | २४ |
| शरीरस्थ | शरीरस्य | ६५६ | ११ |
| मुक्तयपादनस्य | मुक्तयापादनस्य | ६५७ | ६ |
| मुक्त इति | मुक्ता इति | ,, | १६ |
| तेषाममुक्त | तेषां मुक्त | ,, | २० |
| शिष्यतद्ु | शिष्यस्य तद्ु | ,, | २४ |
| परिकल्पितस्य | कल्पितस्य | ६५७ | ३ |
| कश्चि | कांचि | ,, | ६ |
| मुक्तामुक्ताभेद | मुक्तामुक्तभेद | ६६० | १६ |
| जग्राद्वो | जाग्रद्वो | ६६१ | ११ |
| प्रप्रीतिः | प्रतीतिः | ,, | ११ |

| अशुद्धम् | शुद्धम् | पृ० | प० |
|---|---|---|---|
| निश्रेयसं | निःश्रेयसं | ६६३ | १२ |
| चाब्रह्मऽज्ञान | च ब्रह्माज्ञान | ६६४ | २ |
| सत्या | सत्या मिथ्या | ६६६ | २४ |
| वागुरा | वागुरा सा | ६६७ | ८ |
| नानुमाना | अनुमाना | ६७० | १३ |
| प्रमाणिक | प्रामाणिक | ,, | १४ |
| सभाषिष्ठाः | भाषिष्ठाः | ३७१ | ४ |
| ब्रह्मणोप्यस्ति | ब्रह्मणोस्यास्ति | ६७२ | ४ |
| सर्पादिर्मुख्य | सर्पादिप्रख्य | ६७३ | ५ |
| प्रमाणागम्यत्वे | प्रमाणागम्यत्वे | ,, | १२ |
| क्षिप्तं अस्त | अस्तं क्षिप्त | ६७५ | ३ |
| प्रवेशित | प्रवेशितम् | ,, | ३ |
| निर्द्धार | निर्द्वार | ,, | ७ |
| ममभासत | मवभासत | ६७७ | १३ |
| जीवाश्रयत्व | जीवाश्रयत्वपर | ६७८ | २ |
| नुभवविरोधेन | नुभवानुरोधेन | ,, | २० |
| रहितमेव | रहितमेव कुतः | ६८३ | १४ |
| तत्तन्निष्ठ | त्तन्निष्ठ | ६८४ | १२ |
| नियामकस्त्येव | नियामकमस्त्येव | ,, | १३ |
| दोपा | दोषा | ६८६ | १४ |
| तमसा | तामसा | ६८७ | १४ |
| वहुश्रुत | वहुश्रुत | ६८८ | ३ |
| मण्डनचः | मण्डनवचः | ,, | ११ |
| कारण | करण | ,, | १६ |
| कारण | करण | ६८६ | ३ |
| द्व्याप्य | द्व्याप्य | ६६० | २० |
| मेवास्मदुक्त | मेवमस्मदुक्त | ,, | २ |
| तद्वद्धता | तद्वत्ता | ६६१ | १० |
| संविदज्ञानश्रय | संविदनाश्रय | ६६५ | १८ |
| निरावरण | निरावरणत्वे | ६६६ | १ |

| अशुद्धम् | शुद्धम् | पृ० | प० |
|---|---|---|---|
| मनुपन्यस्य | मुपन्यस्य | ७०२ | १३ |
| तदन्तरमपि | तदन्तरपि | ७०५ | १८ |
| कल्प्येने | कल्प्यते | ७०७ | १२ |
| माशानस्यै | मशानस्यै | ७०८ | १५ |
| दर्पणस्थ | दर्पणस्थं | ७१२ | ५ |
| प्रत्यङ्मुख | प्रत्यङ्मुखत्व | ,, | १० |
| तशसौ | तज्ज्ञासौ | ,, | २३ |
| हासा | ह्रासा | ७१५ | १२ |
| हासा | ह्रासा | ,, | १६ |
| विम्बभ्रमे | प्रतिबिम्बभ्रमे | ७१७ | ६ |
| स्यान्न | बाधः स्यान्न | ,, | २४ |
| तत्र | तन्त्र | ७१९ | ५ |
| स्वभाववत्त्वात् | स्वभावत्वात् | ,, | २१ |
| तसोनिवृत्ति | तमोनिवृत्तिः | ७२० | ८ |
| प्रतिफलकं | प्रतिफलितं | ,, | २० |
| ऽद्वितीयत्वाकारेणा | ऽद्वितीयत्वाद्याकारेणा | ७२३ | १९ |
| ज्ञानविरोधि | ज्ञानाविरोधि | ७२५ | १ |
| अत्रानावृत | अज्ञानावृत | ७२६ | १९ |
| प्रतीतेर्घटादौ | प्रतीते घटादौ | ,, | २२ |
| प्रकाश एव | प्रकाशत एव | ७२७ | १४ |
| मुक्तोज्ञान- | मुक्तो ज्ञान- | ७२८ | ८ |
| अपश्यद्भि | पश्यन्ति | ७२९ | ५ |
| यावत्त | तावत्त | ,, | १२ |
| निजस्वरूपभूतं | निजं स्वरूपभूतं | ७३४ | २० |
| परदर्शना | षट्दर्शना | ७३५ | २ |
| विवक्षितं | विवक्षितं किं | ७३६ | १६ |
| स्वरर्णान्यतर | स्वरवर्णान्यतर | ७३८ | १९ |
| भ्रान्तं | भ्रान्तं | ७४१ | ६ |
| ब्राह्मण | ब्रह्मण | ७४३ | ११ |
| गुर्वादिकारण | गुर्वादिदेहकारण | ,, | १८ |

| अशुद्धम् | शुद्धम् | पृ० | प० |
|---|---|---|---|
| ततो | सतो | ,, | २६ |
| तस्या | तस्मा | ७४४ | १५ |
| प्रतिद्वन्द्वत्व | प्रतिद्वन्द्वित्व | ७४७ | २३ |
| संन्यस्यत्वात् | संन्यस्तत्वात् | ७४६ | २१ |
| चांशशत्रय | चांशत्रय | ७५० | १ |

इति द्वितीयाध्यायशुद्धिपत्रम्।

---

# द्वितीयाध्याये त्रुटयः।

५२६ पृष्ठे २४ पङ्क्तौ 'कार्यविशेषस्य' इत्यनन्तरं "नाद्यः धात्वर्थकार्यस्य मानान्तरयोग्यत्वात् कार्यविशेषस्येति" इति त्रुटिः।

२२८ पृष्ठे १२ पङ्क्तौ "इहेत्यस्य" इत्यनन्तरं "प्रतीचीत्यत्र संबन्धः वेदान्तवाक्यमुखतः वेदान्तवाक्यात्" इति त्रुटिः।

५३६ पृ० ३ प० "परस्परं" इत्यनन्तरं "प्रति विभागवतीः परस्परं भेदवतीः" इति त्रुटिः।

५५४ पृ० ७ प० "स्वप्नपदार्थस्य" इत्यनन्तरं "बाधः सविलासाविद्यालक्षणनिवृत्तिलक्षणबाधस्य" इति त्रुटिः।

५६० पृ० १३ प० "वृत्त्यभिव्यक्तचैतन्यस्यैव" इत्यस्य स्थाने "वृत्त्यभिव्यक्तचैतन्यस्याज्ञानादिनिवर्तकत्वेऽपि चैतन्यस्यैव" इति पाठः।

५६८ पृ० १८ प० "रापातत" इत्यनन्तरम् "उपरिप्लवविचारणे आपातत एव समं विद्यादिति संबन्धः संप्रयोगजन्यत्वस्य उभयत्रापि तुल्यत्वात् प्रत्यक्षलक्षणं द्विविधप्रत्यक्षेऽपि आपातत" इतित्रुटिः।

५७२ पृ० १० प० "नियमयति" इत्यनन्तरं "द्रष्टव्यादिविधिः स्वात्मानं नियोगपरत्वेन न नियमयति" इति त्रुटिः।

६०१ पृ० १३ प० "कारणं तां विना" इत्यनन्तरं "वस्तुतः" इत्यारभ्य १५ पङ्क्तौ "कारणं तां विना" इत्यन्तः पाठो निस्सारणीयः।

६७७ पृ० १९ प० "चैतन्याभाससंबद्धं" इत्यनन्तरम् "अज्ञानाश्रय चैतन्यस्यैवाज्ञानप्रतिफलनद्वारा बुद्धौ प्रतिफलनात् बुद्धिस्थाभासनिष्ठत्वोक्तिः यथाज्ञानमन्तः करणगतचैतन्याभास संबद्धम्" इति त्रुटिः।

७४१ पृ० २१ प० "चासत एव" इत्यनन्तरं "प्रमितिजनकत्वं तैरङ्गीकृतम्। अस्मन्मते तु" इति त्रुटिः।

७४९ पृ० १६ प० "तत्फलीभूतहिंसाया" इत्यारभ्य १८ पङ्क्तौ "प्रवर्तकं न भवति" इत्यन्तः पाठो निस्सारणीयः।

---

# तृतीयाध्यायशुद्धिपत्रम् ।

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| शाखान्य | अन्यशाखा | ७५६ | १३ |
| ऽधपतः | ऽधःपातः | ७५६ | २५ |
| धारयता | धारयतो | ७५७ | ५ |
| प्रततरं | प्रतरं | ७५८ | ५ |
| समागमने | समागमेन | ७५९ | ६ |
| भवतीति | भवतीति भावः | ७६१ | ११ |
| स्वाज्ञानमस्याः | स्वज्ञानमस्याः | ७६२ | १९ |
| नास्त्यन्त | नात्यन्त | ७६५ | २ |
| तनो | तयो | ,, | १५ |
| तता | ततो | ,, | २० |
| त्यवत्य | त्यवगत्य | ७६६ | १३ |
| तमस्सततश्च | तमसस्ततश्च | ७६८ | १४ |
| स्त्वियर्थः | स्त्वित्यर्थः | ७६९ | २० |
| पुर्युष्ट | पुर्यष्ट | ,, | २१ |
| प्रज्ञयाः | प्रज्ञयोः | ७७१ | १५ |
| सहबुद्धि | सह बुद्धि | ७७३ | ९ |
| पर्युष्ट | पुर्यष्ट | ,, | १८ |
| तद्यागात् | तद्योगात् | ७७५ | ५ |
| चेत् | चेत् न | ,, | १२ |
| संसारमुक्ति | संसारविमुक्ति | ७७६ | २२ |
| नभ उपमः | नभोपमः | ७७९ | १५ |
| तस्यानातीतत्वात् | तस्यानीतत्वात् | ,, | १७ |
| घटाद्य | घटा | ,, | २० |
| द्वार | द्रर | ७८० | २ |
| विम्बात्मा | विम्वात्मा | ७८१ | २० |
| संयोगाद्यनु | संयोगानु | ७८३ | १ |
| धर्माध्यासमाह | धर्म्यध्यासमाह | ७८६ | १८ |
| आत्मासमानः | आत्मा समानः | ७८८ | १८ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| प्राज्ञो | प्राज्ञः | ७९२ | १३ |
| प्रयुक्त | प्रयुक्तं | ७९९ | १६ |
| वैराग्यजननहेतु | वैराग्यजनने हेतु | ८०० | २३ |
| प्रमिति | तत्प्रमिति | ८०५ | १ |
| पश्च | पश्च तव | ८०६ | २० |
| अन्तर | आन्तर | ८०७ | ८ |
| मार्तण्डमाण्डल | मार्तण्डमण्डल | ८०८ | २३ |
| सिद्ध | सिद्धं | ८१३ | ६ |
| विशति | विंशति | ८१५ | २४ |
| केवलत्वमपि | केवलत्वयि | ८१८ | ११ |
| मायापरस्या | मायापदस्या | ८२४ | ५ |
| कारणमात्रा | कारणमात्र | ,, | ६ |
| वृद्धादीनां | वृद्धानां | ,, | १७ |
| पादानस्य | पादानत्वस्य | ८२८ | १६ |
| रूढस्य | रूढस्य | ८३२ | १४ |
| भेदन | भेदेन | ८३३ | ७ |
| हस्ताद्यारोप | हस्त्याद्यारोप | ८३४ | ७ |
| ब्रह्मण | ब्राह्मण | ८३६ | १६ |
| हस्ताद्य | हस्त्याद्यन्य | ८३७ | १४ |
| स्वप्नदृढ | स्वप्नदृङ् | ८३८ | १५ |
| निवृत्तिर | निवृत्तिर्माया | ८४१ | ६ |
| स्वप्नदृष्टस्या | स्वप्नदृष्टस्याप्या | ८४६ | ८ |
| कानुभव | कानुभवः | ८५२ | १० |
| तद्व्यतिरेकेण | तद्व्यतिरेकेण | ८५६ | ३ |
| तावनुभूति | तवानुभूति | ८६३ | २२ |
| घटानिरूपणा | घटनिरूपणा | ८८१ | ८ |
| यन्ती | प्रतिपादयन्ती | ८८५ | ५ |
| शार्य | शौर्य | ,, | ११ |
| श्रौत्रं | श्रौतं | ८८७ | १६ |
| विद्यया | विधया | ८८८ | २० |

| अशुद्धम् | शुद्धम् | पृ० | प० |
|---|---|---|---|
| दारण्य | दारण्यक | ८८६ | १४ |
| कारणा | करणा | ८९५ | १३ |
| कारणाना | करणाना | ,, | ,, |
| निकरणपूर्वक | निराकरण | ८९६ | १५ |
| विनेतरं | विनेतरत् | ८९८ | १८ |
| प्रकाशत्वा | प्रकाशत्व | ८९९ | ११ |
| सादित्य | साहित्य | ९०३ | ४ |
| छिन्नकरार्पितं | छिन्नं करार्पितं | ,, | १५ |
| करणा | कारणा | ९०४ | १९ |
| कारणस्य | करणस्य | ,, | २० |
| संबन्धस्यैव | संबद्धस्यैव | ९०५ | १५ |
| गुणत्वयो | गुणवत्त्वयो | ९०८ | १२ |
| हेतुः | हेतु- | ९१५ | ३ |
| गुण | गण | ,, | १६ |
| कार्या | कार्य | ९१७ | ४ |
| ब्रह्मानन्दी | ब्रह्मनन्दी | ९१८ | ६ |
| कुर्वत्कारण | अकुर्वत्कारण | ९२२ | ११ |
| चैतन्यं च च | चैतन्यं च | ९२५ | १९ |
| चिच्चैत्ययो | चिच्चेत्ययो | ९२८ | १५ |
| ब्रह्मात्मैक | ब्रह्मात्मैक्य | ९३७ | ७ |
| स्वत एवा | स्वतस्त्वा | ९४० | ९ |
| विषयेऽन्तमेव | विशयेऽन्त्यमेव | ९४४ | ८ |
| शरीरसर्वज्ञाद्य | ऽशरीरसर्वज्ञा | ९५० | १७ |
| कर्तृविषयज्ञान | कर्तृविषयकज्ञान | ९५१ | ७ |
| स्वरूपोत्पत्तौ | अदृष्टस्वरूपोत्पत्तौ | ९५३ | २० |
| दृष्टवैचित्र्य | ऽदृष्टवैचित्र्य | ९५५ | २६ |
| स्वादृष्टाकृदृष्ट | स्वादृष्टाकृष्ट | ९५६ | १६ |
| दोषभावा | दोषाभावा | ९५८ | ४ |
| वाक्यस्यातिरिक्त | वाक्यातिरिक्त | ९६७ | ६ |
| नपेक्षितः | नपेक्षतः | ९७६ | २ |

| अशुद्धम् | शुद्धम् | पृ० | प० |
|---|---|---|---|
| न्तः कारण | न्तः करण | ९७८ | १८ |
| भासविशिष्टे | भासविशिष्टं | ९७९ | १७ |
| लोकसिद्धंविशेषा | लोकसिद्धविशेषा | ९८२ | ४ |
| विचारेण | विचारेणापि | ९९६ | १९ |
| धर्मिविशिष्ट | धर्मविशिष्ट | ९९८ | १७ |
| वेत्स्यति | वेत्स्यसि | १००१ | ६ |
| देतद्दश | देतादृश | १००२ | १ |
| भगवन्नि | भगवान्नि | १०१३ | ११ |
| साधनेना | साधनत्वेना | १०१६ | १७ |
| निवहण | निवर्हण | १०१८ | १० |
| निवहण | निवर्हण | ,, | ११ |
| विवेकिन | विवेकिना | ,, | २३ |
| नियुज्य | नियुज्यमानः | १०३० | ११ |
| ऽपरिगृहः | ऽपरिग्रहः | ,, | १३ |
| प्राप्तविद्या | प्राप्तविद्य | १०३२ | २० |

८२४ पृ० १७ पङ्क्तौ "हि न" इत्यारभ्य १८ पङ्क्तौ "मान्त्रिकत्वादिना" इत्यन्तः पाठो निस्सारणीयः ।

९९९ पृष्ठे १० पङ्क्त्यनन्तरम्—

बुद्ध्वा तत्त्वंपदार्थावनुभवविषयं कर्तुकामस्तदैक्यं
वाक्याद्वाक्यार्थनिष्ठाच्छ्रुतिशिरसि गतादञ्जसा तत्त्वमादेः ॥
तच्छ्लेषापन्नमस्मिञ्छ्रुतिशिरसि वचोजातमन्यद्यदस्ति
तस्येयत्तावुभुत्साकुलितनिजमतिः पृच्छतिस्मैष भूयः ॥ ३१० ॥

इति तृतीयाध्यायशुद्धिपत्रम् ।

# चतुर्थाध्यायशुद्धिपत्रम् ।

| अशुद्धम् | शुद्धम् | पृ० | प० |
|---|---|---|---|
| तद्भावे | तज्ज्ञाने | १०३८ | ८ |
| मविमुक्त्या | मपि मुक्त्या | ,, | १४ |
| तुल्याययव्ययत्वेन | तुल्यायव्ययत्वेन | १०४३ | १७ |
| एवमेव वेदेह | एवमपि विदेह | ,, | २१ |
| तत्त्वेऽन्ताभावे | तत्त्वेऽत्यन्ताभावे | १०४६ | २ |
| सति | असति | ,, | २० |
| स्वभावा | स्वाभाव्या | १०४९ | ५ |
| स्थायिनस्तथात्वा | स्थायिनस्तस्य तथात्वा | १०५० | ६ |
| नाशपद्स्या | नाशपद्स्याप्य | १०५९ | १७ |
| चोदितः | वोदितः | १०६० | २० |
| तत्संप्रयोग | सत्संप्रयोग | १०६३ | १ |
| प्रतिवन्धश्च | प्रतिवन्धकश्च | १०७२ | ८ |
| व्यवधानेन च | व्यवधानेन | ,, | १७ |
| हेतुलेशः | हेतुलेशम् | १०७३ | ६ |

इति चतुर्थाध्यायशुद्धिपत्रम् ।